"पूर्वविद्भिः सकलनयसंग्राहीणि सप्तनयशतानि विहितानि, यत्प्रतिबद्धं सप्तशतारं नयचक्राध्ययनमासीत्; तत्संग्राहिणः पुनर्द्वादश विध्यादयो, यत्प्रतिपादकमिदानीमपि नयचक्रमास्ते।" —उत्तराध्ययनसूत्र-बृहद्वृत्तौ [दे. ला. पृ. ६८]

[१३]

विक्रमीयद्वादशशताब्द्या उत्तरार्धे विद्यमानो गूर्जरेश्वरसिद्धराजजयसिंहसन्मानितो मलधारी हेमचन्द्रसूरिः समसार्षीदित्थम्—

"पूर्वविद्भिः सकलनयसङ्ग्राहीणि सप्तनयशतान्युक्तानि, यत्प्रतिपादकं सप्तशतारं नयचक्राध्ययनमासीत्। उक्तं च-'एक्केक्को य सयविहो, सत्तनयसया हवंति एमेव।'-[आवश्यकनिर्युक्तिः गा. ७५९] सप्तानां च नयशतानां संग्राहकाः पुनरपि विध्यादयो द्वादश नयाः; यत्प्ररूपकमिदानीमपि द्वादशारं नयचक्रमस्ति।"

—अनुयोगद्वारसूत्र-वृत्तौ [पृ. २६७]

[१४]

वि. सं. १२०७ वर्षे श्रीचन्द्रसेनसूरिः संस्मृतवान् इत्थम्—

"आह च वादिमुख्यः", "उक्तं च मल्लवादिना-

"विधि-नियम-भङ्ग-वृत्ति-व्यतिरिक्तत्वादनर्थकवचोवत्।
जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम्॥"[१]
एतत्कारिका-विशेषभावार्थः स्वस्थानादवसेयः।"

-उत्पादादिसिद्धिप्रकरणे (पृ. १२५, २२२)

[१५]

विक्रमीयत्रयोदशशताब्द्याः पूर्वार्धे विद्यमानः कुमारपालभूपालसमकालीनः सुप्रसिद्धो व्याख्याकारः श्रीमलयगिरिः-

"यदाहुः श्रीमल्लवादिनः-'न विषयग्रहणपरिणामाद् ऋतेऽपरः संवेदने विषयप्रतिभासो युक्तो युक्त्ययोगाद्' इति"।

—धर्मसङ्ग्रहणि-वृत्तौ [गा. ७१२ व्या., दे. ला. पृ. २६०]

[१६]

बृहट्टिप्पनिकायां प्राचीनग्रन्थसूच्यां (जैनसाहित्यसंशोधक-परिशिष्टे भा. १, अं. २ पृ. १०,३५८) सूचितम्-"सम्मतिसूत्रं सिद्धसेनदिवाकरकृतम् गा. १७०

(१) सम्मतिवृत्तिर्मल्लवादिकृता ७००।"

[१७]

विक्रमीयसप्तदशशताब्द्याः प्रान्ते विद्यमानो नयचक्रस्यादर्शकारको न्यायाचार्यो यशोविजयोऽप्युल्लिखति सेत्थम्—

"इहार्थे कोटिशो भङ्गाः, निर्दिष्टा मल्लवादिना। मूलसम्मतिटीकायामिदं दिङ्मात्रदर्शनम् ॥"

—अष्टसहस्र्याम्

[१८]

मल्लवाद्याचार्यकृतं धर्मोत्तर-टिप्पनकं बौद्धग्रन्थन्यायबिन्दुटीकायाः टिप्पनमुपलभ्यते तच्च सं. १२०६ वर्षे, तथा सं. १२३१ वर्षे लिखिते ताडपत्रीये पुस्तके; जेसलमेरदुर्गभाण्डागारीयसूचिपत्रे(पृ. ४, १४, अप्रसिद्ध० पृ. २९), तथा पत्तनभाण्डागारीयसूचिपत्रे (पृ. ३७५) चास्माभिर्निदर्शितम्।

न्यायबिन्दुटीकायाः कर्तुर्बौद्धाचार्यधर्मोत्तरस्य समयो वैक्रमसप्तमशतक आधुनिकैरनुमीयते, तथा च सत्यं तदा तट्टीकायाः टिप्पनकर्तुर्मल्लवादिनः समयोऽपि तदनन्तरं सम्भावयितुमुचितः।

[१९]

दि. कुन्दकुन्दाचार्य–देवसेन–माइल्लधवलादिभिस्तथाऽर्वाचीनपं. देवचन्द्रादिनामभिर्नयचक्र( आलापपद्धति )नाम्नोपलभ्यन्ते कतिचन प्रा. सं. संक्षिप्तग्रन्थास्ते प्रायेण मल्लवादिनो नयचक्रस्य सार-समुद्धाररूपा ज्ञायन्ते। एवं चान्यैरपि कृता ये नयकर्णिका–नयतत्त्व – नयप्रकाश – (प्रकाशिका) – नयप्रदीप – नयरहस्य – नयवाद – नयविचार – नयविवरण – नयसंवाद – नयसप्तक–नयस्वरूप–नयामृततरङ्गिणी – नयालोक – नयोपदेशादयो ग्रन्था उपलभ्यन्ते, ते प्रायेण प्रस्तुतादाधारभूतात् नयचक्रात् स्थानाङ्गसूत्र-वृत्ति-विशेषावश्यकभाष्य–तत्त्वार्थशास्त्रविवरण-सम्मतिविवरणादेश्च प्रादुर्भूता ज्ञायन्ते।

[२०]

नयचक्रस्यास्य शास्त्रस्य प्रयोजनं कर्तुर्नामादिविषये चेत्थं समसूचि न्यायागमानुसारिण्या व्याख्याया उपसंहारे "अधुना तु शास्त्र–प्रयोजनमुच्यते—

"सत्स्वपि पूर्वाचार्यविरचितेषु सन्मति–नयावतारादिषु नयशास्त्रेष्वर्हत्प्रणीत–नैगमादिप्रत्येकशतसङ्ख्यप्रभेदात्मकसप्तनयशतारनयचक्राध्ययनानुसारिषु, तस्मिंश्चार्थे(र्षे) सप्तनयशतारचक्राध्ययने च सत्यपि द्वादशारनयचक्रोद्धा(द्ध)रणं दुःषमाकाल–दोष–बल–प्रतिदिनप्रक्षीयमाणमेवायुर्बलोत्साह–श्रद्धा–संवेग–श्रवण–सा(सं)धारणादि-शक्तीनां भव्यसत्त्वानां श्रवणमेव तावद् दुर्लभम्, श्रुत्वाऽपि तत्त्वावबोधः, बुद्ध्वा तत्त्वमन्यस्य व्यवहारकाले परप्रत्यायनं प्रत्यादरो दुर्लभः, सत्यप्यादरे ग्रन्थार्थसंस्मरणं, तदुद्ग्राहणम्, उद्ग्राहितार्थ-

प्रतिपादनं चात्यन्तखेदायेति मत्वा तत्तत्खेदखिन्नान् विस्तरग्रन्थभीरून् सङ्क्षेपाभिवाञ्छिनः शिक्ष(ष्य)कजनाननुग्रहीतुं 'कथं नामाल्पीयसा कालेन नयचक्रमधीयेरन् इमे सम्यग्दृष्टयः ?' इत्यनयाऽनुकम्पया संक्षिप्तग्रन्थं बह्वर्थमिदं नयचक्रशास्त्रं श्रीमत्-**श्वेतपट-मल्लवादि-**क्षमाश्रमणेन विहितं 'स्वमीति' स्वपराक्रमविजिताशेषप्रवादिविजिगीषुचक्रविजयिना सकलभरतविज(ष)यवासिनृपतिविजिगीषुचक्रविजयिनेव भरतचक्रवर्तिना देवतापरिगृहीताप्रतिहतचक्ररत्नेन स्वपुत्रपरम्पराऽनुयायि जगद्व्यापिविपुलविमलयशसा चक्ररत्नमिव तदिदं नयचक्ररत्नं चक्रवर्तिनामिव चक्ररत्नं पुत्र–पौत्रादिनृपतीनां विहितं कृतम् । किमर्थमिति चेदुच्यते—चक्रवर्तिनामिव चक्रवर्तित्वविधये वादिनां जैनानां जिनशासनप्रभावनाऽभ्युद्यतानां वादिचक्रवर्तित्वविधये वादिचक्रवर्तित्वं विधेयादित्येतमर्थमित्येतस्य **नयचक्रशास्त्रस्य** विधाने **प्रयोजन**मभिहितम् ।

तदेतदेवं द्वादशारनयचक्रं सिद्धं प्रतिष्ठितमव्याहतं चक्रवर्तिचक्ररत्नवदेवान्याप्रधृष्याचिन्त्यशक्ति–पराभिभवन–प्रभुशक्तियुक्तं च सिद्धम् । सिद्धनामग्रहणं च मङ्गलं कल्याणं शिष्य-प्रशिष्य-परम्परया प्रतिष्ठातुमर्हति । प्रतिष्ठितसिद्ध–विजयावहं जगन्मूर्धस्थसिद्धवत् प्रतिष्ठितं यशस्करमिति ।"

## [२१]

**ग्रन्थप्रमाणादिनिर्देशको**ऽयमुल्लेखः पठ्यते **प.** प्रतिप्रान्ते—

"इति श्रीमल्लवादिक्षमाश्रमणपादकृतनयचक्रस्य तुंबं समाप्तमिति । भद्रं । ग्रंथमानसंख्या १८००० ॥"

## [२२]

ईदृश उल्लेख उपलभ्यते **भ.** प्रति-प्रान्ते—

"इति श्रीमन्मल्लवादिक्षमाश्रव(म)णपादकृतनयचक्रस्य तुंबं समाप्तं । ग्रंथाग्रं १८००० शुभं भवतु ॥"

### नयचक्रवालापरनाम

## [२३]

बृहट्टिप्पनिकासंज्ञिकायां प्राचीनग्रन्थसूच्यां [जैनसाहित्यसंशोधके भा. १, अ. २, ३६०] इत्थं समसूचि—

"**नयचक्रवाल**वृत्तिर्मल्लवादीय–द्वादशारनयचक्रतुंब–सूत्र–व्याख्यारूपा ससूत्रा १८००० ।"

[२४]

वि. सं. १३५१--९०'वर्षेषु विद्यमानेन श्रीजिनप्रभसूरिणा रचिते सिद्धान्तागम-स्तवे ( जिनागमानां सं. स्तवने ) नयचक्रवालसंज्ञयाऽस्य ग्रन्थस्य स्मरणमकारि—

"वन्दे विशेषणवतीं, सम्मति-नयचक्रवाल-तत्त्वार्थान् ।
ज्योतिष्करण्ड-सिद्धप्राभृत-वसुदेवहिण्डींश्च ॥"

—नि. सा. काव्यमालाङ्कम्--(सप्तमगुच्छके पृ. ९४, श्लो. ४२)

[२५]

एवं विक्रमीयचतुर्दशशताब्द्याः प्रान्ते, पञ्चदशशताब्द्याश्च प्रारम्भे विद्यमानेन मलधारिराजशेखरसूरिणा रचिते षड्दर्शनसमुच्चयेऽपि—

"ख्याताः प्रमाणमीमांसा, प्रमाणोक्तिसमुच्चयः ।
नयचक्रवालतर्कः, स्याद्वादकलिका तथा ॥
प्रमेयपद्ममार्तण्डस्तत्त्वार्थः सर्वसाधनः ।
धर्मसङ्ग्रहणीत्यादि-तर्कौघा जिनशासने ॥"

—य. वि. ग्रं. (पृ. २, श्लो. १८–१९ )

[२६]

विक्रमीयपञ्चदशशताब्द्या उत्तरार्धे विद्यमानो गुणरत्नसूरिरपि नयचक्रवालनाम निरदिशत्—

"श्वेताम्बराणां सम्मतिः, नयचक्रवालः, स्याद्वादरत्नाकरः, रत्नाकरावतारिका, तत्त्वार्थः, प्रमाणवार्तिकम्........इत्येवमादयोऽनेके: तर्कग्रन्थाः ।"

—हरिभद्रीयषड्दर्शनसमुच्चयस्य वृत्तौ [प. १०७]

**नयचक्र–विभागाः ।**

द्वादशारमयस्य नयचक्रस्य प्रान्ते तुम्बस्वरूपविचारणात् लेखकैस्तथा तुम्ब-प्रसिद्धिः कृता ज्ञायते। पूर्वप्रदर्शितकथा--चरिताद्यनुसारेण प्राचीनैका कारिकाऽऽ-यैवाऽस्य ग्रन्थस्याधारभूता, तत्कारिकाप्रारम्भपदद्वयेनात्र विभाविता भङ्गा द्वादशाराः । मल्ल-वादिप्रणीतं मूलमितः पृथग् न प्राप्यते । सिंहशूरेण सिंहसूरिणा विरचितायां न्यायाग-मानुसारिण्यां व्याख्यायां तत् खण्ड–खण्डप्रतीकरूपेणात्रान्तर्भावितम्, यथाशक्यं बृहदक्षरैस्तत् पृथक्कृत्य तत्र तत्रास्माभिः प्रदर्शितम् ।

नयचक्रस्य संक्षिप्ता विषय-सूची पृथगत्र प्रदर्शिता । अस्य टीकायाम् अरसमाप्तौ ईदृशा उल्लेखा उपलभ्यन्ते—

[१]

अत्र पृ. ९६—"**विधिभङ्गारः** प्रथमो द्रव्यार्थभेदः समाप्तः ।"

[२]

„ पृ. २०५—"एवं द्वितीयो **विधिविध्यरः** सविकल्पो नयचक्रस्य समाप्तः ।"

[३]

„ पृ.२७९—"इति **विध्युभयारस्तृतीयो** नयचक्रस्य ।"

[४]

„ पृ. ३१४—"चतुर्थोऽरो नयचक्रस्य समाप्तः । प्रथमश्च मार्गो नेमिरित्यर्थः । अर्धमेकमेकपुस्तकं समाप्तम् ।"

[५]

"**उभयनयारः** पञ्चमोऽरः परिसमाप्तः ।"

[६]

"इति षष्ठो नयो नैगमभेदो द्रव्यास्तिकान्तःपाती परिसमाप्तः । **विधिनियमविध्यर** इति नामनिर्देशोऽयं नयचक्रविभागविन्यस्तश्चक्रारद्वार इति ।"

[७]

"इति नयचक्रटीकायां सप्तमोऽर **उभयोभयभङ्गः** समाप्तः ।"

[८]

"इत्थं परिसमाप्तो विधिनियमयोर्नियम एव प्रदर्शनो गुण–प्रधानभावेनायमष्टमोऽरः । समाप्तश्च द्वितीयोऽरः (मार्गः) उभयविकल्पभेदोपदर्शनः ॥"

[९]

"इति **नियमभङ्गो** नवमोऽरः श्रीमल्लवादिप्रणीतनयचक्रस्य टीकायां न्यायागमानुसारिण्यां **सिंहसूरि**गणिवादिक्षमाश्रमणदृब्धायां समाप्तः ॥"

[१०]

"इति दशमो भङ्गो **नियमविधिनयः** समाप्तः ॥"

[११]

"इति नयचक्रटीकायाम् एकादशोऽर[:] **नियमोभयभङ्गः** सम्पूर्णः ॥"

[१२]

"इति **नियमनियमभङ्गो** नामादितो विधिभङ्गादारभ्य गण्यमाने द्वादशो भङ्गो द्वादशारनयचक्रस्य श्रीमल्लवादिकृतस्य टीकायां श्रीमत्सिंहसूरिगणिरचितायां समाप्तः ।"

## नयचक्र-तुम्बम् ।

व्याख्यायां द्वादशारविभागानन्तरं द्वादशारान्तरं विचारितम्, प्रान्ते च तुम्बस्वरूपं निरूपितम्, सम्बन्धसंयोजनार्थं तत उद्धृत्य तत् किञ्चिदत्र प्रदर्श्यते—

"द्वादशानामन्यतमादरादनन्तरस्योत्थानम्, तत्तदरदूषणार्थं क्रमः, तेन क्रमेण सम्बन्धेन सर्वकुमतपक्षाणां मिथ्यादृष्टिप्रणीतशास्त्राणां व्यवस्थायाश्चेष्टेनार्थं सर्वमिदं नयचक्रं शास्त्रं क्रमते । सर्वैक्यभावापादितस्याद्वादानपेक्षसर्वनयमिथ्यादृष्टित्वात् । तत्र तत्र च तत्तद्दोर्विहितास्य प्रतिपादितत्वात् । परस्परविहितपक्षाणां क्रमेणोक्तार्थानुसारेण सर्वेषामन्योन्यदूषणत्वात् । [एवमेव इत्यादि] एवं चक्रत्वा[द]स्य शास्त्रस्य नयादीनां चक्रं नयचक्रं नयसमूह इत्यन्वर्थसंज्ञा स्यात्, नयानां स्व-पर-मत-साधन-दूषण-समर्थानां समूहत्वात् । नयन्तेऽर्थान् प्रापयन्ति, नयन्ति गमयन्तीति नयाः, वस्तुनोऽनेकात्मकस्यान्यतमैकात्मकैकान्तपरिग्रहात्मका नया इति । तेषां चक्रमेवं तावदस्मादन्त्याच्छून्यवादनयात् सर्वनयोत्थानं न विरुध्यते । यथा चास्मादेवं सर्वेभ्योऽपि यथैव तस्मान्नयादुत्थानं सर्वनयानामन्त्यादविरुद्धम्; तथा सर्वेभ्योऽपि सर्वस्मादेकैकस्मादपि नयात् सर्वनयानामुत्थानमविरुद्धमेव, सर्वस्य सर्वेण सह विरोधित्वे सति विवादसद्भावात् ।

" [एषाम् इत्यादि] एषामशेषनयानां किं निबन्धनम् ? इति चेदुच्यते—एषाम[शेष]शासनाराणाम्—अशेषशासनान्येव जैमिनीयोपनिषदादीनि नया अरसंस्थानीयानि, स्याद्वादतुम्बस्य नयचक्रस्य तेषामशेषशासननयाराणां च भगवदर्हद्वचनमुपनिबन्धनं जिनवचन-महासमुद्रस्यैव तरङ्गा एते । तथा च तत्र तत्र भावितं यथाऽऽचार्यसिद्धसेनश्चाह—

"भद्दं[1] मिच्छादंसणसमूहमइयस्स अमतसाद(र)स्स ।
जिणवयणस्स भगवतो, संविग्ग-सुहाभिगम्मस्स ॥" इति

[सम्मति० कां. ३, गा. ६९]

"............स्वतत्त्वमनेकान्तात्मकं विदधतो जिनवचनस्यानुगमात् द्वादशानामराणामशेषशासनसंग्राहिणामित्थं तुम्बक्रिया स्याद्वाद-नाभिकरणं तत्प्रतिबद्ध-सर्वारावस्थानाद्, अतोऽन्यथा विशरणात् । यथोक्तम्—

---

१ संस्कृतच्छाया—

भद्रं मिथ्यादर्शनसमूहमयस्य, अमृतस्वाद(सार)स्य ।
जिनवचनस्य भगवतः, संविग्न-सुखाऽभिगम्यस्य ॥

"[1]जंमि कुलं आयत्तं, तं पुरिसं आयरेण रक्खाहि।
ण हु तुंबंमि विणट्ठे, अरया साहारगा होंति ॥"

इति । –आवश्यकसूत्र ( नि. गा. ७५९ ) वृत्तौ उ०–

एवं तुम्बकरणं सविकल्पद्वादशा[ र ]नयचक्रैकवाक्यानयनसाधनम् । तत्र **विधि**भङ्गाश्चत्वार आद्याः, **उभय**भङ्गा मध्यमाश्चत्वारः, **नियम**भङ्गाश्चत्वारः पाश्चात्या यथासङ्ख्यं **नित्य**प्रतिज्ञाः ४, **नित्यानित्य**प्रतिज्ञाः ४, **अनित्य**प्रतिज्ञाश्च ४ । [१] विधिः, [२] विधेः विधिः, [३] विधेर्विधि-नियमौ, [४] विधेर्नियम इति प्रथमभङ्गचतुष्टयम् । मध्यमं [५] विधि-नियमौ, [६] विधि-नियमयोर्विधिः, [७] विधि-नियमयोर्विधि-नियमौ, [८] विधि-नियमयोर्नियम इति । पाश्चात्यमपि [९] नियमः, [१०] नियमस्य विधिः, [११] नियमस्य विधि-नियमौ, [१२] नियमस्य नियम इत्येते द्वादशाप्यरनया एकप्रघट्टे- ( घट्टे ? बन्धे )नान्योन्यापेक्षवृत्तयः सत्यार्था इति सपिण्डरूपेण प्रतिज्ञा एतद्भङ्गनियत-स्याद्वादलक्षणः शब्द इति स्यान्नित्यः, स्यान्नित्यानित्यः, स्यादनित्यः शब्द इति ।"

..........."तथोक्त–द्रव्यार्थ–पर्यायार्थान्यतरविकल्पैकान्तशास्त्रप्रबन्धो **विघटितार्थ** इत्येषोऽर्थो भावित एवातीतसमस्तनयचक्रशास्त्रेणेत्येवमनेन समस्तेन ग्रन्थेनैतदभिहितम्—

**"विधि-नियम-भङ्ग-वृत्ति-व्यतिरिक्तत्वादनर्थकवचोवत् ।**
**जैनादन्यच्छासनमनृतम्"**

"जैनमेव शासनं सत्यं विधि-नियम-भङ्ग-वृत्त्यात्मकत्वाद्,............**वृत्तिवचनम-शेषभङ्गैकवाक्यतायामेव** प्रतिभङ्गमपि वृत्तिरिति व्याख्यापनार्थम् । किमुक्तं भवति ? स्याद्वादतुम्बप्रतिबद्धसर्वनयभङ्गात्मकैकैव वृत्तिः सत्या रत्नावलीवत्; यथा प्रतिविशिष्ट-जाति-वर्ण-च्छाया-सार-शुद्धि-प्रभवार्थ-संस्थानादिगुणगणोपेतमणिगणसमूहात्मिकैव रत्नावलीत्युच्यते यथास्थानविन्यासरत्ना, न प्रत्येकम्; तथा विध्यादिनयाराणामपि तुम्बप्रतिबद्धा वृत्तिवत् स्याद्वादप्रतिबद्धैकान्तनयवृत्तिरन्यथा वृत्त्यभाव एवेति च चक्रदृष्टान्तसाधर्म्यात् नयचक्रशास्त्र–यथार्थनामत्वादेव ।..........

"सर्वनयात्मकैकवृत्ति–जैनसत्यत्वसाधनप्रवृत्त्यैवार्थापत्त्या शेषशासनासाधुत्वप्रतिपादनं कृतम्, तदसाधुत्वप्रतिपादनेन च जैनसत्यत्वप्रतिपादनं कृतं भवति ।.........

"एवंविधस्याद्वादाधिगम्यानेकान्तात्मकवस्तुज्ञानरहितः पुमान् नासौ कस्यचिद् वस्तुनोऽवयवमात्रस्यापि तत्त्वतो ज्ञाता, एकदेशमात्रस्यैव परिगृहीतत्वात् । नित्यानित्याद्यनन्तधर्मा-

१ यस्मिन् कुलमायत्तं, तं पुरुषमादरेण रक्षत । न खलु तुम्बे विनष्टे, अरकाः साधारका भवन्ति ॥

त्मके वस्तुनि 'नित्यमेव,' 'अनित्यमेव' इत्याद्यभिनिविष्टबुद्धित्वात् तदेव व्याचष्टे अनवधार्यस्यावधारयितृत्वाद् 'इदमेव,' 'इत्थमेव' इत्यवधारणायोग्यस्यावधारणकत्वात् । ..........एवमेकान्तवादिनो वस्तुतत्त्वानभिज्ञत्वमिति । युगपदनन्तद्रव्य-पर्यायपरिणति-विषयाव्याहतनिरावरण-स्वपरिणतिनिमित्ताविर्भावाक्ष-लिङ्ग-शब्दादिनिमित्तान्तरापेक्षकेवल-ज्ञानोऽर्हन् भगवान् यद् यद् यान् यान् भावान्, परिणमति हि विश्रसा-प्रयोगाभ्यां तत् तदेवेति तथा ।"

## व्याख्याकारः सिंहसूरिः ।

प्रस्तुतस्य **नयचक्रस्य** गुणनिष्पन्ननामधेयायाः प्रौढाया अस्या न्यायागमानुसारिण्या व्याख्यायाः कर्तुर्नामात्र नवम-द्वादशार-प्रान्ते सिंहसूरिगणिवादिक्षमाश्रमण इति पठ्यते, तत् प्राक् प्रदर्शितम् । **कोट्टार्य( कोव्याचार्य )** – वादिगणिमहत्तरेण **विशेषावश्यकभाष्य**–टीकायाम्–'**सिंहसूरि**क्षमाश्रमणपूज्यपादाः' इति नाम–निर्देशपूर्वकं तदीयं पद्यमुद्धृतम् । अन्यत्र **तत्त्वार्थशास्त्रटीकाकारेण भास्वामिशिष्येण सिद्धसेनगणिना** निजगुरुपरम्परायां पूर्वज**दिन्नगणि**क्षमाश्रमणस्य शिष्यस्य **भास्वामि**गुरोश्च '**सिंहशूर**' नाम वर्णितम्—

"आसीद् **दिन्नगणिः** क्षमाश्रमणतां प्रापत् क्रमेणैव यो,
विद्वत्सु प्रतिभागुणेन जयिना प्रख्यातकीर्तिर्भृशम् ।
वोढा शीलभरस्य सच्छ्रुतनिधिर्मोक्षार्थिनामग्रणी-
र्जज्वालामलमुच्चकैर्निजतपस्तेजोभिरव्याहतम् ॥ १ ॥
यत्र स्थितं प्रवचनं, पुस्तकनिरपेक्षमक्षतं विमलम् ।
शिष्यगणसम्प्रदेयं, जिनेन्द्रवक्त्राद् विनिष्क्रान्तम् ॥ २ ॥
तस्याभूत् परवादिनिर्जयपटुः सैंहीं दधत् शूरताम्,
नाम्ना व्यज्यत **सिंहशूर** इति च ज्ञाताखिलार्थागमः ।
शिष्यः शिष्टजनप्रियः प्रियहितव्याहारचेष्टाश्रयाद्,
भव्यानां शरणं भवौघपतनक्लेशार्दितानां भुवि ॥ ३ ॥
निर्धूततमःसंहतिरखण्डमण्डलशशाङ्कसच्छाया ।
अद्यापि यस्य कीर्तिर्भ्रमति दिगन्तानविश्रान्ता ॥ ४ ॥
शिष्यस्तस्य बभूव राजकशिरोरत्नप्रभाजालक-
व्यासङ्गाच्छुरितस्फुरन्नखमणिप्रोद्भासिपादद्वयः ।
**भास्वामी**ति विजित्य नाम जगृहे यस्तेजसां सम्पदा,
भास्वन्तं भवनिर्जयोद्यतमतिर्विद्वज्जनाग्रेसरः ॥ ५ ॥

क्षमया युक्तोऽतुलया, समस्तशास्त्रार्थविन्महाश्रमणः ।
गच्छाधिपगुणयोगाद्, गणाधिपत्यं चकाराध्यम् ॥ ६ ॥
तत्पादरजोऽवयवः, स्वल्पागम-शेमुषीक-बहुजाड्यः ।
**तत्त्वार्थशास्त्र-टीकामिमां व्यधात् सिद्धसेनगणिः** ॥ ७ ॥
अष्टादश सहस्राणि, द्वे शते च तथा परे ।
अशीतिरधिका द्वाभ्याम्, टीकायाः श्लोकसङ्ग्रहः ॥ ८ ॥"

—तत्त्वार्थशास्त्र-टीका-प्रशस्तौ ( दे. ला. )

तत्र नयचक्रस्य टीकाकृत्त्वेन सिंहसूरेः स्पष्टं न संस्मरणम् । व्याख्याकारस्य समयो विशेषपरिचयो वाऽत्र नोपलभ्यते, तथापि तस्य बहुश्रुततताऽपि च न्यायागमादिशास्त्र-निष्णातता पाठकानां प्रतीता भविष्यत्येव नयचक्रस्यास्य प्रथमभागस्य विवरणविलोकनेनापि । विविधविषयकशास्त्रीयप्रमाणानां मत-मतान्तरीयप्रामाणिकानां नामानि, तदवतरणानि चात्र विस्तरेण प्रदर्शितानि इत्यतस्तस्य विशिष्टवाङ्मयावगाहकत्वं प्रकटं भवति, प्राचीनानां दुर्लभानां दार्शनिकादिग्रन्थानां नामान्यवतरणान्यपि चेतो ज्ञातुं शक्यन्ते । प्रस्तुतप्रथमभागनिर्दिष्टनामसूची वर्णादिक्रमेणाग्रे प्रदर्श्यते ।

**विरहाङ्कहरिभद्रसूरेः शास्त्रवार्तासमुच्चयस्य** यदवतरणमत्र [पृ. ५४] अवलोक्यते, तत्तु वाक्यपदीयादवतारितं ज्ञायते; एवं व्याख्या-सहितस्य सम्पूर्णस्यास्य शास्त्रस्यान्तर्गतानां गद्य-पद्यमयानामवतरणानां ग्रन्थकारादिनाम्नां च निरीक्षणं, तेषां सम्यक् स्थान-समयादिविचारणमावश्यकम् । तदनन्तरं व्याख्याकारस्य सिंहसूरेः समयो विचारयितुं शक्यः ।

## नयचक्रस्य प्रथमेऽरचतुष्टयात्मके भागे न्यायागमानुसारिण्यां स्पष्टास्पष्ट-निर्दिष्टानां विशिष्टनाम्नां वर्णादिक्रमेण सूची ।

## सम्पादन आधारभूताः पुस्तिकाः ।

### [१] प.

पत्तन-(फोफलिया वाडा, आगली शेरी)-तपागच्छजैनसङ्घभाण्डागारीया १०"×४" प्रमाणोपेता शुद्धाशुद्धप्रतिः प्रान्तपत्रविरहिता ४६९ पत्रात्मिका, मुख्यतया तदाधारेण जाता एतस्य ग्रन्थस्य प्रतिकृतिरत्र सम्पादने उपयुक्ताऽभवत् । एतस्याः प्रतेश्च 'फोटोस्टेट' साधन-द्वारा कारिता एका प्रतिकृतिरत्र वटपद्रीयप्राच्यविद्यामन्दिरे स्थापिता ।

एतस्याः प्रारम्भे ( पृ. १ टि. ) '........पं. नयविजयगणिगुरुभ्यो नमः' निर्देशादनन्तरमिदं पद्यम्—

"प्रणिधाय परं रूपं, राज्ये श्रीविजयदेवसूरीणाम् ।
नयचक्रस्यादर्शं, प्रायो विरलस्य वितनोमि ॥ ऐं नमः ।"

इत्यत एतत् प्रति-पुस्तकं तपागच्छनायक-श्रीविजयदेवसूरिराज्ये [ वि. सं. १६७१-१७१३ ] पं. नयविजयगणिगुरु-शिष्येण 'ऐं नमः' इति सरस्वतीमन्त्रपदाङ्कित-मङ्गलसङ्केतेन सुप्रसिद्धन्यायविशारद-न्यायाचार्यमहोपाध्याययशोविजयगणिनाऽलेखीति प्रसिद्धिः । अत्र प. संज्ञया सूचितमेतदादर्शपुस्तकं विक्रमीयाष्टादश-शताब्द्याः प्रारम्भे लिखितमनुमीयते । अन्यत्र सं. १७१४ वर्षे लिखितं सूचितं तन्न यथोचितम् । प्राग्भाग-सम्पादकेन क. ख. ग. घ. संज्ञया सूचिताः प्रतयः प्रायेण एतदनुसारिण्यः । संवत् १७५२ वर्षेऽस्मात् लिखिते एकत्र पुस्तक-प्रान्ते-'महोपाध्यायश्रीजशविजयगणिना कृतो ग्रन्थो नयचक्रः शास्त्रः ।' इति केनचित् लिखितमिति परम्परया भ्रान्तिरवतीर्णा यदयं ग्रन्थः श्रीयशोविजयेन कृतः, वास्तविकं त्वेतत् तेन नयचक्रस्यादर्शोऽन्येषां साहाय्येन प्रश्नेण रचितस्तेषां नामान्यपि तत्प्रान्ते प्रकाशितानि पठ्यन्ते—

"पूर्वं पं. यशोविजयगणिना श्रीपत्तने वाचितं ।
आदर्शोऽयं रचितो राज्ये श्रीविजयदेवसूरीणाम् ।
संभूय यैरमीषामभिधानानि प्रकटयामि ॥ १ ॥
विबुधाः श्रीनयविजया, गुरवो जयसोमपंडिता गुणिनः ।
विबुधाश्च लाभविजया, गणयोऽपि च कीर्तिरत्नाख्याः ॥ २ ॥
तत्त्वविजयमुनयोऽपि च प्रयासमत्र स्म कुर्वते लिखने ।
सह रविविजयैर्विबुधैरलिखच्च यशोविजयविबुधः ॥ ३ ॥
ग्रन्थप्रयासमेनं दृष्ट्वा तुष्यन्ति सज्जना बाढम् ।
गुणमत्सरव्यवहिता दुर्जनदृग् वीक्षते नैनम् ॥ ४ ॥

तेभ्यो नमस्तदीयान् स्तुवे गुणांस्तेषु मे दृढा भक्तिः।
अनवरतं चेष्टन्ते, जिनवचनोद्भासनार्थं ये ॥ ५ ॥ श्रेयोऽस्तु ।
सुमर्द्यानप्ययमुच्चैः, पक्षेणैकेन पूरितो ग्रन्थः ।
कर्णामृतं पटुधियां, जयति चरित्रं पवित्रमिदम् ॥ ६ ॥"

[२] भ.

भावनगर( सौराष्ट्र )स्थानीयायाः श्रेष्ठि–'डोसाभाई अभेचंद पेढी' संज्ञिकाया जैन–सङ्घ-संस्थायाः १०"×४" प्रमाण–५७२–पत्रात्मिका शुद्धाशुद्धा स्थूलाक्षरमयी प्रतिः, श्रीयुत 'कुंवरजीभाई आणंदजी' श्रीजैनधर्मप्रसारकसभायाः प्रमुख इत्यस्मादधिगताऽऽसीद्, प्रतिपत्रं 'नयचक्रवालवृत्ति' इत्यक्षराङ्किता साऽत्र पाठान्तरप्रदर्शने भ. संज्ञया व्यवहृता । तत्र प्रति-प्रान्ते लेखयितुः परिचय ईदृश उपलभ्यते—

"श्रीआर्यरक्षितगुरोः प्रसृते विशाले, गच्छे लसन्मुनिकुले विधिपक्षनाम्नि ।
सूरीश्वरा गुणनिधान–सुनामधेया, आसन् विशुद्धयशसो जगति प्रसिद्धाः ॥ १
तत्पट्टपद्मतरणिस्तरणिर्भवाब्धौ, श्रीधर्ममूर्त्तिरिति सूरिवरो विभाति ।
सौभाग्य-भाग्य-सुखसद्गुणरत्न-रत्नगोत्रः पवित्रचरितो महितो विनेयैः ॥ २
तेन स्वश्रेयसे ज्ञानभांडागारे हि लेखिते । नन्दतान्नयचक्रोरु तुंबपुस्तकमुत्त[ म ]म् ॥ ३

पुंजो मुंजोपमो लक्ष्म्या, मंत्रिगोविंदनन्दनः ।
श्रीगुरोराज्ञया सुज्ञः, शास्त्रमिदमलीलिखत् ॥ ४ "

धर्ममूर्तिसूरि-विद्यमानता विक्रमीयसप्तदशशताब्द्यामासीद् इति ज्ञायते तत्प्रतिष्ठितप्रतिमाऽऽदिलेखेन, लेखितागमाद्युल्लेखेन, विधिपक्षाञ्चलगच्छ-पट्टावल्यादिनिर्देशेन च। अत एतस्याः पुस्तिकाया लेखनकालोऽत्रानिर्दिष्टोऽपि स एव सप्तदशशताब्दी-मध्यभागः सम्भाव्यते ।

धर्ममूर्तिसूरिसदुपदेशेन ज्ञानभाण्डागारे लेखिते मन्त्रिगोविन्दनन्दनेन श्रीमता पुञ्जेन लेखिता एषा प. आदर्शात् प्राचीना प्रतिरत्र चिरं सम्पादनार्थं धृता, विलम्बेन च पश्चात् प्रेषिता; धैर्यधारिणां संस्थाऽधिकारिणामुपकारं स्मरामः । उपर्युक्तपुस्तिकाद्वयस्यापि प्रारम्भ–प्रान्त्यपत्रद्वयस्य 'फोटो' प्रतिकृतिरत्र प्रयोजिता ।

उपकृतं चैवं सार्थकनामधेयाभ्यां विद्वद्वर्यमुनिश्रीपुण्यविजय–जम्बूविजयाभ्यां, याभ्यां सम्पादनार्थं कृता स्वकीया नयचक्रादर्शद्वयस्य तृतीय-चतुर्थस्य प्रतिकृतिरस्मत्प्रार्थनयाऽत्र प्रैषि ।

## सम्पादन-निवेदनम्

प्रस्तुतायां गायकवाडप्राच्यग्रन्थमालायां [क्र. ३०-३१] बौद्धदर्शनानुसारी शान्तरक्षितकृतस्तत्त्वसङ्ग्रहः कमलशीलकृतया पञ्जिकया सहितः प्राग् ईस्वीसन् १९२६ वर्षे प्रकाशतामागतः, तथा [क्र. ३८] न्यायप्रवेशोऽपि हरिभद्रसूरिरचितया टीकया, पार्श्वदेवगणिविहितया पञ्जिकया च समुपेतः ईस्वीसन् १९३० वर्षे प्रकाशितः, अन्यदर्शनमतानुसारिणोऽन्येऽपि ग्रन्थाः प्रसिद्धिमागताः; एवं जैनदर्शनानुसारिणोऽस्य नयचक्रस्य प्रकाशनमत्र समुचितं व्यचारि।

इतो विंशत्या वर्षेभ्यः प्राक् प्रारब्धमासीदेतस्य महतस्तर्कप्रधानस्य गहनस्य ग्रन्थस्य सम्पादनम्, किन्तु 'श्रेयांसि बहुविघ्नानि' इति प्रचलितोक्तिरत्र प्रबलाऽजनि। अस्य प्राग्नियुक्तसम्पादकेन यथाप्राप्ता लिखिता प्रतिकृतिर्विशिष्टां सम्पादकपद्धतिमुपेक्ष्य, विनाऽन्यप्रतिसम्मेलनम्, विनाऽऽवश्यकपाठान्तरादियोजनाम्, विना मूल-व्याख्या-पृथक्करणविवेकम्, विना पूर्वपक्षोत्तरपक्षादिविशिष्टविभागस्पष्टताम्, विहाय ग्रन्थान्तर्गतमोद्धृतप्रामाणिकप्रमाणपाठानां समुचितां व्यवस्थाम्, अनादृत्यान्तर्गतप्राकृतपाठानां संस्कृतां छायाम्, एवमेव मुद्रणालये प्रेषिताऽऽसीत्, कथंचिदसदृष्टिपथ आनायितमशुद्धिबहुलं प्रारम्भ-'प्रूफ'पत्रादि, तदानीं मया यथामति मार्गदर्शनाय निवेदनं कृतमासीत्, प्राथमिकान्यष्टपत्राणि सम्पाद्य प्रदर्शितान्यपि। कियत्कालं सम्पादकाय समुचितसम्पादनार्थमवसरोऽपि दत्तः, एवं चिरं कार्यं स्थगितमासीत्। प्राक्तनेनैव सम्पादकेन निजमान्द्य—गुरुमान्द्य—मुद्रणालयादिमान्द्यादनन्तरं चिरात् पुनरपि प्रारभ्यैतत्सम्पादनं कथञ्चित् २३२ पृष्ठं यावदानीतम्, तावता दैवयोगात् सं. २००० वर्षे दीपोत्सवदिवसे विक्रमपुरे(बीकानेर, मारवाड-मध्ये) निराधारं विहायैतत्-सम्पादको मुनिचतुरविजयः (दक्षिणविहारि-मुनिश्रीअमरविजयशिष्यः) दिवं गतवान्!

तदनन्तरं कियता कालेन तत्स्थानात् सन्निहितसन्मान्याचार्यश्रीविजयवल्लभसूरिसकाशात् तदीयावशिष्टप्रति-पत्र-पुस्तकादि अत्रानायि, मुद्रणालये च पतितं 'प्रूफ' प्रतिकृति-प्रभृत्यप्यत्र प्रत्यग्राहि। २३३ पृष्ठतोऽवशिष्टस्य प्रथमभागस्य सम्पादनकार्यभारो मयि समारोपि तदानीन्तनेन ग्रन्थमालाया मुख्यसम्पादकेन डॉ. विनयतोष—भट्टाचार्येण।

एतादृक्तर्ककर्कशस्य मत-मतान्तरीय-शास्त्रार्थ-विचार-ज्ञानगहनस्य विविधदर्शनशास्त्रसमीक्षात्मकस्य वाद-विवाद-प्रतिवादजटिलस्य, विशालवाङ्मयावगाहनागाधस्य प्रतिभाप्रबल—वाचोयुक्तिविशिष्टस्य ग्रन्थस्य सम्पादने तादृग् विशिष्टं बुद्धिपाटवमपेक्ष्यते, तादृग् विशालं ज्ञानमपेक्ष्यते, तादृशी स्मृति-धारणादिशक्तिरप्यपेक्ष्यते, प्राचीनाः शुद्धा आदर्शप्रतयोऽप्य-

पेक्ष्यन्ते, मत-मतान्तरीय-मन्तव्यनिदर्शनार्थमत्र चर्चितानामवतारितानां प्राचीनप्रमाण-ग्रन्थानां तादृशी सन्निहिता सामग्री, तद्विचारणार्थं समुचिता प्रतिभाऽप्यपेक्ष्यते, अशुद्धि-बहुलात् प्राचीनलिखितपुस्तकात् सम्यक् सम्पादनकौशलमप्यपेक्ष्यते; अपेक्षितस्यैतस्य सर्वस्य न्यूनतायामपि मन्दबुद्धिनाऽपि मयैतत् साहसकर्मानुष्ठितम्, प्राक्सम्पादकेनापूर्णः स्थापि-तोऽस्य ग्रन्थस्य प्रथमो भागो यथाकथञ्चित् संशोध्य समर्प्यते तार्किकेभ्यः । क्षन्तव्योऽहमत्र, विशालबुद्धिशालिभिर्विद्वद्भिः सम्यक् संशोधनादि कर्तव्यम्, पठन–पाठनादिना शास्त्रीयं रहस्यं विचारणीयम् ।

आनन्दजनकं तु श्रूयतेऽस्य ग्रन्थस्यास्यां ग्रन्थमालायां सम्पादनं श्रुत्वा, सम्पादितं च दृष्ट्वा केचन जैनाचार्य-मुनयोऽन्यत्र समीचीनसम्पादनकर्मणि प्रोत्साहिनोऽभवन् । एवमपि प्रकाशतामागच्छतु प्रमोदावहो भारतीयप्रतिभाप्रकर्ष इत्याशास्ते गान्धीत्युपाह्वः

सं. २००७ विजयादशम्याम्<br>वटपद्रे प्राच्यविद्यामन्दिरे

**श्रीभगवान्श्रेष्ठितनुजः**<br>**लालचन्द्रः ।**



श्रीमल्लवादिसूरिप्रणीतं
सिंहसूरिगणिवादिक्षमाश्रमणदृब्धया न्यायागमानुसारिण्या
व्याख्यया विभूषितम् ।

# नयचक्रम् ।



जयति नयचक्रनिर्जितनिःशेषविपक्षचक्रविक्रान्तः ।
श्रीमल्लवादिसूरिर्जिनवचननभस्तलविवस्वान् ॥ १ ॥

तत्प्रणीतमहार्थयथार्थनयचक्राख्यशास्त्रविवरणमिदमनुव्याख्यास्यामः । स भगवानैदंयुगीनोपपत्तिरुचिभव्यजनानुग्रहार्थमर्हत्प्रवचनानुसारि नयचक्रशास्त्रमारिप्सुर्मङ्गलार्थं शासनस्तवं वक्ष्यमाणवस्तूपसंहारार्थमाद्यं वृत्तमाह—

[ व्याप्येकस्थमनन्तमन्तवदपि न्यस्तं धियां पाटवे
वाचां भागमतीत्य वाग्विनियतं गम्यं न गम्यं क्वचित् ।
व्यामोहे तु जगत्प्रतानविसृतिं व्यत्यासधीरास्पदं
शेषन्यग्भवनेन शासनमलं जैनं जयत्यूर्जितम् ॥ १ ॥ ]

व्याप्येकस्थमित्यादि । व्याप्नोति[4] व्याप्तुं शीलमस्येति वा व्यापि औणादिकस्ताच्छीलिको वा । किं व्याप्यम् ? अविशेषितत्वात् सर्वं परमाण्वादिवस्तु । तत् कथं जैनेन शासनेन व्याप्यत इति चेद् द्रव्यार्थादेशात् तद् यथा—एकपरमाणुवर्ण—गन्ध—रस—स्पर्शपरिणामैः सप्रभेदैः स्वाभाविकैः पुरस्कृतैः पश्चात्कृतैश्च द्व्यणुकादिभिः सांयोगिकैर्महास्कन्धपर्यन्तैर्वैश्रसिकैः प्रायोगिकैश्च कार्मणशरीरादिभिरभिसम्बध्यते । यथोक्तम्—

* "एकदवियम्मि जे अत्थपज्जया वयणपज्जया वा वि ।
तीताणागतभूता तावइअं तं हवइ दव्वं ॥"
[ सन्मतितर्के का. १, गा. ३१ ]

[ एकद्रव्ये येऽर्थपर्याया वचनपर्याया वाऽपि ।
अतीतानागतभूतास्तावत्कं तद् भवति द्रव्यम् ॥ ]

१ भ. ॐनमो वीतरागाय । नमः श्रीमल्लवादिने । प. भट्टारकश्रीहीरविजयसूरीश्वरशिष्यमहोपाध्यायश्रीकल्याणविजयगणिशिष्यपण्डितश्रीलाभविजयगणिशिष्यपण्डितश्रीजीतविजयगणिसतीर्थ्यपण्डितश्रीनयविजयगणिगुरुभ्यो नमः ॥ प्रणिधाय परं•रूपं राज्ये श्रीविजयदेवसूरीणाम् । नयचक्रस्यादर्शं प्रायो विरलस्य वितनोमि ॥१॥ ऐं नमः । २ भ. °गीष° । ३ भ.° प्येत । स्थमि°, प. अ. °प्येहस्थितमि° । ४ भ. °प्नोतीति व्याप्तिः शी० । ५ भ. °श्च द्व्य° । ६ भ. °सिकैः । ७ भ. °विअ° । ८ भ. °गय° । ९ भ. °इयं होइ तं ।

तथा गति–स्थित्यवगाह–वर्तनालक्षणैर्धर्माधर्माकाश–कालैरापेक्षि[1]कैर्जीवानामपि स्वाभाविक–पारभाविकैरुप्रयोगशरीरादिभिरतस्तस्य तस्य वस्तुनो द्रव्यार्थादिष्टस्य तेषु तेषु परिणा[2]मेष्वव्यावृत्तस्वरूपत्वात् तेषां च तथा तदभेदात् सर्वेषां द्र[3]व्यपर्यायाणां परस्परतश्च सदविशेषात् तादात्म्यमतस्तत् तद्द् व्याप्नोतीति व्यापीत्युच्यते । एवं च [4]सति संमु[5]ग्धत्वाद् वस्तुनस्तद्विषययोरभिधान-प्रत्यययोर्व्यवहार[6]-निश्चयफलयोरभावादिदोषाः स्युः, मा भूव[7]न्निति पर्यायादेश आश्रीयते ।

एकस्थ[8]मिति । प्रत्येकपरिसमाप्तेरसाधारणधर्माणां भावानामसङ्कीर्णरूपत्वेन स्ववृ[9]त्तिप्रतिलम्भान्न हि कश्चित् कञ्चिदपेक्ष्य भवितुमर्हति भाव इत्येकमेकमेव वस्तु तदर्पणादेकं[10]स्थमिति चोच्यते शासनम् । तस्य[11] पृथक्पृथगर्पणात् स्व-पररूपतः समग्रादेशवशाद् व्यापीति[12] । व्यापि चैकस्थं चैकमेव तत् । एवमुत्तरेष्वप्यनन्तमन्तवदपि द्रव्य-क्षेत्र-काल-भावादेशैरविशेषितत्वाद् विशेषितत्वाच्च । यथोक्तम्—

*“एयं दुवाल[13]संगं गणिपिडगं दव्वतो ए[14]गं पुरिसं पडुच्च सादियं सपज्जवसियं । अणेगे पुरिसे पडुच्च अणादियं अपज्जवसिअं । खेत्ततो भरतेरवते पडुच्च सादिअं[15] सपज्जवसिअं[16] । महाविदेहे पडुच्च अणादियं अपज्जवसिअं[16] । कालओ[17] उसप्पिणि–अवसप्पिणीओ पडुच्च सादियं सपज्जवसिअं[16], णोउ[17]सप्पिणि–अवसप्पिणीओ पडुच्च अणादिअं[15] अपज्जवसिअं[16] । जे जदा(हा) जिणपण्णत्ता भावा ।”

[ नन्दीसूत्रे सू. ४३ प. १९५ ]

इत्यादिना सा[18]दिकं सपर्यवसितमेव । अथवा नास्मिन्नन्तोऽस्तीत्यनन्तमन्तोऽस्तीत्यन्तवत् । कस्य ? अविशेषितत्वात् सर्वस्य । तद् यथोक्तम्–

† “इमा णं भंते ! रयणप्पभा पुढवी किं सासया असासया[19] ? । गोयमा !

* एतद् द्वादशाङ्गं गणिपिटकं द्रव्यत एकं पुरुषं प्रतीत्य सादिकं सपर्यवसितं, अनेकान् पुरुषान् प्रतीत्य अनादिकमपर्यवसितम् । क्षेत्रतो भरतैरावतौ प्रतीत्य सादिकं सपर्यवसितम्, महाविदेहान् प्रतीत्य अनादिकमपर्यवसितम् । कालत उत्सर्पिण्यवसर्पिण्यौ प्रतीत्य सादिकं सपर्यवसितम्, नोउत्सर्पिण्यवसर्पिण्यौ प्रतीत्य अनादिकमपर्यवसितम् । ये यथा जिनप्रज्ञप्ता भावाः ।

† इयं ननु भदन्त ! रत्नप्रभा पृथ्वी किं शाश्वती ? अशाश्वती ? । गौतम ! स्यात् शाश्वती,

१ भ. °क्षकै° । २ प. °माणेष्व° । ३ प. द्रव्याणां प° । ४ प. सत्पति, भ. सत्यपि ति । ५ भ. सन्मु° । ६ प. °रविनि° । ७ प. °भूय° । ८ भ. °स्थति । ९ भ. °स्तवृ° । १० प. °वार्समस्थमिति वो° । ११ भ. तस्य तस्य तस्य । १२ भ. °ति चैकमे° । १३ भ. °संगणि° । १४ भ. एकं । १५ भ. °दियं । १६ भ. °सियं । १७ भ. °लउ उसप्पि उसप्पिणीउ । १८ भ. सादियं सपज्जवसितमेव । १९ भ. °सता गोतमा ।

सिया सासया सिया[1] असासया । से केणट्ठेणं भंते ! एवं वुचइ सिया सासया सिया असासय त्ति ? । गोतमा[3] ! दव्वट्ठयाए[4] सासया, वण्णपज्जवेहिं गंधपज्जवेहिं रसपज्जवेहिं फासपज्जवेहिं संठाणपज्जवेहिं असासया ।" [ जीवाभिगमे ३।१।७८ प. ९८ ] इत्यादि 'न्यस्तं धियां पाटवे' न्यस्तं निक्षिप्तं[6] धियामाभिनिबोधिकज्ञानभेदानां पटुतायां कर्तव्यायां कारणत्वेनेत्यर्थः । यथोक्तम्–

* "जत्थाभिनिबोहिअनाणं[8] तत्थ सुअनाणं[9] । जत्थ सुअनाणं तत्थाभिनिबोहिअनाणं" [ नन्दीसूत्रे, सू. २४ प. १४० ] ति । श्रुतज्ञानसंस्कृतधियां नित्य एवानित्य एवावक्तव्य एवेत्येवमाद्येकान्तवादिग्राहेषु[10] घटादेः कुम्भकारादिवेतनदानाद्यभावप्रसङ्गान्न नित्य एव, चिकीर्षा-स्मरण-प्रत्यभिज्ञान-संरक्षणाद्यभावप्रसङ्गान्नानित्य एव, स्वरूपानवधारणे वाग्व्यवहारोच्छित्तिप्रसङ्गादवक्तव्य इति, वक्तव्यत्वावक्तव्यत्वयोः[11] स्ववचनविरोधान्नावक्तव्य इत्येवमादिदोषप्रदर्शनेन स्यान्नित्यः, स्यादनित्यः, स्यादवक्तव्य इत्यनेकान्ताभ्युपगमाद् यथाप्रमाणं धर्मधर्मिव्यवस्थानात् तद्दोषपरिहारेण वस्तुस्वरूपोपपादनेन परमतनिषेधानुज्ञानाभ्यां प्रवादिनां परस्परविरोधनिरोधैकवाक्योपानयनान्मध्यस्थसाक्षिवत् प्रमाणीभूतं तेषामपि तत्त्वावबोधपाटवाधानसमर्थत्वात् । स्यान्मतम् ।

नन्वत एवं स्थाणु-पुरुषादिविषयसंशयविपर्ययवन्नित्यानित्याद्येकान्तविकल्पात्मकत्वाद् व्यामोहहेतुरपि काल–नियति–स्वभाव–पुरुष–दैवेश्वर[12]–यदृच्छाद्येकान्तकारणविकल्प[13]जगत्प्रतान[14]विसृतिदर्शनादिति । अत्रोच्यते—न[15], व्यत्यासधीरास्पदत्वात् । एकपुरुषपितृ–पुत्रत्वादिवत् । जैनं हि शासनं कालादिजगत्प्रभेदैकान्तगतीर्[16]व्यत्यस्य व्यावर्त्य परस्पर[17]विरोधनिवारणेनानेकान्तात्मकप्रतिष्ठानसमाधानकारणमेकान्तानेकवादसमाहारात्मकैकप्रतिपत्तिकं परमतनिषेधानुमोदनाभ्यामेव न काल एव, न नियतिरेव, एककारणवादिनां कारणसत्त्ववत् कार्यसत्त्वेऽनैकान्तिकत्वात् । कारणस्यापि कारणत्वे[18]ऽनवस्थादोषात्,

---

स्यादशाश्वतीति ? । तत् केनार्थेन भगवन् ! एवमुच्यते स्यात् शाश्वती स्यात् अशाश्वतीति ! गौतम ! द्रव्यस्थित्या शाश्वती, वर्णपर्यवैर्गन्धपर्यवै रसपर्यवैः स्पर्शपर्यवैः संस्थानपर्यवैरशाश्वती ॥

* यत्राभिनिबोधिकज्ञानं तत्र श्रुतज्ञानम् । यत्र श्रुतज्ञानं तत्राभिनिबोधिकज्ञानम् ।

---

१ प. सिअ । २ भ. °सत । ३ प. गो । ४ भ. °ताए । ५ भ. °सता । ६ प. निःक्षि° । ७ °कमे° । ८ भ. °णिबोधियणाणं । ९ भ. सुतणाणं । १० भ. एवेमा° । ११ भ. त्वात्व । १२ प. °वथेर° । १३ अ. °विकल्पाज्ज° । १४ प. °तारवि° । १५ प. र व्य° । १६ अ. °न्तजगती° । १७ भ. परवि° । १८ भ. °णवत्त्वे ।

अनेककारणत्वप्रसङ्गात्, अनेककारणत्वस्य सिद्धेः । अनेककारणत्वेऽपि सदाद्यविशेषात् । अनन्वयस्याभावात् इत्यादिदोषात् कालोऽपि नियतिरपीत्यादि । एकान्ते दोषदर्शनादनेकान्ते चादोषप्रदर्शनाल्लौकिकवादसंवादि । यथोक्तम्—

"क्वचिन्नियतिपक्षपातगुरु[1] गम्यते[2] ते वचः
स्वभावनियताः प्रजाः समयतन्त्रवृत्ताः क्वचित् ।
स्वयंकृतभुजः क्वचित् परकृतोपभोगाः पुन-
र्न[3] वाविशदवाददोषमलिनोऽस्यहो ! विस्मयः ॥" इति ॥

[ सिद्धसेनद्वात्रिंशिका ३, श्लो० ८ ]

तदेवंविधं शासनमूर्जितं स्वातन्त्र्यात् परमतोपजीवन[4]वैक्लव्य[5]रहितत्वात्[6] परैराघ्रातस्य सुसिद्धान्ता[7]त्यागात् कल्पनान्तराश्रयणाभावात् अनाकुलत्वाच्च जेतृत्वाद् वोर्जितमनन्तरोक्तै[8]र्हेतुभिर्जयति परस्परानुवर्तिनयोत्साहबलसम्पदुपेतत्वाद् वा जयत्येवोदितपुण्यनयोपेतचक्रवर्तिशासनवत् । तत् तु सर्वथा योगिनां गम्यम्, सर्वनयप्रपञ्चसंस्कृतधियामतनुविषयप्रज्ञत्वात् तेषाम् । अस्मदादिभिरेकदेशमाहात्म्यदर्शनाच्छेषमाहात्म्यमनुमानेन गम्यते । न गम्यं क्वचिदिति । यथैकदेश[9]गम्यत्वेऽन[10]भिभवनीयत्वेऽप्यन्यत्र गम्यताविषयः[11] खण्ड्यते तथा मा भूदिति न गम्यं क्वचित् । अथवा गमनीयं गम्यं प्रतिपादनीयं न गम्यं प्रतिपादनीयं लोकप्रसिद्धव्यवहारानुपातिस्याद्वादपरिग्रहस्फुटपदार्थत्वात् । एकदेशगतेः शेषसुगमत्वात् । अयोग्यपुरुषापेक्षया वा न गमयितव्यम् । यथा—

"स्थूलमतये न वाच्याः सूक्ष्मा अर्थाः स तानगृह्णानः ।
व्याकुलितमन्य(ना) मिथ्यात्वं वा गच्छेदपरिणामात् ॥"

अथवा प्रागसमीक्ष्योक्तार्थसमीकरणार्थं कल्पनान्तरैर्न गमनीयं क्वचित् । यथा बौद्धे[12] सर्वं क्षणिकमिति प्रतिज्ञाय स्मृत्यभिज्ञान-बन्ध-मोक्षाद्य[13]भावदोषपरिहारार्थं सन्तान[14]कल्पना । प्रधाननित्य[15]तां प्रतिज्ञाय परिणामकल्पना व्यक्तात्मतां[16] कापिले । 'क्रियावद् गुणवत् समवायिकारणम्' [ वैशेषिकदर्शने अ. १, सू. १५ ] इति सामान्यद्रव्यलक्षणं प्रतिज्ञायैकान्तनित्यानित्यवादे[17] च तदव्याप्तिपरिहारार्थमद्रव्यमनेकद्रव्यं च द्विविधं द्रव्यमिति । द्रव्यं[18] च सामा-

१ प. °तविप° । २ प. ते व° । ३ भ. °र्न वाद° । ४ प. °जीवि न । ५ भ. °व्यविर° । ६ भ. °त् घ्रा° । ७ भ. °सिद्धता° । ८ प. °त्वाद्यजे° । ९ प. भ. °शाग° । १० प. °नाभि° । ११ प. भ. व्यखण्डयतेस्तथा । १२ प. बौद्धौ, भ. बौद्धैः । १३ प. °क्षाभा° । १४ भ. °नपरिक° । १५ भ. °त्यति° । १६ प. °त्मना । १७ भ. °तनित्यवादं । १८ भ. °व्यत्वं ।

न्यविशेषाख्यं, तत् तत्त्वमिति द्रव्य-पर्यायनयद्वयाश्रयणेन पदार्थप्रणयनं काणभुजे। तथा द्रव्य-गुण-कर्माणि नानेति प्रतिज्ञाय तदत्यन्तभेदे नीलोत्पलादिसद्द्रव्यादिसामानाधिकरण्यविशेष्यत्वादिव्यवहाराभावदोषभयात् तत्सिद्ध्यर्थं 'सदिति यतो द्रव्य-गुण-कर्मसु द्रव्य-गुण-कर्मभ्योऽर्थान्तरं सा सत्ता [ वैशे० अ. आ. ३ सू. ७-८ ] इत्याश्रितपदार्थव्याजेन द्रव्यार्थ-पर्यायार्थाश्रयणं सङ्करदोषपरिहारार्थं च सामान्यस्यान्त्यविशेषस्य च परिकल्पनेति । **वाचां भागमतीत्य वाग्विनियतमिति** । प्रज्ञापनीयेष्वेव भावेष्वनन्ताःसङ्ख्येय-सङ्ख्येयभागगुणहानि-वृद्धिभ्यां क्षयोपशमविशेषापेक्षया मतिविशेषाभ्युपगमाच्चतुर्दशपूर्वधराणामेव परम्परतोऽद्यतनपुरुषेन्द्रियशक्त्युत्कर्षापकर्षवत् । उक्तं च—

*"जं चोद्दसपुव्वधरा छट्ठाणगया परोप्परं होंति ।
तेणं तु अणंतभागो पण्णवणिज्जाण जं सुत्तं ॥
पण्णवणिज्जा भावा अणंतभागो उ अणभिलप्पाणं ।
पण्णवणिज्जाणं पुण अणंतभागो सुअणिबद्धो ॥
अक्खरलंभेण समा ऊणहिआ होंति मइविसेसेहिं ।
ते वि य मईविसेसे सुअणाणब्भंतरे जाण ॥"
[ विशेषावश्यकभाष्ये गा. ६२-६४ ]

**शेषशासनन्यग्भावेन** वेत्यादि। परवादतिरस्करणेन जेष्यत्येव। तदवश्यं स्तुतिद्वारेण भवता तत्सामर्थ्याङ्गीकरणात्। नूनमेतत् प्रतिपादयिष्यति भवान्। तदनुरोधेनैव कस्यचिदिति। किं तत् कस्यचित् प्रसादेन जयति? विवदमानस्य

---

यत् चतुर्दशपूर्वधराः षट्स्थानगताः परस्परं भवन्ति ।
तेनानन्तभागः प्रज्ञापनीयानां यत् सूत्रम् ॥
प्रज्ञापनीया भावा अनन्तभागस्तु अनभिलाप्यानाम् ।
प्रज्ञापनीयानां पुनरनन्तभागः श्रुतनिबद्धः ॥
अक्षरलाभेन समा ऊनाधिका भवन्ति मतिविशेषैः ।
तानपि च मतिविशेषान् श्रुतज्ञानाभ्यन्तरे जानीहि ॥

---

१ भ. °यभा° । २ प. समिति° । ३ प. भ. परस्प° । ४ प. चउदस° । ५ प. परुप्प° । ६ प. तेणं अ । ७ प. पन्नव° । ८ भ. सुत° । ९ भ. °हिया । भ. °मती । १० प. हुंति । ११ भ. °सेण । १२ प. चिअ मईविसेसो । १३ प. °नाण° ।

गले पादं कृत्वा जयतीत्यभिप्रायः[1] । यद्वेवंविधमिति यद् योगिनामेव सर्वथा गम्यम्[2], न गम्यं क्वचिदप्यन्येषाम् । 'वाचां भागमतीत्य वाग्विनियतं' व्याप्यैकस्थमनन्तमनन्तवदपि 'न्यस्तं धियां पाटवे व्यामोहे[3] जगत्प्रतानविसृतिव्यत्यासे[4]धीरास्पदम् ।' जगत्प्रतानविसृतिव्यत्यासेन धीरमास्पदमचलं प्रतिष्ठानं च यस्य तत्र किमाश्चर्यं जयत्यूर्जितं चेति । किं तर्हि एवंविधतैव तु प्रतिपादनीया । अन्यमतासाधारणगुणता, सैव विरोधधर्मसम्भावे[5]नाभावाद् दुष्प्रतिपादेत्यभिप्रायः[6] ।

अत्राचार्य आह–किमेवं प्रतिपाद्यमस्ति ? । प्रतिपादितमेव तत् । यस्माद् द्रव्यार्थ–पर्यायार्थेत्यादि[7] । द्रव्येणार्थो द्रव्यार्थः, द्रव्यमर्थोऽस्येति वा । अथवा द्रव्यार्थिकः, द्रव्यमेवार्थो यस्य सोऽयं[8] द्रव्यार्थः 'स्वार्थिकोऽयं ठन्[9]प्रत्ययः' द्रव्यार्थिकः । एवं पर्यायार्थः[10] पर्यायार्थिको वा 'अर्थाच्चासन्निहित' [ ] इति वचनादर्थि–प्रत्यर्थिवदिनिरेव स्यादिति चेत्, नासन्निधानाभावात् तदर्थस्य । अथवाऽस्तीत्यस्य मतमास्तिकः । द्रव्य आस्तिको द्रव्यास्तिकः । तयोर्द्वयोर्भावो द्वित्वं न तदादयः । अनन्तांशा[11] विकल्पाः । वचनपथतुल्यसङ्ख्यपरसमयतुल्य[12]सङ्ख्यत्वान्नयानाम्—

> *"जावइया[13] वयणपहा[14] तावइआ[13] चेव हुंति[15] णयवाया[16] ।
> जावइआ णयवाया तावइआ[13] चेव परसमया ॥"
>
> [ सन्मतितर्के का० ३, गा० ४७ ]

एवंविधविकल्पोपक्लृप्तनयजालोपष्टम्भविधिभेदपदार्थानामेकै[17]वाक्यविधिस्तस्य विधानादशेषज्ञानान्यवयवा अस्य सर्वनयजनितानि । अवबोधसमुद्र एवाभेदेनावयवीभूतो यस्मिंस्तदवबोधसमुद्रावयवीभूतं शासनं दुरवगाहगम्भीराक्षोभ्यपदार्थरत्नाकरत्वसामान्यात् । एवंविधमेवेत्युक्तनयतरङ्गभङ्गसङ्ग्रहप्रस्तारात्मकमविकलपदार्थावद्योतम(प्र)द्योतमा(ना)दनेकादित्यसमूहवत् कृतप्रकाशं तमसोऽवकाशाभावात् सवितृसहस्रवद् भास्वरत्वादनभिभवनीयम् । तद्व्यतिरिक्ताः शासनिनः कपिल-व्यास-कणाद-शौद्धोदनि-मस्करिप्रभृतयः । तेषां वचनानि प्रत्यक्षानुमानविनिश्चेयपदार्था रूपादयो[18] घटादयोऽग्न्यादयश्च तेषां विपर्ययेण प्रणयनं

* यावन्तो वचनपथास्तावन्तश्चैव भवन्ति नयवादाः ।
यावन्तो नयवादास्तावन्तश्चैव परसमयाः ॥

१ प. जगती° । २ भ. °म्यं क्व° । ३ प. °मोके । भ. °मोज° । ४ भ. व्यत्यासप° । ५ भ. °संभावाद् । ६ प. °यः किं°, भ. किमव । ७ भ. °दि द्रव्यम° । ८ भ. सेयं । ९ प. °उन् । १० भ. प्रर्या° । ११ भ. °न्ना वि° । १२ प. °तुल्यत्वा° । १३ भ. °तिया । १४ भ. °पधा । १५ भ. होंति । १६ भ. °वादा । १७ प. °मेवा° । १८ भ. °योऽग्न्यादयं ।

तैः कृतं तेन[1] विपर्ययप्रणयनेन निरुक्तीकृतं[2] विसंवादत्वम् । तत् कथं प्रत्यक्षविनिश्चेयस्तावत् । युगपद्भाविषु प्रतिनियतेन्द्रियविषयेषु । घटाद्यचो(गो)रा[3]दृते ग्रहणाभावात् । न रूपादय एव । रूपाद्यन्यतमधर्मग्रहणद्वारमन्तरेण घटाद्यग्रहणात् तदभावे तदभावाच्च[4] न द्रव्यमात्रमेव । अयुगपद्भाविष्वपि पिण्डशिवका[5]दिषु मृदग्रहणे पिण्डशिवकाद्यग्रहणात् । मृदभावे पिण्डशिवकाद्यभावात् न पर्याया एव । मृदोऽपि शिवकाद्यन्यतमावस्थाविशेषा[6]वस्थानमन्तरेणाग्रहणादभावाच्च न द्रव्यमेव । एतेनाग्न्यादि–धूमादिलिङ्ग[7]–लिङ्गिव्यवहारो व्याख्यातः । कार्यानुमानविनिश्चयेऽपि न विशेषा एव निर्मूलत्वात्, खपुष्पवत् । न सामान्यमेवाविशेषितत्वात्, खपुष्पवत् । तस्मादेवं प्रत्यक्षानुमानविनिश्चेयपदार्थेषु सर्वलोकप्रसिद्धेषु विपर्ययप्रणयनमन्यशासनिनां रूपादय एव घटो, घट एव रूपादयः । रूपादयं च घटं च ( घटोऽवयवो ) रूपादिगुणोऽवयवीत्यर्थः, न रूपादयो न घट इति वा । अश्रावणशब्दवादिवचनवदिति सर्वलोकप्रसिद्धेन्द्रियप्रत्यक्षविरोधिवचनोदाहरणादनु[8]मातुं विरोधाद्यप्युदाहृतमेव । आशङ्कामपि सत्यत्वेन जनयितुम[9]लमिति निःसन्दिग्धमेवासत्यत्वं तेषामित्यर्थः ॥

अपि च लौकिकव्यवहारोऽपीत्यादि । यावद् व्यामोहोपनिबन्धनमिति । सातिशय[10]बुद्धिभिरपि परीक्षकैर्निरतिशयलोकप्रसिद्ध्यनुवर्तिभिः परात्ममतविशेषप्रतिपत्ति–निराकरणतत्त्वप्रतिपादने कार्ये[11] । इतरथा साक्षिविरहितव्यवहारवदनियतार्थैव[12] परीक्षा स्यात् । लौकिकास्तु नित्यानित्यावक्तव्याद्यनेकान्तरूपमेव घटादिकमर्थमव्युत्पन्न अ(म)पि प्रतिपद्य व्यवहरन्तो[13] दृश्यन्ते । तदपहृव[14]प्रवृत्तयश्चैकान्तवादा नित्य एवानित्य एवावक्तव्य एव घट इत्यादयः । तत्र शेषशासनेषु साध्विदं[15] साधु त्विदमिति विचारो व्यामोहस्यैव[16] निबन्धनं हेतुरित्यर्थः । विचारानवकाशात् विसंवादाच्च ।

लोकप्रत्यक्षादिनिश्चयेऽपि किं पुनरतीन्द्रियार्थे शेषशासनविसंवदनजनितास्थं च शेषशासनानां विसंवदनेन जनिता आस्था अस्मिन् जिनशासनेऽस्माकमिदं वरिष्ठमिति परपक्षदौःस्थित्यादेव स्वपक्षसिद्धिरावीतेनेति । अथवा स्वपक्षसौस्थित्याऽनुमानमप्यस्तीत्याह—प्रमाणद्वयसंसिद्धीत्यादि । लौकिकपरीक्ष-

---

१ भ. °तत्रे° नावि° । २ भ. °क्तं । ३ भ. घटद्योवाराद्दते, प. घटद्योवारादने । ४ प. तद्भाव–तदभावाच्च । ५ प. शिबिका° । ६ प. ०षा एव । ७ भ. °ङ्गं लिङ्गं लि° । ८ भ. °नु वि° । ९ भ. °नयति तु° । १० प. सतिशययु° । ११ प. कार्ये । १२ प. °दिनियतार्थेव । १३ प. °हारतो, भ. °हारंते त° । १४ प. °ह्लेव प्रभृतया° । १५ प. भ. साध्वेदं । १६ भ. °स्येव ।

काणां प्रत्यक्षानुमानप्रामाण्यं प्रत्यविसंवादात् । पूर्वैन्यायेन स्थितास्थितमृत्त्व-पृथुबुध्नादिसंस्थानोपादान्क(का)रणाभ्यां द्वयेन द्वयस्य वा प्रत्यक्षेणानुमानेन च तद्विनिश्चेयपदार्थद्वयस्य संसिद्धिस्तथा सम्पादितः प्रत्ययः प्रमाणं जैन्यां प्रक्रियायाम् । तत एव च प्रतिष्ठापितमत्यन्तपरोक्षेऽप्यर्थे मेरूत्तरकुरु-द्वीप-समुद्र-विमान-भवन-नरक-प्रस्तारप्रमाणादौ श्रद्धानं यस्मिंस्तदिदमूर्जितं जयतीति प्रत्याम्नायतेऽन्यथा प्रामाण्याभावाद् । यथोक्तम्–"प्रत्यक्षग्राहे च सिध्यति परोक्षाग्राहः सिध्यति । तदसिद्धौ सम्भावनाभाव एव प्रत्यक्षविसंवादित्वादुन्मत्त-वाक्यवत्" इति ॥

अस्य चार्थस्येत्यादि । यावद् गाथासूत्रमित्यनेन शास्त्रारम्भ–सम्बन्ध–प्रयोजनाभिधानम् । पूर्वमहोदधिसमुत्पतितनयप्राभृततरङ्गामग(गम)प्रभ्रष्टश्लिष्टार्थ-कणिक(का)मात्रमिति सम्बन्धः । न स्वमनीषिकयोच्यते । प्रमाणागमपरम्परा-गतमेवेदमित्यर्थः । अन्यतीर्थकरप्रज्ञापनाभ्यतीतगोचरपदार्थसाधनं प्रयोजनं शिष्यानुग्रहस्यान्यथा कर्तुमशक्यत्वात् । नयचक्राख्यमारभ्यं शास्त्रं तदन्तरेण तदसिद्धेः । शिष्यस्य प्रसङ्गविप्रसृतधियो मा भूद् व्यामोह इति संक्षिप्तार्थं गाथासूत्रमिदम्—

[ विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकवचोवत् ।
जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् ॥ ]

**विधिनियमेत्यादि** । अन्यशासनानृतत्वप्रतिपादनसाधनमिदमर्थापत्त्या तु भवति । शुद्धपदोच्चारणवद् विधिनियमभङ्गवृत्तियुक्तत्वाज्जैनं वचः सत्यमिति गम्यते । तद् व्याचक्षाणः सूरिर्विधि-नियमशब्दावलौकिकाविति परो मा मंस्तेति तत्पर्यायशब्दानुच्चारयति– **विधिराचार** इत्यादि । विधीयत इति विधिर्भाव-साधनो व्याहतकर्त्रर्थो यो विदधाति स कर्ता द्रव्यार्थः । को विदधाति ? पिण्डशिवकादिभावान् मृद् विदधाति । तया हि मृदा शिवकादयो विधीयन्ते लक्षणतस्त्वनपेक्षितव्यावृत्तिभेदार्थो द्रव्यार्थो विधिः । लोके दृष्टत्वात् । आदानं मर्यादया चारः आचार आत्मरूपापरित्यागः, पररूपानपेक्षः । एवं स्थित्यादिषु योज्यम् । पर्यायार्थतस्तु नियमः, निराधिक्ये आधिक्येन यमनं नियमः, परस्परप्रतिविविक्तभवनादिधर्मलक्षणः प्रतिक्षणनियतोऽवस्थाविशेषः । युगपद्भा-

१ प. °वान्या° । २ प. °निश्च° । ३ प. °माणा । ४ प. °व्सार्थं । ५ भ. °ध्येत् ।
६ भ. °ज्ञाना°, प. °न्यती° । ७ प. भ. °तत्वाप्र° । ८ भ. °णाऽ° । ९ प. हृक° ।
१० प. शिबिका° । ११ भ. °रः. आत्म° । १२ भ. °तिपक्षण ।

व्ययुगपद्भावी[1] वा रूपादिः शिवकादिश्च यो यो भवति स एव स एवेति । पर्यायशब्दानां शेषाणामप्ययमर्थो यथाक्षरं योज्यः ।

तयोर्भङ्गा[2] विधिर्विधिरित्यादि । तत्र विधिरनपेक्षितभेदानुगतिव्यावृत्तिव्यापारो, यथा गौरिति[3] । विधिविधिस्तु शुक्लादिभेदनियमवादिनं प्रत्यभेदप्रतिपादनव्यावृत्तः । कोऽयं शुक्लादिभेदो नाम गोत्वव्यतिरिक्त इति । विधिनियमोऽतिप्रसक्तस्य विशेषेऽवस्थापनं विधिप्रधानस्यैव तदंशेऽवस्थापनं यथा—गां शुक्लामानयेति । तदुभयात्मकं विधिर्विधेर्नियमं विधिनियमं तु विधिश्च नियमश्च. विधिनियमं द्वन्द्वैकवद्भावः । तुल्यकक्षौ विधि-नियमावेव सहितौ द्व्यात्मकं सर्वमिति । शेषा यथायोगमेतद्व्याख्यानुसारेण व्याख्येया भङ्गाः । सामान्येन तु कारणं विधिः, कार्यं नियमः, उभयं विधिनियमं, शेषास्तद्विकल्पा एव ।

एवं भङ्गाद् (न्) व्यवस्थाप्ये[4]दानीं वृत्तिं व्याख्यातुकाम आह—**तेषां विधिनियमभङ्गानां वृत्तिरिति** । तस्यास्तु लक्षणं स्वविषयसम्पातनेन भावनार्थानामा[5]त्मीय आत्मीये विषयेऽवतार्याऽऽर्यया तदर्था भाव्यन्ते । तथा हि—**तथा भवन्ति नान्यथा' इति** । नित्य एवाकृतकत्वादाकाशवत्, अनित्य एव कृतकत्वाद् घटवद् वेति । यथोक्तम्—द्रव्यस्यानेकात्मनोऽन्यतमैकात्मावधारणमेकदेशनयज्ञा[6]न्नय इति । प्रत्यक्षानुमानाभ्यां पूर्वावस्थि[7]तास्थितमृत्त्वपृथुबुध्नादिसंस्थानोपादानकारणाभ्यां[8] वृत्तितत्त्वमित्यत आह—जैनसत्यत्वसाधनवृत्तानुवृत्तिर्विवक्षितद्वादशविकल्पविशेषेणेति । तत्समाहारैकरूपतया तद्व्याख्यान[9]मित्यर्थः । अनेकसम्बन्धे देवदत्ते पितृपुत्रत्वादिधर्मसमाहारैकरूपवस्तुतत्त्वान्वाख्यानवत् । अन्यथेत्येकान्तावधारणे प्रत्येकं स्वरूपानवधारणादवृत्तित्वमेव वक्ष्यमाणवदिति । तदित्थमिदमेव शास्त्रं वर्त्स्यतीति परस्परव्याहततत्त्वास्तववृत्तय एव ता इत्यर्थः । वृत्तितत्त्वविनिर्विचीषा[10]यां सा च विध्यादिप्रत्येकवृत्तिरूपाख्यानसमधिगम्येति तद्व्याख्या कार्या । किं कारणं तत्समुदायकार्यत्वात् तस्याः ॥

इममर्थं विस्तरेण व्याख्यातुकाम उद्दिशति—**तत्र विधिवृत्तिरित्यादि** । तत्रैतास्वनन्तरोद्दिष्टासु विध्यादिवृत्तिषु विधिवृत्तिस्तावद्[11] यथा । लोकग्राहमेव वस्तु लोकस्य ग्राहः । ग्राहवद् ग्राहः । यथा जलचरो ग्राहः प्राण्यन्तराण्यभ्या[12]त्माकर्षति तथा लोकोऽपि स्वाभिप्रायसकाशं सर्वमाकर्षति । यो-यो लोकग्राहो यथा लोकग्राह एवेत्यवधारणाल्लोकाभिप्रायं नातिवर्तते[13] वस्त्वित्यर्थः । परीक्षकाभिमानिनां

१ प. °वी रूपकादि शिबिकादि च । २ प. °योर्मांगा । ३ भ. °ति विधिनियमं शे° ४ प. °द्यव°, भ. °द्यवस्थाये° । ५ प. °वि° । ६ भ. °ज्ञ । ७ भ. पूर्ववत् स्थि° । ८ भ. °करणा° । ९ प. तत्वाद् व्या° । १० प. °निर्विची° । ११ भ. °त अथा । १२ °स्यात्मानमा° १३ भ °नामि°

तु तीर्थ्यानां स्वपरविषयतायां सामान्य-विशेषयोरनुपपत्तेरसंस्ततो लोकाभिप्रायो विवेकयत्नः शास्त्रेष्विति। इतिशब्दो हेत्वर्थः यस्मादेतमर्थं प्रतिपादयिष्यामस्तस्माद् यथा लोकग्राहमेव वस्तु ततो लोकाभिप्रायाद् विवेकयत्नानर्थक्यम् । तत् कथमिति चेदुच्यते-सामान्य-विशेषौ हि स्वविषयौ परविषयौ वा स्यातां वस्तुनः। सामान्यं घटादेर्वस्तुन आत्मनि वर्तेत, परस्य वा पटादेरात्मनि घटाद् व्यतिरिच्यमाने? चतुर्ष्वप्येषु विकल्पेषु साङ्ख्यादीनां दोष इति मन्यमानो लौकिकः पक्षं ग्राहयति दुदूषयिषुः सोपपत्तिकम् । तत्राद्यं सामान्यं तावदेकस्य सर्वत्वात् । यदि स्वविषयं सर्वमेकमेकं च सर्वं, कस्मात्? कारणस्य वै (श्व) रूप्याद् यथाऽऽह-'सर्वं सर्वात्मकम्' यद्येवं कस्मात् सर्वमेकत्र नोपलभ्यते, सर्वत्र चैकमिति? । उच्यते-देश-कालाकार-निमित्तावबन्धात् तु न समानकालमात्माभिव्यक्तिस्ते मन्यामहे। जल-भूम्योरप्येतत् पारिणामिकं रसादि धैण्वं रूपं स्थावरस्य जङ्गमतां गतस्य जङ्गमाभ्यवहृतवनस्पत्यादेर्जङ्गमशरीरपरिणामापन्नस्य । जङ्गमस्यापि स्थावरतां गतस्य स्थावराभ्यवहृतस्य तत्परिणतस्यैवं स्थावरस्य स्थावरतां गतस्य, जङ्गमस्य जङ्गमतां गतस्य । तस्मात् सर्वं सर्वात्मकम् । तत एकस्य सर्वत्वात् सर्वस्य चैकत्वात् स्वविषयं सामान्यं घटस्यात्मनि वर्तत इति परमतं प्रदर्श्योत्तरमाह—

यद्येवं सामान्यविरोधः सामान्यस्य विरोधः, सामान्येन च विरोधः । तत् कथम्? उच्यते-यदि सामान्यं तत आत्मा न भवत्यनेकार्थविषयत्वात् सामान्यस्य कश्चिदर्थः । केनचिदर्थेन कैश्चिद् धर्मैः समानो भवतीति कृत्वाऽनेकार्थविषयं सामान्यं तस्मादनेकार्थविषयत्वात् सामान्यस्य वस्तुनः । स्वमात्मा घटादेरेकरूपस्य न भवत्येकत्वादात्मनः । सामान्यस्य च निवृत्तेरात्मनश्च । आत्माभावात् कस्य सामान्यम्? । अथ मा भूदेष दोष इत्यात्मेष्यते । ततोऽपि न सामान्यमेकत्वादात्मनः । केन सामान्यं तस्येत्यात्मनः सामान्येन विरोधः । समानभावो हि सामान्यम् । सेना-हस्तिनोरिवेति । हस्त्यश्व-रथ-पदातिसमूहः सेनेत्यनेकार्थापेक्षां दर्शयति । हस्तीति चैकार्थतां दर्शयति ।

अथोच्येतेति स परिहर्तुकामस्य परस्याभिप्रायमाह-स्यादेव विरोधो यद्यात्मनः सामान्यमिति भेदेन स्वत्वमभ्युपगम्येतेति। यद्यपि व्यति [रे] कार्थषष्ठी प्रापितस्वस्वाम्यादिभेदस्तथाप्यदोषो व्यपदेशिवद्भावात् । राहोः शिर इत्याद्यव्यतिरेकषष्ठीदर्शनादिति । किं तर्हि? ब्रूमः-इह त्वात्मैव सामान्यम् । किं तत्? घटादेः सत्त्वादिरात्मा । यथोक्तम्-आध्यात्मिकाः कार्यात्मका भेदाः शब्द-स्पर्श-रस-रूप-गन्धाः पञ्चत्रयाणां सुख-दुःख-मोहानां सन्निवेशमात्रम् । कस्मात्? पञ्चानां पञ्चा-

१ भ. °याद्वि° । २ भ. °उद्रु° ।

नामेककार्यभावात् । सुखानां शब्द-स्पर्श-रूप-रस-गन्धानां प्रसाद-लाघव-प्रसवा-भिष्वङ्गोद्धर्ष-प्रीतयः कार्यम् । दुःखानां शोष-ताप-भेदापस्तम्भोद्वेगापद्वेषाः । मूढानां चरणसदनापध्वंसन-बैभत्स्य-दैन्य-गौरवाणी'ति । तथा करणात्मकाः श्रोत्र-त्वक्-चक्षुर्जिह्वा-घ्राण-वाग्-घस्त-पाद-पायूपस्थ-मनांस्येकादश तैर्यग्योन-मानु-दैवानि । बाह्याश्च भेदाः सत्वरजस्तमसां कार्यं समन्वयदर्शनादिति । एवं पृथि-व्यादि गवादि घटादि, तस्मात्सत्वादिर्घटादेरात्मा स हि तत्समुदायकार्यत्वात् सामान्यं, तस्मादात्मैव सामान्यमित्यत्र क्रमः । एवं सत्यात्मभेदः समुदायैककार्य-त्वात्सुखाद्येकमसामान्यमितीष्टस्य सामान्यस्य भेदः । तत्कथम्? इति चेदुच्यते-सुखं च सुखादिसमुदयं च सत्वं सुखम्, रजो दुःखम्, तमो मोहस्तत्रयमैका-त्म्यात्रयमेकमेवेति । सुखस्य सुखत्वं तत्समुदायत्वं च प्राप्तं च किं कारणं तदा-त्मत्वात् । यस्मात्सुखाद्यात्मकः समुदायः समुदायात्मकं च सुखमेवं शेषावपीति । दुःखमोहावतिदिशति । एवं दुःखं दुःखं च दुःखादिसमुदायं च । मोहो मोह-श्च मोहादिसमुदयं च । ततः को दोषः? इति चेत्तत्श्च त्रिगुणविपरिणामकारण-कल्पनावैयर्थ्यम् । समुदायैककार्याणां त्रयाणामेकत्वाभ्युपगमादेकस्तत् साम्याव-स्थाविशेषः । तस्माचावस्थाविशेषादप्रच्युतत्वात् कुतो गुणानां वैषम्यम्, । वैष-म्याभावे कुतः प्रकृतिर्महदहङ्कारतन्मात्रभूतेन्द्रियादि पूर्वोत्तरहेतुकार्यभावः । अत्राशङ्का-नित्यमेव त्र्यात्मकमिति चेत्प्रधानावस्थायामपि त्रिगुणत्वान्नित्यं सर्व-कालं त्र्यात्मकं सत्वरजस्तमआत्मकमगुणवैषम्यविपरिणामकारणत्वादुपपद्यन्ते । सुखादिसमुदायात्मकत्वेऽप्यात्मभेददोषश्च नास्तीति । एतदपि वाङ्मात्रत्वादनुत्तरं । तथापि तु सुतरां तथैकत्वनित्यत्वात्प्रकाशप्रवृत्तिनियमभेदाभावादनारम्भः । एकत्वस्य नित्यत्वादेकत्वेन वा नित्यत्वात्सदैकत्वादित्यर्थः ।

प्रकाशप्रवृत्तिनियमकार्यभेदः । सत्वरजस्तमसां योऽभ्युपगम्यते भवद्भिराचार्य एव न पाखा(षा)णवत्तद् यथा-नाटकाचार्यः स्वहस्तोत्क्षेपणादिना प्रकाशात्मना-त्मनो नर्तिकायाश्च व्यवतिष्ठते । पवनः पर्णचलनादिना स्वपरप्रवर्तनेन व्यवतिष्ठते । नौःस्तम्भनपाषाणकः स्वपरनियमने व्यवतिष्ठते । तथा 'सत्वरजस्तमांसी' त्येत-न्नोपपद्यते । सर्वकालमेकत्वनित्यत्वात्तत्त्वाभावस्तदनारम्भः प्रधानावस्थायामिव गुणानां सर्वकालं कार्यानारम्भो निर्व्यापारत्वात् । वैषम्यनिर्मूलता चारम्भाभावात् उभयस्य चाभावः, कारणस्य कार्यत्वस्य च । अथवात्मनः सामान्यस्य च सुखादेः सुखदायिनस्तत्समुदायस्य च प्रधानस्य किं कारणमन्यतराव्यवस्थानेऽन्यतरस्या-व्यवस्थानात् । तत्कथं भाव्यते? इति चेदुच्यते-यथा च प्रधानावस्थायामित्यादि

१ °त्म्यापन्न° । २ °समुदायिन°

यावत् त्रित्वैकत्वादिव्यतिक्रमेणेति त्रित्वैकत्वादीत्युक्तपरामर्शः । यथा त्रित्वमेकत्वं च विरुद्धौ धर्माविष्येते । एवमवयवा अवयवी च । अन्यदनन्यच्चात्मा चानात्मा च सर्वमसर्वं चेत्यादि । आदिग्रहणात् सूक्ष्मं स्थूलं चेत्यादि सामर्थ्यादापादनीयम्, एष दृष्टान्तः । साधर्म्यं सदा त्रिगुणैकत्वादिति । त्रित्वैकत्वाद्यात्मस्वतत्त्वातिक्रमेणेति विरोधधर्मसम्बन्धः । अव्यतिरिक्तत्रिगुणैकरूपता चेष्यत इति । प्रधानस्यैव दृष्टान्तस्य कर्मनमेवमेव शब्दादाविति दार्ष्टान्तिकोपनयः । त्रिगुणाव्यतिरेकैकरूपत्वं विरोधधर्मसम्बन्धश्च शब्दतन्मात्रादिषु तत्कार्येष्वाकाशादिषु भूतेष्वेकगुणादिवृद्धेषु तद्विकारेषु च गवादिघटादिषु च श्रोत्रादिष्वेकादशस्विन्द्रियेषु च प्रधानधर्मा आपाद्याः । किं कारणम्? तन्मयत्वात् । सत्त्वादिगुणमयं हि तत् । ततश्च सर्वस्यावस्थानात्प्रधानावस्थायामिव न किञ्चित्सूत्रादि पदादि वा कस्यचित्कारणं वा कार्यं वा प्रमाणं प्रमेयं चेति । नियमाभावात्सर्वत्र यादृच्छिकी प्रवृत्तिः प्रसक्ता यदृच्छामात्रत्वात् । न प्रधानमहदहंकारादिकारणकार्यनैयम्यम् । ततश्च यदृच्छामात्रत्वादङ्गीकृतपुरुषार्थयत्नार्थहानिः । पुरुषश्चैतन्यस्वरूपस्तस्यार्थो द्विविधः । शब्दाद्युपलब्धिरादिर्गुणपुरुषान्तरोपलब्धिरतस्तत् कृत्वा तद्विनिवर्तत इति । तस्मै पुरुषार्थाय यत्नः प्रधानस्य । तस्य यत्नस्यार्थः प्रयोजनं तस्य हानिर्यादृच्छिकत्वात् । तस्य च हानौ प्रधानपुरुषसंयोगत्रित्वपरिज्ञानार्थशास्त्रयत्नाहानिरपि ॥

सामान्यविशेषयोश्च सम्बन्धित्वादित्यादि । यावन्नियमपक्षापत्तिरपि । सामान्यं, विशेष इत्येतौ परस्परसम्बन्धिनावाद्यन्तवत्पितापुत्रवद्वा । तत्र यदि सामान्यमभ्युपगम्यते विशेषापेक्षित्वात्सामान्यस्य विशेषेणोन्वस्यैष्यः । पितृत्वाभ्युपगमे पुत्रत्वाभ्युपगमत्वात् । विशेषाभ्युपगमे च सामान्याभ्युपगमस्तद्वदेवेत्यतस्ते बलादेव विशेषपक्षापत्तिरपि नियमपक्षापत्तिरित्यर्थः । अपिशब्दात्प्रागुक्तदोषापत्तिः । एवं तावत्स्वविषयत्वे सामान्यस्य दोषा उक्ताः । परविषयतायामप्यसमानावस्थानादसामान्य-अमुख्यसामान्यानां सदृशानुप्रवृत्तिव्यावृत्तिलक्षणानां परेष्टानां परविषयाणामसंभवात् । स्वेष्टसमानभवनलक्षणसामान्यसंभवात्परकीयसामान्यमेवेत्युपर्युपसंहरिष्यते ।

लौकिकस्तत्सिद्धं कृत्वा तावदाह-असमानावस्थानादसामान्यमिति । तत्पुनर्द्रव्यक्षेत्रकालभावविषयं । ते हि द्रव्यादयः परे परैरिष्यमाणा घटादेर्वस्तुनस्तदपि परसदपेक्षया समानमित्युच्यते नात्मा तमेवेति परविषयम्, किं पुनः कारणं तदसामान्यम्? इत्यत आह-अनवधृतैकतरकारणत्वादिति नावध्रियते द्रव्यमेव क्षेत्रमेव काल एव भाव एव वा कारणमिति । एवं तदेकतमकारणत्वादिति तात्पर्यं ।

न चात्र डतरडतमौ प्राप्नुतः । कस्मात्? अन्यप्रक्रियद्यत्तदां निर्द्धारणे 'द्वयोरेकस्य डतरच् वा बहूनां जातिपरिप्रश्ने डतमजि'त्यचैकशब्दस्यापठितत्वात् । एवं तर्ह्यातिशयिकस्तरप्प्रत्ययः । समानगुणेषु हि स्पर्धा भवति गुणवचनाभावान्नेति चेत् कारणत्वगुणतोऽतिशयो भविष्यति । एवं तर्हि तमबस्त्विति चेद्द्वयोर्द्वयोः प्रकर्षविवक्षायां तरपित्यदोषः । अथवा 'एकाचः प्राचाम्'(   )इति जातिपरिप्रश्नेऽस्त्येव डतरजित्यदोषः । केनानवधृतमेकतरकारणत्वं द्रव्यादीनामिति चेत् । उच्यते—लौकिकव्यवहारनयप्रधानैः स चार्हतनयैकदेश एव । न पुनर्यथा शास्त्रकाराः सामान्यमेव विशेष एव द्रव्याद्यन्यतमदेककारणं कार्यं चेत्यवधारयन्ति । कथं पुनर्द्रव्यादिकारणतावधार्यते न वेति उच्यते—द्रव्यं तावत्, तच्च द्रव्यमपि भवनलक्षणं व्यापीत्यभिसंभत्स्यते । अपिशब्दात् क्षेत्रमपि । सर्वतन्त्रसिद्धान्ते—व्याकरणे 'द्रव्यं च भव्य' इत्युक्तत्वात् । भवतीति भव्यं भवनयोग्यं वा द्रव्यं, द्रवति द्रोष्यति दुद्रावेति द्रुः, द्रोर्विकारोऽवयवो वा द्रव्यं । 'दु द्रु गतौ' सदैव गत्यात्मकत्वाद्विपरिणामात्मकं हि तत् ।

ननु यथा गुणसद्भावो द्रव्यं क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणमिति वा कथं भवतीति चेत्, भिद्यत इति भेदः भेदेन भवितुं शीलस्तस्या धर्मो वा साधु भवतीति भेदभाविनी मृत् । तस्या भवनं भेदभाविमृद्भवनं । तदेव परमोऽर्थः । कोऽसौ? रूपादयः शिबिकादयश्च ते पुनर्यथासङ्ख्यं युगपदयुगपच्च भेदभाविमृद्भवनपरमार्थरूपादिशिबिकादयः । समानाधिकरणसमासः । पुनरपि तेषां वृत्तिरस्य तेषु वा वृत्तिरस्य तदिदं युगपदयुगपद्भेदभाविमृद्भवनपरमार्थरूपादिशिबिकादिवृत्तिः । किं तद्द्रव्यम्? व्याप्नोतीति व्यापी । न क्वचिदपि न प्रवर्तते । यथा रूपादिशिबिकादयो मृदो भवनमात्रं तथा युगपद्भूतं पृथिव्यादेः परमार्थः । पृथिव्यप्तेजोवाय्वाकाशादिद्रव्यभवनमात्रम् । पृथिव्यां चाश्मलोष्टादि । तथापां हिमकरकादि । तेजसोऽप्यर्चिरादि स्वभेदा इत्यादि । अयुगपद्भूतं व्रीहिबीजाङ्कुरपत्रतालकाण्डपुष्पफलशूककणतुषादिपरमार्थ इति । सर्वं द्रव्यभवनमात्रमेकपुरुषपितृपुत्रत्वादिवसात् तान् भावान् द्रवन्ति—भजन्तीति द्रव्यम् । क्षेत्रमपि व्याकरणसिद्धान्तगत्यैव 'क्षितिवासगत्योः'(   )इति सर्वस्य सिद्धं । सर्वगतिनिवासवृत्ति स्वतत्त्वं । गतिर्व्याप्तिर्निवासस्तथावस्थानं सर्वभावानां प्राप्त्यवस्थानोपकारेण वर्तत इति तद्वृत्ति स्वतत्त्वं प्रदेशरचनाविशेषो हि क्षेत्रम् । एकैकभावार्थसङ्घातसमवस्थानात्मा एकैकस्य घटपटादेर्भावस्यार्थे पृथुबुध्नादिरूपेण संहत्य समवस्थितस्यात्मा स्वरूपतत्त्वं प्रधानमित्यर्थः । किं कारणम्? क्षेत्राभावे

१ °चेत्यव°

तदभावात् । क्षेत्रानुग्रहादेव तद्भावात् । यथासंख्यं रूपादि । ग्रीवाद्येकगमनस-मवस्थानव्यवस्थापितपृथिव्यादिघटादि । यथा स्वप्रक्रिया वैशेषिकादीनां रूप-रसगन्धस्पर्शवती पृथिवी । शब्दस्पर्शरूपरसगन्धात्मा पृथिवी । करकटलक्षणा वेति । एवं घटोऽप्यवयवी गुणसमुदयमात्रं । प्रज्ञप्तिसत्वेति विकल्पनामात्रं । लोकनये । ननु एवं हि रूपग्रीवाद्यवयवा रूपादयो ग्रीवादयश्चैकगतयस्तथा तथा समवस्थिताः पृथिव्यादीन् घटादींश्च व्यवस्थापयन्ति यत्र तत्क्षेत्रं । किं हि तत पृथिव्याः पृथिवीत्वं रूपाद्येकगतिसमवस्थानादन्यत् । घटस्य वा ग्रीवाद्येक-गतिसमवस्थानादन्यद् घटत्वम् । तस्मात्सर्वगतिनिवासवृत्ति स्वतत्त्वं तत् । व्यापि विण्वस्येत्यादि यावद्विस्पन्दितस्य विण्वं सद्रव्यं च व्याप्नोति । युगपदयु-गपद्भावि रूपादि शिबिकादि भावविस्पन्दितम् । पृथिव्यादि घटपटादिविपरि-णामजातं चेत्यर्थः ॥

कालोऽपीत्यादि । कालोऽपि परविषयं सामान्यं । परिणामवती क्रियैव कालः । कलनं कालः कालसमूहो वा । यथा मासमास्ते, गोदोहमास्त इति । वर्तनं भवनमिति तत्पर्यायो वर्तनालक्षणो वा द्रव्यात्मा । स च युगपदयुगपत्कालस्य तत्त्वभूतपदार्थनिरूपितवृत्तिः । पूर्वोक्तरूपादिशिबिकादिपरिणतवत् । वक्ष्यमा-णास्तिकायसलिलनिर्वर्त्यपृथिवीव्रीहिनरौदनादिवद्वा । तद्यथा—युगपद्वृत्तिस्ता-वदनेकप्रभेदोपवर्णेत्यादि यावद् युगपद्वृत्तिः । सांख्यादिप्रक्रियोपवर्ण्यास्त एव हि धर्माधर्माकाशपुद्गलजीवास्तिकायाः सप्रभेदाः । अथवा पृथिव्यादय एवास्ति-काया विद्यमानकायास्ते यत्र यत्र युगपद्वर्तन्ते स तत्र युगपद्वृत्तिः कालः । यत्र चादानधारणेत्यादि यावन्निर्वृत्तिवृत्तिष्वयुगपद्वृत्तिरिति ।

यथोक्तम्—

'आदानीयास्त्रयो मासा त्रयो मासास्तु धारणाः ।
पाचनीयास्त्रयो मासास्त्रयो मासाधिसर्जनाः ॥' इति ।

ईशान्याः पूर्व उत्तरः पूर्वोत्तरं च वायवः । शेषाः शेषकाः । अत्रापि प्रति प्रक्रि-यमादित्यसन्तापापीतसलिलधारणपाचनसर्जनवत् । धूमज्योतिः सलिलमरुत्स-ङ्गतमेघादानधारणपाचनसर्जनवत् । विस्रसापरिणतपुद्गलविकाराभ्रत्वादिवद्वा । पुद्गलाविनाभावादेववैक्रियादेरपि । आदानाद्धारणम् । धारणात्पाचनम् । पाच-नान्निसर्जनम् । निसृष्टस्य सलिलस्य कार्याणि भूमिद्रवीभाववनस्पत्यौषधिप्ररोहपु-ष्पफलप्राणिशरीराप्यायनादीनि । ततोऽपि कार्यान्तराण्याहारबलवपुःस्थामादीनि । घटपटादिनिवृत्तय एवेत्यादि । निर्वृत्तयः कार्याणि । तासां निर्वृत्तीनां वृत्तिष्व-युगपद्वृत्तिः काल एव । तदुपष्टम्भजन्यत्वात्तेषां भावनामिति ॥

इदानीं भाव उच्यते–स तु पूर्वोक्तेषु द्रव्यादिषु भवनं भाव इत्युक्तत्वादुक्त एव तद्दर्शयन्नाह–द्रव्याद्यपि त्वित्यादि। 'गुणपर्यायवद्द्रव्यम्' ( ) इत्युक्तम्। गुणा रूपादयः शिबिकादयः पर्यायास्ते युगपदयुगपद्भाविनः। त एव भावाः क्षेत्रकालौ द्रव्यमेव भवनसामान्याद्भाव एव वा तस्मान्न तानि द्रव्यादीनि युगपदयुगपद्भाविभावव्युदासेन भवितुमर्हन्ति कथंचिदपीत्युक्तवदेवेत्यतिदिशति। तथा भावना तेषामिति तदेव भवनं हेतुत्वेन व्यापारयति। अन्यथेति भवनसामर्थ्याभावे द्रव्यादीनां वन्ध्यादिपुत्रवदभावत्वापत्तेर्न सन्ति द्रव्यादीनि, भवनशून्यत्वाद्वन्ध्यापुत्रवत्। पञ्चमीनिर्देशात् तद्वैधर्म्येण भवनहेतुभावी तेनाह–नेष्यते च द्रव्यादीनामभावत्वम्। भावत्वमेवैषां भावं च भवनसम्बन्धी घटवत्। अतो द्रव्यादीनि भवनसम्बन्धीनि भवनद्रव्यादीन् व्याप्नोतीत्यत आह–भावोऽपि सर्ववस्तुतत्त्वव्यापीति। अत एवानित्यादि यावदपेक्ष्याणीति। एतस्मात्प्रतिपादितोपपत्तिबलाद्द्रव्यादीनि भावपर्यन्तानि भवनप्राधान्यप्रत्याख्येयानि। तस्माद् घटादिवस्त्वात्मसामान्यपक्षग्राहिणोऽपि स्वविषयसामान्यवादितेत्यर्थः। अपिशब्दाच्चाग्रहरक्तमनसापि सता त्वयावश्यापेक्षाणि। सारमारसषितव्यानीत्यर्थः (?)। किं कारणं? प्रत्यक्ष एव तथात्मत्वात्। दृश्यत एव हि द्रव्याद्येकरूपभवनसामान्यतोक्तविधिना किमु परविषयमुख्यसामान्यपक्षवादिनेति। द्रव्यादीनां परस्परभिन्नानां समानभवनान्मुख्यं सामान्यं लोके विविधसामान्यवादीव्यवहारनयानुयायित्वात्। ननु यथा साङ्ख्यादिषु सादृश्यान्यापोहतत्त्वादि प्रमाणविरुद्धं तत्त्वोपवर्तितं[1] भवितुमर्हति। न मुख्यं सादृश्यानुवृत्तीनां लोके समाने न भूयत इति सामान्यलक्षणस्यादृष्टत्वात्। दृष्टत्वाच्चासदिष्टस्य लौकिकस्य सामान्यस्येत्यत आह–प्रत्यक्ष एव तथा तथा परविषयस्य समानस्य भवनात्। तेन तेन प्रकारेण द्रव्यक्षेत्रकालभावापेक्षयुगपदयुगपद्भाविभावस्य रूपा शिबिकादिरूपस्य समानस्य भवनात् सर्वतन्त्रसिद्धान्तेन व्याकरणेन लोकानुवृत्तिना निरुक्तितत्त्वादिवादिनाप्याह–परेण समानेन भूयत इति समानो भवतीत्यर्थः। समानभावः सामान्यं यद्भवन्ति सर्वभावाः स तेषां भाव इति। स्वार्थिको भावप्रत्ययः। स्वभावसम्बन्धार्था चात्र कर्तृलक्षणा षष्ठी, तस्य भाव इति। यथा शिलापुत्रकस्य शरीरमिति।

एवं सामान्यं व्याख्यायेदानीं तदर्थाऽनुसारेणानुमानमाह—तथा चेत्यादि यावद्विशेषणैकता। तथा चेत्येवं च कृत्वा प्रतिपादितपरस्परभेदस्य ते परस्परसम्बन्धैक्यापत्तौ च सर्वस्यास्य जगतो द्रव्यदेशकालभावापेक्षया तेन तेन प्रकारेण विशेषणैकता द्रव्यं क्षेत्रेण कालेन भावेन विशिष्यते। द्रव्येण क्षेत्रमितरौ च। एवं

१ °तत्त्वोपवर्तितं°

तैस्तद्भूतपरस्परतश्च तानि यथाङ्गुलिर्वक्रप्रगुणताद्ययुगपद्भाविभावै रूपादियुगपद्भाविभावैर्देशेन तं द्रव्यमन्तरैश्च विशिष्यन्ते । अङ्गुलिर्वक्रर्ज्वीप्रदेशेऽस्मिन्नाकाशस्य वर्तते । प्रदेशिन्यधुनेत्यादि । तथैकैकमपि वस्तु घटपटादिना केनचिन्नाभिसम्बध्यते तथा तथा विशेष्यते च तत्तद्भेदत्वसम्बन्धत्वाभ्याम् । प्रयोगश्चात्र–द्रव्यादिविशेषेण सम्बन्धी घटः वस्तुभेदत्वे सति तत्सम्बन्धत्वाविकचसुरभिशरन्नीलोत्पलवत् । विकचमुकुलितादि क्षेत्रविशेषणं । सुरभिमीलनादि सहक्रमभाविरूपादिभावविशेषणम् । उत्पलमिति द्रव्यम् । तदपि तेषां विशेषणमेव, व्यन्नच्छेदकत्वात् । एवमनेकत्वसामान्यमापाद्य प्राक् । प्रीतिज्ञानपरविषयितायामप्यसमानावस्थानादसामान्यं परेषामिति । तद्दर्शयति—तत्र अन्यस्य कस्यचिदपोह्यस्य सदृशस्य तत्त्वस्य वा समानस्याभावात्सामान्यानुपपत्तिः । एवमापादितपरस्परविशिष्टिकत्वजगतो घटैकत्वमात्रत्वेऽर्थान्तराभावात्कुतोऽर्थान्तरापोहलक्षणं विद्वन्मन्याद्यतनबौद्धपरिक्षिप्तं सामान्यम् । कुतो वा समानं दृश्यत इति सदृशं भावः सादृश्यमिति सादृश्यलक्षणं सामान्यम् । सदृशस्य तस्याभावात् । कुतो वा तत्त्वम्? । तस्य भावस्तत्त्वम् । तत्त्वमस्य तत्त्वम् । तत्तु भिन्ने भवति । समानानेकार्थानुवृत्तिलक्षणं सत्त्वद्रव्यत्वगुणत्वकर्मत्वादि । स्यान्मतं । परस्परविशिष्टैकत्वादेव तत्समुदयः । परविषयसामान्यमिति ॥

एतच्चायुक्तमित्यत आह—उदितदोषानुबद्धैकसर्वत्वात् । स्वसामान्यापत्तिर्वा । यदुक्तं प्राक् । स तत्समुदायकायत्वसामान्यमित्यत्र । एवं सत्यात्मभेदः । सुखं सुखं च सुखादिसमुदयश्च तदात्मत्वादेवं शेषावपीत्यादि यावत्सामान्यविशेषयोश्च । तत्सम्बन्धित्वादेकतराभ्युपगमे नियमपक्षापत्तिरपीति । स्वविषयसामान्यापत्तिर्वेति । वाशब्दो विकल्पार्थः । स्वसामान्यपक्षाभिहितसर्वपूर्वोत्तरपक्षविकल्पप्रदर्शनार्थः । द्रव्यं द्रव्यं च द्रव्यादिसमुदयश्चेत्यादि विकल्पजातं सर्वमिहापि भवता योज्यम् । तथा सङ्घातावस्थानभेदाद्वा घटपटवदत्यन्तभेद एव सर्वार्थानां यदि सङ्ग्रहनयदर्शने । ननूक्तं सङ्ग्रहनयदर्शनेन एकमिति । सत्यमुक्तं । तत्तु सङ्घातेनावस्थितानां नोपपद्यते । दृष्टविरुद्धत्वादित्यभिप्रायः । ततः किमिति चेत्तथा हि–एवं च कृत्वा किं परमाण्वादीनां घटो भवति घटस्य वा कपालानीति । तद्विनाशंजन्यत्वस्याप्यसम्बन्धं दर्शयति । आदिग्रहणाद् द्व्यणुकत्र्यणुकादीनां ग्रीवादीनां चान्यत्र सङ्घातसमवस्थानभेदात् । समवस्थानकृत एव तेषां सम्बन्धः । तथा च समानं भवन्ति ते स्यान्मतमेवं व्याख्यातुस्तवैव मतेन परस्परविलक्षणानामर्थानां भेदादेवानवस्थानं प्राप्तम् । द्रव्यादिभेदभिन्नानामन्योन्यनिरपेक्षाणां सङ्घातसमवस्थानभावादित्यत्रोच्यते—अनवस्थाने वा नित्यप्रवृ–

त्त्वात्सर्वार्थानां समयमपि तथा समवस्थानं नास्ति यथा समानता निरूप्येत परस्परनिरपेक्षोत्पादविनाशत्वादित्यर्थः । एवं सर्वैकभिन्नपक्षयोः सामान्यभाव उक्तः । पक्षान्तरेऽपि वक्तुकामः ग्राहयति । अथान्तरेण रूपप्राप्तिमित्यादि, यावत्सिद्धिरिष्यत इति । अन्तरेणैकरूपप्राप्तिं भेदरूपप्राप्तिं वा । उक्तिप्रत्यया दण्डिवदिति नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते विशेषप्रत्ययानामनाकस्मिकत्वाच्च दण्डनिमित्तदण्डिप्रत्ययाभिधानवत् । दण्डोऽस्यास्तीति दण्डीत्यत्र हि दण्डसंयोगनिमित्तौ देवदत्ते दण्ड्युक्तिप्रत्ययौ यथा दृष्टावेवं द्रव्यत्वघटत्वादिसामान्यविशेषसमवायनिमित्तौ द्रव्यघटाद्युक्तिप्रत्ययौ स्यातां, नान्यथा व्यक्तिभिन्नार्थसिद्धिरिष्यत इति । उक्तिप्रत्ययाभ्यां द्रव्यघटादिव्यक्तितो भिन्नस्य द्रव्यत्वघटत्वादेरर्थस्य सिद्धिरिष्यते । एवं गुणकर्मणोश्च संख्योत्क्षेपणादिव्यक्तिभिन्नतत्त्वार्थसिद्धिरेषितव्या । भिन्नेष्वर्थेष्वभिन्नोक्तिप्रत्ययदर्शनादिति । अत्रोच्यते—तत्र अन्यतोऽपि तयोः सिद्धेः । अपिशब्दान्नियमाभावेन लोकसिद्धं नामादिकमप्युक्तिप्रत्ययकारणमाह । कयोः सिद्धिरुक्तिप्रत्ययोस्तन्नियमाभावं दर्शयति । तौ हि कस्मिंश्चिदेवाकारमात्रे आदिग्रहणान्नाममात्रे, आकरणमाकारो, बुद्ध्या यो यथा परिगृह्यतेऽर्थः नाम्ना वा निर्दिश्यते स एव तस्याकारः । स च तावन्मात्रो न ततोऽधिको यथाकाशं । डित्थ इति वा स वान्यथा[1] वाकाशादिषु विनानुवृत्त्याकाशकालदिशां, त्वन्मतेऽप्येकत्वात् । कुतो भिन्नेष्वभिन्नाभिधानंप्रत्ययौ, कुतो वाकाशादि तत्त्वानीति । दृश्यते चात्राप्युक्तिप्रत्ययौ, तस्मान्नास्ति सामान्यं । घटत्वादिसामान्योपचारात्तेष्वभिधानप्रत्ययाविति चेत् न, मुख्यसामान्यासिद्धेः । साधर्म्याभावाच्चोपचाराभावात् । तत्त्वपरीक्षायामुपचारस्यावकाशाभावात् । मिथ्याभिधानप्रत्ययत्वप्रसङ्गादाकाशादिष्विति । किं चान्यत् । सामायिकत्वाच्छब्दार्थे प्रत्ययस्य समयाय प्रभवति । समयः प्रयोजनमस्य समयभवो वा सामयिकः । यथोक्तं 'सामयिकः शब्दादर्थे प्रत्यय इति न सामान्यनिमित्त इति । तौ चाभिधानप्रत्ययौ लोकवृद्धव्यवहारात्मकौ, लोकवृद्धव्यवहारं दृष्ट्वा बालानामभिधानप्रत्ययौ भवतः । शिक्षितविचित्रशास्त्रव्यवहाराणामप्यन्वयव्यतिरेकात्मकाद्वृद्धव्यवहारादेव । न तत्त्वानुवृत्तिव्यावृत्तिकृतौ । लोकस्य तत्तत्त्वाद्यज्ञानात् । न तत्तत्त्वात् । तत्तत्त्वाज्ञानात्तेषाम् । स्यान्मतं—संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् । 'प्रत्यक्षपूर्वकत्वात्संज्ञाकर्मणः' इत्युक्तं शास्त्रे । तस्मान्मन्वादयोऽन्तरालप्रलयमहाप्रलयेषु व्युच्छिन्नव्यवहाराणामपि शब्दार्थानां सम्बन्धं पश्यन्ति । तस्माद् घटपटत्वसमवायसम्बन्धोऽपि सामायिकोऽस्यायं वाचक इति यथायं पनस इति । 'समयं ग्राह्यते बाल' इत्येत-

---

[1] न भवत्यन्यथा ।

च्चायुक्तमनवस्थाप्रसङ्गात्। येन शब्देन समयः क्रियते तस्यान्येन कार्य इत्यनुषक्तः। उत्तरास्यार्थप्रतीतौ स्वसमयो न प्रकल्प्यते। तत्समयानपेक्षा स्वाभाविकी। यस्यार्थे वृत्तिः स नित्य इति चशब्दार्थसम्बन्धपरिज्ञानप्रयोगव्यवहारपरम्पराया अव्यवच्छेदादुक्तं।

यथाह पतञ्जलिः—

'न हि तदेव नित्यं यत्तद् द्रव्यं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्ययोगि। किं तर्हि तदपि हि नित्यं यस्मिंस्तत्त्वं न विहन्यते तद्भावस्तत्त्वमाकृतौ चापि तत्त्वं न विहन्यत' इति। समयप्रत्याख्यानवत्। प्रतिपादनप्रत्याख्यानातिदेशो वृद्धव्यवहारादाकारादिमात्रे प्रतिपत्तेरित्यदोषाय। न शब्दादेवेति वक्ष्यमाणत्वात्। तत्त्वसम्बन्धादृतेऽप्यभिधानप्रत्यययोः प्रवृत्तिं दर्शयन्नाह[1]—

तथा ह्यन्तरेणेत्यादि। तत्त्वं च द्रव्यं समवेति। द्रव्यं च द्विधा—अद्रव्यमनेकद्रव्यं च। अद्रव्ये त्वाकाशादौ तत्त्वाभावे व्यक्तिप्रत्ययाबुद्धौ अनेकद्रव्यमारब्धद्रव्यम्। तच्च समवाय्यसमवायिकारणैरारभ्यते। समवायिकारणं घटस्य कपालानि, असमवायिकारणं तत्संयोगाः। आङिति च विध्युपायमर्यादार्थसङ्ग्रहार्थः। को विधिः? स्वतः स्वात्मनि च। उपायः संयोगादिनिमित्तान्तरसहितानि। का मर्यादा? आ अन्त्यावयविद्रव्यात्। द्रव्याणि द्रव्यान्तरमारभन्ते विनाशोऽपि कारणविभागात्कारणविनाशाद्वा। तत्र छिद्रयुक्ते घटे कारणविभागानुत्पन्ने संयोगाभावादारब्धद्रव्याभावेऽपि घटाभिधानप्रत्ययौ दृष्टौ। तथा कुड्यलिखिते समवाय्यसमवायिकारणाभावे शिशूनां च क्रीडनकेऽलाबुपाषाणादौ सद्भावासद्भावस्थापनाकृते भवेदेतदात्ममात्रेऽपि तु आकारमात्रसंस्थानमात्रे सादृश्यमात्र इत्यर्थः। तौ चोक्तिप्रत्ययौ तत्र तत्त्वस्य घटत्वस्योपनिलयनात् कृतमिति चेत्। तत्र तत्त्वाभाव उक्तः। सत्यपि च तत्त्वेऽसदिष्टाकारमात्रोक्तिप्रत्ययौ चोक्तौ। अथाप्याभासमात्रे तत्रोपनिलयमिष्यते त्वया ततः स्थाणुमृगतृष्णिकयोर्नरसलिलत्वप्रसङ्गस्तत्र तदभिधानप्रत्ययसद्भावात् तत्तत्त्वोपनिलयनाच्च। घटत्वोपनिलयनाद् घटवत्। अनुपनिपाते नरत्वस्य स्थाणौ सलिलत्वस्य मृगतृष्णिकायां नरसलिलोक्तिप्रत्ययौ मा भूताम्। तौ च दृष्टौ कथमगृहीतविशेषणत्वान्नरत्वसलिलत्वानुपनिपातनेनायुक्तौ? तत्रोपचारलभ्यौ हि तौ। इह तु लोकनये विनोपचारेण लभ्यौ। कथमिति चेदनुपचरितकिञ्चिद्भूताकारात्तु किञ्चिदुक्तिप्रत्ययौ स्यातां? भवितुमर्हतः। आकारस्यासम्पूर्णस्य दृष्टत्वादेव। भवत्पक्षे पुनर्न हि तत्त्वं किञ्चिन्निलीनं किञ्चिन्निलीनमित्यस्ति। एवं तावत्सामान्यं विकल्पद्वये विचारितम्। विशेषोऽधुना विचार्यः। तत आह—

---

1 °यंश्चाह।

तथा विशेषोऽपीति । सोऽपि कल्पनाद्वयीं नातिवर्तते । स्वविषयः परविषयो वेति । तत्र यदि स्वविषयः विशेषविरोधः । विशेषस्य विरोधो विशेषाभावापत्तेः । विशेषेण विरोध आत्माभावापत्तेः । किं वाङ्मात्रेण नेत्युच्यते । यदि विशेषस्तत आत्मा न भवत्यन्यत्वाविशेषस्य । विशेषेण विरोधस्तावत् । यदि घटादावात्मनि विशेषेण विरोधस्तावत् । यदि घटादावात्मनि विशेषो वर्तते स्वविषयस्तत आत्मनोऽन्यत्वाद्विशेषस्य रूपादेर्देशतः परस्परतो विशिष्यमाणस्येति । तद्दर्शयति ।

गुणत इति । गुणतः कालतो वा प्रतिक्षणान्यान्योत्पत्त्या विनंष्टृषु पुरुषादिषु. कस्तदात्मेत्यात्माभावस्तदभावे कस्य विशेषः ? । अन्यथा घटादौ सामान्यापत्तेः । अन्यथेति । रूपादीनां समुदायैक्यापत्त्याभ्युपगमे विशेषपक्षत्यागः, सामान्यपरिग्रहं चापद्यते । तत्र चोक्ता दोषाः । सुखं सुखं च सुखादिसमुदयश्चेत्यादयस्त एवात्र. रूपं रूपं च रूपादिसमुदयश्चेत्यादयः । मा भूदात्माभावदोषस्तस्मिंश्चात्माभावे विशेषाभावदोष इति पक्षान्तरं गृह्णीयात् । अथात्मा स विशेषः । आत्मैक एव स एवानन्य इति ततो विशेषो न भवत्येकत्वादात्मनः । घटादेर्वस्तुन एकत्वादात्मनस्तत्त्वादित्यर्थः । अन्यो हि विशेषः । एतद्दोषपरिहारार्थमथोच्येत परेण—नैकत्वान्यत्वविरोधदोषौ । आत्मनो विशेष इति सम्बन्धापादानयोः षष्ठीपञ्चमीनिर्देशे, भेदेनात्मनि विशेष इत्यधिकरणसप्तम्या निर्देशे वा स्यातामेतौ दोषौ । किं तर्हि ? आत्मैव विशेष इत्यनपादानादिप्रतिज्ञानान्नैकत्वान्यत्वविरोधदोषौ ममेति । अत्रोच्यते—यद्यात्मापेक्ष एव विशेष इति तत् प्रत्युच्चारणं द्वितीयविकल्प आयातो विशेषस्य विरोध इति । अत्राप्ययं दोषः । 'एक एवान्य' इत्यात्मनोऽन्यथाभवनात्मत्वं रूपादिरूपेण । किं वाङ्मात्रेण ? नेत्युपपत्तिमाहान्यथाभवनादिति । तन्निर्देशयति[1] घटरूपादिपूर्वोत्तराणामभावत्वं तत्कथं ? । अन्योन्यरूपादय एव भवन्तीति घटाभावस्तदभावे कस्य विशेषः ? । घट एव वान्यथाभवन्तीति रूपाद्यभावः । ततश्चोत्तरेषां शिविकादीनां पिण्डावस्थातः पूर्वेषां च मृत्त्वादीनामभावः । अथवा घटतोऽन्यत्पटत्वम् । रूपतोऽन्यच्छब्दादित्वं । तेन प्रकारेणान्यथाभवनाद् घटाभावो रूपाद्यभावश्च, च तथा चोभयाभावः । आत्माभावो विशेषाभावश्च । अथवा रूपाद्यभावप्रापितो[2] घटात्माभावो घटात्माभावप्रापितो रूपाद्यभाव इति । एतदनिष्टतायां तु परापेक्षोपपत्तिरिति घटादेरात्मनोऽन्यथाभवनादनात्मकत्वं न तेन विशेषस्यात्मनश्चाभाव इत्युक्तविरोधदोषानभ्युपगमे परापेक्षपक्षः परविषयो विशेषो न स्वविषय इत्यापन्नः । स किन्नामको दोष ? इति चेत् स्वपक्षपरित्यागनामकः । उपचर्य च एवमभ्युपगम्यमानेऽप्यपरो दोषस्त-

१ तन्निदर्शयति । २ प्राप्तो ।

थापि द्रव्यभेदः । द्रव्यस्य घटादेरात्मनः स्वरूपपररूपाभ्यां द्विधात्मावस्थानं प्रसक्तं । परापेक्षत्वाद्विशेषस्य । स्यान्मतम्, पटाद्यवृत्त्यात्मक एव घटः । पटाद्यपेक्षत इति । तत्रेत्युच्यते–कर्हि वृत्तिसांहायकादृते सिद्धवृत्तेर्घटाद्यपेक्षासहायकं, वृत्तेः सहायकं वृत्तिसहायकं । घटवृत्तेः सहायभावं घटस्य मुक्त्वा स्वत एव सिद्धवृत्तेः पूर्वमेव घटस्य कान्योत्तरकालापटाद्यपेक्षा नास्त्येवेत्यर्थः । किं कारणं ? प्रयोजनाभावात् । तथात्मैवास्य भिद्येत तेन प्रकारेण तथा घटस्वरूपमेव भिद्येत सहायापेक्षवृत्तित्वात् । शिबिकोद्वाहात्मवृत्तिवत् । अथवा पार्थित्वादपेक्षास्ति घटस्य पटाद्यपेक्षेत्याह–का सा ? समाना जातिः । समानजातित्वादपेक्ष्यते घटेन पटः । का समानजातिः ? । पार्थिवत्वं विशेषः । कथमिति चेत् ? घटात्मत्वाद्विशेषः पटादेरिति । अत्रोच्यते–विजातीयात्तर्हि विशेषाभाव उदकादेर्यदि समानजात्यपेक्षया विशेष इष्यते । एवं तर्ह्यसमानजातीयादुदकादेर्घटस्य विशेषाभावः प्राप्नोति, अनिष्टं चैतत् । द्रव्यत्वापेक्षा तत्रापीति चेत् ? द्रव्यत्वं सामान्यापेक्षया । घटस्योदकादेर्विशेषो भविष्यतीति चेद्विजातीयाभ्यां गुणकर्मभ्यामविशेषः । न हि विजातीययोर्गुणकर्मणोर्द्रव्यत्वापेक्षास्ति । ताभ्यामपि च घटस्य विशेष इष्यते । तत्रापि नापेक्षेति चेत् । विजातीयात्तर्ह्यत्यन्तासता सतः अविशेष इति वर्तते । एवमपि खरविषाणादेरत्यन्तासतो विशेषाभावः स्यादपेक्ष्याभावात् । किमिव जातेरिवाजातेः पार्थिवत्वजातेश्च भवत्सिद्धान्तेनापगतजातेर्जात्यन्तरापेक्षा नास्ति, तस्यां कथं जात्यन्तरादुदकादेर्वा व्यक्त्यन्तराद्विशेषो भवत्यपेक्षाभावात् । कार्याद्वा कथं विशेष इति वर्तते । कार्यं हि भवत्सिद्धान्ते प्रागविद्यमानं समवाय्यसमवायिकारणसान्निध्ये पश्चादुत्पद्यते, क्रियागुणव्यपदेशाभावादसत्कार्यमिति सिद्धान्ताभ्युपगमात् । कारणावस्थायां कारणानां कार्यस्यासत्त्वादेवापेक्षा नास्तीति विशेषाभावः प्राप्तः । निष्पन्ने चोपरतव्यापारावस्थायां सिद्धत्वात्कार्यस्य कारणानां कारणत्वाभावात्कार्यकारणविशेषाभावः । इतिशब्दो हेतूपसंहारार्थः । इत्युक्तहेतुपारम्पर्याद्भावाभावयोरविशेषः । यथा पूर्वोक्तविधिना सतोऽसदसदपेक्षाभावाद्विशेषाभावः । एवमसतोऽपि तदपेक्षाभावादविशेषः । असतो वा कापेक्षा ? एवमनयोरविशिष्टत्वात्सत्त्वमेवाभावस्य भाववत् । असत्त्वमेव वा भावस्याभाववत् । तथापि चोभयाभावः । भावाभावयोरभावः । सामान्यविशेषयोरात्मविशेषयोर्वा घटादेरिति । एवं तावद् घटादेः पार्थिवत्वाद्यपेक्षा न युक्ताभ्युपेत्यापि तदपेक्षां पार्थिवत्वादितुल्यत्वाच्च । तद्वत्तदात्मत्वं कार्यस्य । घटस्य कारणेन मृदा सह पार्थिवत्वेन धर्मेण तुल्यत्वात् । तद्वदिति घटस्य घटभावेनासत्त्ववत्तदात्मत्वम् । मृत्त्वं पार्थिवत्वा–

१ का हि । २ तथापि नापेक्षेति ।

त्मघटत्ववद्वा किं कारणं तत्तत्त्वेनापेक्ष्यत्वात् । तस्य भावस्तत्त्वं, भवनं भावः । तस्य तत्त्वं तत्तत्त्वेनापेक्ष्यत्वात् । घटभवनवदनपेक्ष्यत्वे हि पार्थिवत्वं । तस्मात् प्राप्तं तदात्मत्वं घटत्वं पार्थिवत्वस्य घटात्मवद् घटत्वेनापेक्ष्यत्वात् । 'इति-शब्दो हेत्वर्थे' अतस्तदात्मतदपेक्ष्यमाणस्य विवेकयत्नार्थहानिः । विशेषार्थापेक्षाप्रतिपादनयत्नहानिः ॥

अविशेष इति । एवं च कृत्वा स एवाविशेषः । आदिग्रहणाद्द्रव्यत्वादितुल्यत्वात् । सत्यतुल्यत्वादित्येवमेवाविशेष आपाद्यः। स्यान्मतम् । अयं विशेष एव न भवत्यापेक्षिकत्वात्सामान्यविशेषाणां द्रव्यत्वादीनामौपचारिकत्वाच्च । द्रव्यत्वं गुणत्वं च सामान्यानि विशेषाश्चेत्युक्तानि । किं पुनर्गोत्वघटत्वादीनीति । कस्तर्हि विशेषो मुख्योऽन्त्य एव । सामान्यमपि मुख्यं भाव एवेत्यभिप्रायः । यस्मादणुष्वेकाकाशदेशातीतप्राप्तेष्वन्यत्वज्ञानाभिधानप्रभावविभावितोऽन्त्यो विशेषः । न ह्याकस्मिकावन्योक्तिप्रत्ययौ, तस्मादस्त्यसौ स एव च विशेषो मुख्यो यथोक्तमन्यत्रान्त्येभ्यो विशेषेभ्य इति । तथा भावे च मुख्यसामान्यम् । सदिति यतो द्रव्यगुणकर्मसु द्रव्यगुणकर्मभ्योऽर्थान्तरं सा सत्तेतिवचनात् । द्रव्यत्वादीनामौपचारिकत्वात्तन्मात्मतयोपपादितमित्यत्रोच्यते—अन्त्येऽपि तत्तद्द्रव्यादिप्रभेदगतिग्राह्यत्वात् । अन्त्ये भवोऽन्त्यः । अन्त्येऽपि तस्मिन् विशेषे विशेषाभाव इत्यपिशब्दात् सम्बन्धः । को हेतुः ? न द्रव्यादिप्रभेदगतिग्राह्यत्वात् । द्रव्यमादिर्येषां त एते द्रव्यादयः । द्रव्यक्षेत्रकालभावाः । तेषां प्रभेदस्तत्प्रभेदः । तत्प्रभेदेन गतिः परिणामो वृत्तिर्विकल्पो यथा कायस्येयं गतिरिति दृष्टत्वात् । तया गत्या ग्राह्यत्वं कस्यान्त्यविशेषस्य तस्मात्तद्द्रव्यादिप्रभेदगतिग्राह्यत्वान्नान्त्यविशेषः कल्प्यः । द्रव्यादिव्यतिरेकेण प्रत्यक्षानुमानाभ्यामग्राह्यत्वात्तत्सरूपेणैव ग्राह्यत्वाच्च । तद् यथा—योगी प्रत्यक्षेणैकं परमाणुं पश्यन् द्व्यणुकत्वात्प्रच्युतं पश्यत्यन्यं त्र्यणुकत्वात्प्रच्युताशनं । द्व्यणुकसमवेतमन्यं त्र्यणुकसमवेतं च । द्रव्यतः स्वत एव च भिन्नानि तानि परमाण्वादिद्रव्याणि पश्यति । तत्र किमन्यविशेषेण ? । एवं क्षेत्रतः पूर्वभागस्थितमेकम्, अपरमर्वाग्भागस्थितं । कालतोऽपि किञ्चित् प्रथमे समये स्थितमन्यं द्वितीये स्थितमागतं वा । युगपदागतयोरपि द्रव्यक्षेत्रकालभावकृतं नानात्वमस्त्येव । भावतः किञ्चित्कृष्णं शुक्लं, किञ्चित्सुरभिमसुरभिं, तिक्तं कटुकं चेत्यादि । अथवा कृष्णमन्यं कृष्णतरं कृष्णतमं, द्विगुणत्रिगुणसंख्येयासंख्येयानन्तगुणकृष्णादि वा । एवं शेषवर्णैर्गन्धरसस्पर्शैश्च सप्रभेदैर्दर्शनं वाच्यम् ॥

अन्यथेति । परस्परविशिष्टद्रव्यादिविशेषाभावे विषयनिरपेक्षत्वाद् योगिनाम-

ज्ञानप्रसङ्गादवश्यं द्रव्यादयो विषयाः स्वत एव विशिष्टा एषितव्याः । न चेद् योगिनो मिथ्याज्ञानप्रसङ्गोऽन्यथास्थितस्यार्थस्यान्यथादर्शनात् । अन्त्य-विशेषाणां च परस्परविशेषोक्तिप्रत्ययप्रवृत्तौ निमित्तान्तरं कल्प्यम् । स्वत एव विशिष्टत्वेऽन्त्यविशेषस्य कल्पना वा त्याज्या । परमाणूनामपि तद्वद्विशेषो निमित्त-निरपेक्षः किं नेष्यते ? विशेषेष्वपि निमित्तान्तराणि चेदनवस्थाप्रसङ्गः । ततश्च विशेषोक्तिप्रत्ययानुपपत्तिरेवेत्यलं प्रसङ्गेन ॥

स्थितं न स्वविषयो विशेष इति । परविषयविशेषपरीक्षावसरः । तत आह—परविषयतायां तु विशेषस्यानवस्थानादविशेषः । ननु प्रागप्युक्तं परापेक्षपक्षाप-त्तिर्वेति । सत्यं, तत्र उपात्तपरित्यागाद् हृदयत्वापादानद्वारेण प्रसङ्गतोऽन्येऽपि दोषा उक्ताः, इह तु प्राधान्येनैवान्येन च प्रकारेण दोषाभिधानं प्रकटीक्रियते । अन-वस्थानादविशेष इति साधयिष्यमाणमनवस्थानं सिद्धं कृत्वाह—यथा च प्रागस-मानावस्थानादससामान्यमिति प्रक्रम्य सामान्याभावः प्रतिपादितस्तथेहापि तद्विपर्ययेण तदेव प्रकरणं योज्यम् । किं कारणं ? अनिवृत्तिकतरकायत्वादि-त्यादि । सर्वं तादृगेव यावत्तत एतानि घटादिवस्त्वात्मविशेषपक्षग्राहिणाप्यव-श्यापेक्ष्याणि । प्रत्यक्षग्राहिणाप्यवश्यापेक्ष्याणि प्रत्यक्षत एव, तथापरेण विशि-ष्टत्वादात्मनः किमु परविषयमुख्यविशेषवादिना प्रत्यक्षत एव तथा तथा परवि-षयस्य विशेषस्य भवनात्परेण विशिष्टेन भूयत इति । इहेति परविषयविशेषपक्षे द्रव्यादिप्रत्यपेक्षया सर्वस्यास्य सम्बद्धत्वादेकैकस्य निरवशेषमिदं जगद्विशेषणमिति पूर्ववदेव द्रव्यं द्रव्यान्तराणि क्षेत्रं कालं भावं च प्रत्यपेक्षते । स्वप्रभेदात्परप्रभे-दांश्च । एवं क्षेत्रं कालो भावश्चेति । सर्वं सर्वेण सम्बद्धं, तस्मात्सर्वस्य सम्बद्धत्वात् पूर्ववत्सहक्रमावृत्तिरूपादि, शिवकादि, पृथिव्यादि, व्रीह्याद्यंकूरादिसमवस्थाना-द्रव्याणां, क्षेत्रतोऽपि तेषामेकगतिसमवस्थानात् । कालतोऽप्यनेकप्रभेदः पञ्चवर्ण्य-धर्मास्तिकायपृथिव्यादिपानीयादानधारणादि समवस्थानात् । भावतोऽपि पूर्वव-द्रव्यादिरूपादिशिवकादिभवनसमवस्थानात् । स्यादेकघटसंहतनानावस्थगुणव-दिति । यथोक्तं—द्रव्यमेव हि तथावस्थानाद्रूपादिभावं लभते । एकः पुरुषः पितृ-पुत्रत्वादिवत् । द्रव्यमेव हि घटाख्यं रूपं रसो गन्धः स्पर्शः सङ्ख्या संस्थानं शुक्लं नीलं तिक्तं कटु सुरभि मृदु कर्कशं शुक्लतरं शुक्लतमं चेत्यादिविशेषणतां नातिवर्तते । त एव ह्येते गुणाः पर्यायाश्च नानावस्थाः परस्परविशिष्टाः परस्परस्य द्रव्यस्य च विशेषणं द्रव्यमेव गुणाः पर्यायाश्च । तथान्येऽपि द्रव्यक्षेत्रकाल-भावाः सप्रभेदा इति । स्याच्छब्दात्पुनः स्यादेतदेवं, यद्येतद्वक्ष्यमाणदोषेण न व्याह-न्येतेत्यत आह । तत्र सर्वार्थानां नित्यप्रवृत्तत्वात्समयमपीत्यादि । यावद् यदा-

श्रयो विशेषार्थोऽवस्थाप्येतेति । एवं परस्परविशेषणत्वेन सर्वेऽर्था नित्यं प्रवृत्ता एवेति समयमात्रमपि नास्ति तेषां समवस्थानं, समवस्थानाश्रयो हि विशेषोऽवस्थाप्ये तदभावात् कुतो विशेषः ? ।

आत्तवदिति । तत्कालावगृहीतक्षणोत्पत्त्यविनष्टभाववदित्यर्थः । ततः किमिति चेत् ? संस्थानाभावान्निराश्रयः खपुष्पवन्नास्ति विशेषः । स्यान्मतं, सम्बन्धदेशो न इष्यते उपेक्ष्यत इति । किमुक्तं भवति ? । सम्बन्धदेशान् द्रव्यादीन् मुक्त्वा निराश्रयत्वाद्विशेषो मा भूत् सम्बन्धदेशस्थानां तु घटपटादीनां किमिति तु वा विशेषो न स्यात्तदाश्रयत्वाद्विशेषस्येत्यत्रोच्यते—सम्बन्धो देशोपेक्षायामुपान्त्यत्यागोऽकस्मात् । एवं सत्यकस्मादेवोपान्त्यस्य विशेषस्य त्यागः सामान्याभ्युपगमात् । कथं सामान्यमभ्युपगतमिति चेत् ? । तुल्यत्वात् सम्बन्धदेशस्थानां द्रव्यक्षेत्रकालभावप्रत्यासत्तितुल्यक्षणत्वात् । सामान्यस्य समानभावस्य । अत्राह—रूपादिभेदसम्बन्ध एव विशेष इति । रूपरसगन्धस्पर्शसंख्यासंस्थानादीनां सप्रभेदानां सम्बन्ध एव विशेष उच्यते । त एव हि परस्परतो विशिष्यमाणा विशेषाख्या इति । अत्रोच्यते । तन्न, अन्यासम्बन्धेऽरूपादित्वादन्यैर्द्रव्यादिभिरसम्बन्धः तेषामरूपादित्वादन्यैर्द्रव्यादिभिरसम्बन्धे तेषामरूपादित्वं प्रसज्यते । यस्मात् सर्वे सर्वत्र सर्वदा सर्वथा द्रव्यक्षेत्रकालभावाविभागसम्बद्धरसा एव हि रूपादयः । किं कारणं ? शुद्धानां क्वचिदप्यभावात् । प्रागुक्तद्रव्यादिसम्बन्धाभावे रूपादिस्वरूपाभावात् । तत्सम्बद्धानामेव दृष्टत्वात् । सप्रभेदद्रव्यादिसम्बन्धाभावे रूपादयो न सन्त्येवेत्यरूपादित्वं तेषां प्रसक्तं । इतर आह—लोके दृष्टो ननु च वायुः० । शुद्ध एव स्पर्शः स्यादरूपादित्वं यदि द्रव्यक्षेत्रकालरूपरसादिभिरसम्बन्धे रूपाद्यभाव एवेत्ययमेकान्तः स्यात् । स्याच्चानुमानं यदि दृष्टेन न बाध्यते दृष्टश्च वायुः स्पर्शमात्र एव । न हि दृष्टाद्गरिष्ठं प्रमाणमस्तीति । अत्रोच्यते—तत्रापि हि क्षेत्रादिद्रव्यस्य रूपादयो न गृह्यन्ते, अनभिव्यक्तिसौक्ष्म्यात् । वैधर्म्येण द्रव्यादिवत् । यथा द्रव्यादयो गृह्यन्ते प्रत्यक्षेण न तथा वायौ रूपरसगन्धादयोऽनभिव्यक्तिसौक्ष्म्याद् गृह्यन्ते । किं कारणं ? चक्षुरादीन्द्रियग्राह्यपरिणत्यभावात् । हेत्वनुमेयताभावात् । यथोक्तं—सङ्ग्रहान्तरे—

[ मूर्तिः कथं न वायोर्नास्थाप्येत च कथं न रूप्येतत् ।
तद्व्यक्तिग्रहणं प्रति न शक्नुयाच्चिन्द्रियैः कश्चित् ॥ इति । ]

गन्धवन्तस्तोयाग्निवायवः मूर्तित्वात्पृथिवीवत् । एवं रसवन्तावग्निवायू मूर्तत्वाद्भूम्यम्बुवत् । रूपवान् वायुर्मूर्तत्वादग्निभूमिजलवत् । रूपरसगन्धस्पर्शवन्ति वाय्वग्निजलानि मूर्तत्वात् पृथिवीवत् । इहापि च साधर्म्यदृष्टान्त उच्यते । वातायन-

रेणुस्पर्शरसरूपगन्धादिवन्न गृह्यन्त इति तेषां हि रविकरोद्योतव्यक्तानां रूपमेव ग्राह्यं । अथोच्येत परेण-यदि सम्बन्धदेशसमवस्थानादर्थानां विशेषो न भवति, एककालसहावस्थानार्थानां विशेषो भविष्यति यस्मादवतिष्ठते हि किञ्चित्कञ्चित्कालं । यथा पूर्वापरस्थितघटपटाविति । ननु विशेषकारणमत्र वक्तुं प्राप्तमिदं तु सामान्यकारणमेवाशङ्कितमिति । अत्रोच्यते–सामान्यद्वारेण विशेषः सिद्ध्यतीति तदसिद्धिद्वारेण विशेषासिद्धिरिति सर्वत्र ग्राह्यं। अत्राप्याचार्य उत्तरमाह–एवमपि तथाभूतसामान्याभ्युपगमादविशेषत्वमेव । पराभ्युपगम एवोत्तरत्वमापद्यते एककालावस्थानैककालसामान्याभ्युपगमाद्देशसम्बन्धसामान्याभ्युपगमवद्रूपान्तत्यागोऽकस्मात्तुल्यत्वादित्यविशेषत्वमेव । किं चान्यत् । प्रागुक्तविधिना सर्वसामानाधिकरण्याच्च विशेषस्तत्त्वस्य परस्परापेक्षत्वाद्विशिष्यमाणत्वात् भावानां परस्परतः सर्वं जगदेकाधिकरणम् । तत्रैकविकारेऽपि सर्वस्याशेषस्याप्यशेषस्य तदपेक्षत्वादन्यथा त्वधिकारो जायते । कुतस्तन्मात्रेऽन्यत्वात् । को दृष्टान्तः ? गन्धो नाधिकत्वं भाववदिति। यथा भ्वम्भसोरयथासंख्येन न गन्धो तस्यांभसो गन्धाधिकायाश्च भुवः। तर्हि नाधिकभावे न विकारो दृष्टः । गन्धहीना आपस्तदधिका भूरिति। तस्मान्नास्त्येवानवस्थानान्निराश्रयः खपुष्पवद्विशेष इति । अथ तु तद्बुद्ध्यासन्नमेव ग्रहीष्यते सामान्यविशेषयोरिति । अथेत्यधिकारान्तरे । तुर्विशेषणे। प्राक्तनादेशकालासत्यविकाराद्बुद्ध्यासत्यविकारं विशिनष्टि । बुद्ध्यासन्नः स इति बुद्धिर्योऽसौ प्रथमो घटः स एव द्वितीय इति बुद्धिः। का सा ? तत्त्वानुवृत्तिबुद्धिः। व्यावृत्तिबुद्धिरपि तद्बुद्ध्यासत्या द्रव्यत्वबुद्धौ प्रसक्तायां नायो न सिकता । न शिवकादिर्घट एवेति । यथोक्तम्–'अनुवृत्तिप्रत्ययकारणं सामान्यं । व्यावृत्तिबुद्धिहेतुर्विशेषः ।' इति ।

अत्र क्रमः। एवं तर्हि द्रव्यगुणकर्मणां न सामान्यं नापि विशेषः। किं कारणं ? तेषां परस्परासत्यभावात्। तया तद्बुद्ध्या द्रव्यस्य गुणस्य कर्मणो वा सन्निगृह्यते ।

किं द्रव्यबुद्ध्या गुणो गृह्यते, कर्म वा ? । द्रव्यबुद्ध्या हि तद्द्रव्यमेव । तदासन्नत्वात् द्रव्यमिति गृह्येत ।

तत्रैव च सामान्यविशेषे स्याताम्। न गुणकर्मणोः। कस्माद् ? यस्मात्तद्बुद्ध्यासन्नता। द्रव्यस्य द्रव्यस्य च, न द्रव्यस्य गुणस्य च, तथा न द्रव्यस्य कर्मणां च। न गुणस्य कर्मणश्चेति। सामान्याभावो विशेषाभावं च। तद्बुद्ध्या सत्यभावात् । एवं च कृत्वा तयोः सत्त्वं सामान्यं मा भूत् तस्मात् सदिति त्रयाणामविशेष इत्ययुक्तं । तथा नित्यं द्रव्यवत्कार्यं, कारणं सामान्यविशेषवदिति च सामान्यं द्रव्यगुणकर्मणां मा भूत् । उक्तं च वः शास्त्रे–'सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषव-

दिति' । द्रव्यगुणकर्मणां विशेषः । एवं तद्दर्शनानात्वं द्रव्यगुणकर्मणां प्राप्तमिति चोदिते विशेष उच्यते । नाविशेष एव आरम्भानारम्भभेदात् । द्रव्याणि द्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरं, कर्म कर्मसाध्यं न विद्यत इति । किं चान्यत्? लक्षणभेदात् । क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणम् । द्रव्याश्रय्यगुणवान् गुणः इति गुणलक्षणम् । संयोगविभागाद्यनपेक्षं कारणमिति कर्मलक्षणम् । तथा विरोधाविरोधभेदात् । कार्याविरोधि द्रव्यं कारणविरोधि च । उभयथा गुणः कार्यं विरोधि कर्मेत्येवमादि द्रव्यगुणकर्मनानात्वहेतुकलापश्च विशेषाभावादनर्थकमापद्यते । एवं तावद्द्रव्यस्य च सामान्यविशेषौ स्यातां न गुणकर्मणोः । इतर आह—यथा द्रव्ययोः प्रत्यासत्तिर्द्रव्यत्वाभिसम्बन्धात् । तथा सत्त्वाभिसम्बन्धाद्द्रव्यगुणकर्मणां भविष्यति । यथोक्तं—सदिति यतो द्रव्यगुणकर्मसु द्रव्यगुणकर्मभ्योऽर्थान्तरं सा सत्तेति ।

अत्र क्रमः । द्रव्ययोरपि त्वदनुकम्पाद्रवीकृतचेतसा मया त्वयि चित्तानुवृत्त्योक्तं तत्राप्याशां मा कृथास्तदपि नोपपद्यते बुद्ध्यासन्नीकृतसामान्यविशेषवादिनो भवतः । सामान्याभावे विशेषाभावात् । तथा सत्तिः सिकतानां वज्रस्य च पार्थिवत्वसामान्यानुविद्धत्वात् । अश्मसिकता—लोष्ठवज्रादीनां तेषां सामान्यविशेषौ स्यातां, न भूम्यम्भसोरन्यतरस्य पार्थिवत्वाभावात् । तेनैव हेतुक्रमेण तथासत्तिः पिण्डघटयोर्न मृत्सिकतानाम् । एवं परतः परतो यावत्तुल्यजातिगुणक्रिययोरण्वादेरेव स्याताम् । सामान्यविशेषाविति वर्तेते । तथा सत्तिर्घटकपालयोर्न पिण्डघटयोरेवं कपालशकलयोर्न[1] घटशकलयोः, शकलशर्करयोः पांशुधूल्योर्न धूलीशर्करयोर्धूलीत्रुट्योर्न पांशुत्रुट्योस्त्रुटिपरमाण्वोर्न धूलीपरमाण्वोः । अथवा घटस्य च घटस्य च न घटस्यकपालस्य चेत्यादि । द्वयोरप्यण्वोः पार्थिवशुक्लगतिसमवायिनोरण्वोर्नाप्यपार्थिवादिनीलशुक्लगतिस्थितिजातिगुणक्रिययोः न तु तयोरपीत्यादि । यावदपक्षिप्तप्रत्यासत्त्योरिति । तुल्यजातिगुणक्रियासमवायिनोरन्यत्वप्रत्ययप्रभावोल्लिङ्गितान्त्या विशेषयोः । तत्समवायेनापक्षिप्तापहृता प्रत्यासत्तिस्तयोरपीति कृत्वा कुतस्तद्बुद्ध्यसत्तिग्रहणम् । तस्मात्सामान्याभावाद्विशेषाभावः सर्वत्रैवोभयाभाव इति । द्रव्यगुणकर्मणां न सामान्यं नापि विशेष इत्यतःप्रभृति यावदण्वोरित्येतदवधिमध्याभिहितोपपत्तिबलाद्यथोपपादितसामान्यविशेषाभावं स्मारयति ॥

अत्राह—सा द्विधा—प्रत्यासत्तिरर्थसम्बन्धादनर्थसम्बन्धात्[2] । तत्रानर्थलक्षणा सद्द्रव्यपृथिवीमृद्घटादितत्त्वानुवृत्तिबुद्धिग्रहणा यथोक्ता सामान्यविशेषसमवा-

---

[1] कपालशकलयोर्न घटशकलयोः, शकलशर्करयोर्न घटशर्करयोः, पांशुशर्करयोर्न शकलशर्करयोः, पांशुधूल्योर्न धूलिशर्करयोः, धूलित्रुट्योर्न पांशुत्रुट्योः, त्रुटिपरमाण्वोर्न धूलीपरमाण्वोः । [2] °सम्भवात् ।

यानामर्थत्वाभावात् । अर्थलक्षणा तु द्रव्यगुणकर्मसम्बन्धात्मिका । तेषामर्थ-
संज्ञितत्वात् । यथोक्तमर्थ इति द्रव्यगुणकर्मवस्तु । तत्र क्रियावदित्यादि द्रव्य-
लक्षणं । तद्भेदलक्षणं च रूपरसगन्धस्पर्शवती पृथिवी । रूपरसस्पर्शवत्य आपो
द्रवाः स्निग्धाश्च । तेजो रूपरसस्पर्शवत् । वायुः स्पर्शवान् । यत्र रूपादिचातुर्गुण्यं
सा पृथिवी । गन्धहीना द्रवस्नेहाधिकाश्चापः । द्रवस्नेहरसगन्धहीनं तेजः । रूप-
हीनो वायुः । द्रव्याश्रयादिलक्षणो गुणः । श्रोत्रग्रहणोऽर्थः शब्दः । चक्षुर्ग्रहणो
योऽर्थः स रूपमित्याद्यर्थलक्षणानियततया प्रत्यासत्त्या सत्या सामान्यविशेषौ स्याता-
मिति । अत्रोच्यते । अर्थाश्लेषलक्षणायां त्वासत्तौ पृथिवीघटरूपादीनामेव स्यात्सामा-
न्यविशेषता लक्षणोद्देशनिर्देशकृतैवेत्यर्थः । नेतरसामान्यविशेषयोः सामान्यविशेष-
तेति वर्तते । सत्त्वद्रव्यत्वपृथिवीत्वगुणत्वरूपत्वाद्यनुवृत्तिव्यावृत्तिबुद्धिलक्षणयोर्न
स्यात् । इष्यते च तयोरपि वैशेषिकैर्गुणसमुदायद्रव्यवादिभिश्च सादृश्यानुवृत्तिलक्षण-
सामान्यविशेषता । कोऽभिप्रायः ? । अर्थाश्लेषलक्षणासत्तिकृतसामान्यविशेषाभ्युप-
गमे तत्त्वानुवृत्तिबुद्धिग्रहणौ न स्याताम् । तत्त्वानुवृत्तिनिवृत्तिकृतयोर्वाभ्युपगमेऽर्था-
श्लेषकृतप्रत्यासत्त्योरभाव इति विरोधान्न प्रकल्प्यत इत्ययमभिप्रायः । किं चान्यत्-
तथापि स्वविषयसामान्यविशेषापत्तिरर्थाश्लेषलक्षणासत्तौ सत्यामपि स्वविषयमेव
सामान्यं स्वविषय एव विशेष इत्युक्तौ प्रागुक्तौ विकल्पावापन्नौ । सा चोक्तदोषा
सापि च स्वविषयसामान्यविशेषापत्तिरुक्तदोषैव । यदि स्वविषयं सामान्यवि-
रोधः । यदि सामान्यं तत आत्मा न भवत्यनेकार्थत्वात्सामान्यस्य । अथात्मा
ततो न सामान्यमेकत्वादात्मनः । अथात्मैव सामान्यं रूपादिर्घटादेरात्मा तत्स-
मुदायकार्यत्वात् । एवं सत्यात्मभेदः । रूपं रूपं च रूपादिसमुदयश्चेत्यादि ।
तथा विशेषोऽपि यदि स्वविषयो विशेषविरोधः । यदि विशेषस्तत आत्मा न
भवत्यन्यत्वाद्विशेषस्य गुणतः कालतो वा । अन्यथा घटादौ सामान्यापत्तेः ।
अथात्मा ततो विशेषो न भवत्येकत्वादात्मनः । अथोच्येत—नैकत्वान्यत्वविरोध-
दोषौ । आत्मैव विशेष इत्यनपादानादिप्रतिज्ञानाद्यद्यात्मापेक्ष एव विशेष एक
एवान्य इत्यात्मनोऽन्यथाभवनादनात्मत्वमित्यादिपूर्वोक्तदोषसम्बन्धिनी स्ववि-
षयसामान्यविशेषापत्तिः । अत्राह संसर्गवादी—यद्यात्मैव सामान्यमात्मैव विशेष
इति ब्रूयाः सांख्यबौद्धवत्परे ते दोषाः । ममापि न पुनरहमेवंपक्षः । मम तु
सामान्यविशेषौ द्रव्यगुणकर्मभ्योऽत्यन्तभिन्नौ । नागृहीतविशेषणा विशेष्ये बुद्धि-
रस्तीति सत्त्वाभिसम्बन्धात् सद्द्रव्यत्वादिसम्बन्धात् द्रव्यमित्यादिसामान्यविशेष-
वादिनः कथं स्वविषयसामान्यविशेषपक्षदोषाः इति । अत्रापि परविषयसामान्यविशे-
षवादिप्रत्याख्यानात् का गतिः ? । इत्यलं प्रसङ्गेन ॥ तस्मादित्युक्तदोषोपसंहारार्थः ।

एतद्दोषापेतं सर्वथान्तरङ्गं वस्त्विति प्रतिपत्तव्यं । घटादीत्यभिसंभंत्स्यामः । सर्वेण प्रकारेण सर्वथा यां गतागतिं गत्वा सामान्यमेव विशेष एवेत्येवमादिना विचार्य-विचारान्तरङ्गं वस्तु घटस्य केनचित् प्रतिविशिष्टेनाकारेणोदकाद्याहरणधारणादि-समर्थेन भवनं समानेन चार्थान्तरैस्तदेवाश्रयणीयं । न बहिरङ्गं सत्त्वद्रव्य-त्वादिस्वपरविषयसामान्यविशेषतादिपरिकल्पितम् । यथोक्तम्—'अन्तरङ्गबहिरङ्ग-योरन्तरङ्गो विधिर्बलवान्' । य एष प्रेक्षापूर्वकारी पुरुषः स प्रातरुत्थाय प्रत्यङ्गव-र्तीनि स्वानि कार्याणि कुरुते । ततः सम्बन्धिनां, ततः सुहृदां, ततः शेषाणा-मिति तदन्तरङ्गत्वं । कुतः ? । स्वमूर्तिस्थत्वात्, स्वा मूर्तिर्ग्रीवाद्यात्मिका । तत्रस्थत्वा-ज्जलाद्याहरणसमर्थस्य भवनस्य प्रधानत्वाच्च देवग्राह्यं कुतः प्रधानं । तदर्थ-त्वात्सामान्यविशेषयोः, कन्यार्थवस्त्रालङ्कारवत् । घटार्थो हि सामान्यविशेष-कल्पनाव्यापारः । व्रीहिकणार्थपलालादिवदप्रधानत्वात्सामान्यविशेषयोस्त्याज्यता व्यवस्थितत्वाच्च तदेव घटभवनं ग्राह्यं । व्यवस्थितं चात्मन्यवस्थितत्वात् । न यथा तौ संचारिणौ सामान्यविशेषावव्यवस्थितौ परापेक्षत्वादव्यवस्थितत्वाच्चा-वस्तु वन्ध्यापुत्रवद् ।

क्व पुनः संचारिणौ ? सद्द्रव्यादिषु, सद्द्रव्यपृथिवीमृद्घटत्वाभिसम्बन्धादस्तिद्रव्यं पार्थिवो मार्तिको घट इति घटे संप्रत्यय इति । उक्तं ह्याचार्येण । घटभवनस्योद-काद्याहरणसक्तात्मनः । पुनः क्व संचरणम् ? अनपेक्षत्वाच्च तदेव वस्त्वित्यभि-सम्भन्त्स्यते । प्रत्येकं सर्वत्र तद्विघटभवनं न घट इति वा पट इति वा घटपटा-दिद्रव्यान्तरमपेक्षते । यथानुवृत्तिव्यावृत्तिसामान्यवादिमते तदर्थं घटपटाद्य-र्थान्तरापेक्षा व्यावृत्तिविशेषवादिमते च तदर्थं घटपटादिद्रव्यान्तरापेक्षा । लौकिकानुवृत्तिव्यवहारनयवादिमते तु सन्निहितस्वाधीनवृत्तित्वाद् घटात्मभवनस्य न तदपेक्षास्तीति । तद्दर्शयति—न हि तस्यानुवृत्त्यघटान्तरेषु अर्थापत्त्या न व्यावृ-त्त्यापेक्षा पटादिद्रव्यान्तरेषु यदि स्यादपेक्षा ततोऽनुवर्तेत[1] । स घटस्तेष्वपि घटा-न्तरेष्वपि । न पुनरपेक्षास्ति । तस्य स्वसामर्थ्येनैव सिद्धत्वाद् घटात्मनः । पटा-द्यपेक्षेत घटो घटान्तराणि घटान्तरेष्वप्यनुवर्तेत । ततश्च सर्वसामान्यांश एव स स्यात् । घटान्तरमपि घटात्मैव स्यात् तत्तत्त्वानुवृत्तेर्घटात्मवदिति दोषः स्यात् । देशभिन्नेष्वपि घटेषु कालभिन्नघटवत् । तन्निदर्शयति । तद्यथा—पूर्वाह्णापराह्ण-योरेक एव घट इति । नापि घटस्तत्त्वानुवृत्तिमपेक्षते । घटात्मन्यसिद्धे तत्त्वा-नुवृत्त्यसिद्धेस्तत एव च न पटादिव्यावृत्तिमपेक्षते । तदायत्तत्वादित्यत आह-तत्सन्निवेशास्वरूपापेक्षत्वाच्च तस्याः । तदपेक्षाद्यर्था घटावयवसन्निवेशस्वरूपम-

---

१ ० ऽनुवर्तेत ।

पेक्षते घटान्तरानुवृत्तिः पटादिव्यावृत्तिरेवेति । युक्तानुवृत्तेर्घटापेक्षाव्यावृत्ते एव पटादेर्घटस्य पुनरनुवृत्तिव्यावृत्त्यपेक्षा व्यर्था, स्वत एव सिद्धत्वात् । स्यान्मतं-घटोऽपि घटत्वापेक्षात्मलाभस्तत्त्वानुवृत्तिरपि घटात्मलाभापेक्षेति । एतच्चायुक्तमितरेतराश्रयदोषापादनात् । घटघटत्वानुवर्तनयोरितरेतराश्रयत्वाद् दोषमापादयन्त्येषा कल्पना । इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते । तद्यथा–नौर्नाविबद्धा नेतरवारणायेति । उक्तं स्वसामान्यं नापेक्षत इति । तथा विशेषेऽप्यस्य नापेक्षेति । यथा सामान्यापेक्षा नास्ति घटात्मलाभस्य तथा विशेषेऽपीति ॥

प्रोक्तहेतुविधिनातिदिशति । तथा च योजितमस्माभिरर्थतः, ग्रन्थतो योजनापि । तथाहि–स एव न स्याद्रक्तवदिति । न हि तस्य व्यावृत्त्यपेक्षा पटादिषु यदि स्यात्, स तेभ्यो व्यावर्तेत । ततश्च सर्वविशिष्टत्वात्स एव न स्याद् घटोऽपि । घटपटयोरिव तत्सन्निवेशस्वरूपापेक्षत्वाच्च । तस्मात्तदपेक्षा व्यर्था इतरेतराश्रयदोषापादनादिति सर्वमतिदेश्यं । किं चान्यत् । पूर्वत्वाच्च घटात्मभवनस्य सामान्यविशेषाभ्यां हि पूर्वघटभवनं, तत्कथमिति चेद् ? यथालोकप्रसिद्धं लोके प्रसिद्धं लोकप्रसिद्धं यथैव लोके प्रसिद्धं, तथा घटभवनमाकारादिमात्रमेव च घट इति लोके प्रसिद्धं, तदेव पूर्वमनपेक्षितपूर्वापरप्रभेदत्वात् । के पुनः पूर्वापरप्रभेदाः ? घटादारभ्य यावत्प्रकृतिस्ते पूर्वप्रभेदाः सांख्यानाम् । सदिति वा वैशेषिकाणामपरे प्रभेदाः । यावदन्त्यविशेषकृतमन्यदिति सांख्यवैशेषिकाभ्यां कल्पितम् । अत आह–

प्रकृतिरिति वान्यदिति वा बौद्धेन वा क्षणिकत्वादत्यन्तमन्यदिति वर्तमानत्वाच्च । वर्ततेरस्त्यर्थत्वादस्ति–भवति–विद्यते–पद्यते–वर्ततयः सन्निपातषष्ठाः सत्त्वार्था इति वचनात् । अत एव नित्यं जलाहरणादिव्यवहारसन्निपाति सततमतीतानागतकालयोरपि घटपटयोरवस्थानान्न प्रलयभागिति । नाम्भस्तरङ्गवत्स्वात्मप्रदेशं न प्रदीपज्वालानलवदत्यन्तविनाशं । द्विविधमपि प्रलयं न लभते[1] । द्रव्यस्य पर्यायान्तरेण, पर्यायस्यापि द्रव्याविनाभावादेव एकान्तासदुत्पत्तिविनाशवादयोरहेतुदृष्टान्तत्वात् । एकान्तनित्यवादेन धर्माविर्भावतिरोभावाभावात्तद्वितेन रूपेण सर्वकालं सद्वर्तते । सत्तार्थत्वादिति । तदेव व्याचष्टे–वर्तत इति । भाव इति । वृत्तिभवनयोः प्रागुक्तं पर्यायशब्दत्वं दर्शयति–योऽसाविति । प्रत्यामननिय एवं व्याख्यातो भावः । सोऽसौ तदेव वस्तु नान्यदिति प्रतिपत्तव्यमिति निगमयति–तदन्तरङ्गं प्रधानमनपेक्षं पूर्ववर्तमानं च तद्वस्तु । इतिशब्दः परिसमाप्त्यर्थोऽवधारणार्थो वा । इयानेव पर्याप्तोऽर्थो नातोऽधिको न्यूनो वा येऽन्येऽन्यत्कल्पयन्ति । कारणमेव कार्यमेव सामान्यमेव विशेष एव तदुभयमेवान्यतरोपसर्जनप्र-

---

१ भजते ।

धानमेव नैव वास्त्युभयमिति । किं च एतेन यदि कारणं यदि कार्यं ततः को-दोषः ?। दृश्यते हि कारणमपि कार्यमपि । यथा परमाणुकारणं द्व्यणुकादि मृत्पिण्डशिबिकादीनां कार्यमपि तद्भेदजत्वात् । एवं द्व्यणुकत्र्यणुकादीनामपि कारणकार्यभावः । सङ्घातभेदाभ्यां सामान्यं, द्रव्यक्षेत्रकालभावानां स्वपरभवनसामान्यानतिवृत्तेः । स्वपरविशिष्टभवनात्मकत्वाविशेषः । एवमुभयमन्यतरोपसर्जनप्रधानत्वम् । सहक्रमस्वातन्त्र्यपारतन्त्र्याविवक्षावशात् । न चास्त्युभयमेकान्तरूपस्य परस्पराप्रतिबद्धस्यासिद्धेरसिद्ध्यादिशून्यतानुभवनात् । स एव व्यवहारनयाश्रयाल्लौकिको ब्रूते । को हि वादानाम्, इति । एकान्तवादानामन्तं कर्तुं शक्नुयादुच्छेदं शक्नुयात्कर्तुमिति । किं कारणं? । न हि साङ्ख्याभिहिताः सत्कारणे कार्यम् ।

'असत्करणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥'

इत्येवमादयो हेतवः । न वा वैशेषिकोक्ताः क्रियागुणव्यपदेशाभावादसदित्यादयः । क्षणिका घटादयः प्रत्ययायत्तजन्मत्वादित्यादयो वा बौद्धोक्ताः परस्परेणोच्छेत्तुं शक्यन्ते । अभियुक्तबुद्ध्युत्कर्षपरम्पराया अदृष्टानिष्टत्वात् । एतस्मिन्नर्थे ज्ञापकमाह–आह चेति । नाहमेव स्वमनीषिकया ब्रवीमि । किं तर्हि ? अन्येऽप्येवं ब्रुवते–

"णिययवयणिज्जसच्चा सव्वणया परवियालणे मोहा ।
ते पुण अदिट्ठसमओ विभजइ सच्चेव अलिए वा ॥" सम्मतितर्के ।

स्वविषयसत्यत्वादेवाविचाल्या इति तच्चालने मोघाः । तेषामनेकान्तस्थितिस्वतत्त्वानवबोधात् । सत्यमेवासत्यमेवेत्यदृष्टसमयस्तान् विभजते । इत्याचार्यसिद्धसेनः। तथान्येऽपि—

'यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥' इति ।

अनुमानान्तरसाध्यत्वे त्ववस्थितानुमानत्वाल्लोकप्रसिद्धिरेव प्रमाणमित्यर्थः । को ह्येतद्वेदेत्यशक्यप्राप्तिं दर्शयति । किं चानेन ज्ञानेनेति प्रयोजनाभावं च । यस्मात्प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनानां जिज्ञासासंशयसम्यक्त्वप्राप्तिप्रयोजनपूर्वाणां संशयव्युदासः फलमन्ते भविष्यतीति दशावयववादिनां मतम् । तथा च व्यवहारप्रसिद्धिः । तस्मात्त्यज्यन्तामद्यतनाव्याप्त्यव्याप्त्यतिप्रसङ्गागमकाक्षरदरिद्रकुश्रुतिकाररचितन्यायलक्षणानीति । तथा च कारणे कार्यसदसत्त्वानियमः । एवं च कृत्वानेन न्यायेन यथा कारणमेव न कार्यं, कार्यमेव न कारणं । सामान्यमेव न विशेषो, विशेष एव न सामान्यमुभयमन्यतरोपसर्जनमुभयाभावो वेत्ययं नियमो

नास्त्युक्तविधिना । तथा कारणे कार्यस्य सत्त्वमेवासत्त्वमेवेत्ययमपि नियमो नास्ति । कथं? यदि कार्यासत्त्वतः कारणमेवेति । नास्ति कार्यस्यापि सत्त्वात्कथं क्रियानिमित्तकत्वात् । कारणकार्यत्वयोः कार्याभावे कारणाभावः, कारणाभावे कार्याभाव इति । तथा यदि कारणं सत्ततः कार्यमेव न भवति कारणस्यापि सत्त्वात् । एवं सामान्यविशेषोभयान्यतरोपसर्जनोभयाभावेष्वपि भावनीयं । तत्र तावत्कारणे कार्यं सदेवासदेवासदेव सदसच्चैवेति वा ये ब्रुवते तेषां नियमाभाव उक्तः । अन्यतरोपसर्जनाभावयोरप्युक्त एव भवतीत्यभिप्रायः । कार्ये कारणं सदेवासदेवेत्यनियमः । को हेतुः कारणे सत्येव भावाभावाभ्यामिति यथासंख्यं हेतू सत्येव भावादसत्कारणे कार्यमित्यनियमः । सत्येव भावात्सदेवेत्यनियमः । असति च कारणे कार्यस्य सदसत्त्वानियम इति वर्तते । कुतः । सेवाद्युद्योगफलानियमात् । दृष्टो हि लोके कृषीवलवणिग्राजपुरुषशिल्पादीनां कृषिवाणिज्यासेवाशिल्पादिषु उद्युक्तानां फलानियमः । सत्स्वसत्सु च दृष्टस्तद् यथा—वातकर्कोटिकपुष्पं फलकारणं सत्कार्यं, पुष्पत्वादाम्रपुष्पवदित्यनुमानप्रसङ्गेऽपि च दृष्टमसत्कार्यं । असत्कार्यं पुष्पफलमस्मिन्नित्यसत्कार्यं । तस्याफलत्वदर्शनाद् दृष्टविरुद्धमनुमानमतोऽसत्कार्यं तदिति । अव्यक्तमिति चेत् स्यान्मतमव्यक्तानि वातकर्कोटिकीवञ्जुलजपाकुसुमादीनां फलानि कार्याणीत्येतच्चायुक्तम् । व्यक्तिकार्यस्याव्यक्तकार्यत्वादसत्त्वतुल्यत्वात् । व्यक्तिः कार्यमस्येति व्यक्तिकार्यं । किं तत् कार्यम्? । तस्य कार्यस्याव्यक्तकार्यत्वादसत्त्वेन तुल्यं तद्भावोऽसत्त्वतुल्यत्वं । तस्मादसत्त्वतुल्यत्वान्नाव्यक्तं कार्यमस्तीति । अथवा व्यक्तिं च सत्कार्यं तद्व्यक्तिरेव कार्यं तद्व्यक्तं कार्यं अव्यक्तकार्यं । तस्याव्यक्तकार्यत्त्वादसत्त्वतुल्यं तस्मादसत्तत् वातकर्कोटक्यादिपुष्पफलं नाव्यक्तं कार्यमिति । स्यान्मन्तं, करोतीति कारणं । यथोक्तं—

> 'ष्ठिवसीव्योर्लुट्परयोर्दीर्घत्वं वष्टि भागुरिः ।
> करोतेः कर्तृभावे च सौनागः संप्रचक्षते ॥

तस्मात्स्वकार्यस्याकरणात्कारणत्वमेवेति । एतदपि नोपपद्यते । यस्माद्बीजादीनामप्यकारणतैव क्वचिदकारणादिति प्राप्तं । इतिशब्दो हेत्वर्थे । यस्मात्तेषामपि बीजानां त्रिवर्षपरिमोषितानामङ्कुराद्युत्पादनाशक्त्यभावः । आदिग्रहणान्मृदादिघटाद्युत्पादने । ततः को दोषः? । कारणमप्यकारणमेवास्तु, कार्यकारणव्यभिचाराणां तदर्थाप्रवृत्तेः । पुनरनारम्भात् करणाभावे कारणाभाव एव स्यात्, अनिष्टं चैतत् । लोके पुनरुपपद्यते कार्यसदसत्त्वानियमात्तु करणे बीजादौ कारणतायामेव सत्यां करणाकरणे संनिहिते तन्त्वादौ करणे कार्यस्य पटादेश्च कादाचित्कयोः करणाकरणयोर्दर्शनात् । स्यान्मतं, कारणे कार्यस्य सदसत्त्वयोः

कारणाकरणयोरेवानियमे । किमर्थं पुनः करोतीति कारणमिति शब्दव्युत्पत्तिरा-
श्रीयते? इति । उच्यते—

अविदितवेदनेत्यादि । अज्ञातज्ञापनमविदितवेदनमर्थोऽस्य विधेरित्यविदित-
वेदनार्थो विधिस्तत्परतायां वाक्यप्रवृत्तेः । तस्यामवस्थायामनुपजनितविषयत्वाद-
पवादस्पर्शस्य । तदा हि करोतीति कारणमिति कारणत्वविधानमात्रं क्रियते । देश-
कालादिविशेषाविशेषणादसति स्वविषये कमर्थमपवादः स्पृशेत्? किं करोत्येष न
करोत्यपि क्वचित्कदाचिदिति?। तदा स मन्यते वक्ता । इदं तावत्प्रतिष्ठां यातु ।
करोतीति करणमिति प्रतिष्ठिते चास्मिंस्तत उत्तरकालं सिद्धे सति कारणत्वे संभवतः ।
कार्यसत्त्वासत्त्वयोस्तेन विशेषणप्रकारेण करोत्येव न करोत्येवेति विकलादेशव-
शान्नियमोपपत्तेर्विशेषणमाश्रीयते । को दृष्टान्तः? नीलोत्पलम् । यथा हि नीलो-
त्पलं भवतीति तद्भवनमात्रं विधीयते । नीलमेवोत्पलमेवेति वा नियमविशेषा-
नाश्रयणात् । तथा करोतीति कारणमिति क्रियाभवनमात्रं विधीयते । करोत्येव
न वेत्यनाश्रित्य विशेषनियमं । यथा वा नीलं तिलकंबलादिविशेषानपेक्षमु-
त्पलमपि रक्तादिविशेषानपेक्षं परस्परविशिष्टमुभयमुच्यते । तथा करोतीति
कारणमिति करणमिति करणमात्रं देशकालादिकार्यप्रतिबन्धाप्रतिबन्धनिरपेक्ष-
मुच्यते । अथवा शबलोत्पलत्वे सत्यपि तस्य धर्मभेदानपेक्षं नीलोत्पलमित्युच्य-
ते । तथा कारणभावाभावभेदधर्मनिरपेक्षं क्रियामात्रं करोतीति कारणमित्युच्यते ।
तथा न्यग्रोधफलं । तेन प्रकारेण तथा तथा प्रागुक्तसदसत्त्वानियमात्तु कारणे कार्यस्य
कारणतायामेव करणाकरणे । तथा कार्यकरणाकरणानियमात्तु कारणस्य कार्यस्य
कार्यत्वानियमः । वटन्यग्रोधोदुम्बरादिफलानां फलत्वात् पुष्पकार्यत्वानुमान—
प्रसङ्गे फलमसत्कारणं दृष्टवदिति पूर्ववद्व्यभिचारः । आम्रपुष्पफले सत्कार्यकारणे
दृष्टे इत्यत्रापि कादाचित्कयोरेव कार्यकारणयोर्दर्शनात्कार्यकारणसदसत्करणाका-
रणनियममेव दर्शयति, इतश्च कार्यकारणसदसत्त्वानियमः । सर्वसर्वात्मकत्व-
सर्वकारणत्वात् । स्थावरजङ्गमाभ्यवहृतान्योऽन्यरसरुधिरादिरूपादिपरिणामाप-
त्तिवै(श्व)रूप्यदर्शनात्सर्वं सर्वात्मकं, तत एव सर्वं सर्वस्य कारणं कार्यं चेति कृत्वा
सेवादिक्रियाकलापो यथार्थप्राप्तेः कारणं तथा क्लेशप्राप्तेरपि अकृत्यात एव
कारणं । तदपि च फलमर्थक्लेशप्राप्त्याद्यनियतमुभयत्र व्यभिचारात् । इतर आह—
नन्वत एव क्लेशोऽपि कार्यसत्त्वादेव भवतीति नियतं कारणे कार्यमित्यापन्नं
वेदितव्यं । चेन्मन्यसे । एवं सतीप्सितेन तावद्भवितव्यम् । किं च तदीप्सितं फल-
मर्थप्राप्तिर्न क्लेशः । सेवकस्य किं कारणं सन्निहिततच्छक्त्यभीहितत्वात् । सन्नि-
हिता सा शक्तिरस्य सोऽयं सेवकः । संनिहितत्वाचेष्टितत्वादिति वृत्तिवृत्तिसलो-

रनन्यत्वात्सेवासेवकयोर्यथेष्टं विग्रहसम्बन्धौ । युक्तं हि ताभ्यामीप्सितार्थप्राप्ति-युक्ताभ्यां भवितुं नानीप्सितक्लेशभाग्भ्यां । को दृष्टान्तः ? सर्वशास्त्रज्ञान्यतर-व्याख्यानवत् । यथा सर्वशास्त्रज्ञः पुरुषो व्याकरणाद्यन्यतमच्छास्त्रमीप्सितमेव व्याचष्टे तथैतदिति । अत्र ब्रूमः । तत्र देशकालाकारनिमित्तावबद्धत्वान्नेष्टमेव फलमवाप्यते सेवकेनैव प्रसन्नानृपादपि स्वनगरभाण्डागारादिक्षेत्रप्रतिबन्धवत् । रवेः प्रभातादिकालप्रतिबन्धवत् । प्रसाददानाभिमुख्याकारावबन्धवत् । द्वितीय-कर्मण्यताप्रदर्शनादिनिमित्तावबन्धवत् । शास्त्राज्ञादृष्टान्तस्यापि तादृग्विधावबन्ध-सद्भावे सत्यव्याख्यातवादनियम एव फलस्येत्यत्र आह—ज्ञाव्याख्यानवत् । सर्वज्ञशास्त्रज्ञोऽप्येभिरेवावबन्धैरीप्सितं न व्याचष्ट इति लौकिको ब्रवीति । अथ देशादयः किमिति विकल्पद्वयान्तःपातेन निरोत्स्याम्येतदित्यभिप्रायः । ये देशादयोऽवबन्धकाभिमतास्ते यदेकार्थतयेष्टास्ततस्तेषामकारणत्वाद्सर्वत्वं कारण-भावाद्धि सर्वं सर्वात्मकं स्यात्तद्भावाद्सर्वत्वं देशादीनां प्राप्तमसर्वत्वाच्च तेषाम-तन्त्रत्वं तेषु कस्यचित्तदधीनवृत्तित्वभावात् । ततोऽसंत्रत्वाद्प्रतिबन्धकत्व-मपि । अथाचक्षीथास्ते देशादयः कारणमिति । ततः कारणं चेत्सर्वकारणत्वात्सर्वात्म-कत्वात्किमिति सर्वं न भवति ? भवत्येवेत्यर्थः । कस्मात्समुदितकारणत्वात्समुदितका-रणत्वं सर्वकारणत्वात् सर्वात्मकत्वाच्च । अत्र प्रयोगः-सर्वं सर्वत्र स्यात्समुदितकार-णत्वात्संयुक्ततन्तुपटवत् । यथा तन्तूनां परस्परसंयोगे सति नियमात्पटो भवति स्वकारणत्वसन्निधानात् । एवं सर्वकारणत्वसर्वात्मकत्वसद्भावे को देशादिप्रतिबन्धो नामान्य इति । किमिति शुचा सर्वं न भवेदिति । अथवा सर्वं न भवतीत्यादि स एव लौकिक आशङ्कते । अथ मतं भवतः साङ्ख्यस्य सर्वं न भवति शरीरक्लेशसु-खार्थानर्थप्राप्त्यादि, कुतः ? अनभिव्यक्तत्वात् । 'अञ्जू व्यक्तिम्रक्षणगतिषु' । म्रक्षि-तमभिव्यक्तं स्फुटीकृतमनभिव्यक्तमस्फुटं । अनभिव्यक्तत्वाद्देशादेः कारणस्य सर्वं न भवति । को दृष्टान्तः ? प्रधानसाम्यावस्थानवत् । यथा प्रधानं सत्त्वरजस्तमस्त्रि-गुणत्वसाम्यावस्थानेऽनभिव्यक्तत्वात्सर्वकारणमपि सत्सर्वभावान्न प्रकरोति घट-पटादीन् । अथ च प्रकरणात्प्रकृतिः, प्रधीयन्ते भावास्तत इति प्रधानमित्यादिभिर्ना-मभिरुच्यते । तस्य चानभिव्यक्तत्वं तत्साम्यावस्थानान्मन्येथास्तथाहि—देशादिका-रणं साम्यावस्थानादनभिव्यक्तं प्रधानवत्सर्वं कार्यं न कुरुते, लोकप्रसिद्धमप्यत्रोदा-हरणं मयूराण्डकरसगतग्रीवादिवत् । यथा मयूराण्डकरसावस्थायामेव मेचकवर्णग्री-वाद्यवयवानभिव्यक्तिस्तत्साम्यावस्थानात्, अतः सर्वं न भवति मयूराण्डकरसवदतः सर्वं न भवति मयूराण्डावस्थायामिव तद्ग्रीवादिवदिति । अत्रोच्यते—मैवं मंस्थाः । ननु

१ °पीवा° ।

चेत्यादि । नन्वित्यनुज्ञापने । त्वयाप्येतदादिष्टं सर्वं देशादिति । तस्माद्देशादेः सर्वत्वात्सर्वात्मकत्वं, सर्वात्मकत्वाच्च वैषम्यावस्थैव । इतिशब्दो हेत्वर्थे । यस्माल्लौकिकप्रकृतित्वमेव प्रकृतेष्टत्वा(?)भिमतायाः । कथं? यथा हि लौकिकी प्रकृतिर्देशादिविषमावस्थैव सती सर्वकारणात्मिका कार्यात्मिका विषमा समा च व्यक्ता चाव्यक्ता च । तथा सांख्यपरिकल्पितप्रकृतिरपि स्यात् । किं कारणं? । सर्वात्मकत्वाद्देशादिवत् । मयूराण्डकरसवद्वा वैषम्यावस्थैवेत्यर्थः । साम्यावस्थैव वा देशादेरपि सर्वात्मकत्वात्प्रकृतिवदिति । किं चान्यत् । एते अपि च कल्पने नोपपन्ने देशादीनामनभिव्यक्तिः प्रकृतेः साम्यावस्थानानामिति । कस्मात्? अप्रयोजनत्वात्, नहि देशादीनामनभिव्यक्तौ प्रयोजनमस्ति । पुरुषविमोक्षणहेतोर्व्यक्तरूपतया प्रवर्तमानानां । तथा पुरुषार्थसिद्धेरनिर्वृत्तौदनस्य पचेः क्रियायामौदासीन्यवत् । नापि निर्वर्त्तितार्थायाः प्रकृतेः पुनरात्मानमुपसंहृत्य साम्यावस्थाने किञ्चित्प्रयोजनमस्ति सिद्धौदनस्यौदनार्थापचनादिप्रवृत्तिवत् । अथवा प्रकृतेरेवानभिव्यक्तिसाम्यावस्थाने न युक्ते अप्रयोजनत्वात् । अप्रयोजनत्वं निर्वृत्तानिर्वृत्तार्थत्वात् । यदि निर्वृत्तार्था सिद्धौदनरन्धनवदयुक्तं साम्यावस्थानम्, अनिर्वृत्तार्था चेत्प्रधानमसिद्धौदनौदासीन्यवदयुक्तं साम्यावस्थानं । तथानभिव्यक्तिः । किं कारणं? प्रकाशनार्थं प्रवृत्तयो व्यक्तिवैषम्याभ्यां तदर्थसिद्धेस्ताभ्यामृते वा सिद्धेः । अनभिव्यक्तिसाम्यावस्थानयोरपि प्रवृत्तिविशेषत्वात् । द्विधाप्यप्रयोजनत्वादयुक्तमिति । अथवा प्रयोजनानभिव्यक्तिर्निर्वृत्तार्थत्वात् देशादिरूपेण प्रकाशिकतात्मवृत्तिः । किमर्थं नाभिव्यज्यते? । किमर्थं वा सर्वं पुरुषार्थमकृत्वा साम्येनावतिष्ठते? । साङ्ख्यैश्च द्विविधपुरुषार्थसिद्ध्यै प्रकृतिप्रवृत्तिरिष्टानाकस्मिकी यदृच्छावादिमतवत् । न चेश्वरस्वभावादिकारणवादिमतवद्वा कारणान्तरं । यथासंख्यं चात्र दृष्टान्तद्वयं दर्शयति—**निर्वृत्तानिर्वृत्तार्थक्रियौदासीन्यवदिति** पचनापचनवदोदनस्येत्यर्थः । स्यान्मतं—तस्याः प्रकृतेरव्यक्तिसाम्यावस्थाने कालनियतियदृच्छास्वभावेश्वराद्यन्यतमकारणवशात् इत्येतच्चायुक्तं । प्रकृतिः कारणत्यागेनाभ्युपेतविरोधदोषसम्बन्धिनी । यस्मात् कारणान्तरस्य वा तथा प्रणेतुरापत्तिः । कारणादन्यत्कारणं कारणान्तरं, प्रकृतेरन्यत्कारणं यत्प्रकृतितया प्रणयन्ति तदस्ति स्वभावनियतिकालयदृच्छेश्वरादीनामन्यतमदित्यापन्नम्, अनिष्टं चैतत् । कारणान्तरनिरपेक्षस्य कारणस्य स्वकार्याकरणं च युक्तिविरुद्धमित्यत आह । **आत्मान्तरप्रकाशनमयं हीत्यादि**, यावत्प्रधानस्य धर्म इति । आत्मनोऽन्य आत्मात्मान्तरं तस्य भाव आत्मान्तरत्वं परस्परविभिन्नमहदहंकाराद्यवस्थान्तरत्वं तस्य प्रकाशनं । हिशब्दो यस्मादर्थे । यस्मादनभिव्यक्तेः साम्यावस्थानस्य च प्रतिपक्षोऽवस्थान्तरप्रकारत्वेनात्मप्रकाशनमयं प्रकृतेर्धर्मः । स्यान्मतम्—उपायानभिव्यक्त-

स्वात्कारणान्तरं साचिव्यगुणोपेतमपेक्षत इति । एतच्चायुक्तं । ज्ञानार्थत्वात्। उक्तं च "धर्मज्ञानवैराग्यैश्वर्याणि बुद्धिधर्मः । अधर्माज्ञानवैराग्यानैश्वर्याणि च"। तेषामष्टानां स मुक्तिर्बध्नात्येकेन मोचयतीति । तस्य प्रधानस्य ज्ञानार्थस्य परिणत्यवस्थात्मकस्यायुक्ता सचिवापेक्षा । स्यान्मतं—परतन्त्रत्वात्सहायान्तरमपेक्षते, तच्च न, स्वतन्त्रत्वात् । स्यान्मतं क्वचित्प्रधानं कारणं क्वचिदन्यदव्याप्तित्वाल्लौकिककालादिकारणवदित्येतच्चायुक्तम् । अप्रतिहतसर्वगतत्वात्तस्य । अथवात्मान्तरप्रकाशनमिति । आत्मा पुरुषः । आत्मनोऽन्य आत्मात्मान्तरं तस्य भावः आत्मान्तरत्वं पुरुषाद्भिन्नं त्रिगुणस्वभावं स्वमात्मानं प्रधानपुरुषाय प्रकाशयति । पुरुषाद्वान्यः पुरुष आत्मान्तरं तस्य भाव आत्मान्तरत्वं पुरुषान्तरत्वं तस्मै पुरुषाय प्रकाशयात्मस्वरूपं पुरुषान्तराणां प्रकाशयति । पुरुषान्तरत्वं वा चैतन्यस्वरूपमध्यस्थशुद्धकेवलत्वैः परस्परभिन्नैः पुरुषान्तरस्थैः पुरुषान्तरेषु प्रकाशितेष्वप्यन्येषां पुरुषाणां यत्पुरुषान्तरत्वं तैरेव चैतन्यादिभिः युक्तं प्रकाशयति । प्रकृतेर्वा स्वयमचेतनाया अचैतन्यस्वरूपस्य प्रकाशनमयं हि धर्मस्तस्य ज्ञानार्थस्य स्वतन्त्रस्याप्रतिहतसर्वगतत्वस्य प्रधानस्य ।

एवं तस्य स्वभावधर्मं सामर्थ्येदानीमनभिव्यक्तिसाम्यावस्थानप्रतिपक्षभूतं नित्यप्रवृत्तत्वं प्रधानस्यानुमिमीते । अतस्तेन नित्यप्रवृत्तेनैव भवितव्यमिति प्रतिज्ञा । अत इत्यनन्तरोक्तधर्मत्वात् प्रधानस्य तद्धर्मत्वमिदानीं हेतुत्वेन व्यापारयितुमाह—सामान्यतः तत्स्वभावत्वादिति । स स्वभावो धर्मो यस्य तत्तत्स्वभावं प्रधानं पूर्वोक्तहेतुभिर्विशेषितमतस्तन्नित्यप्रवृत्तं भवितुमर्हति । इह यद्यत्स्वभावं तत्तेनैव स्वभावेन नित्यप्रवृत्तं दृष्टं, यथाग्निर्दहनप्रकाशनप्रवृत्तः, यत्पुनर्नित्यप्रवृत्तं न भवति न तत्तत्स्वभावं । यथा न किञ्चित्तादृगिति । दहनादितत्स्वभावस्याग्नेस्तथाप्रवृत्त्यदर्शनात्साध्यधर्मवैकल्यं दृष्टान्तदोष इति । तन्निदर्शयन्नाह—ननु भस्मच्छन्नोऽग्निरपि न दहति, न प्रकाशयतीति दहनतपनयोरभेदात् । इति । अत्रोच्यते । *अथ कथं जीवतीति जीवनमग्नेश्चेतनत्वात् । चैतन्यमाहारलाभालाभयोः पुष्टिग्लान्यादिदर्शनान्मनुष्यवत् । सचेतनत्वं दहने जीवति स्थिते जीवितपर्यायत्वात् । स्थितेरिन्धनदहनाविनाभावादचेतनत्वमभ्युपगम्यापि स्थितिप्रकाशनत्वमदहनात्मकस्याग्नेः प्रत्यक्षानुमानविषयस्य सततस्तथा प्रत्यक्षानुमानाभ्यामग्रहणेऽस्तित्वे प्रमाणान्तरासिद्धेः । कथं ज्ञायतेऽग्निरित्यदहनप्रकाशमानोऽप्रकाशयन् वा द्रव्यान्तरं तावत्कोशकादि स्वाश्रयमात्रं तत्परिणामस्य तावत् । स्वपरिणाममात्रमपि स्वाश्रयद्रव्यं कोशकाद्यप्रकाशयन् कथमग्निरित्युच्यते ? । कोशक इत्युच्यते। अत्र पुलिकादृष्टान्तो गृहदीपकः । गृहे प्रज्वालितः प्रदीपको गृहप्रदीपकः । यथा गृहप्रदीपकः

पुलिकामात्रमपि यदि न प्रकाशयति । प्रकाशात्मकः सन्न प्रदीप इति ज्ञायते-ऽग्निरिति । वैधर्म्यदृष्टान्तो वा गृहप्रदीपो गृहं प्रकाशयन्नस्ति । यदि न तथाग्निः स्वमाश्रयं प्रकाशयति प्रकाशात्मकः संस्ततो नास्तीति गम्यते । किं वान्यत् । भस्मच्छन्नाग्निसाधर्म्याभावोऽपि च प्रधानस्य च्छादनाभावादित्यत आह–छादनाभावोऽपि च प्रधान इति । अग्निर्भस्मवत्प्रकृतेरावरणाभावाद्भस्मच्छन्नाग्नितुल्यं न भवति प्रधानमतो विशेष्यक्रमः । निरावरणाग्निदहनप्रकाशनवत् । तत्स्वभावत्वान्नित्यप्रवृत्तेनैव भवितव्यमिति तदवस्था नित्यप्रवृत्तता ततश्चानभिव्यक्तिसाम्यावस्थानानुपपत्तिः । स्यान्मतं–यद्यपि प्रधानं महदादिभावेनात्मान्तरत्वप्रकाशनार्थं पुरुषस्य प्रवर्तते तथापि केषाञ्चित्पुरुषाणां कृते प्रयोजनेऽन्येषामकृते कालक्रमेण व्यक्तत्यव्यक्तिसाम्यवैषम्यावस्थाः प्रतिपद्यते । सा चास्य प्रवृत्तिः स्वभावान्नियतेः कालाद्यदृच्छाद्यन्यतमादेतदपि नोपपद्यते, कालादिकारणान्तरनिरपेक्षस्येत्यादि । प्रधानं हि कारणं नियतिकालस्वभावेश्वरयदृच्छाद्यन्यतमानपेक्षं कारणं जगतोऽभ्युपगतं भवता । न तु यथा लोकनये क्वचित्कालोऽपि, नियतिरपीत्यादि । स्वतन्त्रत्वाच्च तस्य प्रकृतिपुरुषयोः स्वरूपभेदपरिज्ञापनस्य स्वार्थस्यानुरूपश्रोत्राद्येकादशेन्द्रियग्रामस्य शब्दबुद्ध्यादिविकल्पग्रामस्य वचनादानविहरणानन्दोत्सर्गकर्मशब्दाद्यर्थग्रामस्य च निर्वर्तने स्वतन्त्रत्वान्न कारणान्तरापेक्षास्ति, सर्वपुरुषार्थप्रवृत्तत्वाच्च कृतार्थस्याकृतार्थस्य च यथासंख्यं साम्यावस्थाने निर्वृत्तेश्च प्रयोजनाभाव इति । अत आह–**निरवशेषपुरुषविषये स्वान्यत्वज्ञापने कृते कृतकृत्यत्वात्किं साम्यावस्थानेन? अकृतेऽप्यकृतकृत्यत्वात्किं प्रतिनिर्वृत्त्या प्रयोजनमसिद्धौदनसूपकारनिर्वृत्तिवदिति** तदवस्थमप्रयोजनत्वम् । अत्र चोद्यम्–ननु प्रागुक्तमनभिव्यक्तिसाम्यावस्थाने चायुक्ते अप्रयोजनत्वान्निर्वृत्तानिर्वृत्तार्थक्रियौदासीन्यवदित्यतः पुनरुक्तमिति । अत्र क्रमः । न कारणान्तरापेक्षा प्रतिषेधपरत्वादस्य प्रवृत्तिनिवृत्त्योः प्रधानस्याप्रयोजनत्वमात्रप्रतिपादनपरत्वात्तस्येत्यदोषः । अव्यक्तिसाम्यावस्थानानुपपत्तेश्चेति । अप्रयोजनत्वादिभिरनभिव्यक्तिसाम्यावस्थाने अनुपपन्ने ततश्चाव्यक्तिसाम्यावस्थानानुपपत्तिः । 'किमिति' किं कारणं जगदेवंस्वभावमिति न गृह्यत इत्यभिसम्बन्धः । **'सततसमवस्थितसमनुप्रवृत्तीति'** । सततं सर्वकालं समवस्थितानित्यानुपरतासमनुप्रवृत्तिः कारणकार्यप्रवृत्त्यात्मिका । प्रकर्षेण वृत्तिर्यस्य तदिदं जगत्सततसमवस्थितसमनुप्रवृत्ति ह्यकारणनानाभेदादिव्यक्तिस्वभावमिति । प्रत्यक्षाणि च तानि कारणानि च प्रत्यक्षकारणानि मृत्पिण्डदण्डचक्रो-

---

१ ° स्वाम्यत्व ° 

दकसूत्रकुलालादीनि घटादीनां कार्याणां तानि नानाजातीयानि तन्तुतुरीवेमकुविंदादीनि पटादीनामित्येवंप्रकाराणि । तेषां भेदाः प्रत्यक्षकारणनानाभेदास्तैस्तेषां चाभिव्यक्तिर्घटपटादिकार्यरूपेण सैव स्वभावो यस्य तदिदं प्रत्यक्षकारणंनानाभेदाभिव्यक्तिस्वभावं । किं तत्? जगत् । एवेत्यवधारणे । किमवधारयति? । प्रत्यक्षदृष्टशुक्रशोणिताहारादिकारणान्येवेत्यवधार्यन्ते । किमतो निरस्तमव्यक्ताद्यदृष्टकारणान्तरं । तस्माद् दृष्टकारणनानाभेदाभिव्यक्तिस्वभावमेवेदं जगत्किमिति नाभ्युपगम्यते? । किमित्यदृष्टं कारणान्तरं परिकल्प्यते? इति । एवं तावत्कारणे कार्यसदसत्त्वानियम उक्तः, कार्यानियमोऽपि च । कार्यमेव सङ्कृतकालादिविशेषकारणमेवेत्यनियमः । प्रधानादि शास्त्रकारपरिकल्पितकारणपूर्वकमेवेति वा । किं कारणं? तथानुगम्यमानदृष्टान्ताभावात् । किं तर्ह्येतावान्नियमः? । कारणाध्यासाविमुक्त्यनिर्मूलत्वं कार्यस्येति तथानुगम्यदृष्टार्थत्वात् । मृत्पिण्डशिवकेत्यादि पांशुमृत्पिण्डादेरित्यन्त्यस्य[1] दण्डकस्योपरि अनियतादिसदसङ्कृतकारणाध्यासाविमुक्त्यनिर्मूलत्वमिति वक्ष्यमाणसम्बन्धत्वात् कार्यमेव । सदेवासदेव वा कारणं कालादिसादिकारणमित्यस्य वा नियमप्रदर्शनार्थमुदाहरणमाह–**मृत्पिण्डशिवकेत्यादि यावत् पांशुमृत्पिण्डादेरिति** । एषां मृत्पिण्डाद्यवस्थाविशेषाणां वातायनरेणुपर्यन्तानामेव लोके दृष्टत्वात् । पुनरुपचयात्प्राप्तमानन्त्यं येषां स्कन्धानां ते पुनरुपचयप्राप्तानन्त्यस्कन्धाः । वातायनरेणुभ्यः प्रभृति पुनरुपचयक्रमेण पांशुमृत्पिण्डशिवकस्थासकोसकुशूलशर्करिकापांशुवातायनरेणव इति । चक्रक्रमेण कारणकार्यानियमो दृष्टः । उत्क्रमेणापि च सङ्घातभेदाभ्यां कार्यकारणंसदसत्त्वानियमो दृष्टः । पिण्डमुपमृद्य शिवककरणात् । शिवकं चोपमृद्य पिण्डकरणात् । स्थासकादीनामन्यतममवस्थाविशेषमुपमृद्यापि पिण्डादिकरणात् । क्रियाक्रियाफलक्रमेण च कदाचित्कारणकार्यानियमदर्शनादिति अनियतादि । इत्थमनियत आदिरस्येत्यनियतादि जगदिति सम्बध्यते । तदेवानियतसदसङ्कृतकारणकार्यमसङ्कृतं कारणं तस्याध्यासस्तेन कारणेनाध्यासोऽधिष्ठानं,तेन कारणाध्यासेनाविमुक्तिरत्यागः । कारणसामान्याविनाभावः । न त्वत्यन्तनिर्मूलोत्पत्तिविनाशलक्षणकार्यत्वं खपुष्पवत् । तथैव लोके दृष्टत्वात् । तयाविमुक्तानिर्मूलत्वं कार्यभूतस्य जगतः । अतः प्रोक्तहेतोः दृष्टकार्यकारणसदसत्त्वानियमात्परपरिकल्पितप्रधानाद्यदृष्टैककारणानुपपत्तेः कालादिविशेषकारणैक्यानुमानभावाच्च कारणसामान्यमात्रानुमानाचावगम्यतां न किञ्चिदन्यत्र फलं तच्छास्त्रेण क्रियते । निरर्थकानि शास्त्राणीत्यर्थः । किं तद्यल्लोकव्यवहारफलादतिरिच्य

---

[1] °रित्यन्तरस्य° ।

वर्तते[1] यदपेक्ष्य शास्त्राणि सार्थकानि स्युस्तस्मादवगम्यतामिदं जगल्लोकप्रसिद्धमेवा-नियतानुपरताद्यन्तरदृष्टकारणकार्यप्रबन्धमिति। ननु यथान्यैः कल्पितमुपरतव्या-पारं सत् प्रधानमतीन्द्रियं पुनरिन्द्रियग्राह्यत्वादिभावेन जगत् सृजति, पुनरात्मानं संहृत्योपकृ[2]तव्यापारं तिष्ठति। न चात्यन्तासत्कार्यं क्षणोत्पन्नविनष्टमसम्बद्धमूलं वैत-दिति। इतिशब्दो हेत्वर्थः। को हेतुः? शास्त्रनैरर्थक्यं। कस्मिन्साध्ये? शास्त्रारम्भवृथा-भावे। अत आह—**वृथैवमादौ शास्त्रारम्भः**। क्व तर्हि शास्त्रमर्थवत्स्यादिति? चेत्। अतीन्द्रिये पुरुषार्थसाध्यसाधनसम्बन्धे। कोऽसौ? इत्यत आह—**अत्र तु शास्त्रम-र्थवद् स्यादिदंकाम इदं कुर्यादिति**। इदंशब्देन सर्वनाम्ना सामान्यवादिना सर्वाः क्रियाः फलेच्छाप्रेरितास्तत्साधनीः सूचयति। अग्निहोत्रं जुहुयात्स्वर्गकामः। पुत्रकामो यजेत, पशुकामो यजेतान्नाद्यकामो यजेतेत्याद्याः क्रियाः क्रियाफलसम्ब-न्धस्यातीन्द्रियत्वाऽकृतं[3]प्राप्ये शास्त्रमर्थवत्। प्रत्यक्षादिप्रमाणैरनधिगम्य इत्यर्थः।

अर्थ्यो हीत्यादि। अर्थादनपेतोऽर्थ्यः। हिशब्दो यस्मादर्थे। यस्मात् क्रियाया एवोपदेशोऽर्थः। स साधनायाः फलादिसम्बन्धे (दे) व्याश्वि-त्रादिवत्। आदिग्रहणाच्चित्रपुस्तकाष्ठकर्मादिवत्। यथावयवस्थानविन्यासवर्ण-संयोगप्रविभागविषयविनियोगाद्युपदेश एवोपयोगात्सार्थको न कुड्यवर्णचित्र-कारादिस्वरूपोपदेशस्तत्र तदनुपयोगात्। तथा नित्यक्षणिकवादिवदतत्त्ववर्णनं घटपटादेः त्रिगुणकारणपूर्वकत्वादिवर्णनं जगतः सततप्रवृत्तिक्षणिकानुपाख्यात्वा-त्वादिवर्णनं वा। स्यान्मतं—प्रधानक्षणभङ्गादिवादारम्भोऽप्रत्यक्षविषयत्वात्सार्थकः क्रियाक्रियाफलसम्बन्धोपदेशवदिति। एतदपि नोपपद्यते, यस्मान्न तु लौकिक एव गृह्यमाणेऽर्थे इदमेवं चेति सार्थको विचार इत्यभिसम्बन्धः। प्रसिद्धा-र्थविषयस्य विचारस्यानित्वादोषनिष्टत्वात् (?) नेति प्रतिषेधे। तुर्विशेषणे। लोके भवो लौकिकः। देशकालपुरुषक्रियाविशेषाद्यपेक्षरूपादिमये कार्यकार-णमृत्पिण्डादिघटाद्याकाशादिके प्रत्यक्षत एव गृह्यमाणे इदं सर्वं सत्त्वरजस्त-मःसंज्ञत्रिगुणात्मकमेव, न चैतदेवं क्षणभङ्गजन्मात्मकं। न चैवमित्यादिवि-चारः किंसम्बन्धः,? किंफलः,? को वात्र पुरुषार्थसाधनपरिज्ञानोपयोगः? इति विमृश्यतां भवद्भिरेव। स्यान्मतं—लोकदर्शनगप्रमाणमव्युत्पन्नलोकप्रत्यक्ष-व्यभिचारान्मृगतृष्णिकादिष्वेव। इति। अत्रोच्यते। तथा सति प्रत्यक्षस्याप्र-माणीकरणं प्रमाणज्येष्ठस्य। मात्र मंस्था मृगतृष्णिकादिप्रत्यक्षज्ञानव्यभिचारात्सर्वं प्रत्यक्षं व्यभिचरतीति। किं तर्हि? अनुपहतेन्द्रियमनःप्रत्यक्षं यत्तन्न व्यभिचरतीति गृह्यतां। दृष्टा च प्रत्यक्षेण लोके घटपटादिर्यथासौ येन प्रकारेण येन स्वरूपेण

---

१ वर्त्तेत। २ °पहृत°। ३ °प्रक्रान्ध°

व्यवस्थितस्तथा गृह्यत एव स्वस्थेन्द्रियमानसैस्तत्र तादृशेऽर्थे पुनर्वचनमिदमेवं नैवं वेति प्रत्यक्षप्रसिद्धेर्बाधकमापद्यते। यदि तद्वचनं प्रमाणं स्यान्न पुनस्तत्प्रमाणतया प्रसिद्ध्या स्वयमेव बाध्यमानत्वात् प्रसिद्धार्थं वचनं न, नियमादनुवादाद्वा अन्यत्र प्रमाणं स्यादित्यतो ज्ञापकमाह—अनुवादादिभावाभावे यः सिद्धे सत्यारम्भो नियमार्थः स इति परिभाषाया लोके दृष्टत्वात् । लोकव्यवहारानुवादिव्याकरणादिशास्त्रमपि लोकत एवेति कृत्वा कीदृक् पुनस्तद्वचनमित्यत आह—न यथेदं लोकेन गृह्यत इति । इतिशब्दः प्रदर्शने । इदं तद्वचनं प्रसिद्धेर्बाधकाभिमतमिति प्रदर्श्यते । कथं? नेति प्रतिषेधः। येन प्रकारेण यथा यथा मृत्पिण्डदण्डचक्रसूत्रोदककुलालपरिस्पन्दनिर्वृत्तो घटः पृथुबुध्नादिस्वरूप उदकाद्याहरणसमर्थ इति लोकेन चक्षुरादिभिर्गृह्यते नायमेवंस्वभावः, किं तर्हि? यथाहं ब्रुवे सर्वं सर्वात्मकत्वात् पटकटरथादिरूपोऽपि गुणकर्मसामान्यविशेषसमवायाश्रयः । परमाण्वाद्यसदत्यन्तपरोक्षपार्थिवद्रव्यारब्धस्तद्व्यतिरिक्तोऽवयवी रथाङ्गादिवद्बुद्ध्याविभज्यमानो रथपरमाणुः पुना रूपादिषु न बुद्धिमात्रेण तिष्ठति निरूपाख्यत्वादिति वा तथा तथा भवतीति शास्त्रविद्वचनं मा भूदनर्थकमिति प्रसिद्धेर्बाधकमापद्यत इति न्याय्यमुच्यते । यथोक्तं—

> 'प्रमाणानि प्रवर्तन्ते विषये सर्ववादिनाम् ।
> संज्ञाभिप्रायभेदात्तु विवदन्ते तपस्विनः ॥' इति ।

तस्मादप्रमाणं प्रत्यक्षविरुद्धत्वाच्छास्त्रकारवचनं, शास्त्रकारवचनाप्रामाण्येन[1] प्रत्यक्षाप्रामाण्यम्, एवं च सति को दोषस्तत्र प्रत्यक्षप्रमाणीकरणे सर्वविषयापत्तिस्तर्कतः । सर्वभावानां प्रत्यक्षप्रमाणसिद्धानां विपर्यय आपादयितुं शक्यते तर्कतः । तद्यथा—अलोमा हरिणश्चतुष्पात्त्वे सत्युत्प्लुत्य गमनात्, मण्डूकवत् । मण्डूकोऽपि लोमशः, तस्मादेव हेतोर्हरिणवत्। यूका पक्षिणी पद्यात्वाद्भ्रमरवत् । भ्रमरोऽपक्षः पद्यात्वाद्यूकावत्, तथा पृथिव्यप्सुधा पदार्थत्वादाकाशवत् । असाधारणधर्मसम्बन्धेनापि रूपरसगन्धस्पर्शधर्मसम्बन्धिनी न भवति तत एव तद्वत् । तथा बौद्धमतेऽपि पृथिवी न भूर्महाभूतत्वात्, रूपत्वाच्च जलवत्, न करकटधारणधर्मा, तत एव तद्वत् । एवं शेषपदार्थभेदेष्वपीति । जलानलानिलेषु व्योमनीन्द्रियादिष्वात्मादिषु यथाप्रक्रियं यथासम्भवं च स्वरूपनिराकरणम् । असाधारणधर्मनिराकरणे च पदार्थत्वमहाभूतत्वरूपत्वादिहेतुकानि साधनानि योज्यानि। महदहंकारतन्मात्रेन्द्रियशब्दादिष्वात्मनि च द्रव्यगुणकर्मसामान्यविशेषसमवायेषु सप्रभेदेषु नामरूपयोः संज्ञाविज्ञानवेदनासंस्कारेषु क्षित्युदक-

---

१ न प्रत्यक्षाप्रामाण्यम् इति प्रतिभाति ।

ज्वलनपवनेषु चक्षुरादिषु रूपादिषु च[1] दृष्टान्तभेदादिति । भूमेराकाशदृष्टान्तवदाकाशस्य भूम्यादिदृष्टान्तेन तथा जलादेरपि परस्परतस्ते ते धर्मा निराकार्याः । इतरमितरस्य दृष्टान्तं कृत्वेति ।

तार्किक आह—**शास्त्रनिरूपणविपरीतमप्रमाणमित्यादि**। शास्त्रेण निरूपणं शास्त्रे निरूपणं वा शास्त्रनिरूपणं, सन्दिग्धविपर्यस्ताव्युत्पन्नबुद्ध्यनुग्रहार्थं किं शास्त्रेण निरूपयन्ति सन्तो वस्त्वनुग्राह्येभ्यः शिष्येभ्यः? । प्रकृतिपुरुषादेव क्षणभङ्गो विज्ञानमात्रमेव द्रव्यगुणादिवेति । शास्त्रस्यापवादत्वात् । शास्त्रेणापोदिताद्विपरीते वस्तुन्यनुमानप्रमाणं शास्त्रस्य सन्देहाद्यपवादत्वान्न हरिणादिस्वभावाद्यप्रमाणं । तत्र शास्त्रेण नोह एव व्यापार इति । तन्निरपवादं हरिणस्वरूपादि । तस्य निरपवादत्वात्तु[2] लोकेन यथा गृहीतं तथैव त्र्यादिग्रहणान्मण्डूकस्वरूपादि तत्प्रमाणमेव निरपवादत्वादग्नेरिवौष्ण्यमिति । अत्रोच्यते—न सर्वस्येवापोदितत्वाद्यथा हि शास्त्रं घटादिवस्तु परिकल्प्यापवादप्रवृत्तं तथा हरिणादिस्वरूपं प्रत्यक्षतो लोकप्रसिद्धमप्यपवदति निरंकुशत्वात् । तत्कथमिति चेत्? देशकालविशेषैकान्तैकान्त इत्यादि । अथवा शास्त्रनिरूपणविपरीतमप्रमाणं निरपवादत्वादिति वक्ष्यते । शास्त्रनिरूपणं पृथिवीयत्वापवादि प्रकृतिपुरुषादि वा तस्य वा विपरीतं तर्कतः प्रतिपाद्यमानमप्रमाणं, प्रत्यक्षतर्कयोरविषयार्थत्वाच्छास्त्रस्य । केनापोद्यते?। शास्त्रं न हरिणस्वरूपादिविपरीतमप्रमाणमिति वर्तते । कस्य? प्रत्यक्षसिद्धेः । कस्मात्? सापवादत्वात् । तद्धि हरिणालोमत्वादि प्रत्यक्षप्रसिद्धेन लोमशत्वादिना निराक्रियमाणत्वादप्रमाणमेवेति। लौकिक आह—न सर्वस्यैवापोदितत्वादिति । शास्त्रेष्वपि हि हरिणस्वरूपादि प्रत्यक्षसिद्धमपोद्यत एव। कथं निरपवादत्वं शास्त्राणां? वरं हरिणस्वरूपादिविपरीतप्रतिपादनं तर्कतः । तन्मात्रापवादात् । तार्किकैस्तु शास्त्रेण सर्वमपोद्यते, प्रत्यक्षतो लोकप्रसिद्धं कारणं कार्यं च। तत्कथम्? इति चेत्, देशकालकृतविशेषैकान्तिनः। देशकृतः कालकृतश्च विशेषः देशकालकृतविशेषः। स एवैकान्तः, स यस्यास्त्यसौ देशकालकृतविशेषैकान्ती तस्य वादिनः। प्रतिदेशं प्रतिसमयं च सर्वं विशिष्टमेव न समानं किञ्चिदतो यावदणुशो रूपादिशो विज्ञानमात्रशो निरुपाख्यत्वशश्च भेदा न। कुतो हरिणः कुतस्तस्य लोमाद्यवतिष्ठते। अतः सर्वमपोदितं । किं चानापोदितं। किं वात्र प्रत्यक्षमनुमानं चेति । तथा सर्वं सर्वात्मकैकान्ते मण्डूकोऽपि लोमश एव । स्थावरस्य जङ्गमतां गतस्य, स्थावरस्य स्थावरतां, जङ्गमस्य स्थावरतां, जङ्गमस्य जङ्गमतां गतस्येति वचनादिति। ननु तेन वादिना सर्वं समार्थितं नापोदितमिति चेत्, सर्वस्य सर्वात्मकत्वे

---

१ न। २ °न्नतु°

सर्वैक्यात् । किं तत्सर्वमित्यपोदितमेवेति । भिन्नार्थसमूहवाचित्वात्सर्वशब्दस्य, अर्थानर्थविषयसामान्यविशेषनानात्वैकान्तेऽर्थविषयं सामान्यमर्थविषयश्च विशेषः, तद्यथा—द्रव्यस्य पृथिव्यादेरर्थविषयं सामान्यं रूपरसगन्धस्पर्शवती पृथिवी । यत्रैतच्चातुर्गुण्यं सा पृथिवी । रूपस्पर्शरसद्रवस्नेहवत्य आपः । एवं यत्र रूपस्पर्शौ तत्तेजः । यत्र स्पर्श एव स वायुरिति सामान्यं । विशेषः पुनरितरेतरधर्मव्यावृत्तिभिरितरत्र चतुःपञ्चद्व्येकगुणत्वं यथासंख्यं, तेषामेवानर्थसामान्यं पृथिवीत्वं । तत्सम्बन्धलभ्यत्वात् पृथिवी बुद्ध्यभिधानयोः । एवमप्तेजोवायुत्वानि सामान्यानि । विशेषावेतरेतरेभ्यस्त एव । स्वसामान्यभेदा विशेषाः । एतानि द्रव्याणि गुणाः कर्म सामान्यानि विशेषाः तत्समवायलक्षणश्च सम्बन्धः । इत्येते पदार्थाः । नानात्वस्वतत्त्वप्रयोजनलक्षणमित्यभिधानभेदादिति ये वदन्ति तेषां तन्नानात्वैकान्ते अतदात्मकत्वात्कुतोऽण्डमण्डूकहरिणकारणकार्यधरणिसंयोगगुणोत्प्लवनकर्मभवनव्यावृत्तिः ? । तथा समवाय अण्डग्रहणेन हरिणमण्डूकसमवायिकारणद्रव्यग्रहणं । परमतेन हरिणमण्डूकग्रहणेन सम्बद्धाणुद्व्यणुकाद्यारंभनिर्वृत्तावयवि द्रव्यं कार्यं गृह्यते । तस्य हरिणमण्डूकादिद्रव्यस्य धरण्यां संयोगो गुणः । उत्प्लवनं कर्म । भवनं भावः सत्ता । व्यावृत्तिरप्यभवनविलक्षणो विशेषः । तेषां तथा समवायः सम्बन्ध इति षडप्येते पदार्थाः वक्ष्यमाणखपुष्पदृष्टान्तान्न सन्ति । का तर्हि ? भावना, नास्ति परपरिकल्पितं द्रव्यं गुणकर्मसामान्यविशेषानात्मकत्वात् खपुष्पवत् । असामान्यविशेषात्मत्वात् खपुष्पवत् । न पृथिवी पृथिवीतिव्यपदेश्या पृथिवीत्वादत्यंतमन्यत्वात् जलवत्, पृथिवीत्वं पृथिवीत्वमिति न व्यपदेश्यं पृथिव्या अत्यन्तमन्यत्वाज्जलतावत् । न सन्ति गुणकर्मसामान्यविशेषसमवायाः, अद्रव्यात्मकत्वात्, खपुष्पवत् । एवमेकैकमपीतरानात्मकत्वात् खपुष्पवन्नास्ति । इतरस्वरूपवद्वा न स्वात्मस्वरूपमिति शेषपदार्थदृष्टान्तभेदादायोज्यमिति । 'द्रव्यं द्रव्यवद भव्य' इति वचनाद्भवतीति भव्यं द्रव्यं, भवनं च भावः । भवनादन्यत्वाद्द्रव्यादयो न सन्त्येव वन्ध्यापुत्रवत् । भवनमपि द्रव्यादन्यत्वान्नास्त्येव, वन्ध्यापुत्रवत् । न भवति वा द्रव्यं भवनस्वरूपानापत्तेः वन्ध्यापुत्रवत् । एवं भवनमपि द्रव्यस्वरूपानापत्तेः, तद्वत् । एवं गुणादयोऽपि । एवं व्यावृत्तिः समवायश्चेति । अथवा क्रियागुणव्यपदेशाभावादसदेव कार्यं पञ्चज्ञो यत इति । तन्नोपपद्यते निर्मूलत्वात्, खपुष्पवत् । न सन्ति गुणकर्मसामान्यविशेषसमवायाः अद्रव्यत्वात् खपुष्पवत् । एवमगुणत्वाद्गुणादन्ये, असामान्यत्वात्सामान्यादन्येऽविशेषत्वाद्विशेषादन्ये, अकारणत्वात्कारणादन्यत् । अकार्यत्वात्कार्यादन्यन्नास्ति । एतेभ्यो

---

१ °ऽणु° । २ अणु °

हेतुभ्यः कुतोऽण्डंहरिणामण्डूककारणकार्यधरणिसंयोगगुणोत्प्लवनकर्मभवनव्यावृत्तितया समवायाः? न सन्तीत्यर्थः । तदुपसंहृत्योच्यते—सर्वथा तत्त्ववृत्तिव्यतीतत्वात् । तस्य भावस्तत्त्वं । तत्त्वस्य वृत्तिस्तदतत्त्वेन तत्स्वरूपान्यस्वरूपेण च वृत्तिः । यथा द्रव्यमेव वर्तते तथा तथा रूपरसादिगुणाः स्थितिगत्यादिक्रिया । भवनव्यावृत्तिसम्बन्ध्येकपुरुषपितृपुत्रत्वादिधर्मसम्बन्धित्ववदिति तां वृत्तिं सर्वथा व्यतीतत्वात् । गुणद्रव्यादिषट्पदार्थानां सविकल्पानामसत्त्वं खपुष्पवदित्यन्ते दृष्टान्त उपदिष्टः सर्वत्र द्रष्टव्यस्तथा च योजितः । अन्यथेति वैधर्म्येण बालकुमारवत् । यदस्ति तत्तदतीतस्वरूपतत्त्वव्यतीतं न भवति, यथा बाल एव कुमारः । कुमार एव च बालोऽन्यौ च तावयस्थाभेदात् । बालत्वमूलं कुमारत्वं कुमारत्वान्यं च बालत्वमिति । तदतत्त्वरूपा तत्त्ववृत्तिः । तां व्यतीत्य न स बालः कुमारो वेति । स च संस्तत्त्ववृत्तिव्यतीतो न भवतीति हरिणादिस्वरूपवितथोक्तौ प्रसिद्धिविरुद्धप्रतिज्ञत्वादेवातथात्वमिति चेत् । चेदित्याशङ्कायां । स्यादाशङ्का, हरिणस्वरूपं लोमशत्वं तस्य वितथोक्तिरलोमा हरिण इति । तस्यां वितथोक्तौ प्रसिद्धिविरुद्धा प्रतिज्ञा यस्य स प्रसिद्धिविरुद्धप्रतिज्ञस्तद्भावः प्रसिद्धिविरुद्धप्रतिज्ञत्वं, तस्मादेवाऽतथात्वमिति । अत्रोच्यते—नोक्तवत्तुल्यत्वात् । नेति प्रतिषेधे । नैतदप्युपपद्यते । किंवत्? उक्तवत् । उक्तेन तुल्यं उक्तवत् । यथोक्तं—शास्त्रनिरूपणविपरीतमप्रमाणं निरपवादत्वादिति । तेनैतदपि तुल्यं । हरिणादिस्वरूपवितथोक्तौ प्रसिद्धिविरुद्धप्रतिज्ञत्वादेवातथात्वमिति । अत्रापि उत्तरस्यापि तुल्यत्वात् । कथमिति चेत्? न, सर्वस्यैवापोदितत्वादित्यादि सर्वं तदेव यावत् खपुष्पवत्, अन्यथा बालकुमारवदिति। किं च—लोकस्य चाप्रमाणीकृतत्वात्तथा कुतः प्रसिद्धिविरोधः?। क्ष (?) वा तत् प्रसिद्धिमिति। किं चान्यत्। एवं च नाभ्युपगमविरोधात्। ननु भवतामेकान्तवादिनां लोकमप्रमाणीकृत्य लोकप्रसिद्धिविरुद्धप्रतिज्ञात्वदोषापादानमभ्युपगमविरोधाय कल्पते, तस्मादयुक्तमेवं वक्तुमिति । स्यान्मतं-प्रतिज्ञादौ षट् द्वारेण स्वरूपादिविपरीतप्रतिपादनाप्रामाण्यं न शक्यते मयाभ्युपेतविधानहेतुदोषद्वारेण शक्नोमीत्यत आह—लोमशालामैक्यसपक्षासपक्षवृत्तिवृत्त्योरतर्क इति चेत् । चतुष्पात्त्वे सत्युत्प्लुत्य हरिणो निलोमालोमशो मण्डूक इत्युभयोरुभयधर्मापत्तौ लोमशालोम्नोरैक्ये सत्ययं हेतुधर्मपरिकल्पनकृताद्भेदात् हरिणालोमत्वे साध्ये सपक्षे निर्लोमन्यवृत्तेरसपक्षे च लोमशे वृत्तेर्विरुद्धो हेतुः, चतुष्पात्त्वे सत्युत्प्लुत्य गमनादित्यापद्यते। सपक्षासपक्षवर्तित्वसाधारणानैकान्तिको वा लोमशालोमैकपक्षाभेदाद्धर्माभेदे च सपक्षासपक्षाभावसाधारणानैकान्तिको वा, तस्मादेषोऽतर्कः। अतर्कत्वाचास्य हरिणादिस्वरूपविपरीतप्रतिपादनप्रमाणं। चेदित्याशङ्कायाम्,

१ ऽणु०

एवं चेन्मन्यसे । तत्र दृष्टान्तस्य प्रत्यक्षप्रसिद्धिविषयत्वात् । दृष्टान्तो हि लोके प्रत्यक्षप्रमाणप्रसिद्धो घटपटादिरर्थः । तद्विषयं च साध्यसाधनसमन्वयव्यतिरेकविभावनं । सर्वानुमानस्य सर्वावयवानां च तद्बलेन साध्यसिद्धौ सामर्थ्यसिद्धेः । यथोक्तं—"दृष्टान्तबलाद्ध्यवयवसिद्धिस्तदाश्रयत्वात्सर्वावयवानां, तेन दृष्टान्तस्तत्त्वमन्विष्यते । प्रत्यक्षत्वाच्च तस्य तद्वस्तुप्रतिपत्तेरशेषं तत्सिद्धान्तदर्शनमवभोत्स्यते । प्रत्यक्षग्राहे च सिद्ध्यति परोक्षग्राहः सिद्ध्येत्तदसिद्धौ संभावनाभाव एवेति" । ततस्तस्य दृष्टान्तस्यासिद्धिर्लोकस्याप्रमाणीकृतत्वात् । प्रत्यक्षस्य च दृष्टान्तस्याभावे कुतो दार्ष्टान्तिकसाध्यसाधनसमन्वयव्यतिरेका इति प्रत्यक्षनिराकरणे तर्कासिद्धिरेव । कुतस्तर्कातर्कत्वविचार इति तदवस्थो हरिणादिस्वरूपविपरीतापत्तिदोषः । किं चान्यत् । इहैवेत्यादि यावत् तदसत्त्वापत्तेरिति । तथा हरिणस्वरूपनिराकरणे भवान् यं यं दोषमापादयति स स तवैव । अत्र च वीप्सार्थो द्रष्टव्यः । तव तवैव एकान्तवादिनः । एवकारोऽवधारणे । यथास्मिन् साधने मम दोषो नास्ति । तवैवेति । त्वदभ्युपगमानुरूप्येणोपपादितम् । तथा मे नैव । किं तर्हि ? सर्वत्रान्यत्रापि पक्षहेतुदृष्टान्तेषु दोषास्तवैव, न ममेत्यर्थः । अप्रमाणीकृतत्वाल्लोकस्य प्रत्यक्षस्य चेति वर्तते । कारणान्तरोपन्यासोऽप्येषोऽभिधीयते, सपक्षासपक्षवृत्त्यवृत्त्योरसत्त्वाप्रपत्तेः । यदिष्टं भवतामन्वयव्यतिरेकाभ्यामर्थानुमानं, तौ च सपक्षासपक्षयोर्वृत्त्यवृत्ती, तद्बलेन साध्यसिद्धिस्तयोरेव वा सत्त्वमापद्यते । ततस्तस्याः सपक्षासपक्षवृत्त्यवृत्त्योर्यथासंख्यमसत्त्वापत्तेः । तवैवाविशेषैकान्तवादिनः तदुभयानेकत्वैकान्तवादिनो वेति हेतूद्देशमात्रमेतत् । तदिदानीं प्रत्येकं विधीयते । तत्र तावदविशेषैकान्ते कुतोऽन्यपक्षः ? । असंपक्षो व्यावृत्तिर्वा अविशेषः । सामान्यमविशेष एवेत्येकान्तः । सर्वं सर्वात्मकमिति ।। तस्मिन्नविशेषान्ते तव ग्राहे कुतोऽन्यपक्षः ? । अन्यस्य पक्षोऽन्यपक्षः । प्रतिवादिनोऽन्यस्य भावात्तत्रापि चान्येनाविशेषात्सर्वसर्वात्मकैकत्वाविशेषात् । अथवान्यस्य वचनस्याभावात्त्वद्वचनात्मकत्वादेव सर्ववचनानां त्वदन्यवचनत्वं विशेषाभावादेव वा । अथवा किं न परवादिवचनयोरभावाद्युपगमनिष्ठुरवचनानि, अन्यश्चासौ पक्षश्चेत्यन्यपक्षोऽर्थोऽस्तु । स कुतस्त्वत्पक्षं ? सर्वैकात्मत्वादर्थाविशेषैकान्तात् । एवं नित्यः शब्दोऽकृतकत्वादाकाशवदिति वादिनः । अनित्यशब्दपक्षवक्तृवचनवाच्यानामभावः । तद्वत्तदनित्यधर्मसामान्येन समानस्य घटादेरभावान्नित्यैकान्तवादिनोऽसपक्षाभावः । तदभावाद्व्यावृत्त्यभावः । वाशब्दात्कुतः स्वपक्षः ? । सपक्षस्तद्वृत्तिर्वा सर्वसर्वात्मकैकत्वाभेदादेव । स्यान्मतम्—आविर्भावतिरोभावयोरभूत्वाभावाद्भूत्वा चाभावान्नित्यत्वकृतकत्वे स्त एवाविशेषवादिनोऽपीत्येतच्चायुक्तम् । कुतस्तत्त्व एव तथाभिव्यक्तेः । तत्त्वमेकत्वं तस्मिंस्तत्त्व एव

तथा तेन प्रकारेण तथाभिव्यक्तेः। किमुक्तं भवति? मृद एवाभिन्नाया अन्तर्लीनाविर्भावतिरोभावमात्रत्वादङ्गुलिवक्रप्रगुणावस्थयोरिवावस्थाविशेषोऽभिव्यक्तेः। किमन्या मृत्स्ना पिण्डशिवकघटाव्यवस्थासु? तस्मात्तत्त्व एव तथाभिव्यक्तेः कुतोऽन्यपक्षे सपक्षाव्यावृत्तिस्तत्पक्षः सपक्षः। तत्सत्त्वं चेति साधूच्यते। तथैवाविशेषैकान्तवादिनः। सपक्षासपक्षवृत्त्यवृत्त्या हरिणादिस्वरूपविपरीतापादानसाधनेष्विवासत्त्वापत्तिरिति। तथा विशेषैकान्ते कुतस्तत्पक्षः सपक्षः। तत्सत्त्वं चादेरातः। परमाणुशो रूपादिशो विज्ञानमात्रशोऽनुपाख्यत्वं शश्च भेदात्। कालतोऽत्यन्तपरमनिरुद्धक्षणादूर्ध्वमनवस्थानाच्च कुतस्तत्पक्षः?। अत्रापि तस्य पक्षे वक्तुर्वचनस्य वा स एव पक्ष इत्यर्थः। एवं वा अनित्यः शब्द इति धर्मधर्मिणोर्विशेषणविशेष्ययोश्चासंभवात् कुतः सपक्षोऽर्थान्तरसंबन्धसामान्याभावात्?। साध्याभावसामान्याभ्युपगमे सपक्षासपक्षविशेषप्रसङ्गात् कुतः सत्त्वं?। तत्र तदभावात् कृतकत्वादिसविकल्पधर्मान्तराभावात्परस्परविलक्षणनिर्व्यापारधर्ममात्रत्वात्सर्वधर्माणां निरुपाख्यत्वशून्यत्वपरमार्थत्वाच्च पूर्ववच्च प्रतिवादिपक्षव्यावृत्त्यभावो, वाशब्दात् पूर्ववच्चोपसंहृत्य तदर्थावबोधनो हेतुरुच्यते। तथास्थितेः। तेन प्रकारेण तथा, क्षणिकनिर्व्यापारशून्यत्वप्रकारेण अस्थितेः कस्यचिदर्थस्येति विशेषैकन्तेऽपि सर्वत्र सपक्षवृत्त्याद्यसत्त्वापत्तिरित्थमिति। तथा **उभयानेकत्वैनैकान्तेन उभयमिति**। सामान्यविशेषौ तदुभयमनेकाभिन्नं परस्परत इत्येतस्मिन्नप्येकान्ते साध्यसाधनधर्मधर्मिण एव कुतः साध्यस्य तावन्नित्यस्याभावो धर्ममात्रस्य निर्मूलत्वात् खपुष्पवत्। तथा साधनस्यापि कृतकत्वस्य कृतमित्यनुकम्पितं कुत्सितमज्ञातं वा कृतकं निर्मूलत्वं पुनर्द्रव्यादत्यन्तभिन्नत्वादिति धर्मयोरभावः[1], धर्मिणोरपि शब्दघटयोरगुणाकर्मत्वादिभ्यो हेतुभ्यः पूर्वोक्तवदभाव एव। तत्सङ्ग्रहहेतुरप्युच्यते। **तथाऽपूर्वत्वात्**, अपूर्वत्वममूलत्वं द्रव्यगुणादीनां परस्परतोऽत्यन्तमन्यत्वात्। एवं तावत्सपक्षासपक्षवृत्त्यवृत्तिविपरीतत्वात्तवैवातर्कत्वदोषो दृष्टान्तबलात्तर्कसिद्धेरिति। अविशेषविशेषोभयानेकत्वैकान्तवादेषूक्ता दोषाः। किं चान्यत्। दृष्टान्तस्य प्रत्यक्षत्वादनुमानत्वाद्धेतोरुपनयस्योपमानत्वादागमत्वात् प्रतिज्ञायाः दृष्टान्ताभ्युपगमात्प्रत्यक्षप्रमाणीकरणमापन्नं। तस्माच्च लोकत्वं दृष्टान्तसंवादित्वप्रतिपादनार्थत्वाच्छास्त्रार्थस्य। तार्किकाणां तर्कैरुपतिष्ठतां व्याख्यार्थं यथोक्तं लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति। यथा लोको दृष्टान्तस्तद्विरुद्धपदमभिधीयते तद्दृष्टान्तविरुद्धमिति। ततः को दोष? इति चेत्, प्रतिज्ञातव्याघातः। किं प्रतिज्ञातं?। शास्त्रनिरूपणविपरीतमप्रमाणं न हरिणस्वरूपादि निरपवादत्वादिति तद्व्याहन्यते।

---

१ ° तावातत्त्वस्या क ॥ तत्त्वातत्त्वस्य । ख ।

शास्त्रप्रमाणीकरणे प्रत्यक्षबलाल्लोकस्य प्रवृत्तत्वात् । शास्त्रत्वादेव लोकत्वमिति चेत्, स्यान्मतम्—

ननूक्तं 'शास्त्रकाराः स्वदृष्टार्थप्रतिपादनकुशला बुद्धिसंवादार्थं दृष्टान्तप्रमाणैस्तकैः शास्त्रार्थान् प्रतिपादयन्ति, न पुनः शास्त्रार्था लोकं प्रत्यक्षीकर्तुं शक्यास्तत एव तदर्थवाचीनि शास्त्राण्यलोक' इति । तच्च न, लोकाश्रयत्वात्तेषां शास्त्राणां । तानि हि शास्त्राणि । यस्मादर्थे हिशब्दो, यस्मात्तानि सामान्यविशेषकारणकार्यमात्राणां सामान्यमात्रस्य यदंशः कारणमात्रस्य स्नेहशौक्ल्यादेर्दृष्टस्य विशेषमात्रस्य चार्चिषु नवनवोत्पादविनाशरूपस्य दृष्टस्य सर्वत्राप्यारोपेण प्रणीतानि क्षीरस्येव स्नेहादिसामान्यस्य कारणाख्यस्य संस्थानमात्रं दृष्ट्वा दध्याद्यवस्थाविशेषमन्तरेण तस्य सामान्यस्य स्थित्यभावमपश्यद्भिर्यथेदं संस्थानमात्रं न चायं न विशेषस्तथान्येऽपि घटपटादयोऽर्थास्ते गुणप्रधानसंस्थानमात्रमिति सर्वत्राध्यारोप्य तदर्थानि शास्त्राणि प्रणीतानि । कारणमेव सामान्यमेव सर्वत्रेत्येतस्यार्थस्य प्रतिपादनं प्रसङ्गेन । तथार्चिष्वं प्रतिक्षणोत्पत्तिविनाशपार्थस्यानि दृष्ट्वा रूपरसस्पर्शगन्धमूर्त्यादिसामान्यावस्थानमन्तरेण तदसंभवमपश्यद्भिर्यथेदं विशेषमात्रं न सामान्यं । न कारणं । तथान्येऽपि महीमहीध्रसरित्समुद्रद्वीपगगनतारानक्षत्रग्रहगणादयो भावा इति । सर्वत्राध्यारोप्य तदर्थानि शास्त्राणि तत्प्रतिपादनप्रसङ्गवचनरचनाविभङ्गतरङ्गापारतोयसमुद्रीभूतानि प्रापितानि । अन्यत्र दृष्टस्याध्यारोप्य घटत्ववदलौकिकत्वमिति चेत्, स्यान्मतं–लौकिकमतीन्द्रियग्राह्यमुच्यते घटरूपादिवत् । यदत्र घटे घटतत्त्वं द्विकुक्ष्याद्याकारविशेषस्तदन्यत्र घटान्तरेऽध्यारोप्यते । तच्च नास्त्यध्यारोपाद्येव, लोकसंवादात्तु प्रतिपादनार्थोऽध्यारोपः । एवं शास्त्राणामप्यध्यारोपादेवालौकिकत्वमिति नास्ति प्रतिज्ञातव्याघातदोषोऽयं भवान्मन्यते लोकत्वापत्तेरिति । अत्र क्रमः–तथा न व्यामोहस्य मृगतृष्णिकावदलौकिकत्वात्, तथा तेन प्रकारेण, तथा सत्यं भवति तदलौकिकमविशुद्धत्वान्मृगतृष्णिकादिज्ञानवद्विशुद्धलोकस्य न पुनरुपपद्यते । मृगतृष्णिकावदेव तस्य व्यामोहस्याप्रामाण्यप्रसङ्गात् । ऊषरभूप्रदेशे ग्रैष्मोष्मसन्तप्तचक्षुषो रविकिरणाः पतिताः प्रत्युत्पतन्तो दूराद् व्यामोहहेतवस्तोयवदाभासंते तस्माच्छास्त्रविज्ञानस्य मृगतृष्णिकाविज्ञानवदप्रामाण्यप्रसङ्गादसमंजसोद्ग्राहम् । किं चान्यत्–**तथा च तत्र प्रतिज्ञादीनामप्यनुपपत्तिः** । केवलं शास्त्रविज्ञानाप्रामाण्यमेव । किं तर्हि? तेन प्रकारेण तथा च । एवं कृत्वा तत्र सति तस्मिन्नलौकिके मृगतृष्णिकावत्प्रतिज्ञादीनामप्यवयवानामनुपपत्तिः । कथं? **यदि तथा लोकेन गृह्यते न तथा वस्तु** । यदीति पराभ्युपगमं दर्शयति–यदि प्रतिपादनकौशलेन प्रतिपादनबुद्धिसंवादमात्रत्वेन दृष्टान्तमुपादाय यथाहं युक्त्योपपादयामि ।

१ ° घटादि °

शास्त्रेण च तथा तद्वस्तु, न तु यथा लोकेन गृह्यते तथेति भवतोऽभिप्रायः। तत्र प्रतिज्ञाऽवितथोक्ता गृह्यमाणा । अविशेषादेर्न तथा स्यात् । अविशेषैकान्तवादे तावत्सर्वस्य सर्वात्मकत्वात् नित्यः शब्द इति प्रतिज्ञा, यथा श्रोत्रेण गृह्यते न तथा भवितुमर्हति । किं कारणं ? । तत्रादिग्राह्यरूपाद्यात्मिकापि सेति कृत्वा। एवं विशेषैकान्तवादेऽपि अनित्यः शब्द इति प्रतिज्ञा, अकारनिकारादिवर्णविज्ञानानां देशकालकृतात्यन्तनानात्वक्षणिकत्वशून्यत्वनिरूपाख्यत्वात्परस्परापेक्षाभावे सर्वभावाभावे च यथा गृह्यते न तथा स्यात् । एवमुभयानेकत्वैकान्ते पूर्ववदन्यतरग्राह्येतरपक्षनिरपेक्षस्याभावात् । **ततश्चांशे प्रत्यक्षविरोधः** । ततश्चेति तस्मादेव हेतोर्लोके गृह्यमाणस्य विपरीतत्वादविशेषैकान्ते तावत्प्रत्यक्षविरोधः । अंशे-भागे तस्यैव वस्तुनः अविशेषैकान्तवादिपरिकल्पितस्वप्रत्यक्षोपलभ्यस्य विशेषत्वात्प्रत्यक्षविरोधः । अंशे स्ववचनविरोधः । तत्काले प्रतिपादनशब्दविशेषत्वेष्टेः । अंशेऽभ्युपगमविरोधः । स्वशास्त्रे सर्वत्र प्रसिद्धेन पूर्वकालाभ्युपगतेन सर्वात्मकत्वेनाधुनातनधर्मधर्मिविशेषस्य विरोधात् । स्वोक्तविपर्ययरूपाभ्युपगमादित्यन्ते कारणमुक्तं । प्रत्यक्षस्ववचनाभ्युपगमानभ्युपगमाविशेषात् । एवं विशेषैकान्ते श्रोत्रेन्द्रियग्राह्यस्य शब्दस्य तावन्मात्रकालावस्थास्तु पूर्वोत्तरवर्णसम्बन्धतद्बुद्ध्यवस्थानसोपाख्यत्वप्रत्यक्षत्वात्प्रत्यक्षविरोधः । तथैव च तस्योपपत्तेः । स्ववचनेनानित्यशब्दप्रतिज्ञा विरुध्यतेऽत एव चाभ्युपगमेन विरोधः । पूर्ववत्स एव हेतुरत्रापि । तथोभयानेकत्वैकान्ते प्रागभिहितसाधनान्येवात्र व्यापार्याणि । अद्रव्यत्वाद्वन्ध्यापुत्रवन्नानित्यत्वं, न शब्दोऽस्तीत्यादिस्वरूपाभावः । अचाक्षुषाप्रत्यक्षगुणस्य सतोपसर्गः कर्मभिः साधर्म्यं सतो लिङ्गाभावात्कार्यत्वात्कारणतो विकारादित्यादिशास्त्रविहितहेतुव्याख्यातार्थप्रतिपादनकाले तत्प्रयोगात् प्रत्यक्षीकरणाच्चानित्यत्वशब्दत्वाद्यभावात्प्रत्यक्षविरोधः । स्ववचनस्य तत्कालस्य तथावस्थानाभ्युपगमात्स्ववचनविरोधः । पूर्वाभ्युपगमेन च इदानींतनस्य विरोधादभ्युपगमविरोधः पूर्ववत्स्वोक्तविपर्ययरूपाभ्युपगमादिति सर्वत्र हेतुरिति ।

**अथ तथा** । अथैते दोषा मा भूवन् वितथत्वाश्रया इति । तथैवेत्यभ्युपगम्यते परैस्ततो न तर्हि लोकगृहीतमन्यथेत्यापन्नं, लोकत्वाच्च प्रतिज्ञातव्याघातस्तदवस्थ इति । किञ्चित्तथा किंचिदन्यथोन्मत्तप्रतिपत्तिवदिति चेत्, स्यान्मतं—किञ्चिल्लोकेन गृहीतं तथैव भवति प्रतिज्ञादि किञ्चिदन्यथा घटादि लोकस्यापरीक्षकत्वात् । परीक्षकाश्च पदवाक्यप्रमाणविदः । दृष्टान्त उन्मत्तप्रतिपत्तिः । यथोन्मत्तोऽपरीक्षकः पदवाक्यप्रमाणानभिज्ञः किञ्चित्तथा प्रतिपद्यते किञ्चिदन्यथा, तत्प्रतिपत्तिश्चाप्रमाणम् । सदसतोरविशेषाद्यदृच्छोपलब्धेश्च । तद्वल्लोकप्रतिपत्तिरपीति । अत्रोच्यते—

**एवं तर्हि साक्षाल्लोकपक्षाभ्युपगमविरोधः** । साक्षादिति प्रत्यक्षत एव

लोकपक्षापत्तिः। कथश्चिद्ग्रहणात्तथाग्रहणादन्यथाग्रहणाच्च किञ्चित्त्वादेव। न सर्वं सर्वात्मकं। सर्वासर्वत्वसिद्धिश्च विभागनिर्देशात् किञ्चिदिति। एवं तेन प्रकारेण तथेति सामान्यं विशेषस्तयोश्च कश्चिद्धर्मः प्रकारव्यपदेशभागेषितव्यः। तेषु त्रिष्वपि सिद्धेषु यस्मात्तथेति घटते। एवमन्यथेत्यप्ययमन्यस्मादन्योन्यश्चास्मादन्य इति सर्वासर्वत्वसिद्धेर्लोकपक्षापत्तिः। एवं विशेषैकान्ते देशकालकृतात्यन्तभेदनिरूपाख्यशून्यत्वेषु किं तत्स्यात् किञ्चिदिति विभज्यान्यस्मादवस्थितादनवस्थितमसद्वान्यदिति चोद्येत विलक्षणमिति। एवं तथान्यथेति च न घटेते। एवमुभयानेकत्वैकान्ते पूर्ववद्द्रव्यादीनामितरेतरानात्मकत्वात् सामान्यविशेषयोः कार्यकारणयोर्वा निर्मूलत्वादिभ्यो वा हेतुभ्योऽसत्त्वाद्वस्तुनः किञ्चित्तथान्यथेत्यनुपपत्तेर्लोकपक्षापत्तिः। तया च सह सर्वसर्वात्मकत्वादिशास्त्राभ्युपगमो विरुध्यते। एवं तावत् प्रतिज्ञा दुष्टा। प्रतिज्ञावद्धेतुदृष्टान्तावपि दुष्टावेव तदसाध्यत्वात्। उन्मत्त इति च दृष्टान्तो लोकपक्षपातादृते न सिद्ध्यति। उत्कृष्टो माद उन्माद इति, मदान्तरापेक्षो विमदत्वापेक्षो वा निर्देशः। स च लौकिक एव तमभ्युपगम्य, तस्मात्—लोकाभ्युपगमात् लोकप्रमाणीकृत एव। किञ्चिदकिञ्चित्। तथा अन्यथेत्यादि परस्परविलक्षणात्, तन्निराचिकीर्षव एवोन्मत्ततरा[2] इति। एवं तावद्वाक्यविषयो दोषः।

इदानीमेकपदविषय उच्यते। **भेदवदभेदपदार्थोपादानाच्च न तथेति।** पुनर्नवोऽभ्युपगमविरोधः। भेदोऽस्यास्तीति भेदवान्। नास्य भेद इत्यभेदः। भेदवांश्चाभेदश्च स एवेति भेदवदभेदः। कोऽसौ पदार्थः? वृक्ष इत्यादिः। स्वार्थद्रव्यलिङ्गसंख्याकर्मादिकारकरूपः। यदुक्तं—'क्रमयौगपद्यचिन्तायां स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यम्' आह—समवेतां समवेतस्य तु वचने लिङ्गसंख्यां विभक्तिं चाभिधाय तान् विशेषानपेक्षमाणस्तु कुतस्तमात्मानं[3] प्रियकुत्सनादिषु तथा प्रवर्ततेऽसौ विभक्त्यन्त इति व्याकरणे सर्वतन्त्रसिद्धान्ते तत्र स्वार्थ इति जातिराकारोच्येत। स एवार्थः स्वार्थ इति सोऽन्यापेक्षत्वादन्येन विना नान्य इति स्यादतो द्रव्यादिसिद्धेर्भेदवान् पदार्थः। तेषामेव च स्वार्थादीनामत्यन्तभेदेऽन्येनान्यात्मकत्वात् खपुष्पवदभावः स्यात्। देशकालाद्यभेदोपलब्धेश्चाभेदसिद्धेरभिन्नः पदार्थस्तस्माद्भेदवदभेदपदार्थ उपात्तः पदं प्रयुञ्जानेन शास्त्रविदा स्वार्थमात्रवादिनापि। तथा द्रव्ये लिङ्गे सङ्ख्यायां कारके कुत्सादौ पदार्थे च योज्यम्। क्रमेण युगपद्वाच्यं तमभ्युपगम्याविशेषवादिनो विशेषवादिन उभयानेकत्ववादिनो वा न तथेति, तमेव पुनर्ब्रुवते—न नाभ्युपगमवि-[4]

---

१ स चान्यः। २ °एवान्यतरा°। ३ °कुत्स्न°। ४ °चा°।

रोधः । न च तेन शास्त्राभ्युपगमेन । किं तर्हि ? तत्कालाभ्युपगमेनेत्यर्थः । स च सर्वत्राभ्युपगमविरोध इति । अथ प्रतिज्ञैवाभ्युपगमः । स्यान्मतं—न हि पदप्रयोगविषयोऽभ्युपगमोऽस्ति पदार्थाभावात् । पदार्थस्योत्प्रेक्षाविषयत्वाद्वाक्यार्थाधिगमोपायत्वेनोद्धृत्य वाक्यार्थो व्याख्येयत्वात् । वाक्यमेव शब्दस्तदर्थ एव च शब्दार्थस्तस्मात्प्रतिज्ञैवाभ्युपगमस्तत्साधनार्थत्वाच्छेषवाक्यावयवव्यापारस्य । कस्मात्? तस्माल्लोकाप्रामाण्यात् । ततस्तस्याः प्रतिज्ञायाः हेतुभूतायास्तद्बलादित्यर्थः । लोकाप्रामाण्यात् । लोकस्याप्रमाणत्वसिद्धेः । नित्यः शब्दोऽकृतकत्वादाकाशवदिति । नित्यत्वे सिद्धे तद्बलान्नित्यानित्याद्यनेकरूपैकवस्तुप्रतिपत्तिर्लोकोऽप्रमाणीभवतीति । अत्रोच्यते—

**न त्वविशेषादिष्वसतः पक्षादेरुपादानाल्लोकाभ्युपगमादिति ।** सर्वं सर्वात्मकमित्येतस्मिन्नविशेषैकान्तेऽभ्युपगते पुनर्नित्यः शब्द इत्यस्य पक्षस्य तद्धेतोर्दृष्टान्तस्य चाभावः । पूर्वोक्तेभ्यो हेतुभ्यो निर्विशेषत्वादिभ्यस्तथा विशेषैकान्ते पूर्वोक्तहेतुभ्य एव परोक्षादीनामभावो नैर्मूल्यत्वादिभ्य उभयानेकत्वैकान्तेऽपि परस्परविभिन्नस्वभावानां सामान्यविशेषाणां कार्यकारणानामभाव इत्युक्तं । तस्मादविशेषादिष्वसतः पक्षादेर्लोकप्रसिद्धस्योपादानाल्लोक एव पुनरभ्युपगतो भवत्यगतिभिः शास्त्रविद्भिः, तस्माल्लोकाभ्युपगमाल्लोकः प्रमाणीकृत एव । किञ्चिद्किञ्चित्तथान्यथेत्यादिपरस्परविलक्षणव्यवहाराभ्युपगममाह । **लोकप्रामाण्यं न सिद्ध्यतीति** । ते यूयं सुदूरमपि गत्वा लोकमेव शरणं गन्तुमर्हन्त्वशास्त्रविदः । एवं शास्त्रव्यवहारो लोकदर्शनमन्तरेण न सिद्ध्यतीति वाक्यविषयः पदविषयो वा । ततः साक्षाल्लोकपक्षापत्त्याभ्युपगमविरोध इत्युक्तः । तथा तद्विषयः स्ववचनविरोधोऽपि प्रतिपत्तव्यः । कस्मात्? लोकवदेव चार्थ इति व्यवस्थाप्य शब्दप्रयोगात् । लोकेन तुल्यं वर्तते । लोकस्येव लोक इव लोकवत् । एवेत्यवधारणे । किमवधारयति ? । लोकेऽर्थमवधारयति । नार्थलोकं[3] शास्त्रविदामपि लोकत्वात् । पृथक्त्वेऽप्यर्थलोकयोरुभयत्र वायमेवकारो द्रष्टव्यः । लोकवदेवार्थोऽर्थवदेव लोक इति द्वयोरपि परस्पराव्यभिचारात् । शास्त्रविदां लोकपृथक्त्वे लौकिकार्थपृथक्त्वे च तत्कल्पितार्थानामिति । इति—अनेन शब्दप्रकारेणेत्थं व्यवस्थाप्य बुद्ध्याभ्युपगम्य स्वनिश्चितार्थप्रतिपादनार्थं परेषां शब्दप्रयोगात्पदावधिको वाक्यावधिको वा शब्दप्रयोगव्यवहारो लोकानुपातीत्यनिष्टकैरपि शास्त्रकारैस्तत्र च तथा सत्यत्वसिद्धे शब्दार्थे तेन प्रकारेण तथा, येन प्रकारेण मृद्रूपादिपृथुकुक्ष्यादिकेऽर्थे घटशब्दो लोकेन प्रयुक्तस्तेनैव प्रकारेण सत्यत्वेन सिद्धे सत्यसिद्धे लोके शब्दं प्रयु-

---

१ भवति । २ °माच° । ३ नार्थे लोको । ४ शब्दः प्रक्रमे । अनेन ।

ज्ञानैः शास्त्रविद्भिर्लोकोऽभ्युपगतोऽस्माभिरित्युक्तमेव भवत्यर्थात् । ततः पुनर्न यथा लोकग्राहं वस्त्विति विरुध्येत । लोकस्य ग्राहो लोकग्राहः । ग्राह इव ग्राहः । यो यो लोकग्राहो यथा लोकग्राहं । किं तद्वस्तु ? यथैवागोपालप्रसिद्धं वस्तु ब्रुवाणो वादी यो यः प्रयुज्यते मया शब्दः स स न तथार्थः स्यादित्यनेन स्ववचनेनैव विरुद्धमाह । स्वेन वचनेन तत्तद्वचनं विरुध्येत । विरुध्येतेत्याशङ्कावचने लिङ् । कथं मुखनिष्ठुरं विरुध्यत एवेत्यवधार्योच्यते । कथञ्चिद्विरुध्येतेति दाक्षिण्यमाचार्यः स्वकं दर्शयति । एवं तावत्स्ववचनविरोधः । लोकविरोधस्तत एव रूढिविरोधो लोकविरोधः । स तु प्रस्तुत एव तदविरोधेऽप्रवृत्तेः । तेन लोकेनाविरोधे शास्त्राणामप्रवृत्तेः । तस्या रूढेः शब्दप्रयोगादेवाभ्युपगताया विरोधमनुपपाद्य शास्त्राणामविशेषविशेषोभयानेकत्वैकान्तप्रतिपादनार्थानामप्रवृत्तेः । कथमप्रवृत्तिः ? । तानि रूढमेवार्थमनुब्रूयुररूढतामुत्पादयेयुर्यदि रूढवदिति व्यर्थानि । अथारूढं व्युत्पादयन्ति रूढिविरोधिनमर्थं विरुध्यत एव लोकेन निःसंशयमिति, साधूच्यते तदविरोधेऽप्रवृत्तेर्लोकविरुद्धः प्रस्तुत एवेति । किं चान्यत्–लोकप्रामाण्यमेव शास्त्रकाराणां सर्वत्र पदे पदे वाक्ये वाक्ये प्रत्यक्षानुमानविरोधावुपस्थितावेव[1] । तत्र तावदंशे प्रत्यक्षविरोधः इत्याद्यभिहितं पूर्वमिदानीं सर्वत्र प्रत्यक्षविरोधो वाच्य इति विशेषः । अनुमानविरोधो वा नोक्तः सोऽभिधेयः, तदनुषङ्गेण पुनः प्रत्यक्षविरोधवचनं च तत्पूर्वकत्वादनुमानस्येति शास्त्रकारप्रवृत्तेर्लोकविरुद्धत्वादेव प्रत्यक्षानुमानविरोधावप्युपस्थितावेव । एवेत्यवधारणे । न न भवतो भवत एवेत्यर्थः । किं कारणं ? तत्स्थत्वात्तयोः । लोकनाद्धि लोकोऽनुपहतेन्द्रियमनस्कः प्राणिगणो लोक इत्युच्यते । तयोस्तस्मिंल्लोके स्थितत्वात्प्रत्यक्षानुमानयोः लोकं चेदप्रमाणं लोकस्य प्रत्यक्षानुमाने प्रागेवाप्रमाणे । अथवा एव स्थितस्तत्स्थः 'सुपि स्थ' इति वचनाल्लोक एव प्रामाण्येन व्यवस्थितः, क्व तयोः प्रत्यक्षानुमानयोः ? । स एव लोकः प्रत्यक्षानुमानज्ञानाधारत्वात्तद्रूपापत्तेश्च प्रत्यक्षमनुमानं च ततस्तदप्रामाण्ये तयोरप्रामाण्यमिति । स्यान्मतं भवतां । कथं प्रमाणज्येष्ठं प्रत्यक्षं न प्रमाणीक्रियेतेति । तत् वः सम्प्रचारमिमं प्रयच्छामि । तदपि च प्रत्यक्षमेवं कल्प्यं । शास्त्रवदेवेत्यादि । शास्त्रे ज्ञानेऽपि तद्विहितक्रियासाध्यत्वात्तदिष्टफलस्य क्रियायांश्चाव्यभिचारात् ज्ञाने । यथोक्तं—

'जानानाः सर्वशास्त्राणि छिन्दन्तः सर्वसंशयान् ।
न च ते तत्करिष्यन्ति गच्छ स्वर्गं न ते भयम् ॥' इति ।

तस्मात् ज्ञानफलस्याव्यभिचारि कारणं क्रियासाधनवादिनोऽपि । किमङ्ग पुनर्ज्ञानमात्रसाधकवादिन इति । तदेव विचार्यते ।

---

१ °नुप° ।

शास्त्रवदेवेत्यारभ्य यावद्व्यञ्जनकार्यत इति । शास्त्रं इव शास्त्रवत् । यथा शास्त्रेऽभिहिताः पदार्था अत्यन्तविलक्षणास्तथा प्रत्यक्षमपि लौकिकप्रत्यक्षविलक्षणं तथानुमानं वास्तु, तयोरप्यलौकिकत्वकल्पनार्थं प्रत्यक्षानुमानयोरप्यलौकिकत्वस्य कल्पनार्थं लक्षणान्तरं कल्प्यं । किं तत्? **सामान्यविशेषैकान्तसंवादि** । सामान्यं च विशेषश्च सामान्यविशेषौ । सामान्यविशेषौ च सामान्यविशेष इत्येकशेषः स्वरूपत्वात् । सामान्यमेव न विशेषः, विशेष एव न सामान्यं । तौ परस्परविलक्षणौ चेति त एवैकान्ताः लौकिकपदार्थविलक्षणाः शास्त्रेषु कल्पितास्तैः संवदितुं शीलमस्य तदिदं सामान्यविशेषैकान्तसंवादि, घट आदिर्यस्याः कल्पनायाः सा घटादिकल्पना । घटसङ्ख्योत्क्षेपणसत्ता घटत्वाद्यध्यारोपात्तस्याः । ततः कल्पनाया अपोढं प्रत्यक्षं कल्पनीयं । स्यादाशङ्का-कल्पनापोढं प्रत्यक्षं विशेषैकान्तवादिन एव मतं । नेतरयोस्तयोः कथमलौकिकत्वमिति चेत् । अत्रोच्यते—यत्तावद्विशेषमात्रं स्वलक्षणविषयमनिर्देश्यं प्रत्यक्षं तत्कल्पनापोढत्वादलौकिकं तत्सामान्यानात्मकत्वात् खपुष्पवदसदिति सिद्धं । तथा विशेषानात्मकत्वात् खपुष्पवत्सामान्यमात्रं सर्वं सर्वात्मकं कल्पनापोढं वस्तु तदसत् । असत्त्वात्तद् ज्ञानमपि तद्वत् । तथोभयानेकत्वैकान्ते तयोरितरेतरानात्मकत्वात् खपुष्पवदभाव इत्यलौकिकत्वं । यद्यपि सामान्यविशेषव्यपाश्रयं लक्षणमभिहितम् । श्रोत्रादिवृत्तिः प्रत्यक्षमात्मेन्द्रियमनोऽर्थसन्निकर्षाद्यन्निष्पद्यते तदन्यदित्यादि । तथापि सामान्यविशेषैकान्तवादिनां बलात्तदेव कल्पनापोढमलौकिकं चेत्यापन्नं । तस्य चोभयात्मकत्वाभ्युपगमे प्रतिज्ञाहानिः, अथवा तेनैव दूषितत्वात्कस्तौ हतौ हनिष्यतीति तस्यैवोपरि बध्यते परिकर इत्यनेनाभिप्रायेण पूर्वमेव तावत्परिकल्पितप्रत्यक्षलक्षणमुपन्यस्यति दूषयितुकामः सूरिरित्यलमतिप्रसङ्गेन ।

प्रकृतमुच्यते—अथ का कल्पना ययापोढं ज्ञानं प्रत्यक्षमिति? अत्रोच्यते—नामजातिगुणक्रियाद्रव्यस्वरूपापन्नवस्त्वन्तरनिरूपणानुसरणं विकल्पना, ततोऽपोढमपेतं नाम संज्ञाशब्द इत्यनर्थान्तरम्, तद्द्वारिका कल्पना । सा द्विविधा समासतः । यादृच्छिकी नैमित्तिकी च । नामग्रहणाद् यादृच्छिकी । जात्यादिग्रहणाच्च नैमित्तिकी गृहीता । निमित्तनिरपेक्षं नाम यादृच्छिकं डित्थो डवित्थ इत्यादि शब्दद्वाराच्च । सत्यपि जात्यादिनिमित्तापेक्षा भिन्ना । तत्र गौरिति जात्या, शुक्ल इति गुणतः । मतुब्लोपादभेदोपचाराद्वा विशेषणस्वरूपायत्तं ततो विशेषणादन्यद्वस्तु तयोर्विशेषणविशेष्ययोरभेदसम्बन्धनात्मिकया कल्पनया पूर्वं मनसा निरूप्यते । पश्चादनुसर्यते । तथा डित्थादिष्वप्यस्येदं सोऽयमिति वा भिन्नयोरर्थाभिधान-

योरभेदसम्बन्धनया निरूपणानुसरणे शब्दार्थयोर्निमित्तनैमित्तिकयोर्भिन्नयोरभेदाध्यारोपात्। क्रियाशब्देषु कारक इत्यादिषु नाभेदोपचारोऽभिन्नरूपत्वात् क्रियाक्रियावतोरतो न निरूपणं किन्त्वनुसरणमेव। सर्वत्र शब्दार्थाभेदोपचारान्निरूपणानुसरणैस्त एव। तथा द्रव्यशब्देषु संयोगसमवायनिमित्ताद्दण्डी विषाणीत्यादिषु तस्याः कल्पनाया अपोढमक्षाधिपत्योत्पन्नमिति।

रूपालोकमनस्कारचक्षुर्भ्यः संप्रवर्तते।
विज्ञानं मणिसूर्यांशुगोशकृद्भ्य इवानलः॥

चक्षुः प्रतीत्य रूपं च आलोकं बाह्यं समनन्तरनिरुद्धमनःसंज्ञितं चित्तं चित्तान्तरावकाशदानात्मकं प्रतीत्य चक्षुर्विज्ञानमुत्पद्यते। 'चतुर्भिश्चित्तवेत्ता' इति सिद्धान्तात्। तथापि चाधिपतिना चक्षुषा व्यपदिश्यते चक्षुर्विज्ञानमित्यसाधारणकारणत्वाद् यथा यवाङ्कुर इति। बीजं तु वारिमारुताकाशसंयोगे सत्यपीति असाधारणार्थविषयमिति। चक्षुरादिविज्ञानानां परस्परविविक्तरूपादिनिर्विकल्पस्य लक्षणविषयत्वात्। अभिधानगोचरातीतं मनो निरूपितार्थविषयत्वादभिधानस्य। तद्गोचरातीतं किं कारणं? प्रत्यात्मसंवेद्यत्वात्। आत्मानमात्मानं प्रति प्रत्यात्म, प्रत्यात्मना संवेद्यते नान्यस्मै शक्यमाख्यातुं। शूलादिवेदनास्वरूपवत् ज्ञानमिति कल्पनमन्यत्रासम्भवात्सम्बन्धः। प्रत्यक्षमक्षमक्षं प्रति वृत्तेः। पञ्चेन्द्रियजं चक्षुर्विज्ञानसमंगी। नीलं विजानाति **नो तु नीलमिति, अभिधर्मागमो**ऽपीति विधेस्तमेतत् लौकिकप्रत्यक्षविलक्षणं कल्प्यमानं चाक्षुपः। तवागमोऽप्येवमेवेति दर्शयति—

**चक्षुर्विज्ञानसमंगी**। चक्षुर्विज्ञानसमत्वं गीःसन्तानः 'अगि रगि लगि गत्यर्थाः' चक्षुर्विज्ञानसमंगितुं शीलमस्येति चक्षुर्विज्ञानसमंगी। एवं श्रोत्रादिविज्ञानसमंगिनः। नीलं विजानाति रसादिविविक्तं रूपं स्वलक्षणं विजानाति नो तु-नीलमिति विजानाति। इतिशब्दस्य शब्दपर्यायत्वादिदं तन्नीलमिति शब्दनिर्देश्यं न विजानाति, अपटुत्वादिन्द्रियविज्ञानस्य। कुतः शक्तिरेवं कल्पयितुं? प्रकरणपदेऽप्युक्तमिति। भवत्संगतागमव्याख्यानग्रन्थान्तरेण तदर्थानुवादिनाभिहितमिति दर्शयति। नीलः स नाम निलं निस्तोकः पदे तन्नीलमेतदिति नाम्ना निर्देशो नीलमस्य नामैतन्निरूपणविकल्पकृतं न नीलार्थः। नीलस्य रूपस्य वस्तुनः चक्षुरिन्द्रियविषयस्य परमार्थः। स्वरूपतोऽनक्षरः। अक्षरैर्व्यञ्जनपदनामकार्यैरनभिलपनीयः। स च पुरुषो निरूपणकाले स्वयं निश्चिन्वन्ननुसरणकाले वानुसरन् परं प्रतिपिपादयिषिता नीलमिति वाचं भाषमाणो नीलस्यार्थमनभिलाप्यस्वरूपं स्वज्ञानांशवदविकल्पं न पश्यति तदा तत्स्वरूपविषयस्याविकल्पस्य नीलार्थविज्ञानस्य च विरुद्धत्वात्तदान्यस्य नीलशब्दाभिलाप्यस्या-

ध्यारोपितस्य सामान्यस्येन्द्रियगोचरानागतेः । एतस्यैवार्थस्य भवनात्, तुशब्दो विशेषणार्थः । एनमेवार्थं भावनयानया विशेषयति । भवत्येवार्थस्तं भवन्तं भव भवेति बुद्धौ भावयति यया व्याख्यया सा भावना । का पुनः? **सार्थेऽर्थसंज्ञी नत्वर्थे धर्मसंज्ञीति** । एतस्य भावनावाक्यस्य पुनर्व्याख्या—अर्थे रूपादिके प्रत्यक्षविज्ञानविषये । रूपरसगन्धशब्दस्प्रष्टव्यलक्षणे स्वरूपसंज्ञी रूपादिमात्रसंज्ञी । संजानातीति संज्ञी । स्वरूपसंज्ञास्यास्तीति वा स्वरूपसंज्ञी । किमालम्बना सा संज्ञा किंस्वरूपा वा यथा संप्रयुक्तं तत्प्रत्यक्षम्? । रूपादिवित्तं निर्विकल्पं चैत्तसिक्या संप्रयुक्तधर्माख्यया योगात्संज्ञया संज्ञीत्युच्यते । तत्सन्तान इत्यत आह । अर्थस्वरूपविशेषमात्रालम्बनया निर्विकल्पया संज्ञया संप्रयुक्तमिति । गतार्थं व्याख्यातत्वाद्भाष्येण । तदेव स्वलक्षणविषयं स्वमेव विशेष एव लक्षणं, लक्ष्यत इति लक्षणं । 'कृत्यल्युटो बहुलम्' ( )इति कर्मणि ल्युट्प्रत्ययः । स्वलक्षणमनन्यविषयमित्यर्थः । अस्य सन्तानस्येति चक्षुर्विज्ञानसमंगिनः । चक्षुर्विज्ञानवच्चक्षुरादिपञ्चविज्ञानकाया व्याख्याताः । इत्थं कल्पनापोढा इति प्रदर्शने यत्पुनरुक्तं कल्पनात्मकं ज्ञानं न तत्प्रत्यक्षमर्थस्वलक्षणविषयत्वात्, द्रव्यश्च ज्ञानवदिति साधनं । इतश्च सविकल्पकं नीलमिदमित्यादिज्ञानं न प्रत्यक्षं विशेषणाध्यारोपात् । उत्पलाधारसुरभ्यादिज्ञानवदिति । इतिः परिसमाप्त्यर्थः । अर्थेऽर्थसंज्ञीत्येतस्य व्याख्यानमिति परिसमाप्तं । **न त्वर्थे धर्मसंज्ञीत्यस्य** व्याख्या । न त्वर्थे, नेति प्रतिषेधे । तुर्विशेषणे । तमर्थमध्यारोपविशिष्टं प्रतिषेधति । तस्मिन्नेव रूपादिकेऽर्थे मनु—यदृच्छादिना स संज्ञी, यदृच्छाजातिगुणक्रियाद्रव्यशब्दसंज्ञी । धर्मशब्दस्य शब्दशब्दार्थपर्यायत्वात् धर्मसंज्ञी न भवति शब्दसंज्ञी न भवतीत्यर्थः । नैषा स्वमनीषिकोच्यते । किं तर्हि? एवमभिधर्मेऽप्युक्तमभिधर्मपिटकेऽभिहितं । किमुक्तं? "धर्मो नामोच्यते । नामकायः" इत्यादि । नामैव नामकायः । कायवत्प्रतिक्षणं शरारुत्वाच्चतुर्भूतीसङ्घातत्वाच्च, नाम्नां वा विज्ञानादीनां सङ्घातत्वात् । संज्ञाशब्दानां क्षणिकानामपि संहतानामेवोत्पत्तिविनाशाभ्युपगमात् । यथोक्तं—

> "वर्णो गन्धो रसः स्पर्शश्चत्वारोऽपि च धातवः ।
> अष्टावेते विनिर्भागा सहोत्पादाः सहक्षयाः ॥" इति सिद्धान्तात् ॥

पदानि नामाख्यातोपसर्गनिपातास्तत्कायः पदकायः । व्यञ्जनान्यक्षराण्यर्थस्य व्यञ्जकत्वात्तत्कायो व्यञ्जनकाय इति । एवं तावत् कल्पितमेव भवत्सिद्धान्ते । किं सम्प्रधारणया? । अत्रेदानीं परमार्थो विचार्यते—**कल्पितमपि त्विदमफलम्** इत्यादि । नास्य फलमित्यफलं । किं कारणम्? अलौकिकत्वात् । खरविषाणकुंततीक्ष्णादिकल्पनवत् । कस्मादलौकिकत्वमिति चेत्, स्ववचनव्यपेक्षाक्षेपदुस्त-

रविरोधपरिहारं । यस्मात्स्वं वचनं स्ववचनं प्रत्यक्षलक्षणवादिनो दिग्नभिक्षोः । स्ववचनस्य स्ववचनेन वा व्यपेक्षा प्रत्यवमर्शः । स्ववचनव्यपेक्षा सैवाक्षेपः । तेनाक्षेपेण दुस्तरो विरोधस्य परिहारोऽस्येति स्ववचनव्यपेक्षाक्षेपदुस्तरविरोधपरिहारं । स्वेनैवैतद्वचनेन पौर्वापरेण प्रत्यवमृश्यमानेन विरुध्यते । सदाहं मौनव्रतिकोऽस्मि, पिता मे कुमारब्रह्मचारीत्यादिवचनवत् । न त्वसदुपपत्तिवद्दूष्यमिदं । तदर्थं दृष्टान्तमाह । त्वदुक्तिवदेवेदं । यथेयं त्वदुक्तिः कल्पनात्मिका सती न प्रत्यक्षं, तथैवेदमप्रत्यक्षमिति प्रतिज्ञा, कल्पनापोढलक्षणलक्षितं ज्ञानमत्र धर्मि । तदप्रत्यक्षत्वविशिष्टं साध्यते, को हेतुः? कल्पनात्मकत्वात् । न त्विदमसिद्धं कल्पनात्मकम् । तस्य ज्ञानस्य कल्पनापोढत्वात् । अत्रेदं तत्साधनार्थमभिधीयते धर्मान्तरं तत्कल्पनात्मकं निरूपणविकल्पात्मकत्वात् । इदमित्थमिति ज्ञानं निरूपणं, स एव विकल्पस्तदात्मकं तत्प्रत्यक्षं घटत्वादिज्ञानवदिति । आह—निरूपणविकल्पात्मकत्वमप्यसिद्धमिन्द्रियज्ञानस्येति, आचार्यस्तु तत्साधनार्थमाह । आलम्बनविपरीतप्रतिपत्त्यात्मकत्वात् । यथाप्रतिपत्तिरिति । स्यान्मतम् । द्रव्यसतामेवाणूनां नीलपीताद्याकारवान् संवृत्तिसत्त्वात् । तस्यापि नीलपीताद्याकारस्य प्रत्येकं तारतम्यवत्त्वात् यथाप्रतिपत्तिरिति । स्यान्मतं—द्रव्यसतामेवाणूनां नीलपीताद्याकारत्वान्न विपरीता प्रतिपत्तिरित्येतच्चायुक्तम्, आकारस्याध्यारोपात्मकत्वात् । माणवके सिंहत्वाध्यारोपवत् । सदाध्यारोपित इति कुतो गम्यते? सामान्यरूपविषयत्वात्, तत्सामान्यं च कारीषतौषतार्णपार्णादिविशेषानाश्रिताश्रित्ववत्, तदप्यसिद्धमिति चेत, सिद्धमेव तदतद्विषयवृत्तित्वात् । संश्चासंश्च विषयस्तदतद्विषयौ तत्र वृत्तिरस्येति तदतद्विषयवृत्ति, तद्ज्ञानमनेकपरमाणुसमूहजत्वात्तस्य समूहे तेषु च वृत्तित्वात् । समूहस्यासत्त्वात्समूहिनामेव द्रव्यसतामणूनां सत्त्वात्तयोश्चाभेदेन नीलाद्याकारपरिग्रहेण ज्ञानोत्पत्तेः । समूहासत्त्वं च तद्ग्रहे तद्बुद्ध्यभावात् बलाकापङ्क्तिमुष्टिग्रंथ्यादिवत् । उक्तं च

> 'गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
> यत्तु दृष्टिपथप्राप्तं तन्मायेव सुतुच्छकम् ॥' इति ।

अतः सदसदभेदपरिग्रहात्मकत्वात्तैमिरिकके[2] शौक्ल्यकादिज्ञानवत्तदतद्विषयत्वमस्य । किं चान्यत् । सर्वथा साधारणार्थत्वात् । साधारणोऽर्थोऽस्य ज्ञानस्येति साधारणार्थं, तत्साधारणार्थत्वमभेदपरिग्रहात्मकत्वात् । आदिग्रहणादन्वयव्यतिरेकार्थविषयत्वात् । सामान्यविशेषात्मकार्थविषयत्वादित्यादिभ्यो हेतुभ्यो दृष्टान्तभ्योऽनुमानादिज्ञानानि तथैवोदाहृतानि ।

> 'भ्रान्तिसंवृतिसंज्ञानमनुमानानुमानिकं ।
> स्मार्ताभिलाषिकं[3] चेति तदाभासं[4] सतैमिरम् ॥' इति ।

---

१ °विन्न° । २ केशोंडुकादि । ३ °स्मार्ताभि०° ग । ४ प्रत्यक्षाभं° ग ।

तस्माद्धेतुपारंपर्येण कल्पनात्मकत्वसिद्धेरेकैकस्माद्वोक्तहेतोरप्रत्यक्षमिदं कल्पनापोढलक्षणलक्षितं ज्ञानमनुमानादिज्ञानवदिति । यथानुमानादि ज्ञानं कल्पनात्मकत्वादप्रत्यक्षं तथा भवतीष्ट(त्थ?)मिन्द्रियज्ञानं मा मंस्थाः । प्रोक्तकल्पनात्मकत्वादिहेतुसिद्धिरिति । यस्मादुक्तं वोऽभिधर्म एव—अभिधर्मपिटक एव । बुद्धिवचनेऽभिहितं "सञ्चितालम्बनाः पञ्चविज्ञानकायाः" इति। नित्यसंप्रयुक्तकधर्मैर्युक्तत्वाद्रागादिभिः काया इत्युच्यन्ते । पञ्च चक्षुरादि विज्ञानानि । तानि हि रूपादिपरमाणोरेकस्यासंचितस्यान्यैः समानजातीयैरसंगतस्यालम्बनस्याविषयस्येन्द्रियबुद्धिग्राह्यत्वस्य घटादिषु घटपटरथादिषु, नीलादिषु रूपरसगन्धस्पर्शशब्देषु तद्गुणेषु प्रत्यक्षाभिमतेषु संवृत्तिसत्स्वभावात् । सञ्चिताणुघटनीलाद्याकार एव गृह्यते चक्षुरादिभिः । तस्यां चावस्थायां परमाणुत्वेनावस्थानमार्हतान् प्रत्यसिद्धं परमाण्वन्तरापत्त्यभ्युपगमात् । वैशेषिकाणां परमाण्वारब्धावयवि द्रव्यं, सांख्यानां समवस्थानविशेषापन्नाः सत्त्वादयो गुणाः, लौकिकानां तु स्थूलकार्यानुमिततज्जातीयसूक्ष्मकारणमात्रसंभावनं । "सन्ति केचित्सूक्ष्मा बहवः स्थूलस्य कारणभूताः पटस्येव तन्तवः" इति । संभावितानां तथा संभावनेऽपि तेषां सङ्घातपरिणामाभ्यामृते चाक्षुषत्वाद्यभावो लोकव्याख्याणुवदतोऽतीन्द्रियत्वाद्यालम्बनत्वानुपपत्तिरतश्चालम्बनत्वानुपपत्तेर्द्रव्यस्य सतां परमाणूनामेतत्प्रतिपत्तव्यं चक्षुरादिविज्ञानानां रूपादिपरमाणुसंबोधत एवालम्बनमिति । आदिग्रहणाद्रसादिपरिमण्डलादिपरमाणुसङ्घात एवालम्बनं । ततः किमिति चेत् । **ततः प्रत्येकमालम्बनपरमाणूनाम्**, आलंबनार्थाः परमाणवः । आलम्बनपरमाणवस्तेषां परमार्थसतामेषां तत एव हि परमार्थसन्तो न समूहो नीलादिर्घटादिश्च संवृत्तिमत्त्वात् । भवत्सिद्धान्तेनैवाविषयता परमाणूनां । तत्र प्रतिविविक्तरूपान्तरा विविक्तस्य तत्त्वे प्रत्येकं विविक्तानि रूपान्तराणि इति । प्रतिपरमाणु रसादिभेदेन वा तेषामेव रूपान्तराणामविविक्तं स्वतत्त्वं यस्मात्सोऽयमविविक्तस्वतत्त्वः । कोऽसौ रूपसङ्घातः ? । रूपधातुभेदपरमाणुसङ्घातः । अधिकृतचक्षुर्विषयाभिमतरूपसङ्घातो वा, तस्मिन् रूपसङ्घाते इन्द्रियसन्निकृष्टे स्वविषयाभिमुख्येनोपस्थिते आलम्बनविपरीता परमार्थत आलम्बनभूतेभ्यः परमाणुभ्यो नीलमिति वा, घट इति वा येयं प्रतिपत्तिः सा विपरीता । तदग्रहे तद्बुद्ध्यभावाद्बलाकासु पङ्क्तिज्ञानवत् । अद्य(स्य?)पदस्यैकात्मकनीलरूपविषया व्यपदेश्यानेकपरमाण्वालम्बनेभ्योऽन्यव्यपदेश्य एक आत्मा । अस्येत्यव्यपदेश्यैकात्मकं । किं तन्नीलरूपं? तद्विषयोऽस्या इत्यव्यपदेश्यैकात्मकनीलरूपविषयाभिमता प्रतिपत्तिरिति वर्तते । सैव वा प्रतिपत्तिरव्यपदेश्या एकात्मकानेकपरमाणुनीलरूपविपरीतैकनीलरूपविषया . तद्व्याख्यानार्थम**भिधर्मपिटके** भवतां

यथोच्यते–'नीलं विजानाति नानुनीलम्' इति । नाव्यपदेश्यां सा प्रतिपत्तिरित्यभिप्रायः । तं प्रदर्शयति—ननु हेत्वपदेशव्यपदेश्यैव सा । यस्मादुक्तं–हेतुरपदेशो निमित्तं लिङ्गं प्रमाणं कारणमित्यनर्थान्तरमिति । न चावश्यं शब्दाभिधेयमेव व्यपदेश्यम् । किं तर्हि ? यद्यदर्थान्तरेणाधिगम्यते तत्तद्व्यपदेश्यम्, अर्थान्तरस्य हेत्वपदेशनिमित्तादिपर्यायत्वात् । तथापि च यतः सञ्चयग्रहणापदेशेन निमित्तान्तरजनितमिन्द्रियज्ञानमिष्टं तस्माद्व्यपदेश्यं तत्र । तथा चोक्तम्–'सञ्चितालम्बनाः पञ्चविज्ञानकाया' इति । न सञ्चयालम्बना इति । एतस्यार्थनिदर्शनार्थमुदाहरणमाह–धूमेनेवाग्निरिव गृह्यते । यथा धूमेनार्थान्तरभूतेनाग्निरत्रेति ज्ञानमुत्पद्यमानं व्यपदेश्यं दृष्टं तथैतदपि नीलरूपादिविषयं चक्षुरादिविज्ञानं परमाणुभिरर्थान्तरैर्जनितत्वाद्व्यपदेश्यं । ततोऽन्यदित्यादि तत एव यथा व्यपदेश्यं तथा धूमादग्निरिव तन्नीलरूपं । ततः परमाणुभ्यः परमार्थसद्भ्योऽन्यकल्पितमकल्पितेभ्य एकं बहुभ्यः सामान्यं विशेषेभ्यः । न साक्षादिन्द्रियैरव्यवहितं गृह्यते । किं तर्हि ? व्यवहितमेवार्थान्तरैः परमाणुभिस्तद्द्वारेण परमाणुद्वारेण गृह्यते । न स्वत एवेत्यत्राह—

**ननु च संचयस्येत्यादि** । यावदर्थान्तरस्यैकरूपत्वस्येति । नन्वित्यनुज्ञापने । चशब्दः प्रसिद्धभेदसमुच्चये । नन्विदं प्रसिद्धमन्यः कारको हेतुरन्यो ज्ञापक इति । तस्मादणूनां तत्संचयस्य नीलस्य च कारकसम्बद्धा धूमस्याग्नेश्च ज्ञापकसम्बन्धात्प्रत्यक्षानुमानप्रतिपत्त्योऽर्थ एष गम्यः, अतः साध्यधर्मविकल्पं दृष्टान्तस्येष्टविघाताद्विरुद्धता हेतोरिति वाक्यार्थः । अक्षराण्युत्तानार्थान्येवेति न विवृण्महे ।

अत्राचार्यो दोषद्वयं परिहरन्नाह–नन्विदमस्यैवार्थस्य प्रदर्शनार्थं प्रस्तुतमस्माभिः । नैतदनिष्टमस्माकं । न[1] वा साध्यधर्मवैकल्यम् । यत्सञ्चयस्य ज्ञापकत्वप्रसङ्गात् प्रत्यक्षप्रतिपत्तेस्तद्दोषद्वयमस्मात् प्रत्यपाद्येव । न पुनरेवमेतदस्यैव प्रतिपिपादयिषितत्वात् । तदुच्यते–यदि भवन्मतमिदं प्रत्यक्षं स्यादकारकादेव निष्पादकादेव चक्षुरादिविज्ञानस्य नीलपीतादेः स्वार्थाभिमतादालम्बनभूताद्धेतोर्जायेत । संचयाख्यात्संवृति सतो न परमार्थसतोऽण्वादेरपि स्याद्भवति । तु तस्मान्न प्रत्यक्षम् । ज्ञापकधूमाद्यपेक्षाग्निज्ञानवत् । वैधर्म्येण दाहानुभवनवत् । स्वार्थमात्रालम्बनं वा स्यात् प्रत्यक्षत्वाद्दाहानुभवनवत् । यथोक्तम्—

'अन्यथा[2] दाहसम्बन्धाद्दाहं दग्धोऽभिमन्यते ।
अन्यथा दाह[3]शब्देन दाहार्थः[4] संप्रतीयते' ॥

शास्त्रवार्तासमुच्चये. श्लो० ६६७

अव्यवहितप्रतिपत्त्यात्मकत्वात्प्रत्यक्षस्येति । तस्यैवोपचयहेतुः । अर्थान्तरेणाव्यपेतस्यार्थस्य ग्राहकं प्रत्यक्षं दृष्टम् । यथा दाहानुभवः । तथा तस्य स्वलक्षण-

१ °तथा° । २ अन्यथैवाग्निसम्बन्धा° (वाक्य०प०द्वि०का०श्लो०४२५) । ३ देहं° । ४ देहार्थः

विषयत्वात्प्रत्यक्षस्यार्थान्तरनिरपेक्षता स्यात्, न पुनरस्तीति स्वलक्षणविषयत्वादन-ध्यारोपत्वादिति यावत् । सर्वत्रार्थान्तराध्यारोपवृत्त्यर्थान्तरादुपचयोत्पन्नं न जानामीति, यावदुक्तं भवति स्वलक्षणविषयत्वादव्यवहितप्रतिपत्त्यात्मकत्वात् प्रत्यक्षत्वादित्यादि । अर्थान्तरनिमित्तग्राह्यं वा प्रत्यक्षं दृष्टम् । यथा दाहशब्दजनितज्ञानमिति । एवं तावत्कारकतां संचयस्याभ्युपगम्य दोष आपादितः ।

इदानीं कारकतामपि दूषयितुकाम आह—कारकतापि च संचयस्य नैवास्ति । तस्येति प्रतिज्ञा । परमार्थतोऽसत्त्वादिति हेतुः । अलातचक्रवदिति दृष्टान्तः । परमार्थतोऽसत्त्वं संवृति सत्त्वाद्भवन्मते न घटवत् । यथोक्तम्—

'यस्मिन् भिन्ने न तद्बुद्धिरन्यापोहधिया च यत् ।
घटाम्बुवृत्संवृति सत्परमार्थसदन्यथा ॥' इति ।

यथोल्मुकं[2] भ्रमद्भ्रान्तदृष्टेश्[3]चक्रवदाभाति । न तच्चक्रमस्ति, अग्निकणानां नैरंतर्याभावाच्चक्रस्य परमार्थतोऽसत्त्वाच्चक्रविज्ञानस्याकारकता । एवं संचयस्य संवृत्तिसत्त्वान्नीलविज्ञानस्याकारकता, तथातीन्द्रियत्वादणुनीलानाम् । **इतश्च संचयस्याकारकता प्रत्ययवस्थानमात्रत्वात्** । अवयवमवयवं प्रति प्रत्यवयवम्, अवयवा नीलादिपरमाणवः । तेषामेव संहतैकत्र परस्परासत्त्या । व्यवस्थानमात्रं संचयो न तेभ्योऽर्थान्तरमिष्टं भवताम्, अतः परमार्थतो नास्त्येवासौ संचयः । तमेकं चित्तस्यासतः खरविषाणस्येव सा कारकता ।

अभ्युपेत्यापि संचयस्य सत्त्वं दोषं ब्रूमः । **लोकवत्तु संचयसत्त्वे** । यथा लोकस्याव्युत्पन्नस्यापि समुदायिव्यतिरेकेण सन्नेवावयवी परिमाणान्तरवत् । तत्समुदायो वा योऽस्तु सोऽप्यस्तु परैर्व्युत्पादितः सन्नेवासौ तन्तुपटादिषु बुद्धिशक्तिकार्याभिधानसंख्यादिभेददर्शनादिष्टस्तत्राक्षरार्थानुसारेण व्यपदेशोऽस्येवेति गृह्यताम् । ततश्चाव्यपदेश्यो विषयः । प्रत्यक्षस्य प्रत्यक्षं वा व्यपदेश्यमित्युभयमनृतम् । तत् कथमिति चेत्? । विशिष्टोऽपदेशो व्यपदेश इति विशब्दस्य[4] विशिष्टार्थतामपदेशशब्दस्य हेत्वर्थतां[5] दर्शयति । विशिष्टोऽन्य इत्यर्थः । कुतोऽन्यः? इति चेदुच्यते—ग्राह्यादन्यः । ग्राह्यो नीलादिः, तस्मादन्यः सञ्चयस्तद्व्यपदेशः । तेन संचयेन व्यपदेशेन हेतुना व्यपदेश्यं । किं तत्? अमेयं नीलादि त्वदभिमतप्रत्यक्षप्रमाणगम्यं किं भवति? । तन्नीलादिरूपमनुमेयं प्राप्नोति । व्यपदेश्यव्यपदेशत्वान्न प्रत्यक्षम् । तस्य ज्ञेयस्यास्मादेव हेतोः प्रत्यक्षत्वाभावोऽनुमेयभावश्च साध्यते । तत्त्वज्ञानस्य प्रत्यक्षतानुमानस्य च साध्यते । को दृष्टान्तो? धूमानुमिताग्निवत् । यथा धूमेन व्यपदेशेन साधितोऽग्निरनुमेयोऽप्रत्यक्षश्च तथा नीलं रूपं । यथा च धूमालम्बनोत्पादिताग्निज्ञानमनुमानमप्रत्यक्षं च तथा नीलज्ञानं

१ °ज्ञानमिति° । २ यथोस्तु । ३. °वृत्ते° । ४. व्यपदेश इति विशब्दस्येपेति । ५ हेत्वर्थतान्तरं ।

संयोगोत्पादितमिति। किं चान्यत्। सर्वथा तन्नीलादिविज्ञानं तेन संचयेन व्यपदेश्यं, तदविनाभावात्तस्य। कारकतायामकारकतया वा न कश्चिद्विशेषो व्यपदेश्यत्वसिद्धौ वस्तुनः। कुतोऽर्थान्तरनिमित्तादेव पितृधूमादिवत्। यथा पिता पुत्रस्य जनकस्तेन व्यपदिश्यते कारकेण पुत्रः। धूमेन ज्ञापकेनाग्निरविशिष्टत्वाद्वस्तुनः। ततस्तुल्यो व्यपदेश्यत्वहेतावप्रत्यक्षत्वानुमानसाधनसमर्थे सत्यव्यपदेश्यनिरोधकोऽयमनर्थको विचारः[1]। कारको ज्ञापक इति। कारकत्वमभ्युपेत्याप्येष दोषोऽभिहितः। एवं तावदर्थकृतोऽस्य नीलस्य व्यपदेशः सिद्धो, यत्सिद्धेरप्रत्यक्षानुमेयत्वे सिद्धे, तत्सिद्धेश्च तदज्ञानस्यानुमानत्वं सिद्धयेत्। अव्यपदेश्यत्वादिलक्षणविरोधश्च। एवं तावदर्थतो व्यपदेश्यमेव यदपीष्टमभिधानतो न व्यपदेश्यम्। तन्नीलादिपरमाणुरूपं परमाणुसमूहाभेदादेकं वेत्येते[2] द्वे अभिधानाव्यपदेश्यानेकात्मकत्वे अपि च नैव स्तः नीलरूपस्येति प्रतिज्ञा। दृष्टान्तोऽनुमिताग्निवदिति। प्रतिपत्तिसौकर्यात् प्रागेव हेतोर्दृष्टान्त उक्तः। तद्बलावयवसिद्धेर्हेतुसमर्थनार्थत्वात् दृष्टान्तस्य। हेतुस्तर्हि क? इत्यत्रोच्यते—बहुविषयत्वात्। यथा धूमज्ञानानुमितोऽग्निरपादिविनिवृत्त्युपलक्षितो देशकालादिभेदभिन्नोऽप्यभिधानव्यपदेश्योऽनेकात्मकत्वापन्न एव गृह्यते। तथा नीलार्थोऽपि स्याद्बहुपरमाणुविषयत्वात्। तथा ज्ञानमपीति।

इदानीं प्रागभिहितकल्पनात्मकत्वादिभिर्हेतुभिरनुमानात्पापीयस्त्वं तस्य प्रत्यक्षस्य प्रतिपादयितुकाम आह। **तद्धि नीलरूपनिरूपणमित्यादि**। तदिति प्रागुपदिष्टं विकल्पात्मकत्वं, हिशब्दो यस्मादर्थे। यस्मान्नीलरूपस्य निरूपणमुक्तन्यायेनार्थव्यपदेशेन शब्दव्यपदेशेन वा दृष्टं। स च विकल्प एवं ह्यविकल्पकत्वं नास्त्यतः कल्पनापोढमिति दृष्टं लक्षणं ज्ञानार्थयोरध्यारोपाच्च निरूपणं तस्य। तत्कथमिति चेदुच्यते—**प्रतिपरमाणु** परमाणुं परमाणुं प्रति प्रतिपरमाणु परस्परतः प्रतिभिन्नानि स्वानि तत्त्वानि। यो यस्य भावः स तस्य तत्त्वम्। न सोऽन्यत्र भवति। भवनमेव हि तत्त्वमतो विभिन्नानि प्रतिपरमाणु तत्त्वानि। एकैकस्य परमाणोः परमाण्वन्तरेभ्योऽत्यन्तभिन्नं स्वं तत्त्वं भावान्तरमनपेक्ष्य स्वरसो नैव भवनाद्भावनामेकत्र च साधारणभवनत्वात्परमाणूनां स्वानि तत्त्वानि भिन्नानि। तथा तेषां परमाणूनां नीलादिरूपाण्यप्यनेकरूपाण्येव। तेषां च स्वतत्त्वानां तेषां च नीलादिस्वरूपाणामनेकरूपाणामेकद्वित्रिगुणादिभिन्नानि। यथासंख्यमेकतत्वैकरूपाध्यारोपात्सर्वपरमाणुतत्त्वानामेकस्वतत्त्वाध्यारोपात्। सर्वपरमाणुरूपाणामेकनीलरूपाध्यारोपादर्थान्तरनिरूपणं, स चाप्यध्यारोपो रूपान्तरसामान्यरूपविषयत्वात्। रूपादन्यद्रूपं रूपान्तरं परमाणुरूपात्परमाण्वन्तररूपं रूपान्तरमेवं सर्वाणि परमाण्वन्तररूपाणि तेषां रूपं नीलमित्यभेदेन यत् सामान्यबुद्ध्या गृह्यते। सोऽध्यारोपस्तद्विषयस्तदपि सामान्यं

---

१ विरोधी कोऽयं। २ °वेत्य°।

तदतद्विषयवृत्तत्वात्सामान्यमित्युच्यते । स चान्यश्चार्थो विषयोऽस्येति कृत्वा, ततश्चात्र प्रत्यक्षेऽन्यस्यानपोहः, अनुमाने त्वनग्नेरन्यस्यापोहस्तस्मादतदनपोहात् प्रत्यक्षमविविक्तविषयं स्वविषयाभिमतेऽन्यत्र चापरित्यागेनाभेदेन च वृत्तेर्नानुमानं। स्वविषये सामान्यमात्र एव वृत्तेरतोऽनुमानात्तत्परपरिकल्पितं प्रत्यक्षं पापीयः । संकीर्णतरविषयत्वादिति तस्मान्नाग्न्यनुमानवदेतत् । अग्न्यनुमानतुल्यमपि तन्न भवत्यपोह्यार्थापोहशक्तिशून्यत्वात्तस्मात्सामान्यात्मकतैवाग्न्यनुमानस्य न प्रत्यक्षस्येति तस्य नीलादेरर्थस्य प्रत्यक्षविषयस्य ज्ञानस्य च तदवस्थासंकीर्णरूपता । किं चान्यत् । तदतद्विषयवृत्ततापि न नीलरूपादेस्तद्ज्ञानस्य वोपपद्यते । किं कारणं ? सदसतोः सम्बन्धाभावात् । घटखपुष्पवत् तत उपचरितमत्र तदतद्विषयवृत्तत्वमपीति तत्प्रदर्शनार्थमाह—**प्रज्ञप्तिपरमार्थस्थितसंचयपरमाणुपरिग्रहभेदात्सदसत्परिग्रहाभेदात्मकत्वात्** । प्रज्ञप्तिः सन् संचयः परमार्थसन्तस्तु तथा स्थिताः परमाणवः । तेषां परिग्रहः सदसद्भेदात्मकस्तस्मात्सदसत्परिग्रहाभेदात्मकत्वात्तदतद्विषयवृत्तता । सा च सर्वथा साधारणार्थता । सर्वेष्वेतेषु अनन्तरोक्तेषु हेतुषु ततो मूलहेतुः कल्पनात्मकत्वादित्येवैतैः साधितः, तस्मान्न तत् प्रत्यक्षं न चानुमानवदसंकीर्णस्वविषयमित्येतदर्थभावनार्थाः पुनस्त एव हेतवो व्यापारिताः । प्रत्येकमपि पूर्ववदेतस्मिन्नर्थे योज्याः । इतश्च—**तद्ज्ञानमप्रत्यक्षमप्रत्ययप्रत्ययात्मकत्वाच्छब्दाश्रवणत्वप्रत्ययवदिति** । प्रत्ययः—कारणं हेतुरित्यर्थः । न प्रत्ययोऽस्येत्यप्रत्ययः । कोऽसौ प्रत्ययः ? प्रत्ययो—विज्ञानं । द्वितीयस्य प्रत्ययशब्दस्य विज्ञानार्थत्वात् । अकारणज्ञानत्वादित्युक्तं भवति । कथं पुनः कारणं तद्ज्ञानं संवृत्यतीन्द्रियत्वाभ्यां । यस्मान्नाणुषु न संचये प्रत्ययता तथा प्रतिपत्तिं प्रति द्रव्यसतामविषयत्वात्तस्य । द्रव्यसन्तो हि परमाणवोऽतीन्द्रियत्वादेव न प्रत्यक्षज्ञानहेतवस्तथा नीलत्वादयः संवृत्तिसन्तस्तत्संचयोऽसत्त्वादेवाकारणम् । तस्मादुभयथाप्यप्रत्ययः । स प्रत्ययो नीलरूपमिति । को दृष्टान्तः ? । यथाऽश्रावणः शब्द इति प्रत्ययोऽप्रत्यक्षं च तथेदमपीति । स्यान्मतं—कल्पनात्मकत्वादिभ्यो हेतुभ्योऽनुमानज्ञानं तर्हि चक्षुरादि विज्ञानं भविष्यतीति । अत्रोच्यते—**अनुमानज्ञानमपि च तत्र प्रतिपूर्यते** । कर्मकर्तर्यात्मनेपदं । यत् क्व तत्प्रतिषेधान्न प्रतिपूर्यन्त इति रूपम् । यथायमोदनो विपन्नत्वात्प्रतिमांसवदात्मानं न भोजयति न भुज्यते स्वयमेव तथेदमपि ज्ञानमात्मानमपि न प्रतिपूरयति न प्रतिपूर्यते । कस्माद्धेतोः ? । **सम्बद्धगृहीतस्यान्यथाप्रतिपत्तेः** । सम्बद्ध एव गृहीतस्तस्य सम्बद्धगृहीतस्यान्यथाप्रतिपत्तेस्तस्य ज्ञानस्यान्यथाप्रतिपद्यमानसम्बद्धगृहीतार्थत्वादित्यर्थः । यद् ज्ञानं

---

१ तत्र क । २ तदसतः क । ३ सर्वैथै° क । ग ।

सम्बद्धमेवार्थं गृह्णत्तमेवार्थमन्यथा प्रतिपद्यते तद् ज्ञानं नानुमानमपि सम्पूर्णं भवति। तद् यथा विरुद्धादि ज्ञानं। यथा कृतकत्वान्नित्यः शब्द इति पक्षधर्मज्ञानं शब्दसम्बन्धे घटादिष्वपि नित्यानुगमसम्बद्धं गृहीत्वानित्यशब्दप्रतिपद्यमानं विरुद्धहेत्वाभासज्ञानं भवति। आदिग्रहणात्प्रमेयश्रावणत्वद्वारं नित्यज्ञानं वा शब्दविषयमनैकान्तिकाभासं यथा तथेदमपि न सम्पूर्णमनुमानज्ञानमपीति। अथवा तिष्ठतु तावदित्यादि यावत्प्रत्यक्षविषयत्वाभ्युपगमविरोध इति स्थितम्। तावद् वस्तु विदूरस्थेनागमेनाभ्युपगतेन प्रत्यक्षविषयत्वस्य विरोध इत्येतत्–इदमेवास्मिन् प्रकरणे यदुदाहृतम् तच्चक्षुर्विज्ञानसमंगीत्यादि तदेव न घटत इति वाक्यार्थः। प्रत्यक्षस्य विधिः प्रत्यक्षस्य जन्म तस्य विधानं व्याख्यानं 'संचितालम्बनाः पञ्च विज्ञानकायाः' इति। स एवाभ्युपगमः प्रत्यक्षविधिविधानाभ्युपगमः स्वलक्षणमात्रविषयप्रत्यक्षत्वमेव स्वलक्षणमात्रं विषयो यस्य तत् स्वलक्षणमात्रविषयं किं तत्प्रत्यक्षं तस्य भावः स्वलक्षणमात्रविषयप्रत्यक्षत्वं तस्य प्रत्यक्षविधिविधानाभ्युपगमेन विरोधः समनन्तरग्रन्थोपपादितः[1] से[2] स्थित एव। **चक्षुर्विज्ञानमित्येतदेव तु घटते**। तुशब्दो विशेषणे। किं विशिनष्टि? पूर्वस्माल्लक्षणवाक्यादागमस्यास्याशुद्धतरतां विशिनष्टि। चक्षुषः चक्षुषि चक्षुषा वा विशिष्टं ज्ञानं–विज्ञानमसाधारणविषयं तत्समंगति–समन्वेतीति चक्षुर्विज्ञानसमंगी। कः? सन्तानः। विज्ञानस्य तदर्थैकगमनात्। तद्द्वारेण तत्सन्तानोऽपि समंगीत्युच्यते। तत्समंगिनो नीलविज्ञानं। तदेव प्रत्यक्षं कल्पनापोढमनिर्देश्यं स्वलक्षणविषयमित्यादिवचनं तेन लक्षितस्योदाहरणमिदम्। तदिति प्रत्यक्षीकरणं प्रदर्शनं। यथा 'वृद्धिरादैच्' ( सि. कौ. ) इत्युपलक्षिता एव नयेन[3] इत्युदाहरणं। कथं पुनस्तन्न[4] घटते? तत आह। एवं ते सञ्चयस्येत्यादि यावत्संचितालम्बनकल्पनावैयर्थ्यादिति। एवं ते उदाहरणत्वेष्टौ सत्यां संचयस्य रूपमात्रत्वात्, किं भवति?। संचितालम्बनकल्पनावैयर्थ्यं स्यादित्यभिसंभत्स्यते। रूपमात्रत्वं संचयस्य कुत इति। तद्ग्रहणे तत्प्रत्यक्षत्वात्। यद्ग्रहे यस्य प्रत्यक्षत्वं तत्तावन्मात्रमेव दृष्टं। यथा दाहग्रहे दाहप्रत्यक्षत्वे दाहमात्रमेव, नातोऽन्योऽर्थ इष्टः। एवं संचयग्रहे नीलरूपमात्रमेव। अतः किम्?। संचितालम्बनकल्पनावैयर्थ्यं संचयाभावात्, संचयाभावो रूपमात्रत्वात्, संचितालम्बनकल्पनावैयर्थ्याच्चोदाहरणमेव तु न घटते। चक्षुर्विज्ञानसमंगीत्यादि। अतन्मात्रत्वे संवृत्तिसत्त्वादित्यादि यावदुभयथापि रूपादिग्राहित्वाद् घटादिवत्। अथ मा भूदेष दोष इति न रूपमात्रं सञ्चयः। स एव च गृह्यत इतीष्यते। ततः संचयस्य संवृतिसत्त्वादरूपत्वं खरविषाणवत्, संवृतिसत्त्वं च प्रागुपपादितं अरूपत्वाच्च न चक्षुर्ग्राह्यः स्यात्संचयो

१ समन्ततः ख। २ असौ ग। ३ लापन क। लायन° ख। ४ तत्र क।

रूपादन्यत्वात् शब्दवत् खपुष्पवद्वा । ततः को दोष इति चेदुच्यते । चक्षुनैव चक्षुः स्यात् । रूपस्याग्राहकत्वात् घटवत् जिह्वावत् त्वग्वदित्यादि । कथं रूपस्याग्राहकं चक्षुरिति दृष्टप्रसिद्धिविरुद्धमुच्यत इति चेत् । तवैव दृष्टप्रसिद्धिविरोधावापाद्येते मया । किं कारणम्? उभयथारूपाग्राहित्वात्तस्य । तस्य यदि संचयस्तथाप्यासन्नरूप एवेत्युक्तत्वादचक्षुर्विषयो रूपं ततो रूपस्याग्राहकत्वाच्चक्षुरचक्षुः श्रोत्रवत् । अथासंचितमेव परमाणु नीलरूपमिष्टं तथाप्यतीन्द्रियत्वादचक्षुर्विषयो रूपमतो रूपस्याग्राहकत्वाच्च चक्षुर्न च चक्षुः स्यादुक्तवदिति । सूक्तमुभयथापि रूपस्याग्राहकं चक्षुः, संचितमेव परमाणुनीलरूपमिष्टं । तथाप्यतीन्द्रियत्वादचक्षुर्विषयो रूपमतो रूपस्याग्राहकत्वाच्चक्षुर्न च चक्षुः स्यादुक्तवदिति । सूक्तमुभयथापि रूपस्याग्राहकं चक्षुरिति । एवं तावच्चक्षुर्विज्ञानसमंगीत्यत्र चक्षुषोऽचक्षुष्ट्वाच्चक्षुर्ग्रहणमनर्थकम् । विज्ञानग्रहणमप्यत एवानर्थकमित्यत आह—विज्ञानमपि न विज्ञानं स्यादित्यादि यावत् खपुष्पवदिति । विशेषेण ज्ञानं विज्ञानं तद्भवदभिमतं प्रत्यक्षमुख्यं विज्ञानं न स्यादितरथा कथमाचार्यश्रीमल्लवादी विज्ञानं न स्यादिति स्ववचनविरोधं मायेयदिन्नाविव ब्रूयात्, किं कारणं पुनर्विज्ञानं तन्न स्यात्? । अन्यथार्थप्रतिपत्तेः। अरूपस्य संचयस्य रूपत्वेन प्रतिपत्तेः, संचयत्वेन वा रूपमात्रस्य प्रतिपत्तेः, संचयत्वेन रूपमात्रस्य प्रतिपत्तेः को दृष्टान्तः ? अलातचक्रज्ञानवत् । यथोल्मुकाग्निकणमात्रमर्थं चक्रमिति प्रतिपद्यमानं न विज्ञानमेवं तदपि, आदिग्रहणात् स्थाणुपुरुषज्ञानमित्यादि । एवं तावच्चक्षुरिति विज्ञानमिति च द्वयं दूषितं । चक्षुर्विज्ञानसमंगीत्यत्र समंगित्वमपि दूषयितुकाम आह— न च चक्षुर्विज्ञानं समंगतीति तद्द्वारेण पुरुषाख्यसन्तानैकगमनं समंगतं, ततस्तन्निषेधः । कस्मान्न समंगति चक्षुर्विज्ञानस्य रूपाद्यन्यत्रासंभवात् । न वा तत्सन्तानोऽन्यत्र संभवति । उक्तं हि—'सति संभवे व्यभिचारे च विशेषणविशेष्यभाव इति' । संचयापेक्षो व्यभिचारोऽस्त्यतो विशेष्यत इति चेत् तत्र यस्मान्न संचयो रूपम्, अरूपत्वात् चक्षुर्विज्ञानसंगत्यभावः । स्यान्मतम् । नीलरूपाव्यभिचारादेव तदेकगमनात्समंगीत्युच्यते चक्षुर्विज्ञानमित्येतच्चायुक्तं । तस्याप्यतीन्द्रियत्वाच्चक्षुर्विज्ञानाविषयत्वादरूपत्वम् । अभ्युपेत्यापि त्वन्मतेन । यदपि च तद्रूपं रूप्यत इति रूपम् । चक्षुर्विज्ञानेन किल रूप्यत इति, तद्विषयं स विषयो यस्य तत्तद्विषयं किं तदेकगमनं । कस्य? चक्षुर्विज्ञानस्य, तदपि नास्ति । कस्मात्? अविषयत्वात् । अविषयत्वमतीन्द्रियत्वात्प्रस्तुतप्रत्यक्षस्य[1] । अन्येन्द्रियविषयवत् । यथा शब्दोऽन्येन्द्रियविषयश्चक्षुर्विज्ञानेन न समंग्यते । तथा तदपि रूपमिति । स्यान्मतं—संचयश्चक्षुर्विज्ञानसंगतियोग्यः स्यादित्यत्र क्रमः । संचयविषयमपि चक्षुर्विज्ञानस्य समंगनं

---

१ प्रस्तुत क ।

न्नास्तीति वर्तते । कस्मात् ? असत्त्वं संवृतिसत्त्वात्, खपुष्पवदिति । सद्गमनाभावसाधर्म्येण दृष्टान्तः । एवं तावद्रूपं चक्षुर्विज्ञानं समंगीत्येतानि दूषितानि । इदानीं नीलं विजानातीति च दूष्यम् । तत्र नीलं पदार्थतो दूषितमेव, विजानातीति च दूषितमेव, पदार्थतः रूपचक्षुर्विज्ञानानां संगतेश्च दूषितत्वात् । मा भूदक्षरस्थानं दूषणशून्यमिति कृत्वा वाक्यार्थतोऽपि दूष्यते–**नीलविज्ञानसम्बन्धी न भवति तत्सन्तानः। तदाकारज्ञानोत्पत्तिहेत्वभावात्।** स आकारोऽस्येति तदाकारं ज्ञानं नीलाकारं तस्योत्पत्तिः तदाकारज्ञानोत्पत्तिः । तस्या हेतुः संचयो नीलरूपं वा स्यात् । उभयमपि तन्न भवत्युक्तविधिनैवासंस्तदाकारज्ञानोत्पत्तिहेत्वभावात् । को दृष्टान्तः ? अदग्धस्य दाहज्ञानवत् । यथाऽदग्धस्य दाहानुभवज्ञानं तदाकारज्ञानोत्पत्तिहेत्वभावान्नास्ति । तथा नीलविज्ञानसम्बन्धी न भवति तत्सन्तान इति । एवं नीलरूपतत्संचययोरन्यतरविषयत्वेष्टौ दोषा उक्ताः । इदानीं प्रत्येकं त एव समुदिता इत्युभयैकविषयत्वे दोषं वक्तुकामः पक्षान्तरं ग्राहयति । नीलं च संचयं च प्रत्येकसमुदितकारणत्वाद्विज्ञास्यतीति चेत् । स्यान्मतं–त एव हि नीलपरमाणवः प्रत्येकं शिबिकोद्वाहन्यायेन समुदिताश्च कारणं न चैकैकः । न च समुदायः । तद्व्यतिरिक्तोऽस्तीति पुरुषकारणत्वं ज्ञानस्य तस्मात् ज्ञानोत्पत्तिहेत्वभावासिद्धिरित्येतन्न युगपत् ज्ञानासंभवात् । द्वयोरर्थयोर्युगपदेव ज्ञानाभावादेकैकस्मिंश्चार्थे युगपत् ज्ञानयोरभावाद्भवतः । यथोक्तं—

'विजानाति न विज्ञानमेकमर्थद्वयं यथा ।
एकमर्थं विजानाति न विज्ञानद्वयं तथा ॥' इति ।

स्यान्मतं—हस्तेनानेकबदरामलकाद्यर्थग्रहणवत् स्यादित्येतच्चायुक्तं । ज्ञानस्य क्रियावैधर्म्यात् । ज्ञानं च प्रत्यक्षमुच्यते कल्पनाया ज्ञानव्यभिचारात् । 'प्रत्यक्षं कल्पनापोढं यद् ज्ञानमर्थे रूपादौ' इति वचनादेवं रूपरूपसमुदाययोर्नानात्वे दोषः । **यद्यपि स्यात्तयोरेकज्ञानत्वादेकज्ञेयत्वं** । एक ज्ञानमनयोरित्येकज्ञाने तयोरेकज्ञानत्वादेकमेव ज्ञेयस्तद्भाव एकज्ञेयत्वं दाहानुभववत् । तस्मिन्नेकज्ञेयत्वे इतरेतरत्वेऽन्योन्यात्मापन्नत्वे सति सर्वसर्वात्मवादिता । कथं समुदायार्थान्तरत्वाद्रूपं समुदायमेव समुदायस्वरूपवत् । समुदायो वा रूपमेव रूपानर्थान्तरत्वात् रूपस्वरूपवत् । एवं रसादिघटादिरूपादिसमुदायान्तराभिमतार्थानामर्थान्तरत्वात्सर्वसर्वात्मकत्ववादिता । तस्मात्सर्वपरमाणुनीलानां संचयानर्थान्तरत्वादैक्ये सति समवायग्रहणे युवतिकेशपाशसमुदाये गृह्यमाणे, हिशब्दो यस्मादर्थे, यस्मात्सर्वनीलैक्यं तस्मादेकमेव

---

१ समुदाना° ख ।

नीलं रूपमेककेशगतं गृह्येत । एकमेकं प्रति प्रत्येकैकनीलग्रहणं स्यात् । एकनील-वालग्रहणेऽपि च सर्वनीलकेशपाशग्रहणमेकनीलात्मकत्वात्समुदायस्य । ततश्च यथात्र सद्भावात्सर्वनीलैकता, गुणसद्भावो द्रव्यं नार्थान्तरं संहृत्य सर्वनीलगुणा एकतामापन्नास्तथा रूपादिपञ्चकस्यापि रूपरसगन्धस्पर्शशब्दपञ्चकस्यापि सद्भावादेकता स्यादिति वर्तते । कस्माद्धेतोः ? गुणत्वात्, धर्मत्वादित्यर्थः । न हि वैशेषिकवद्द्रव्यगुणभेदोऽस्तीति कृत्वा दृष्टान्तः, नीलैकवत् । यथा सर्वनीलानां गुणत्वाद्धर्मत्वादेकत्वं तथा रूपरसाद्येकत्वम् । ततश्च सद्भावसिद्धौ गुणानां रूपाद्यैक्ये सति को दोषः ? उच्यते । गुणसद्भावद्रव्यत्वात् । गुणानां संहतिमात्रमेव यस्माद्द्रव्यं तस्मात्सर्वथा पृथिव्यादीनां पृथिव्यप्तेजोवाय्वादीनामेकत्वमिति वर्तते । किं कारणं ? तदेव रूपाद्येकत्वं कारणम् । तत आह—**तेषामपि रूपादिपरमार्थत्वादिति** । रूपादय एव परमार्थो गुणसद्भावद्रव्यत्वात्तेषां चैक्यमतः पृथिव्यप्तेजोवायुघटपटसरित्समुद्रज्योतिरादेः सर्वस्य लोकस्य तदात्मकत्वादैक्यं प्राप्तमिति । तदुपसंहृत्यैवाह—सर्वसर्वात्मकत्वमित्यतः साधूच्यते सर्वसर्वात्मवादितैव । विशेषैकान्तवादिनोऽप्यविशेषैकान्तवादिन इवेति । अविशेषैकान्तवादिनमतिशेते च विशेषैकान्तवादीति तद्व्याचिख्यासुराह—**गुणसद्भावात्मकद्रव्यत्वापादनाय त्वित्यादि** । यावन्न स संचयादृते संभवतीति । तुशब्दो विशेषणार्थः । किं विशिनष्टि ? । रूपादीनामैक्यापत्तेः प्राक् पृथक्स्वरूपैः तस्मात्तैः शब्दादिभिराहङ्कारिकैराकाशाद्यारम्भाभ्युपगमवादिनां विशेषैकान्तवादिनां कदाचिदसंचिताः सन्त्यपि रूपादय इति प्रक्रिया । विशेषैकान्तवादिनां तु संचितयैक्यापत्तिरेव क्वचित्पृथगसञ्चितरूपाद्यनभ्युपगमात्सर्वसर्वात्मकवादातिशय इति विशिनष्टि । व्याख्यानार्थं सद्भावातिशयो मायोपमापर्यायः संचितालम्बनाभ्युपगमाद्रूपादिपरमाणूनामिति ग्रन्थं तत्संचयत्वकारणप्रदर्शनार्थमाह—संचितानामसंचितानां प्रागनभ्युपगमात् । प्रागसंचिताः परमाणुरूपादयः । पश्चात् संचितालम्बनीभूता इति नाभ्युपगम्यते यस्मान्मायास्तनवीयैः । **अवश्यं चैतदेवं भवद्भिरभ्युपगतमेतदिति तदर्थोपदर्शनार्थमागम एवोक्तं हि वः** । हिशब्दो यस्मादर्थे । यस्मादुक्तं हि वः सिद्धान्ते । किमुक्तं ? 'सङ्घाता एव संघातान् स्पृशन्ति सावयवत्वादित्युक्तम् । किं परमाणवः परस्परं स्पृशन्ति ? न स्पृशन्ति । स्पृशन्तोऽपि किं देशेन देशं स्पृशन्ति । सर्वं वा संघातं वा संघाता वा संघातान् स्पृशन्तो देशेन वा देशं सर्वं वा स्पृशन्तीति परिप्रश्नोपक्रमः[2] । तत्र परस्परस्पर्शनिरूपणे इत्यादि । सर्वात्मस्पर्शनास्पर्शनयोर्दोषापादनेन निर्धारितं सङ्घाताः सङ्घातान् देशेन स्पृशन्ति, देशमेवेति । यदि

---

१ तत्त्व° क-ख । २ परप्रश्नोपक्रमः ग ।

परमाणुं स्पृशेद्देशाभावात्सर्वात्मना स्पृशेत्, ततश्च तं[1]त्प्रवेशेन पिण्डोऽणुमात्रकः स्यात् प्रतिपद्यत्वहानं चास्य स्यात् । तथा सङ्घातोऽपीति सर्वात्मना स्पर्शाभावः । अस्प[2]र्शनेऽपि स प्रतिघा[3]त्वाभावः । परमाणुषु वाऽविद्यमानः प्रतिघातः सिकतास्विवासत्तैलं तत्सङ्घातेऽपि न स्यात् । स च दृष्टः सङ्घाते तस्मान्नास्त्यस्पर्शनम् । परमाणूनां संघातानां च तस्मात्संघाता एव संघातान् देशेन स्पृशन्ति । आदिग्रहणाद्गतिप्रतिबन्धाभावदोषस्तेषां स्याद् तं[4]त एव संघाताभावादालम्बनाभावः स्यादित्यादिदोषापत्तेः । देशस्पर्श एवोपात्तः । सोऽपि च स्पर्शो न च संचयादृते संभवति कथंचिदिति साधूच्यते । सद्भावातिशयो मायोपमा इति । एवं नीलं विजानातीति[5] वाक्यार्थोऽपि न घटत इत्युक्तम् । एतत्तु तस्मिन्नभिधर्मे प्रत्यक्षलक्षणोदाहरणवाक्ये संवदत्यर्थतः । केनार्थेन कतमत् । यत्तूक्तं नो नीलं विजानातीति वर्तते । अमानोनाः प्रतिषेधे । नीलं न विजानातीति एतदेवैकं संवदति नान्यत् किञ्चित् । किं कारणं? कदाचिदपि नीलपरमाण्वाकारनियतज्ञानोत्पत्तिहेत्वभावात् । ये तावत्परमाणवो नीला उच्यन्ते । तेषां कदाचिदपि नीलाकारनियतस्य ज्ञानस्योत्पत्तौ हेतुत्वं न भूतं न भवति न भविष्यति चातीन्द्रियत्वादतोऽसौ त्वदभिमतचक्षुर्विज्ञानसमङ्गी, न कदाचिन्नीलं विजानातीति सुनिश्चितोपपत्तिकं वचः । स्यान्मतं संचयस्येन्द्रियविषयत्वान्नीलात्मकत्वाच्च तस्य नीलं विजानातीत्येतच्चायुक्तं समुदायस्यानीलत्वात् । यदि समुदाये संवृति सति नीलत्वं स्यात् [ स्यादेतत्, तच्च नास्तीति न विजानात्येवात्र सम्यक् (?) ] पुनरभावस्य नीलतास्तीति न विजानाति नीलमित्येतदेवात्र सुभाषितमिति । स्यान्मतं । न विजानीयान्नीलं यद्येकं परमाणुमतीन्द्रियं पश्यतीति ब्रूयात्तत्समुदायं वा खपुष्पस्थानीयमिति । किं तर्हि? तानेव परमाणून् प्रत्येकं भिन्नान् संहतान् सर्षपप्रचयवदेकस्थान् पश्यतीत्येतच्चायुक्तम् । भेदतत्त्वाभिमतेत्यादि । भेदा एव तत्त्वं भेदतत्त्वं तद्भावस्तत्त्वं भेदतत्त्वमित्यभिमताः, प्रत्येकं त एव समुदायः, न समुदायप्राधान्यं । किं तर्हि? भेदप्रधान एव समुदायः प्रत्येकसमुदायः संस्तत्परिग्रहेऽपि भेदस्वरूपपरस्परविशिष्टसमुदायपरिग्रहेऽपि शिबिकोद्वाहकन्यायेन प्रत्येकमसामर्थ्येऽपि तत्प्रधानसमुदाये नीलज्ञानोत्पत्तिहेतुसामर्थ्यमस्त्वित्येतस्मिन्नपि च पक्षे परिगृह्यमाणे नीलाभावान्न नीलं विजानाति । कस्मात्तेषामितरेतरनीलत्वेनानीलत्वात् । तानि नीलत्वानि प्रतिपरमाणु भिन्नानि स्वाश्रयपरमाणुतोऽन्यत्र न वर्तन्ते स्वरसोत्पत्तिभङ्गवत्त्वादर्थान्तरासम्बन्धाच्च भावानां तस्मा[6]दितरस्य नीलत्वमितरत्र नास्ति । किं कारणम्? अत-

---

१ स ख । २ नास्त्यस्पर्शनमित्युपसंहारः कृतः, स्पर्शनेऽपि प्रतिघाताभावः इति संभवति । ३ पद्यत्वा° ख । ४ तं तं च क । ५ चेन्न क-ख । ६ न स्या° ग ।

द्रूपत्वात्। तदेव[1] रूपं तद्रूपं न तद्रूपं—अतद्रूपं तद्भावोऽतद्रूपत्वम्। तस्मादतद्रूपत्वात्। न हि तन्नीलमितरस्य नीलरूपं भवति। यदि भवेत्तदेव तत्स्यात् तद्रूपत्वात्तद्वन्न तु भवति। अथवा तद्रूपमस्य तद्रूपं न तद्रूपमस्वरूपमित्यतद्रूपम्। केन? रूपेण जात्याकारादिना, नहि तन्नीलमितरनीलरूपं जात्या नीलत्वलक्षणया सामान्यभूतयाऽऽकारेण वा संस्थानविशेषेण वृत्तपरिमण्डलादिना जातिरूपेणाकाररूपेण वा यत्स्यादनन्याकारयोर्नीलयोः परमाण्वोः। तस्य मते तन्मते न कस्यचिदनुपपत्तेरतद्रूपत्वमन्येन नीलं नीलान्तररूपेणास्ति। तद्वन्नीलान्तरमपि तद्रूपेण नास्ति। आदिग्रहणात्प्रथमक्षणदृश्यं द्वितीयक्षणदृश्यरूपं न भवति। तदपि तद्रूपं[2] न भवतीति। देशतोऽपि देशान्तरदृश्यं रूपं न भवत्यतोऽनन्यत्वकरस्यानुपपत्तेरतद्रूपत्वमनन्यत्वकरस्यानुपपत्तिरत्यन्तव्यावृत्तार्थत्वादर्थस्य इति। परमार्थसन्नीलपरमाणुरेव। ते च परमाणवोऽत्यन्तमितरेतरव्यावृत्ताँसाधारणरूपाः[3], कस्माद्? द्रव्यसद्रूपत्वात्। द्रव्यसतो ह्यतद्रूपम्। यदन्यनिरपेक्षविविक्तस्वरूपत्वम्। तत्र यथा तद्रसरूपेण गन्धरूपेण वा नास्ति द्रव्यसद्रूपत्वात्तथा नीलस्वरूपेणापि नास्ति। तदपि च द्रव्यसद्रूपमाणीयाद्यभावे रथाभाववत्। नीलान्तररूपाभाववद्वा तदभावेऽपि न भवत्येव। नीलत्वशून्यत्वाद्वा नीलान्तरनीलवत्तदपि परनीलं तद्वदनीलमतः कतरत्तन्नीलं स्याद् यद्विज्ञायेत चक्षुषा चक्षुर्विज्ञानसमंगिनेति। न नीलं विजानाति चक्षुर्विज्ञानसमंगी। अनन्यत्वकरस्य जात्यादेरभावादेव वा रूपमिति वा रस इति वात्यन्तभिन्नानां परमाणूनामभेदेन द्रव्यसतां ग्रहणाभावान्न नीलं विजानाति। इतरेतराभावपरमार्थत्वाद्वोक्तन्यायेनैव न नीलं नीलान्तरं चास्ति रूपरसादिवदन्यरूपमिति। न नीलं विजानातीत्येतदेव संवदतीति सूक्तमिति। अत एवेत्यादि। अत इत्यनन्तरनिर्दिष्टनीलार्थचक्षुर्विज्ञानसमंगनाभावात्। एवेत्यवधारणे, वक्ष्यमाणवाक्यार्थापत्तिः। प्रत्यक्षविरोधः[4]—प्रत्यक्षजन्मनो विधायकस्य वाक्यस्यार्थोऽर्थ आपद्यते नो तु नीलमितीति, अत्रेतिशब्दस्य प्रकारार्थवाचित्वात् एवंप्रकारो वाक्यार्थ आपद्यत इति। कतमस्य वाक्यस्येति स्फुटीकरणार्थं प्रस्तुतमेव प्रत्यक्षलक्षणोदाहरणवाक्यं प्रत्युच्चार्य प्रदर्शयति। चक्षुर्विज्ञान इत्यादि, तदेव चक्षुर्विज्ञानसमंगी संचितालम्बनः। पूर्वोक्तः सन्तानः। चक्षुर्विज्ञानसमंगी। संचितमालम्बनमस्येति सञ्चितालम्बनः। सञ्चयं संवृतिसन्तं नीलं रूपं विज्ञानमसदवस्तु नीलाभिमतं जानाति, न सत् किञ्चिदित्ययमर्थो जायते। किं कारणं?। तस्य नीलस्य संचयस्यासतः। चक्षुषा चक्षुरिन्द्रियेण ग्रहणात्। नो तु नीलमेवं भवति। एवंप्रकारमसद्रूपं नीलं न भवति। सदेव हि तन्नीलं न

---

१ °दं ग। २ तदपीतररूपं ख। ३ ° त्ताः सा° ख। ४ ° विधेः ग।

जानाति परमार्थसत् । किं कारणं तन्नीलं न भवतीति चेत्, **परमार्थसत्परमाणुनीलत्वात्** । परमार्थसन्तो हि परमाणव एव नीला न संचयस्तस्मान्न नीलं विजानाति चक्षुर्विज्ञानसमंगीति भावना त्वस्येत्यादि । उक्तोपपत्तिबलादेव त्वदुक्ता भावना नह्यनर्थेऽर्थसंज्ञी न त्वर्थे धर्मसंज्ञीति कथं तर्हि घटत इत्यत्राह–**भावना त्वस्यानर्थेऽर्थसंज्ञी न च कदाचित्कश्चिदप्यर्थे धर्मसंज्ञीति,** तद्व्याचष्टेऽनर्थे संवृति सति समुदायेऽनर्थो हि संवृत्तिसत्त्वात् समुदायस्तदग्रहे तु तद्बुद्ध्यभावात् । यथोक्तं–**यस्मिन् भिन्ने न तद्बुद्धिरिति** श्लोकः[1] । यद्वेत्यादिवदिति त्वन्मतेनैव तस्मिन्नसल्लक्षणे समुदाये द्रव्यसन्नीलसंज्ञी । परमार्थसत्परमाणुनीलसंज्ञी तेषामेवार्थत्वात् । अनर्थेऽर्थसंज्ञीत्येतस्माद्भावनावाक्यादर्थाक्षिप्तमेतल्लभ्यते । न त्वर्थेऽर्थसंज्ञीति । तद्व्याचष्टे–नत्वर्थ एव द्रव्यसति परमाणुर्नील एवार्थसंज्ञी भवति । कस्मात्? तस्यार्थस्यातीन्द्रियत्वादित्येतत्कारणं पुष्कलमस्त्यस्मिन्नसत्कल्पितभावनावाक्य[2] इति दर्शयति । यद्येवमर्थे धर्मसंज्ञी भवतु, नेत्युच्यते । न च कदाचित्कश्चिदप्यर्थे धर्मसंज्ञी । कदाचिदिति समुदायस्यैवेन्द्रियविषयत्वात्तद्ग्रहणकाले च इत्वरकाले वा न धर्मसंज्ञाप्यर्थे भवितुमर्हति । अथवा प्रत्यक्षकालेऽनुमानकाले वा । किं कारणम्? अतीन्द्रियत्वात् । अत्यन्तं सर्वकालं कदाचिदित्यस्य व्याख्यानम् । अग्राह्यत्वात्, कस्य? परमाणुनीलादेः । ततोऽर्थादेतदस्या[3]पन्नमनर्थ एव धर्मसंज्ञीति । तद्व्याचष्टेऽनर्थ एवासति नामादि धर्मसंज्ञापि । किं कारणं? संचयस्य नामादीनां च कल्पनात्मकत्वादनर्थे[4] यावत् कल्पनात्मके संचयेऽनर्थेऽनर्थकल्पनात्मकशब्दादिधर्मसंज्ञी । कस्मात्? कल्पनापोहासंभवात्, समुदाये समुदायाश्रयनामादिषु वा नामजात्यादियोजना च कल्पना तदपोहस्तस्य ज्ञानस्य कल्पितसमुदायतन्नामादिविषयस्य न संभवत्येव । तस्मादसदुक्तैषा भावना घटते । अथवा त्वदीयैरेवाक्षरैरेषोऽर्थो भाव्यते । **अर्थेऽर्थसंज्ञी न,** अर्थे–नीलादौ परमार्थसत्यर्थसंज्ञी न भवत्यतीन्द्रियत्वात्तस्य । तुशब्दो विशेषणे । अर्थे धर्मसंज्ञी नेति वर्तते । यस्तावदर्थ एवार्थसंज्ञी न भवतीति । स कुतोऽर्थे धर्मसंज्ञी भवतीति विशेषस्तुशब्दात् । अर्थापत्त्या पूर्ववदनर्थेऽर्थसंज्ञी तस्मिन्नेव च धर्मसंज्ञीति । ततः किं जातम्? शून्यशून्यप्रत्युपादनावदसद्विषयत्वं दोषजातमपि तस्याः कल्पनायाः । यथा शून्यं शून्येन गुणितं जातं शून्यमेवेति । तथा गणकानां क्वचित्कल्पनमसद्विषयं शिष्यमतिपरिकर्मार्थं तथेदमसद्विषयम् । ततश्चासद्विषयत्वान्निर्मूलकल्पनामात्रसत्यतानि

---

1 पूर्णः श्लोकस्त्वेवम्–यस्मिन् भिन्ने न तद्बुद्धिरन्यापोहधिया च यत् ।
घटाम्बुवत्संवृति सत् परमार्थसदन्यथा ॥

2 पक्ष्यादि° ख । 3 ° प्या° । ग । 4 ° पदेऽ °क–ख ।

बीजात्समुदायकल्पना तद्धर्मकल्पना च निर्मूले द्वे अपि कल्पने । ते प्रमाणमस्य तन्मात्रं, तन्मात्रमेव सत्यं नान्यत्किञ्चित्सत्यं भवत्कल्पिते प्रत्यक्षे तस्मान्निर्मूलकल्पनामात्रसत्यत्वाल्लौकिकेष्टमसलिलादिबीजमृगतृष्णिकादिकल्पनाभ्योऽपि पापीयस्यौ प्रत्यक्षानुमानकल्पने युष्मदीये । यच्चाप्यभिहितमभिधर्मकोशे यत्तदनेकप्रकारभिन्नमित्यादि यावदनेकवर्णसंस्थानं पश्यत इति बुद्धवचनं प्रत्यक्षलक्षणानुषङ्गागतं चक्षुर्विज्ञानसमंगि नीलविज्ञानोदाहरणसंभावनवाक्यवन्नोपपद्यत एवेत्युपपादयिष्यन् न पश्यति इदं पुनर्बुद्धवचनं न प्रमाणमिति, अभिधर्मकोशे निदर्शितं तद्विचार्यम् । तत्रानेकः प्रकारः प्रकृष्टः कारः । कोऽसौ ? अन्योऽन्यातुल्यत्वम् । केन प्रकारेण भिन्नं रूपायतनम् ? नीलपीतादिप्रकारभिन्नम् । तत्र तस्मिन् रूपायतने नैकप्रकारभिन्ने कदाचिदेकेन द्रव्येण चक्षुर्विज्ञानमुत्पाद्यते । कथं पुनरेकेन द्रव्येणोत्पाद्यते ? । यदा नीलादितत्प्रकारव्यवच्छेदो भवति । नीलमेवेदं न पीतादि । पीतमेवेदं न नीलादीत्येकप्रकारव्यवच्छेदो यदा भवति तदा चक्षुर्विज्ञानमेकेन द्रव्येणोत्पाद्यते । कदाचिदनेकेन-कदा पुनरनेकेन । यदा तत्प्रकारव्यवच्छेदो भवति । नीलादिप्रकारव्यवच्छेदो यदा न भवति तदा चक्षुर्विज्ञानमनेकेन द्रव्येणोत्पाद्यते । अस्मिन्नर्थेऽत्रोदाहरणमप्याह—तद् यथा दूरान्मणिसमूहमित्यादि । विप्रकृष्टदेशस्थितं मणीनां समूहमनेकवर्णसंस्थानं अनेकेन वर्णेन संस्थानं—व्यवस्थानमस्य.तमनेकवर्णसंस्थानं पश्यतः, अनेकवर्णमनेकसंस्थानं न पश्यत इति वा .यो नीलपीताद्यनेकवर्णो वृत्तत्र्यस्राद्यनेकसंस्थानो वज्रेन्द्रनीलमरकतसस्यकपुष्परागपद्मरागस्फटिकादिमणिसमूहोऽनेकप्रकारभिन्नः तं पश्यतः पुरुषस्य दूरान्न व्यवच्छेदो भवति, आरात्तु व्यवच्छेदो भवति, यदयमिन्द्रनीलो वज्रादीनामन्यतमो वेति । तत्र कल्पनापोढस्वलक्षणविषयप्रत्यक्षलक्षणचोद्योपक्रमप्रसङ्गेन यत्तर्हीदं संचितालम्बनाः पञ्च विज्ञानकाया इति तत्कथम् ? यदि तदेकतो न विकल्पयति । यच्चोक्तमनेकप्रकारभिन्नैकानेकद्रव्योत्पाद्यज्ञानेत्यत्र कल्पनात्मकत्वप्रसङ्गः, स्वलक्षणविषयत्वप्रसङ्गश्चेति चोदिते तत्परिहारार्थमायतनस्वलक्षणं प्रत्येते स्वलक्षणविषया न द्रव्यस्वलक्षणमिति । कथं तत्कल्पनापेतमित्यत्र विचारः करिष्यते । इदमेतावद्विचारयामो बुद्धवचनम् । कदाचिदेकेन द्रव्येण ज्ञानमुत्पाद्यते कदाचिदनेकेनेति । अत्रापि कथमनेकप्रकारभिन्नसामान्यवृत्तिरूपायतनतायां यावत्पश्यन्त इति वक्तव्यम् । कथं वक्तव्यमिति सम्बन्धः । अनेकप्रकारे भिन्ने सामान्ये वृत्तिरस्य रूपायतनस्य तदनेकप्रकारभिन्नसामान्यवृत्तिरूपायतनं तद्भावस्तादृग्रूपायतनता तस्यां सत्यामनेकप्रकारभिन्नसामान्यवृत्तिरूपायतनतायां तद्रूपायतनं पश्यतः समूहात्मकं तदालम्बनत्वात्तस्य चक्षुर्विज्ञानस्य तद्विषयत्वात् ।

सामान्याख्यसमूहरूपायतनविषयत्वात् । कथं स्वलक्षणविषयं तद् युज्यते? तथा सर्वरूपादिपञ्चविज्ञानकायाः । रूपायतनतद्विज्ञानयोरुदाहरणमात्रत्वात् । कथं स्वलक्षणविषयाः पञ्च विज्ञानकायाः पठ्यन्त इति वक्तव्योऽत्र समाधिः, आयतनस्य सामान्यरूपत्वात्तत्र लक्षणतेत्यर्थः। कथं चेतीत्यादि, यावदेकप्रकारावच्छेद इति । कथमिति हेतुपरिप्रश्ने, चशब्दो दोषसमुच्चये । केन हेतुना तस्यामनेकप्रकारसामान्यवृत्तिरूपायतनतायां । इतिशब्दः प्रकारवाची । इत्थं नानारूपिरूपायतनं पश्यतः संचितालम्बनतायाम**विभागसमवस्थसमूहात्मकत्वात्**। अविभागेनैक्यापत्त्या समवस्था यस्य समूहस्य सोऽयमविभागसमवस्थसमूहस्तदात्मकत्वाद्रूपायतनस्य । कथमनेकप्रकारावच्छेदो न भवितुमर्हतीत्यर्थः । किमिव? **मणिसमूहप्रभानुविद्धवर्णसंस्थानवत्** । यथा नानावर्णानां मणीनां समूहे तत्प्रभयानुविद्धे वर्णसंस्थाने नास्त्येकप्रकारावच्छेदः। तथैकद्रव्यावच्छेदाभाव इति। किं चान्यत्–एकस्य च द्रव्यस्य कदाचिदग्रहणात् । एकस्य च द्रव्यस्य परमाणोः सर्वदाप्यतीन्द्रियस्य ग्रहणाभावादेकेन द्रव्येण कथं चक्षुर्विज्ञानमुत्पाद्यते? न कदाचित् कथंचिदुत्पाद्यत इत्यर्थः । तस्मात्कदाचिदेकेन द्रव्येण ज्ञानमुत्पाद्यते यदा नीलादिप्रकारव्यवच्छेदो भवतीति किमेतदबुद्धवचनं बुद्धवचनमिति चिन्त्यताम्। किमिव पुनरेकस्य द्रव्यस्य कदाचिदग्रहणाच्चक्षुर्विज्ञानं नोत्पाद्यत? इति चेत् । उच्यते–रसानास्वादनरसाज्ञानवत्, रसनेन्द्रियेणानास्वादिते यथा रसज्ञानं नोत्पद्यते, एवं चक्षुषाऽगृहीतेषु चक्षुर्विज्ञानं नास्ति । यदि चास्य बुद्धवचनस्य बुद्धवचनत्वसिद्ध्यर्थमेकेन द्रव्येण ज्ञानमुत्पाद्यत इत्यभ्युपगम्यते तत एकद्रव्यज्ञानोत्पादने तु संचितालम्बनकल्पना निरर्थिकैव। यदा चैवं प्रत्येकं चक्षुर्विषयताणूनामिष्यते तदेदमपरं बुद्धवचनमबुद्धवचनं निरर्थकं च जायते । कथमेतत्? संचितालम्बनाः पञ्च विज्ञानकाया इति एतस्य चासत्यत्वे तदसत्यता स्थितैवेति परस्परतो वचनद्वयविषयोऽभ्युपगमविरोध इति। अत आह–तदभ्युपगमविरोधः। किं चान्यत्–प्रकारावच्छेदेत्यादि । यावत्संचितगतेरेव। तत्प्रकारः अवच्छेदः तत्प्रकारावच्छेदः। अनेकप्रकारावच्छिन्नत्वमित्येतान्यपि ज्ञानानि भवितुमर्हन्ति । कस्मात्? रूपायतनस्य संचितगतेरेव संचितमेव हि रूपायतनं गम्यते वा संचितमतो न प्रकार इति ज्ञानं घटते। प्रकृष्टः कारः प्रकारः । नीलः पीत इत्ययमस्माद् विशिष्ट इति। परस्परतोऽत्यन्तभेदाभावे प्रकारभावादभेदगतिः । सामान्येन तु प्रकारज्ञानं घटते तथावच्छेदोऽन्यस्मादन्यस्य भेदाभेदविकल्पनात् तथानवच्छेदः । अनेक इत्यनेकेन च प्रकारेण भिन्न इति भिन्नानामभेदगतिः । सञ्चितगतेरभेदगतेश्च न प्रकारादिज्ञानान्यकल्पनात्मकानि स्वलक्षणविषयाणि

१ कतमत् । क–ख ।

च भवितुमर्हन्ति । किमिव? नरसिंहवत्। यथा नरस्याकारोऽधस्त्यः सिंहस्याकारः शिरोभागः । तदुभयाभेदगतेर्नरसिंह इत्युच्यते । एवं प्रकारादिज्ञानान्यपि भिन्नेष्वभेदकल्पनादेव स्युर्नान्यथेति, नरसिंहे च नरसिंहाविति भिन्नयोरभेदगत्यभावाद्दृष्टान्ततेति चेन्न, संचययोरेवाभेदरूपत्वात् । नरसिंहानेकप्रकारगतिरपि हीत्यादि । तयोर्हि प्रत्येकं नरसिंह इति च भिन्नयोरपि प्रकारगतिर्यस्मान्नरत्वसिंहत्वसंचययोर्नीलादिपरमाण्वादिद्रव्याणां पूर्वभेदेन दर्शनात् अभेदकल्पनात्मिका भेदगतिरिति युक्ता, न तथा तु अभ्युपेतेत्यादि । नरसिंहप्रकारगतिमेव च । असंचये तु तद्द्रव्येष्वणुष्वित्यादि । संचितालम्बनाः पञ्च विज्ञानकाया इति यदुक्तं त्वया तद्विस्मृत्येदमुक्तम् । यदेतदनेकप्रकारभिन्नं रूपायतनम् । तत्र कदाचिदेकेन द्रव्येण ज्ञानमुत्पाद्यत इति । चक्षुर्विज्ञानसमंगी नीलं विजानाति नो तु नीलमित्येतदपि विस्मृत्येदमुक्तम्। कदाचिदनेकेन यदा तद्व्यवच्छेदो न भवति । तद् यथा—मणिसमूहमनेकवर्णसंस्थानं पश्यत इति । नीलपीताद्यनेकरूपस्य युगपद्ग्रहणाभ्युपगमे नीलैकरूपविज्ञानविरोधात् । इत्यलं प्रसङ्गेन ॥

प्रकृतमुच्यते—द्रव्यसत्स्वणुषु नीलपीतादिप्रकारग्रहणमेव नास्ति । तदसंचये किं कारणमसंचितस्योदर्शनात् । असंचितानामदर्शनमतीन्द्रियत्वादित्युक्तम् । कुत एवं तद्व्यवच्छेदादि? । सति हि दर्शने तद्व्यवच्छेदाऽनवच्छेदप्रकारभिन्नत्वज्ञानानि संभाव्येरन् । असति दर्शने दूरादेव तानि न स्युः । एवं तावदेकेन द्रव्येणेत्युक्तं । यदपि चोक्तमनेकेन द्रव्येण कदाचित् ज्ञानमुत्पाद्यत इत्यस्मादनेकेनेति वचनात्तस्यानेकद्रव्यसंवृतिसत्त्वात् सामान्यता । सामान्यत्वादसत्कल्पनं तत्तद्विषयाः पञ्च विज्ञानकाया असत्कल्पनविषयत्वादनुमानतदाभासज्ञानवदप्रत्यक्षमप्रमाणं वा दूरान्मणिसमूहदर्शनवद्वेति न स्वलक्षणविषयाः प्रसक्ताः । न च केवलं स्वस्वलक्षणविषयतैव दोषः । किं तर्हि? एकविज्ञानमनेकविषयतापि दूरदर्शनवदेवेति बुद्धवचनासमंजसत्वप्रतिपादनप्रसङ्गेनेदमप्युपन्यस्तं यदपि च बुद्धेनोक्तमित्यादि । यावद्धर्मांश्चोत्पद्यते मनोविज्ञानमिति । यद्यनेकेन द्रव्येण ज्ञानमुत्पाद्यते साक्षाद्बुद्धेनोक्तम् । यदपि च द्वयं प्रतीत्येत्यादि विरुध्यत इत्यभिसम्बन्धः । आध्यात्मिकमायतनं बाह्यं च द्वयं प्रतीत्य विज्ञानस्योत्पत्तिर्भवतीत्युक्त्वा स्वयमेव पुनः प्रतिपृच्छ्य व्याक्रोति । कतमद्द्वयं प्रतीत्य च दुःप्रतीत्य रूपाणि च प्रतीत्येत्यादि । विभज्य वाच्यं गतार्थमेव तत् । द्वयषट्काद्—विज्ञानषट्कमुत्पद्यत इति पूर्वपक्षः । तथा चाह—

---

१ °पेत्येत्या° ग । २ °स्व द्° क । ख्व । ३ एतद्° क–ग । ४ बा ह्यं° ग ।

"विजानाति न विज्ञानमेकमर्थद्वयं यथा ।
एकमर्थं विजानाति न विज्ञानद्वयं तथा ॥" इति ।

अत्रोत्तरमाह–अत्रापि चक्षुः प्रतीत्य रूपाणि च प्रतीत्य चक्षुर्विज्ञानस्योत्पत्तिर्भवतीति द्वयी गतिः। बहुवचननिर्देशस्य संचयापेक्षयाऽतीन्द्रियाणामपि रूपाणामरूपाणां व्यक्तिपदार्थाश्रयः स्यात्। जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामिति जातिपदार्थाश्रयो वा। तत्र यदि व्यक्त्यपेक्षो निर्देशः। संचयाधारतया ततोऽयमेव संवृतिसत्सामान्यासत्कल्पनविषयाः पञ्च विज्ञानकाया न स्वलक्षणविषया इति दोषः। अथ द्रव्योक्तमेतज्जातीयाः परमाणव एकरूपनिर्देशेन सर्वे निर्देष्टव्या इत्येकस्मिन् बहुवचनं। तत इहाभ्युपगमविरोधः।अभ्युपगतं त्वयातीन्द्रियाः परमाणव इति तेन विरोधः। अस्मिंश्चाभ्युपगमेऽन्यदप्यनिष्टापादनमुच्यते। **बुद्ध्यादेरपि चैन्द्रियकत्वमतीन्द्रियत्वाद्रूपवदिति**, बुद्धिसुखदुःखेच्छाद्वेषवेदनादयो धर्माश्चाक्षुषाः स्युर्भवत्परिकल्पिताः। अतीन्द्रियत्वाद्रूपवत्। रूपं वा न चक्षुर्ग्राह्यं स्यादतीन्द्रियत्वाद्बुद्ध्यादिवत्। ब्रूयास्त्वं नन्वतीन्द्रियत्वं चक्षुर्ग्राह्यत्वं च परस्परतो विरुध्येतेति तन्मा मंस्थाः। भवतोऽनिष्टापादनपरत्वाद्भवद्बुद्धिनिवर्तनफलत्वाच्चास्य प्रयोगस्येति। अथापि यश्चात्र विरोधः संभाव्येत स तुल्यः। परमाण्वैन्द्रियकत्वेन परमोऽणुः परमाणुः। अणुशब्दः सूक्ष्मपर्यायः। परमशब्दः तदतिशयवाची, स चातीन्द्रियत्वे घटते। तस्यातीन्द्रियस्यैन्द्रियकत्वं चाक्षुषत्वं यथा०◁विरुद्धमेवमिदमपि बुद्ध्याद्यैन्द्रियकत्वं तुल्यमिति। समानदोषतया विरोधोद्भावनमस्तु, को दोषः? । किं चान्यत्? चक्षुः प्रतीत्य रूपाणि च प्रतीत्य चक्षुर्विज्ञानमुत्पद्यत इति वातीन्द्रियत्वादनुमानविरोधः। स्थूलानां सूक्ष्मपूर्वकत्वात्कार्यानुमानसिद्धाः परमाणवः। तस्मान्नित्यानुमेयानां तेषां चक्षुर्विषयत्वाभ्युपगमेन च तयोरनुमानविरोधिता। किं चान्यत्। उक्तं च–**उक्तभावनावत्स्ववचनविरोधोऽपि**। उक्ता भावना तद्वदुक्तभावनावदेवमेव च परमाणुरतीन्द्रियत्वाच्चाक्षुषश्चेत्यनुमानविरोधः। भावनयोक्तया तुल्यत्वादतीन्द्रियाभिमतः परमाणुः चक्षुर्विषयतामायातीति ब्रुवतः स्ववचनविरोधोऽपि। **वादपरमेश्वरसंश्रयश्चैवम्**। एवं च भवत एकान्तवादिनस्तत्त्यागेनानेकान्तवादाश्रयः। वादाः सर्वे एव लोकं स्वसात्कर्तुं समर्थत्वाल्लोकस्येशते एकान्ता अपि, तेषां तु सर्वेषामनेकान्तवादः परमेश्वरस्तद्वशवर्तिनामीष्टे तेषां स्वार्थोन्नयनसमर्थानामपि परस्परविरोधदोषवतामुदासीनमध्यमनृपतिवत्संध्यादिषाड्गुणान्यतमगुणाश्रयिणां विजिगीषूणां परार्पणलक्षणसंश्रयगुणाधारः परमेश्वरः स्याद्वादः। तत्संश्रयेणैव स्ववृत्तिलाभात्तदसंश्रये परस्परकायविलोपात्।

१ ०◁ एतच्चिह्नाङ्कितो विपर्यस्तः पाठः क-ख-प्रत्योः।

स्वयं विनाशाच्च तेषां। लौकिको व्यवहारनय आह। न च नस्तेन सह विरोधः। कस्मात्? तस्य लोकनाथत्वात् । लोको हि व्यवहारनयस्तद्वशवर्तित्वेन तन्मतविलोकनात्तस्य। लोकस्य नाथत इति लोकनाथः स्याद्वादः। कस्मात् स[1] हीनो[2]? यतो विलुप्यमानस्यैकान्तवादिभिर्लोकतत्त्वस्य लोकसारस्य सम्यग्दर्शनरत्नस्य त्राता त्राणशीलस्त्राणधर्मा साधुत्राणकारी वेति । कथं त्रातेति चेत्। सर्ववादभेदेत्यादि । लोकभूतानां सर्ववादानां भेदाः सर्ववादभेदाः । नित्यानित्याद्येकान्तास्तेषां यथार्थानि यथार्थभावाः । स्वविषयसमर्थभाविता तेषां लोकसंवादेनोपग्राहयित्वा परस्परसाम्यावस्थापनेन पालनात्त्रातेत्युच्यते । इतर आह । कथं संश्रय इति चेत् । अस्तु तावद्वादपरमेश्वरत्वं लोकत्राणात् स्याद्वादस्य । लोकत्राणं च परस्पराविरोधोपपादनेनैकीकरणाच्च तेषाम् । वादपरमेश्वरसमाश्रयः कथमेकान्तवादानामिति । अत्रोच्यते–अनेकात्मकरूपायतनाभ्युपगमात् । अनेक आत्मा यस्य तदिदमनेकात्मकं रूपायतनं यत् तत्, एकेन द्रव्येण कदाचिज् ज्ञानमुत्पादयति कदाचिदनेकेनेति तद्व्यवच्छेदाव्यवच्छेदाभ्यामिति तदभ्युपगमात् स्याद्वादसमाश्रयः। स्याद्वादैकदेशाश्च नया एकान्तवादाः, यथोक्तम्–

भद्दं मिच्छादंसणसमूहमइयस्स अमयसारस्स ।
जिणवयणस्स भगवओ संविग्गसुहाहिगम्मस्स ॥

[ सम्मतितर्के का. ३ गा. ५९ ]

नैताः स्वमनीषिकाः। लक्षणमपि तथैव नयानाम्, उक्तं हि–'द्रव्यस्यानेकात्मकत्वेऽन्यतमात्मैकान्तपरिग्रहो नयः' । स्वप्राधान्येनार्थनयनान्नयः। स च मिथ्यादृष्टिरनेकाकारार्थस्य विपरीतप्रतिपत्तित्वात् । अनेकात्मकवस्तुप्रतिपत्तित्वात् स्याद्वादस्य याथार्थ्यम् । कथं पुनर्लोकभूतेन व्यवहारनयेनैकान्तवादिभिर्गृह्यन्त इति चेत् । लोकनाथसमाश्रितत्वात्तेषां । लोकनाथपक्षसमाश्रय एव प्रतिवादिपक्षाभ्युपगमः । स निग्रहस्थानमेकान्तवादिनामभ्युपगमसमकालमेवावसितो वादं प्रति । अत्र चैक[3]रूपायतनाकारतयेत्यादि । त्वयापि स्याद्वाद्यभ्युपगतानेकात्मवस्त्वेकानेकत्वानेकान्तवादोऽभ्युपगत एव । यस्मादनेकप्रकारभिन्नमित्यादि । यावदनेकवर्णसंस्थानं पश्यत इति । अत्र च वाक्ये एकमेव रूपायतनं ज्ञानाधारमभीष्टं यस्मात्तदाधारतया पुनस्तत्रेत्यधिकरणवाचिप्रत्ययात्तेन तत्रशब्देनानन्तरनिर्दिष्टमेव रूपायतनमुक्तमव्यतिरेकमभेदं तस्य वस्तुनः आगृह्योक्तं । तस्यैवारूपरूपता पुनर्दर्शिता, कदाचिदेकेन द्रव्येण कदाचिदनेकेन ज्ञानमुत्पाद्यत इति ब्रुवता रूपायतनस्यैवैकानेकसंख्यानिर्देश्यत्वमनभ्युपगच्छता

१ सहितोऽमुतो क–ख। सहितो–युतो ग। २ हि–निश्चयेन इनः–स्वामी। ३ ° वाद° क–ख।

कथं तत्र शब्दसामानाधिकरण्यमापादयितुं शक्यते ? । यदि तदेकमनेकं च न स्यात् । तथा इतरथा तत्र च रूपायतनेऽन्यत्र वेति स्यान्न तु भवति । तस्मादेवं चेत्यादि । एवं चोक्तविधिना तस्य त्वयैवोक्तस्य रूपायतनस्य एकस्यैवैकतानेकता च । अतस्त्वयैवोक्ता । कस्मात् ? । तथाऽविभक्तेत्यादि । तेन प्रकारेण तथा-अविभक्तं तत्त्वं यस्य तदिदमविभक्ततत्त्वम् । तद्भावस्तत्त्वमेकानेकत्वाद्यविभक्त-वस्तुतत्त्वम् । ०८ तेन तथाविभक्ततत्त्वेन ज्ञानोत्पत्तेरिति हेतुः । कस्मिन् ? साध्ये । तस्यैवैकानेकतायां । दृश्यते हि तदेव रूपायतनमेकमनेकं च पर-माणवस्तत्समूहश्चेति ज्ञानोत्पत्तिर्दूरान्मणिसमूहमनेकवर्णसंस्थानं पश्यत इत्युदा-हरणमपि । एवमेवैकानेकरूपद्रव्यरूपायतनत्वे साध्ये चक्षुर्विज्ञानाधारस्य वस्तुनः साधर्म्यदृष्टान्तत्वं भजते । नैकान्तैकानेकरूपत्वे । ततश्चावश्यमेषोऽर्थ आपद्यते । स्यादेकं पररूपायतनं स्यादनेकं रूपायतनमिति । कस्मात् ? स्निग्धरूक्षत्वाभ्यां चै-वैक्यपरिणामापत्तेस्तत्समूहग्राह्यत्वादेकं द्रव्यार्थावस्थानात्परमाणूनां स्वरूपभिन्नानां भेदादनेकम् । अत[1] एव द्रव्यं रूपादिगुणपर्यायपरिणामापत्तेरद्रव्यं प्रति स्वम-साधारणरूपादिपरिणामापेक्षया स्वलक्षणविषयं साधारणीभूतभेदात् समूहापेक्षं चाक्षुषत्वादिपरिणामापत्तेः सामान्यविषयम् । यथोक्तम्—"भेदसङ्घाताभ्यां चाक्षुषाः" इति ( तत्त्वार्थ० अ. ५ सू. २८ ) उक्तहेतुवदिति । तथाविभक्ततत्त्व-ज्ञानोत्पत्तेर्भेदाभेदात्मकज्ञानोत्पत्तिवदेतदपि वस्तुभेदात्मकमिति । इतर आह— ननु कदाचिच्छब्दः कालान्तरवचनः । तस्मिन्नेव हि वस्तुनि कदाचित्काला-न्तरे ज्ञानमेकाकारमुत्पद्यते कदाचिदनेकाकारम् । ज्ञानस्यैवाकारवत्त्वान्निराकारबाह्य-वस्तुपक्ष इति । अत्रोच्यते—तन्नैककाल[2] एवोभयरूपत्वात्, एकस्मिन्नेव हि काले नीलपरमाणुसमूहाकारज्ञानस्य भेदाभेदात्मकत्वं दृष्टमतो न सम्यगुक्तं कदाचि-च्छब्दः कालान्तरवचनस्तस्मादेकाकारं कदाचित्कदाचिदनेकाकारं ज्ञानमुत्पद्यते तस्मिन्नेव वस्तुनीति । तस्माच्चैककाल एवोभयरूपत्वात् स्यात्तत्तत् तदेव तद्वस्तु परमा-णुद्रव्यसमूहाभेदात् । स्यान्न तत्तत् रूपादि परिणामभेदात् । हेत्वन्तरमप्यत्रोच्यते-ग्रहणापदेशविशिष्टार्थत्वात् । ग्रहणं—ज्ञानं ज्ञानमेवापदेशो हेतुः । तेन हेतुना विशिष्टो ग्रहणापदेशविशिष्टश्चासावर्थश्च तद्भावो ग्रहणापदेशविशिष्टार्थत्वम् । यस्मा-च्चक्षुर्विज्ञानाद्धेतोर्विशिष्टोऽर्थो रूपं समुदायात्मकं गृह्यते तस्मादनेकात्मकं तद्वस्तु । को दृष्टान्तः ? अनेकवर्णमणिरूपवत् । एक एव वा मणिर्मेचकः स्फटिकाद्य-न्यतमस्तद्रूपवत् । नानावर्णानां वा मणीनां समूहस्य रूपवत् । यथा तद्ग्रहणा-पदेशविशिष्टज्ञानं परिच्छिन्नविभिन्नरूपं तथा चक्षुर्विषयाभिमतं वस्तु एकपुरुषपि-

---

१ तत ग । २ तन्नैक ० ग ।

तृपुत्रादिवद्वेति । ग्रहणापदेशविशिष्टत्वसाधर्म्यदृष्टान्तान्तरम् । यथैकः पुरुषोऽनेकसम्बन्धिजनापेक्षया पिता पुत्रो भागिनेयो मातुल॰ इत्येवमादिव्यपदेश्यत्वं भजते । न चास्य विरोधसङ्करानवस्थाप्रसङ्गदोषा ग्रहणापदेशविशिष्टार्थत्वात्, एवं चक्षुर्विज्ञानविज्ञेयं वस्तु प्रतिपत्तव्यम् । अतोऽनपेक्षितेत्यादि । अत एव कारणाद्येऽत्र चोदयन्ति परस्परविरुद्धानां कथमेकत्र संभव इति । तेषां तदनपेक्षितस्वाभ्युपगममनेकान्तदूषणमापद्यते । स्वाभ्युपगमः स नापेक्षते यस्मिन् दूषणे तदनपेक्षितस्वाभ्युपगममनेकान्तदूषणम् । तद्यथा–सर्वं सर्वात्मकमविशिष्टं प्रतिज्ञाय परिणामभेदव्याख्यानं चानपेक्ष्यानेकान्तदूषणम् । देशकालकृतात्यन्तविशिष्टत्वं प्रतिज्ञाय सन्तानाविशेषव्याख्यानमनपेक्ष्यानेकान्तदूषणम् । असत्कार्योत्पत्तिं प्रतिज्ञाय तुल्यजातीयद्रव्यगुणान्तरारम्भनियमव्याख्यानं चानपेक्ष्यानेकान्तदूषणं च । कस्माद्धेतोः ? **अविभातैवमर्थ्यपूर्वाभ्युपगमत्वाद्वा** । एकान्तवादिनामुक्तानेकान्तस्वरूपोऽर्थ एवमर्थः, तद्भाव एवमर्थ्यमविभावितैवमर्थ्यं, पूर्वाभ्युपगमश्च यैस्त इमेऽविभावितैवमर्थ्यपूर्वाभ्युपगमा एकान्तवादिनस्तद्भावादविभावितैवमर्थ्यपूर्वाभ्युपगमत्वादुन्मुग्धभ्रान्तोन्मत्तादिवदनपेक्षितस्वाभ्युपगमानेकान्तदूषणं तस्मात् । कस्य वयं विशेष्यायमेवोन्मुग्धो भ्रान्त उन्मत्तो वेति दोषं ब्रूमः ? । सर्व एव यूयमेव दोषद्रष्टारः । किं तपस्विना विशेषैकान्तवादिनैव । परोस्तं वादिपरमेश्वरपरिरक्ष्यलोकतत्त्वविलोपनोद्यमितेति । अत आह–न विशेषदोषः कस्यचिदपीति प्रागभिहितम् । सम्बन्धागतकल्पनात्मकत्वापादनचोद्यदूषणमनुक्त्वा तदभ्युपगमेन परिहारोक्तिरायतनस्वलक्षणं प्रत्येते स्वलक्षणविषया न द्रव्यस्वलक्षणं प्रतीत्येतत्तु व्याख्यानं प्रागुच्चार्य चोदितमेव । दोषं च लपित्वा प्रतिष्ठापितवानसि, ▷॰ स्थिरीकृतवानसीत्यर्थः । यत्तु समस्तालम्बनमित्यादि यावदित्येतत्प्रतिष्ठापितमेव स्थिरीकृतमिति ।

एष तु विशेषः कल्पनात्मकत्वदोषादन्यो दोषः कतमः ? अज्ञानत्वप्रसङ्गस्तद् यथा–स्फुटतटक इत्यादि यावत्कुतः प्रत्यक्षत्वमित्येतद्रूपदर्शितमिति गतार्थम् । योऽपि चैकाकारेत्यादिचोद्यप्रत्युच्चारणमेतद्यावत्सञ्चितालम्बनतायाम्, एतदुक्तं भवति–यदि तदेकतो न विकल्पयति कथं संचितालम्बनता । कल्पनानन्तरीयका हि सा कल्पनामन्तरेण संभवतीति चोदिते तत्रोत्तरो वक्ष्यमाणार्थस्तस्यासमाधिरभिधीयते । स एव च किलास्वलक्षणत्वदोषपरिहारोऽभिमतोऽर्थद्वयवाचित्वाविरोधादस्य वा कस्येति तत्प्रत्युच्चारयति सव्याख्यानमनेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमित्यादि यावत्तेषु पृथक्क् पृथग्ग्रहणाभावादिति। गतार्थः।।पिण्डार्थस्तु–यद्यपि परमाणुसमूहजन्यत्वान्न ज्ञानमर्थतः सामान्यगोचरं तथापि रूपं रसो

१ ॰कृताद् यत्र॰ ग । २ ॰त्वं॰ क–ख । ३ ॰बोध॰ ग ।

वा स्वार्थोऽन्यापृथक्त्वादर्थान्तरकल्पने तस्य ज्ञानस्यापटुत्वात् । तच्च विज्ञानमुत्पादयितुं शिबिकोद्वाहकवत्संहत्य समर्थाः परमाणवो नान्यथेति। सामान्यगोचरताऽस्तु। को दोषः ? । यदि तद्भिन्नेष्वभेदं यदुत्पद्येत तस्मात्कल्पनात्मकं । न तु भिन्नेष्वभेदैकाकारपरिकल्पनात्तदुत्पद्यत इति । अस्यार्थस्य दृष्टान्तः, यथा हि–शमीशाखापत्रेष्वित्यादि। यथा सर्वपत्रालम्बनं ज्ञानमन्तादिमध्याविवेकेनोत्पद्यते । एवं प्रत्यक्षमपि । स्यान्मतम्–तद्व्यतिरेकेण पत्रे समुदाये च यथा ज्ञानं प्रत्यक्षमपि तथा स्यादिति, एतच्चायुक्तं । न च सङ्घातः कश्चिदेकोऽस्ति । तेषामनारब्धलक्षणकायत्वात् । न हि समुदायो वैशेषिककल्पितकायद्रव्यवत् पृथगस्ति । नापि परिणामान्तरमापन्नं । तेषां कारणभूतानां क्षणिकत्वादारभ्य निष्ठाकालभेदावस्थानाभावादिति । एवमणुष्वपीति दार्ष्टान्तिकं निदर्शयति । अत्रोत्तरमुच्यते–अयमसमाधिरेव। कुतः ?। अर्थस्यास्य जरत्कुटीरवदारोहणाक्षमत्वात् । त्वद्वाक्यजनितस्य प्राक्[1]चोदितापायस्यायं समाधिरप्यसमाधिरेवाङ्गीकृतार्थविनाशित्वात् । शब्दकृतकत्वाभिव्यक्तिस्थापनार्थप्रवृत्तवैशेषिकवत् । वैशेषिकस्येव वैशेषिकत्वं[2] । अचाक्षुषप्रत्यक्षस्य गुणस्य सतोऽपवर्गः । कर्मभिः साधर्म्यं सतो लिङ्गाभावात्कायत्वादित्यादिभिरनित्यत्वं वैशेषिकत्वात्सिद्धं कृतकत्वं च तस्याभिव्यक्तिस्थापनार्थंप्रवृत्तस्य वैशेषिकस्येवाङ्गीकृतार्थनाशित्वमेवमनेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमित्यर्थवचनयोर्दोषः । तद्व्याचष्टे कुतस्तत्साधर्म्यमिति चेदुच्यते–[3]विषयतां प्रतिज्ञाय **तदतद्विषयतया तदतद्भूतसामान्यगोचरोपसंहारात्** । स चासंश्च विषयोऽस्य संस्तदतद्विषयस्तद्भावस्तदतद्विषयता तदतद्भूतं सामान्यं तद्गोचरोऽस्य विषय उपसंहारस्य तस्मादुपसंहारात् । स चान्यश्च विषयः सामान्यस्येति । तदन्यतरत्रै[4]वं न प्रवर्तते । एकतरत्वाद्दृष्टत्वात् । त्वन्मतेनैव प्रतिष्ठं नियतत्वाद्भावानां नैकरूपमपि । तत्र च तत्र वृत्तं न चातोऽन्यत्र तत्रावृत्तत्वात्तन्न भवत्यतत्रावृत्तत्वादतन्न भवति। न ततस्तदतद्भूतं सामान्यं गोचरोऽस्योपसंहारस्य यः स तदतद्विषयतया त्वयाङ्गीक्रियते[5] । तस्मात्तदतद्विषयतया तदतद्भूतसामान्यगोचरोपसंहारादङ्गीकृतप्रत्यक्षविनाश इत्यत आह–नन्वत एव न प्रत्यक्षं । **स्वार्थे सामान्यगोचरत्वादनुमानवत्** । स्वार्थ इति स्वविषये स्वग्राह्ये वस्तुनि, सामान्यगोचरत्वाद् ज्ञानमप्रत्यक्षं दृष्टम् । यथानुमानमिति, अनुमानमपि वा नेति नानुमानमपि तत् स्यात् स्वार्थे सामान्यगोचरत्वात् प्रत्यक्षवत् । स्वार्थे सामान्यगोचरमित्येतत्स्ववचनविरोधे, किमिव ? **कुमारब्रह्मचारिपितृवचनवच्चैतत्**। यथा कश्चिद् ब्रूयात् पिता मे कुमारब्रह्मचारीति। तस्य तद्वचनं स्वत

१ प्राङ्॰ क–ख । २ वैशेषिकस्यैवाऽवैशेषिकत्वात् क–ख । ३ स्व॰ । ४ ॰त्रैव क–ख । ५ त्वयेदानीं ग ।

एव विरुध्यते । यदि पिता कथं कुमारब्रह्मचारी ? । अथ कुमारब्रह्मचारी कथं पितेति ? । तथेदमपि यदि तद् ज्ञानं स्वार्थे कथं सामान्यगोचरमथ सामान्यगोचरं कथं तत्स्वार्थे ? स्वार्थ इति च त्वया न चक्षुषोऽन्यस्य वेन्द्रियस्य विषय इति विशेषमाश्रित्य लक्षणमभिधीयते । किं तर्हि ? प्रमेयमुच्यते—सामान्यतो वस्तु स्वलक्षणं स्वार्थ इति, तथा सामान्यं लक्षणमिति न धूमानुमेयाग्निमात्रं । किं तर्हि ? लिङ्गगम्यं सर्वं । एतस्यार्थस्य प्रतिपादनार्थमाह—स्वार्थलक्षणमेव निरूपयन् अस्वार्थविशिष्टे, स्वोऽर्थः स्वार्थः । न स्वार्थः अस्वार्थः स्वार्थादन्यस्ततो विशिष्टः स्वार्थः तस्मिन् स्वार्थे । तमेवार्थं पर्यायेनाह—स्वविषये । किमुक्तं भवति? एकस्मिन्रूपादिप्रकारे प्रकृष्टे कारे रूपे रसेऽन्यस्मिन्नेव सामान्यगोचरमिति सामान्यविषयं च स्वार्थे ज्ञानमिति च विस्पर्धितमेतत्परस्परतो द्वयम् । यस्मादर्थविषयशब्दौ लक्षणार्थावेव लक्षणशब्दपर्यायवाचिनौ । तस्मात् स्वार्थः स्वविषयस्वलक्षणमित्येतद्विपक्षितं भवतस्तद्विस्मृत्य भ्रान्तेन नेन्द्रियग्राह्यस्वार्थसामान्यभेदकल्पनापरिहारो युज्यते वक्तुं । कस्मात्? प्रत्यक्षव्याख्याविषयत्वात् । स्वार्थस्वलक्षणस्वविषयशब्दानां मा मंस्था नैतदेवं न भवतीति । उक्तं हि प्रमाणसंख्यानिरूपणे त्वयैव 'प्रत्यक्षमनुमानं च, प्रमाणे' इत्यादि प्रमाणद्वित्वं नियम्यते, प्रमेयद्वित्वात् परिमेयद्वित्वनियतप्रस्थतुलादिपरिमाणद्वित्ववत् । तद्दर्शयति—यस्माल्लक्षणद्वयं प्रमेयं स्यादन्यत् प्रमेयान्तरं स्वसामान्यद्वित्वरूपलक्षणं तदपेक्षया प्रमाणान्तरं स्यादिति तन्निवारणार्थमाह—न हि स्वसामान्यलक्षणाभ्यामन्यत् प्रमेयमस्ति । प्रत्यक्षानुमानाभ्यामग्रहणात् खरविषाणवत् । स्यान्मतं—तत्रैव विषयद्वये विकल्पसमुच्चयाङ्गाङ्गीभावैः प्रत्यक्षानुमानागमादीनां प्रमाणानां वृत्तिर्भविष्यतीति । तन्न[1] भवति यस्मात् स्वलक्षणविषयनियतं प्रत्यक्षं सामान्यलक्षणविषयनियतमनुमानमित्युक्तम् । कथं पुनर्लक्षणशब्दोऽर्थपर्यायः? अयते गम्यत इत्यर्थः । तथा लक्ष्यत इति लक्षणं, कर्मसाधनत्वाल्लक्षणशब्दस्य । तच्च लक्षणं वस्तुस्वभावः । स्वरूपमर्थः प्रमेयमिति पर्यायाः । तत्पुनर्द्विरूपं परिच्छेद्यम् । द्वाभ्यां प्रमाणाभ्यां परिच्छेद्यत्वात्, प्रमाणं परिच्छेदकम् । प्रमेयं परिच्छेद्यमित्यर्थः । यस्माल्लोके दृष्टं प्रमेयाधिगमनिमित्तं प्रमाणम् । हिशब्दस्य हेत्वर्थत्वात् । प्रमेयाधिगमनिमित्तं हि प्रमाणमिति । नो चेत् 'अग्निहोत्रं जुहुयात् स्वर्गकामो, दानं दद्याद्धर्मकाम' इत्येवमाद्यागमवद्दृष्टार्थं प्रत्यक्षं दृष्टार्थमेवैतदुपलम्भकत्वाद्, उपलभ्यस्य द्विविधस्य दृष्टत्वात् । न च प्रमाणयोः विषयसङ्कर इति प्रागुक्तयुक्तिकां विविक्तविषयतां दर्शयति । इतिशब्दः प्रदर्शने । एतावानत्र संक्षेपेणार्थस्तद्विस्तरपरो ग्रन्थ[2] इति सूचयति ।

---

१ तत्र क-ख । २ गन्ध ग ।

इदानीं व्यवस्थापितार्थोपसंहारार्थमिदं वाक्यमाह—**अधिगम्यस्य द्वित्वात्।** अधिगमनिमित्तं द्विरूपमित्येवं व्यवस्थापिते लक्षणशब्दोऽर्थपर्यायवाची नेन्द्रियग्राह्य इति विशेषार्थः प्राक् कृत इत्येतस्मिंश्चार्थे स्थिते प्रत्यक्षानुमानयोः स्वरूपाभावः स्ववचनविरोधश्च दोषाः स्वार्थे सामान्यगोचरमिति ब्रुवतः प्रोक्तविधिनेति स्थितम्। पुनश्चात्र दोषः । एवमवस्थिते सामान्यगोचरव्यावृत्तार्थेन भवितव्यम् । ततः को दोषः ? । स्वार्थे सामान्यगोचरमित्येतद्विरुध्यते । न हि तादृशः स्वार्थेऽस्य सामान्यतासम्बन्धोऽस्ति । नापि सामान्यस्य स्वार्थसम्बन्ध इति मा भूदेष दोष इति । तस्मिन्नेव सामान्ये स्वविषये स्वार्थे प्रत्यक्षं ज्ञानमुत्पद्यत इति चेत्तत एव सामान्यमेव स्वविषयः स्वलक्षणं नास्त्यतः पारिभाषितासाधारणस्वलक्षणविषयाभावादेवं कल्प्यमाने लक्षणद्वयं नास्ति। एकमेव, सामान्यलक्षणद्वयाभावात्तद्विषयमेकमेवानुमानं प्रमाणं स्यात् । ततश्च प्रमेयप्रमाणद्वित्वावधारणे कल्पना व्यर्था । मा भूदवधारणवैयर्थ्यमिति स्वार्थे सामान्ये च प्रत्यक्षं प्रवृत्तं तथानुमानं वेति प्रमाणयोर्वा विषयसङ्करः प्राप्तः । वाशब्दादेकस्य ज्ञानस्य ह्यर्थता वा प्रत्यक्षमपि वा परपरिकल्पितमनुमानभेद एव स्यात् । कस्माद्धेतोः?, अनेकार्थजनितसामान्यचरगोरूपादिप्रकारपरिग्रहात्। मा ज्ञासीरसिद्धोऽयं हेतुरिति, त्वयैवोक्तं हि तत्रानेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमिति । अनेकेन भिन्नेनार्थेन नाभिन्नमेकं सामान्यं रूपं रस इत्यादिप्रकारं परिगृह्योत्पद्यमानं ज्ञानं तेन जनितं तत्तस्मादनेकार्थजनितसामान्यगोचररूपादिप्रकारपरिग्रहात्तस्य ज्ञानस्य । को दृष्टान्तः ? । धूमबलाकालिङ्गजनितज्ञानवत् । धूमादत्राग्निर्बलाकाभ्योऽत्र जलमिति लिङ्गजनितयोरग्निजलज्ञानयोरपि स्वरूपतोऽनुमानत्वाभेदः । एवं रूपादिषूत्पद्यमानानां प्रत्यक्षाभिमतानामनुमानत्वाभेदः। एतस्मादेव हेतोरस्वलक्षणविषयत्वं च । अस्वलक्षणविषयं प्रत्यर्थमनेकार्थजनितसामान्यगोचररूपादिप्रकारपरिग्रहादनुमानवदुभयत्रेत्यनेनानुमानेनाऽप्यस्वलक्षणविषयत्वम् । तत एव हेतोरनन्तरभावि प्रत्यक्षवत् , अथवोभयत्रेति स्वलक्षणे सामान्यलक्षणे च स्वलक्षणविषयत्वं,कथम्?स्वलक्षणाभिमतमस्वलक्षणमनेकैकीभावात्समुदायवत् , तस्मात्सामान्यमपि न स्वलक्षणम्। अत एवानन्तरोक्तसमुदायवत्सामान्यास्वलक्षणत्वम्। सिद्धं साध्यत इति चेन्न, स्वार्थ एव सामान्यगोचरमिति वचनात् स्वार्थत्वे चाभ्युपगतत्वादिति । अवश्यं चैतदेवमभ्युपगन्तव्यम्। यतः शमीशाखापत्रसङ्घाताविशेषदर्शनोदाहरणेन च स्फुटमेव दर्शितमप्रत्यक्षत्वमनुमानत्वमप्रमाणत्वमस्वलक्षणविषयत्वं विषयसङ्कर इत्येवमादिदोषजातमनेकैकत्वापत्तिसामान्यगोचरः । स एव स्वलक्षणसामान्यगोचर एव स्वलक्षणः । असावेवार्थः प्रत्यक्षस्वे-

१ °मेव ख । २ स्फुरणव° ग ।

त्येषा भवत आशंसा चेत् । **नारात्परान्तमध्येत्यादि, यावत्स्वलक्षणविषय-सामान्यात्मकत्वात्** । नैतदुपपद्यते पूर्वपरादिंपरस्परविविक्तात्रस्थापन्नविषयसामान्यात्मकत्वात् । आराद्न्तः परान्तः । मध्यः नीलप्रकर्षादिर्वर्णः । ह्रस्वदीर्घाल्प-महत्त्वादिप्रमाणं वृत्तादिसंस्थानं च तैर्विविक्ता वृत्तयोऽवस्थाश्च येषां पत्रविशेषाणां ते तैर्विविक्तवृत्त्यवस्थपत्रविशेषाः । त एव स्वलक्षणाः स्वविषयोऽस्य सामान्यस्य तत् स्वलक्षणविषयं सामान्यमात्मा स्वरूपमस्य तद्भावः सामान्यात्मकत्वं तस्मात् सामान्यात्मकत्वात् । एतदुक्तं भवति—देशाकृतिवयोवर्णप्रमाणसंस्थानादिभिरत्यन्तवि-शिष्टानां स्वलक्षणानामेव सामान्यात्मकत्वं नान्यत्सामान्यमस्त्यतोऽनुमपन्नमनेकै-कापत्तिसामान्यगोचरस्वलक्षण एवार्थ इति । ननूक्तमनेकैकापत्तिसामान्यगोचर-मिति, तन्न, यस्मान्न च सङ्घातः कश्चिदस्ति । चशब्दान्नायमर्थः, न च परिणामान्तरं तद्व्यतिरिक्तं त्वन्मतेन । कस्माद्धेतोः ? तेषां पत्राणामनारब्धस्वलक्षणकार्यत्वात्, न हि यत्र विशेषैरारब्धं किंचित्कार्यान्तरमस्ति, त एव ह्यनारब्धलक्षणाः पत्रविशेषाः सञ्चित्य कार्यीभूतास्तस्मान्न तेष्वन्यत्सामान्यमस्ति । एवमणुष्वपि–परमाणुष्वपि तथा न किञ्चित्सामान्यमस्ति, तस्मान्न स्वार्थे सामान्यगोचरं ज्ञानमिति । यदपि चोक्तमनेकद्रव्योत्पाद्यत्वात्तत् स्वायतने सामान्यगोचरमित्युच्यते, न तु भिन्नेष्व-भेदकल्पनादिति । सा त्वदिष्टा सामान्यगोचरतापि च न घटते । यस्मान्न तदने-कद्रव्योत्पाद्यं, कुतस्तर्ह्युत्पद्यते ? । सञ्चयात्, न च संचयः सामान्यम् । ततो न च स रूपादिभ्यो भेदेन कश्चिदस्ति रूपादिसञ्चयः । अत एव न प्रत्ययस्यालम्बनं युज्यते । प्रत्ययो ज्ञानम् । किं कारणम् ? अभूतत्वाद्वन्ध्यापुत्रवत् । स्यादशङ्का—स्वाभासज्ञानो-त्पत्तेरालम्बनं भविष्यति समुदायोऽकारणे सत्यपीत्येतत् कुतोऽकारणत्वादेवाल-म्बनत्वाभावे का प्रत्याशाभासार्थस्येत्यत आह—अनालम्बनत्वाच्चाभासार्थोऽपि तत्रास्ति । किमिव ? वन्ध्यापुत्रत्वानाभासवत् । यथा ह्यसत्त्वादनालम्बनं वन्ध्यापुत्रे अनालम्बनत्वाच्चानाभासस्तथा सञ्चय इति । **स्वाभासं हीत्यादि** । विषयो हि नाम यस्य ज्ञानेन स्वभावावभास इति । त्वदुक्तोपपत्तिरेवात्र व्यापार्यते । तत्पुनः कुतः ? । **अस्वत्वादनात्मकत्वात्** । यस्त्वात्मना स्वभावेनासिद्धः स विषयः स्यात् ज्ञानस्येति । का युक्तिः ?, अस्वत्वात्त्वस्याद्रव्यत्वात् । परमार्थसत्त्वा-भावात् कुत आभासविज्ञापनम् ? परवाचो युक्त्या विज्ञापनम् । विज्ञप्तिर्बुद्धिरिति पर्यायाद्[3], दूरत एव नास्तीत्यर्थः । एवं तर्हि स्वे तु परमाणवः । आत्मनस्ते विषय-तायां तु नेत्युच्यते—**ते नाभासमुत्पादयितुमलमतीन्द्रियत्वादतीन्द्रि-यत्वं निराभासत्वाद्विषयवदिति** । इतिशब्द उपसंहारे । इतीत्थमनालम्बनत्वं

---

१ तत्र क-ग । २ °न्नावयवी ग । ३ पर्याया दूरत° क-ग ।

संचयस्याणूनां च सिद्धं प्रत्यक्षज्ञानस्य, तस्मात् प्रत्यक्षज्ञानं नोत्पद्यते निरालम्बनत्वात् खपुष्पवत्। अतः प्रत्यक्षस्य निरालम्बनस्य खपुष्पवदनुत्पत्तेरुक्तोपपत्तिविधिना कल्पनापोढस्य सविषयस्य प्रत्यक्षस्य ज्ञानस्य वाभावे प्रतिपादिते स्ववचनव्यपेक्षाक्षेपदुस्तरविरोधा[1]पत्तेश्च कल्पनापोढं प्रत्यक्षमित्येतल्लक्षणमनर्थकं स्याल्लक्ष्यस्याभावात् खरविषाणस्य कुण्ठतीक्ष्णादिनिर्णयवत् । अभ्युपेतेऽपि तु विषये दोषः। स चाभ्युपगम्यमानोऽपि विषयः सञ्चय एव संभाव्येत, न परमाणवोऽतीन्द्रियत्वात् । स चालम्बनप्रत्ययो ज्ञानस्य सञ्चयस्तस्मिन्नभ्युपेतेऽपि तु संचितालम्बनप्रत्ययत्वेनैवास्य प्रत्यक्षता सिद्ध्यति त्वन्मतेनैव तदाभासत्वात् । तदाभासत्वं कल्पनात्मकत्वात् । उक्ता च कल्पनात्मकता तदुभयमपि भ्रान्तिज्ञानात्मकत्वात् । भ्रान्तिः संज्ञासंख्यासंस्थानवर्णान्यथाकल्पनात् । संज्ञा च सङ्ख्या च संस्थानं च वर्णं च तेषां तैर्वान्यथा कल्पनादन्यथा प्रतिपत्तिरेव ते कल्पनाभिमता । संज्ञासंस्थानसंख्यावर्णानामन्यथा प्रतिपत्तेर्मृगतृष्णिकाप्रत्ययवदलातचक्रप्रत्ययवद् द्विचन्द्रप्रत्ययवत् कामलोपहतचक्षुषो नीलरूपपीतप्रत्ययवदिति यथासंख्यं दृष्टान्तः । यथाक्रमं च हेतोर्वा भ्रान्तिज्ञानात्मकत्वे साध्ये, ततश्च प्रत्यक्षत्वाभावे साध्ये तत्समर्थनार्थं उत्तरो ग्रन्थः। तदर्थमुपसंहृत्यान्ते साधनम्, अत इदं[2] नैव प्रत्यक्षमतथाभूतार्थाध्यारोपात्मकत्वात् भ्रान्तिवत् नावारूढस्य नीरवृक्षधावनदर्शनात्मिकामेकां क्रियाभ्रान्तिं मुक्त्वा प्रोक्तचतुर्विधभ्रान्तिवत् । उपनयस्तु व्यवहारप्रसिद्धस्य परमाणुनीलत्वग्रहणस्य सर्वत्रातथाभूतार्थप्रतिपत्तिसाधर्म्यात् । अथवा तत एव हेतोः संवृतिसंज्ञानवदप्रत्यक्षम् । तद्व्याख्या यथा–गोपालेत्यादिना दृष्टान्तं समर्थ्य तथा संवृति सतीत्यादिना दार्ष्टान्तिकसमर्थनं। संवृतिसल्लक्षणे ज्ञापकमाह–'यस्मिन् भिन्ने[3]०' श्लोकः। यस्मिन् घटे भिन्ने कपालशकलशर्करादिभावेन घटाभिमताद्वस्तुनोऽन्येष्वप्यपोहेषु कपालादिषु न घटबुद्धिरस्ति । तदग्रहे तद्बुद्ध्यभावाद् अङ्गुल्यभावे मुष्टिबुद्धिवद् । अतोऽङ्गुलिव्यतिरेकेण मुष्ट्यभाववत् कपालादिव्यतिरेकेण घटाभाव इति संवृतिसन्[4] घटः । एवं क्रियासंभवे क्रियया‍पोढे, यत्रापि क्रिययापोहो न संभवति तत्रापि धियापोहेऽन्येषां रूपादीनां घटस्य समुदायान्न तद्बुद्धिरस्ति। रूपादिसमुदायस्य च परमाणुरूपाद्यपोहेन तद्बुद्धिरस्तीति वर्तते दृष्टान्तोऽम्बुवत् । एकस्मिन्नपि जलबिन्दौ जलबुद्धिदर्शनात् । रूपादिषु पुनर्बुद्ध्यापोढेषु न तोयबुद्धिरस्तीत्येतत्संवृतिसतो लक्षणम् । अथवा यस्मिन् घटे भिन्नेऽवयवशो न तद्बुद्धिर्भवति तद्घटवत्संवृतिसत् । यत्र चाम्बुबुद्ध्यार्थान्तरापोहेन तद्बुद्धिरर्थान्तरनिवृत्तिरूपस्य वस्तुनः स्वरूपाभावादग्निवाय्वादिनिवृत्ति-

---

१ °ध प्रस्तुते° क–ख । २ °द्वयं क–ख । ३ विलोकनीयं ६४ तमं पृष्ठम् । ४ °ति स च ग ।

मात्रं व्यवहारप्रसिद्धाम्बुवत् तदपि संवृतिसत् परमार्थसदन्यथा एतद्विपरीतलक्षणम् । स्वत एव विविक्तरूपं यद्विद्यते रूपं रस इत्यादि तत्परमार्थसत् प्रत्यक्षगोचरमिति । एतदपि परमार्थसदित्यभिमतं संवृतिसल्लक्षणानतिवृत्तेरसदेव । यथोक्तविधिना संवृतिसदेव सर्वमपीत्यत्रापि ज्ञापकोदाहरणं तत्संवाद्यभिहितं **रज्ज्वां सर्प इति ज्ञानं** तावदेव रज्ज्वां सर्प इति विपर्ययज्ञानं भवति यावदसदादिविशेषलिङ्गादर्शनं। विशेषतस्तु तदवधारणदृष्टौ सत्यां प्राक्तनं सर्पदर्शनं जायतेऽनर्थकं। सापि रज्जुबुद्धिस्तदवयवे दृष्टौ सत्यां यथा सर्प इति ज्ञानमनर्थकं तथानर्थिका। तत आह–**तदृष्टौ तत्रापि सर्पवद्रज्जुविभ्रम** इति । एवमनया कल्पनया सर्पपिण्डज्ञानानां संवृतिसद्विषयतैवेति साधूक्तमप्रत्यक्षं नीलादिविषयं चक्षुरादिविज्ञानं शाक्यपुत्रीयं भ्रान्तिवदिति । एवं तावत्कल्पनापोढप्रत्यक्षलक्षणसंचितालम्बनपञ्चविज्ञानकायग्रन्थविरोधोद्भावनचोद्योपक्रमायातपरिहारार्थस्यानेकार्थजन्यस्वार्थसामान्यगोचरवाक्यस्य सप्रसङ्गो दोषोऽभिहितः ।

अधुना यदेतदनेकरूपेत्यादिग्रन्थचोद्यद्वारायातकल्पनात्मकपरिहारार्थं यथोक्तमायतनस्वलक्षणं प्रतीति तत्कथमित्येतत्परिहारार्थस्य तस्य वाक्यस्य दोषं वक्तुकामः परपक्षमेव तावत्प्रत्युच्चारयन् व्याचष्टे सूरिष्टीकाकारलिखितं लिखन् यावदेकाकारपरिकल्पनादिति गतार्थम् । **उत्तरं तत्रापि** । अपिशब्दात्पूर्वस्मिन्नर्थविकल्पे व्याख्याता दोषास्तेऽत्रापि सम्भवन्ति । कथमिति चेत्? । **अनेकार्थविषयकप्रत्ययत्वात्** । अनेकोऽर्थः परमाणवः । तद्विषय एक इति प्रत्ययः । सोऽनेकार्थविषयैकप्रत्ययस्तद्भावादनेकार्थविषयैकप्रत्ययत्वात्, तेषु परमाणुषु प्रत्येकमतीन्द्रियेषु समुदितेष्वसमुदितेषु वा प्रत्ययाभावात्तत्समूहे[1]ऽनेकार्थविषयः स एवैकः प्रत्ययः समूहालम्बनतदाभासज्ञानोत्पत्त्यभ्युपगमात्। अर्थभेदविषयज्ञानाभ्युपगमे च 'विजानाति न विज्ञान'मित्यादि[2] विरुध्येत। तस्मादेकः प्रत्ययोऽनेकार्थविषय एकार्थरूपस्तत एव सामान्यरूपस्तदतद्विषयतया तदतद्भूतसामान्यगोचरः, ततश्चास्वलक्षणे विषयस्त एव हि परमाणवः स्वलक्षणं न तत्समूहसामान्यत्वात्, अत एव संवृतिसञ्चय स तस्मादस्वलक्षणविषयत्वात्कल्पनात्मको निर्देश्यश्चेत्येवमाद्यस्माभिः प्राक् प्रक्रान्तं तत्सुतरामशेषं त्वयैव भा[3]वितमनेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमिति परिहारं ब्रुवता । किं चान्यत्–भवदभिमतप्रत्यक्षस्याप्रत्यक्षत्वसाधने च द्वे लेशेनोन्नीते त्वयैव । मा भूत् स्वाभ्युपगमदोषव्या[4]वृत्तिरिति कुशलजनतर्कगम्येन स्फुटैकतमे द्वे अनेकार्थजन्यत्वात् । स्वार्थे सामान्यगोचरत्वादिति चैते द्वे । तत्र तावत् प्रथमं साधनं

१ °प्रत्यूहे ग । २ दृश्यतां ६० पृष्ठम् । ३ भाषित° क-ख । ४ °व्यति° क । व्यतिरिक्तेऽ° ख ।

तदभिमतप्रत्यक्षमप्रत्यक्षमनेकार्थजन्यत्वादनुमानवद्, दृष्टान्तेऽनुमानेनैकार्थजन्यत्वात् सिद्धमिति मा मंस्थाः। यस्मादनुमानमपि पक्षधर्माद्यनेकार्थजन्यं पक्षधर्मः। सपक्षानुगमो विपक्षव्यावृत्तिरित्यनेकार्थेन जन्यतेऽग्न्यनित्याद्यनुमानज्ञानं तथेदमपि प्रत्यक्षमनेकपरमाण्वर्थजन्यमिति ज्ञापकः स हेतुरिति चेत्, स्यान्मतम्—अनुमाने पक्षधर्मादिरनेकोऽप्यर्थो धूमकृतकत्वादिरग्निनित्यादिज्ञानस्य न कारकः। किं तर्हि? पूर्वप्रसिद्धमेवाविनाभाविनं सम्बन्धं स्मारयतीति ज्ञापकः स हेतुः, इतरस्तु प्रत्यक्षज्ञानस्य कारकोऽर्थस्तस्माद्वैधर्म्यादिदृष्टान्तः। इत्येतच्चायुक्तम्, अत्रापि तुल्यत्वात्। कारकादपीत्यादि अनुमानमपीति वर्तते। अनुमानमपि स्वार्थकारकादनेकस्मादर्थाज्जायते। कस्मात्?, साध्यसाधनधर्मान्वयैकान्तवतः। पक्षधर्मसपक्षानुगमविपक्षव्यावृत्तिमत ऐकान्तिकात्, अग्निमान् प्रदेशो धूमवत्त्वाच्चुल्लीमूलवत्, अनित्यः शब्दः कृतकत्वाद् घटवत्, न नदीवन्नाकाशवदिति। कारकहेतुतैवानुमानेऽपि तदर्थस्य। इतर आह—नासंचितानेकार्थजन्यत्वादनुमानेनैतत्साधर्म्यमुपपद्यते। कस्मादसंचितानेकार्थजन्यत्वात्। अनुमानस्य सञ्चितानेकार्थजन्यत्वाच्च प्रत्यक्षस्य देशकालभिन्नसन्निहितासन्निहितार्थविषयं ह्यनुमानं तद्विपरीतविषयं प्रत्यक्षमिति। अत्रोच्यते—**ननु धूमादिरपि सञ्चय एव गृहीतोऽग्न्यादिकमणूनिव गमयति**। नन्विति प्रसिद्धानुज्ञापने, ननु धूमोऽग्निमत्त्वविशिष्टप्रदेशधर्म्यश्चतुर्भूतसङ्घातोऽन्वयव्यतिरेकसहितोऽग्निमत्त्वविज्ञानं प्रदेशे जनयति, अणुसमुदय इव रूपविज्ञानं गमयति। अग्निर्न ज्ञानं जनयतीति ज्ञानोत्पत्तौ कारकत्वाव्यभिचारादुभयत्रेति हेतुप्रत्यय इत्यादि। स्यान्मतम्। हेतुः प्रत्ययो निमित्तमालम्बनमित्यर्थः। असौ धूमोऽनुमाने निमित्तमधिपतिप्रत्ययः। कल्पनायां हेतोर्निर्विकल्पं हि ज्ञानमधिपतिप्रत्ययं प्रत्यक्षं न तथानुमानमतो वैधर्म्योऽत्र दृष्टान्त इति चेत्। एवं चेन्मन्यसे, अत्र परेणैवोत्तरं वाचयितुकाम आह। **अथ कथमित्यादि**, इदमसिद्धं द्रष्टव्यम्। कथं साधनानधिपतिर्धूम इत्यनालम्बनमित्यर्थः। इतर आह—इन्द्रियाविषयत्वात्। हेतुप्रत्ययस्यार्थस्याग्न्यादिलक्षणस्य। आचार्य आह—"ननु सञ्चयनहेतुप्रत्ययोऽप्यनधिपतिरिन्द्रियविषयत्वात्। परमाणुसञ्चय एव प्रत्यक्षोऽप्यनधिपतिस्तस्मादेव हेतोरिन्द्रियाविषयत्वात्सञ्चयस्य परमाणुव्यतिरिक्तस्यासत्त्वात्" इति विस्तरेण प्रागभिहितमेतत्। तस्मात्सर्वथा तुल्यमुभयं कारकत्वेनेति। तथा स्वार्थे सामान्यगोचरत्वादनुमानवदप्रत्यक्षमित्येतस्मिन् साधने कारकहेतुत्वप्रतिपादनार्थः प्रपञ्चस्तुल्य इत्यतिदिशति। **अनुमानं वेत्यादि**। वाशब्दो विकल्पार्थः। यदि प्रतिपादितमिदं युक्तिवचनौत्प्रत्यक्षस्य त्वदभिमतस्यानुमानत्वं

१ °त्तम° ग। २ °मनधि° ग। ३ °वत्ता° क। ग।

मया तत्त्वया स्वाग्रहरक्तमनसा स्वसमयप्रसिद्ध्यनुपातिना नेष्यते । प्रत्यक्षत्वमेवेष्यते । ततस्तस्मात्साधर्म्यादनुमानं वा प्रत्यक्षं स्यादनेकार्थजन्यत्वात् । स्वार्थे सामान्यगोचरत्वादित्येताभ्यामेव हेतुभ्यां प्रत्यक्षवदित्येते अपि द्वे साधने लेशेनोन्नीते न स्फुटमिति । किं चान्यदेतस्मादेव हेतुद्वयाद्विषयैक्यापत्तेः प्रमाणैक्यमिति । अत आह–द्वयमप्येतदेकमेवैकलक्षणत्वात्स्वसामान्यलक्षणं ह्येकमेव वस्तुविषयोऽस्य प्रमाणद्वयस्येत्युक्तविधिना प्रसक्तत्वात् ।'प्रत्यक्षमेवैकं प्रमाणं तदुभयं स्यादनेकार्थजन्यसामान्यैकगोचरत्वात् । चक्षुरादिद्वाराजन्यप्रत्यक्षभेदप्रत्यक्षत्ववदनुमानमेव वा स्यात्, तत एव कारणाद्धूमकृतकत्वाद्यनुमिताग्न्यनित्यादिज्ञानस्त्वनुमानवत् ।

इदानीं वसुबन्धोः स्वगुरोस्ततोऽर्थाद्विज्ञानं प्रत्यक्षमिति ब्रुवतो यदुत्तरमभिहितं परगुणमत्सराविष्टचेतसा तत्त्वपरीक्षायां परमोदासीनचेतसा तु येन केनचिदभिप्रायेण स्वमतं दर्शितमेव दिङ्नेन वसुबन्धुप्रत्यक्षलक्षणं दूषयता, तस्य पुनरर्थो योऽस्तु सोऽस्तु किं नोऽनेन ? । इदमेव तावदस्तु रूपादिष्वालम्बनार्थो वक्तव्य इति विकल्प्य विकल्पद्वये दोषजातं तल्लक्षणे प्रक्रान्तम्, तत्त्रापि समानमिति प्रतिपादयिष्यन्नयचक्रकारः सविशेषं तन्मतविरोधहेतुं स्ववचनजनितमाह—

'अनेकार्थजन्यत्वाच्च स्वार्थसामान्यगोचरतायाम्' इत्यादि शिष्याचार्ययोस्तुल्योत्तरत्वात् । स्वार्थ इति । नीलादिः स एव विकलसामान्यमनेकार्थजन्यत्वात् । अनेकार्थः परमाणवस्तज्जन्यं नीलविषयं प्रत्यक्षमत इन्द्रियस्य स्वार्थ इति । एतस्माननेकार्थजन्यत्वाच्च । स्वार्थसामान्यगोचरतायां यदाभासं तेषु ज्ञानमुत्पद्यते । तथा त आलम्बनं रूपादय इति नीलपीतादित्वेन यथैवाभासन्ते तथैवालम्बनमित्येतदिष्टम् । किं कारणम् ? त एव नीलादिपरमाणवो नालम्बनमिति चेत्, उच्यते–प्रत्येकं परमाणुरूपस्य बुद्धावसन्निवेशात् । एकमेकं प्रत्येकं परमाणूनां यन्नीलादिरूपं तस्यातीन्द्रियत्वाद्बुद्धावसन्निवेशः । तस्मात्किं प्राप्तम् ? । समुदयकृतं तन्निर्भासतयालम्बनमित्येतत् प्राप्तं, नीलादिरूपस्य तत्समुदायात्मकत्वात् । एवं च सति परमाणुसञ्चयनीलादिनिर्भासतयालम्बनत्वे सति प्रत्यक्षार्थ एव ज्ञायते । तद्यथार्थसन्निकर्षात् अक्षं प्रति यदुत्पद्यते तद् ज्ञानं प्रत्यक्षमिति ज्ञानमर्थेन विशिष्यते । अर्थेनेन्द्रियस्य सन्निकर्षादुत्पद्यमानं ज्ञानमक्षं प्रति वृत्तेः प्रत्यक्षमिति ज्ञानेऽर्थस्य विशेषणता,सन्निकर्षाद्वाक्षं प्रति यो वर्ततेऽर्थः स प्रत्यक्षः । अर्थेन्द्रियसन्निकर्षादक्षं प्रति वृत्तेः प्रत्यक्षमितत्वादुपचरितवृत्तिरर्थोऽक्षेण विशिष्यत इति ।·अत्रोत्तरमुच्यते–न तदुपपद्यते प्रत्यक्षं तस्यार्थस्याभावात्, एवं च सतीत्युच्चार्य सञ्चयः प्रसक्तः इत्यभ्युपगम्य दूषयति–यस्मान्न

१ स्वग्राह° ग । २ °सा° ग । °साम क्र–ख ।

च सञ्चयोऽर्थः। किं कारणं? नार्थः सञ्चय इति चेत् संवृतिसत्त्वात्। संवृतिसत्त्व-मद्रव्यत्वात्। वान्ध्येयवत्, अत एतस्मात्कारणान्नासाधूत्पत्तिप्रत्यय इष्यते। उत्पत्तौ प्रत्यय आलम्बनप्रत्यय इत्यर्थः। सोऽसत्त्वान्नेष्यते। इतिशब्दो हेत्वर्थे। एतस्मात्कारणात्सोऽर्थो न विशेषणेन विशेष्यः। तस्माद्विशेषणविशेष्यत्वाभावात्। ज्ञानत्वप्रत्यक्षत्वाभ्युपगमहानिः। ज्ञानं प्रत्यक्षमित्येतदभ्युपगतम्। विशेषणस्य विशेष्यस्य चार्थस्याभावात्किं विषयं ज्ञानं प्रत्यक्षं च स्यादिति हीष्यते, किं चा-न्यत्?। चक्षुरादिषु ज्ञानेषु अत इत्यादि, यावदनुमानविरोधः चक्षुरादीन्द्रिय-बुद्धयः स्वविषयनिर्भासस्वरूपमात्रा एव ज्ञानत्वाद्वस्तुत्वात्सत्त्वात्, तैमिरिकादिज्ञा-नवत्, अतश्चक्षुरादिविज्ञानेषु स्वनिर्भासव्यतिरिक्तप्रमेयाभावः ततश्च तैमिरिकस्य केशोन्दुकमशकमक्षिकादिचन्द्रादिदर्शनवत् सा त्वसत् प्रतिपत्तिरेव, असदवस्तु सद्वस्त्विति प्रतिपत्तितः, तस्माद्धेतोरसत्सत्प्रतिपत्तेर्विपर्ययप्रतिपत्तेस्तस्य ज्ञानस्याप्रत्य-क्षत्वं प्रसिद्धमलातचक्रादिज्ञानवत्, तेनाप्रत्यक्षत्वेन प्रसिद्धेन त्वया प्रतिज्ञातं तत्प्रत्य-क्षत्वं निराक्रियते। तन्निराकरणादनुमानविरोधः। ननु प्रत्यक्षनिराकरणात्प्रत्यक्ष-विरोधोऽयं कथमनुमानविरोध? इति। अत्रोच्यते–त्वन्मतेन सपक्षधर्मस्य विपक्षस्यो-क्तानुमानेन निराकरणान्निर्विकल्पकप्रत्यक्षत्वाभावात् कतमत्तत्प्रत्यक्षं येन निराक्रि-येत, यद्वा निराकुर्यात्?। अतोऽनुमानविरोध एवायम्। किं चान्यत्। घटसंख्योत्क्षेप-णसत्ताघटत्वाद्याकारज्ञानानामपि प्रत्यक्षत्वप्रसङ्गः। कथमिति चेदुच्यते–यथा तत्रे-त्यादिदार्ष्टान्तिकमुक्त्वा दृष्टान्ततत्साधर्म्यं च वर्णयति–यथा चात्र भवन्मतेन समानासमानानेकार्थजन्येन्द्रियस्वार्थात् समानेन नीलादिवर्णेनानेकेन परमाणु-सङ्घातलक्षणेनार्थेन जन्य इन्द्रियस्वार्थो नासाधारणो वस्त्वभिमतस्वलक्षणस्वार्थः कस्मात्? तत्त्यक्त्वा तत्रानेकार्थजन्यत्वात्। स्वार्थसामान्यगोचरं ज्ञानमिति वचना-दन्यादृशः स्वार्थस्येष्टत्वात् तादृशः स्वार्थाद्यदुत्पद्यते ज्ञानमित्यभिसंभन्त्स्यते तदपि च तैमिरिकवदप्रमाणम्। तिमिरे भवं तैमिरं। यथा द्विचन्द्रदर्शनं। तथा समा-नेनाप्यनेकवर्णमणिसमूहेन जन्य इन्द्रियस्वार्थो मेचकस्तस्मादुत्पद्यमानं तदपि च तैमिरिकवदप्रमाणम्। कुतः? यस्मात्समानानेकार्थात्तस्मादतथाभूतार्थात्तन्नादिस-ङ्घातजन्यमुत्पाद्यते। अतथाभूतार्थत्वमस्य संवृतिसत्त्वम्। अत आह–समानास-मानानेकार्थातथाभूतार्थान्नीलादिसङ्घातात् प्रज्ञप्तिसतः। आलम्बनात्संवृतिसतः परमार्थसदाकारो नीलादिको लभ्यते, यतस्त एव हि परमार्थसन्तः परमाणवो नीलादित्वेनाभासन्त इति। तद्विषयं ज्ञानं नीलादि प्रत्यक्षमिष्टं। तथा निराकृ-तेभ्यः सत्पक्षत्वेन घटसङ्ख्याद्याकारेभ्यो घटसंख्योत्क्षेपणसत्ताघटत्वाद्याकारेभ्यः प्रत्यक्षज्ञानजनकार्थसधर्मभ्यः कतमेन साधर्म्येण सधर्मभ्य इति चेदुच्यते–समा-

नासमानानेकार्थजन्येन्द्रियस्वार्थेभ्य इत्येतत्सधर्मभ्यः । किमुक्तं भवति ? समानासमानानेकार्थातथाभूतार्थेभ्यः परमार्थसदाकारो लभ्यते ?[1] नीलादिसङ्घातवदिति । अतस्तदुपसंहृत्य साधनमाह—घटः संयुक्तो वियुक्तः परोऽपरः स्पन्दत इत्यादि ज्ञानं प्रत्यक्षम् । स च तद्विषयः प्रत्यक्षः स्यात्, संवृतिसदालम्बनत्वान्नीलादिज्ञानवत् । नीलादिज्ञानं तदर्थश्च[2] न प्रत्यक्षे वा स्याताम् । संवृतिसत्त्वाद् घटादिज्ञानार्थवत् । वाशब्दस्य विकल्पार्थत्वात् । उभयत्र ज्ञानोत्पादकार्थविशेषस्तंत्समर्थयति । त एव हि, ते हि परमाणवो य एव घटादित्वेनाभासन्ते, य एव नीलादित्वेनाभासन्त इति । एवमुभयोर्नीलादिघटादिज्ञानयोस्तुल्ये जनकत्वे तत्कृत एतन्नीलाद्याभासज्ञानं प्रत्यक्षं न घटाद्याभासमिति । स्वरुचिमात्रादन्यत् कारणं नास्तीत्यर्थः । यथैव हीत्यादि यावत्समुदितास्त एवाभासन्त इति । बुद्धावाभासनसामर्थ्याविशेषाच्च जनकहेत्वविशेषमेव दर्शयति । अत्र च यथा परमाण्ववयवसमुदायता च नीलप्रत्यक्षावभासत्वात् । ज्ञानस्याकारसन्निवेशविशिष्टाः सामान्यत आभासन्ते । तथा घटादिज्ञानेष्वप्याकारविशेषेण समुदितास्त एव भासन्ते, नान्यो घटो नामास्ति यस्तथा भासेत । तथास्थेषु तेन प्रकारेण स्थितेषु रूपादिष्वेव घट इति बुद्धिः प्रवर्तते प्रज्ञप्तिश्च । एवं तथास्थेष्वेव परमाणुषु नीलादिरूपबुद्धिः प्रवर्तते प्रज्ञप्तिश्चेति । सर्वमुभयत्र तुल्यम् । अत्र परेणोभयोर्वैधर्म्यप्रदर्शनार्थमथोच्येत—नीलादिसमुदयेत्यादि । यावत्तदण्वात्मकत्वात्तथा सत्त्वादिति । नीलादिसमुदाये नीलादिद्रव्यसदाकारः परमार्थसदाकारः स विद्यते । किं कारणं ? तदण्वात्मकत्वात्तेषां नीलादीनामण्वात्मकत्वात् । अणूनां द्रव्यसत्त्वात्तत्प्रत्यक्षत्वं न्याय्यं । न्यायादनपेतं न्याय्यं युक्तमित्यर्थः । तद्विषयस्य च ज्ञानस्य प्रत्यक्षत्वं तत्प्रत्यक्षत्वं न तु घटाद्याकारः । न त्वस्ति घटसंख्योत्क्षेपणाद्याकारोऽतत्परमाणुत्वात् तस्याकारस्य परमाणुत्वं तत्परमाणुत्वम् । न तत्परमाणुत्वमतत्परमाणुत्वमतोऽतत्परमाणुत्वात् । ततः किम् ? । तथाऽसत्त्वात्तेन प्रकारेणासत्त्वातपरमाणुत्वेन तेषां घटाद्याकाराणामसत्त्वात् । अत्राचार्य उत्तरमाह—एतच्च तुल्यमुभयत्राविशेषात्परमाणुजन्यत्वादेव नीलादिघटाद्याकारप्रत्यक्षयोः । यथैव तस्मिन्[3] रूपादिसमुदाये घटाद्यनाकारता तदनणुत्वात् । तस्य घटाद्याकारस्यानाकारता तस्याकारस्यानणुत्वात्तथासत्त्वादनणुसत्त्वेन घटाद्याकारेणासत्त्वात् । अणुत्वेनैवासत्त्वादेव रूपाद्याकारस्यानाकारता । अनन्तरोक्तहेतोः सञ्चितस्यैन्द्रियिकत्वात्परमाणुसमुदायस्यैन्द्रियकत्वात्तस्यैवालम्बनत्वात्, असञ्चितस्यातीन्द्रियत्वादत एवानालम्बनत्वात्तदनणुत्वात्तस्य सञ्चितस्यैन्द्रियकस्यालम्बनस्यानणुत्वात्तथाऽसत्त्वादनणुत्वादेवासत्त्वादन्यथाविषयत्वात्पर-

---

१ °र्थेन क–ख । २ °थात् तद् ख । ३ यस्मिन् ग । ४ °स्यानणु° क–ख ।

माणुत्वेनाविषयत्वादविषयत्वादेवानालम्बनत्वादत एवाप्रत्यक्षत्वात् । किं चान्यत् । पक्षान्तरापत्तिश्चैवम्–यदाभासं तेषु ज्ञानमुत्पद्यते तथा न आलम्बनमित्येवं पक्षं परित्यज्य यथा ते विद्यन्ते तथा न आलम्बनमित्ययं पक्ष आश्रितो भवति । पक्षान्तरगमनं च वादावसानायेति । किं चान्यत्–अस्मिन्नपि च पक्षे त्वयैव वसुबन्धुं प्रत्युक्ता ये दोषास्ते तवापि स्युर्यस्मात्त्वयापि चायं पक्षोऽङ्गीकृत एव । कथमिति चेत्? तद्दर्शयति । यथा च प्रत्यक्षोत्पत्तिबीजसञ्जननार्थमुक्तम् । प्रत्येकं च ते समुदिताः कारणमिति । तत्रानेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमित्यस्य व्याख्यायां पुनर्वसुबन्धुं दूषयितुकामेन विकल्पितः स एवार्थः । किं? यथा विद्यमाना अन्याभासस्यापि विज्ञानस्य कारणं भवन्ति तथा प्रत्यक्षस्यालम्बनं रूपादय इति पूर्वपक्षत्वेनैतयोश्च वचनयोरेकाकारार्थत्वादसावपि पक्षोऽभ्युपगतस्त्वया । ततः को दोष इति चेत्? । एवमपि तत आलम्बनमतीन्द्रियत्वादिन्द्रियगोचरातीतत्वाद्गगनवदिन्द्रियज्ञानालम्बनं न भवन्ति परमाणवः । किं चान्यदुत्तरदोष उच्यते–अभ्युपगम्याप्येवंविधालम्बनतायां चेत्यादि यावत्त्वदुक्तप्रत्यक्षालम्बनवदिति । अन्यथाविद्यमानाः परमाणवोऽतीन्द्रियत्वेन विद्यमानाः समूहाभासस्यापि ज्ञानस्य कारणं भवन्तीत्येवंविधालम्बनतायां सत्यां धूमोऽग्निप्रत्यक्षज्ञानालम्बनं स्यात्, तथाविद्यमानत्वेऽन्यथाभासस्यापि ज्ञानस्य कारणीभवनात् । धूमत्वेन विद्यमानो धूमोऽग्न्याभासस्यान्यस्याभासस्यान्याभासज्ञानस्य कारणीभवन्नुपलभ्यत इति पक्षधर्मत्वमस्त्यस्य त्वदुक्तप्रत्यक्षालम्बनवदिति दृष्टान्ते तस्य सपक्षानुगमनं दर्शयति–यथा—त्वदुक्तस्य प्रत्यक्षस्यालम्बनं परमाणवोऽन्यथाविद्यमानाः परमाणुत्वेन विद्यमानाः समूहाभासज्ञानस्य कारणं भवन्ति, तथा धूमोऽपि तत्साधर्म्यात्तज्जनितज्ञानालम्बनस्याग्नेः प्रत्यक्षालम्बनतया व्याप्तत्वात्प्रत्यक्षालम्बनतामात्मनः साधयति । धूमनिमित्ताग्निज्ञानं वा प्रत्यक्षं स्यात्, तथाविद्यमानत्वेऽन्याभासविज्ञानजनकार्थालम्बनत्वात्त्वदुक्तप्रत्यक्षवत्तत्साधर्म्यादेव तावदुक्तप्रत्यक्षं महान् महार्थेनाप्रत्यक्षं स्यात् धूमजनिताग्न्यर्थज्ञानवत् । किं चान्यत्–तस्मादेव हेतोश्चक्षुराद्यप्यालम्बनं स्यात्, एवमयमतिप्रसङ्गदोष एवंवादिनः । यदि कारणमालम्बनं विज्ञानस्याभासस्यापीष्टं ततश्चक्षुरादीन्द्रियाणि चक्षुरादिविज्ञानानामालम्बनानि स्युरन्यथाविद्यमानत्वेऽन्याभासस्यापि विज्ञानस्य कारणीभवनाच्चक्षुरिन्द्रियं चक्षुर्विज्ञानस्यालम्बनं स्याद्रूपादिपरमाणुवत्तज्ज्ञानं वा चक्षुरिन्द्रियालम्बनं स्यात्तज्जन्यत्वे सत्यन्याभासत्वात्परमाणुजन्यरूपविज्ञानवत्, एवं श्रोत्रादिज्ञानानि । परमाण्वालम्बनमभ्युपगम्यायं दोष उक्तः । **न च ग्राह्यस्यं नीलादेर्विषयस्येत्यादि, चक्षुरादि-**

---

१ स ग । २ तथापि ग । ३ न भ° क-ख । ४ °भव° ग ।

भिर्ग्राह्यस्य नीलादेः समूहात्मकस्य विषयो गोचरः । सम्बन्धि चक्षुरादिविज्ञानं तस्य नीलादिपरमाणवो नालम्बनमन्यथा परमार्थतो विद्यमानत्वात् चक्षुरादिवत्, नीलादिग्राह्यविषयज्ञानालम्बना न भवन्ति परमाणवः । यथा चक्षुरादीन्द्रियाण्यन्यथा परमार्थतो नीलादिपरमाण्वात्मकानि सन्ति, अन्यथा नीलादिज्ञानोत्पत्तौ हेतुभावं बिभ्रति नालम्बनानि तथा परमाणव इति, इतश्च परमाण्वालम्बनं न भवति चक्षुर्विज्ञानं तदसाधारणविषयत्वाद्वा तस्य साधारणविषयत्वाच्चक्षुर्विज्ञानस्य । असाधारण एकैको नीलपरमाणुर्विषयोऽस्येति, तदसाधारणविषयत्वं । तच्च सिद्धं प्रत्येकं च ते समुदिताः कारणमितिवचनात्, **तस्मादसाधारणविषयत्वाद्वा रसज्ञानवत्** । यथा रसज्ञानमसाधारणविषयत्वान्नीलपरमाण्वालम्बनं न भवत्येवं चक्षुर्विज्ञानमपि । वाशब्दात्तन्नीलपरमाणवश्चक्षुर्विषया न भवन्त्यसाधारणविषयत्वात् । असाधारणाश्च ते विषयाश्च, रसज्ञानवत् रसज्ञान इव रसज्ञानवत् । यथा रसज्ञाने रसलक्षणोऽर्थोऽसाधारणविषयत्वात् त्वन्मतेनैव चक्षुर्विज्ञानविषयो न भवत्येवं नीलपरमाणव इति ।

इतर आह—ननु च प्रत्येकमेव ते समुदिताः कारणमित्यादि यावदन्धपङ्गौ च प्रत्येकादर्शनवैलक्षण्यं नेति । ननु मया विशिष्योक्तं प्रत्येकमेव ते समुदिताः कारणमिति । किमुक्तं भवति ? । तथासन्त एव परमाणुत्वेन परमार्थसन्त एव समुदिताः परमाणवश्चक्षुरादिज्ञानोत्पत्तिहेतुत्वादालम्बनम् । किं कारणं ? **तदवस्थानं ज्ञानोत्पादनशक्त्यभिव्यक्तेः**, समुदाय अवस्था येषां ते तदवस्थाः । तदवस्था एव हि ज्ञानमुत्पादयितुं शक्ताः । सा हि ज्ञानोत्पादनशक्तिः प्रत्येकं विद्यमाना नाभिव्यज्यते, समुदायेऽभिव्यज्यते । को दृष्टान्तः ? चक्षुरादिपरमाणूनामिव प्रत्येकं रूपदर्शनशक्तानामपि न सा शक्तिरभिव्यज्यते । समुदाये त्वभिव्यज्यते । तद्वदालम्बनपरमाणूनामपि विषयविषयिपरमाणूनां[1] प्रत्येकं तद्व्यक्तीनामप्यसमुदितानां शक्त्यभावं तुल्यं दर्शयति । न ह्येक इन्द्रियपरमाणुर्विषयपरमाणुर्वा विज्ञानमुत्पादयितुमलमिति, न तत्समुदायः प्रज्ञप्तिसत्त्वात्, नापि तेषामिन्द्रियविषयपरमाणूनां समुदायो विज्ञानमुत्पादयितुमलम् । प्रज्ञप्तिसत्त्वात् । परमार्थतोऽसत्त्वादित्यर्थः । तस्मादेकमेकं प्रति कारणभावः, प्रत्येककारणता, तस्यां सत्यामेव प्रत्येककारणतायामणूनां समुदाये दर्शनशक्तिव्यक्तिः । किमिव ? शिबिकावाहकसमुदाये वहनशक्तिवत् । यथा शिबिकावाहकानां प्रत्येकं विद्यमानैव सा वहनशक्तिः समुदायेऽभिव्यज्यते । तथेन्द्रियविषयपरमाणूनां दर्शनदृश्यशक्तिः **वैधर्म्येणान्धपङ्गौ प्रत्येकादर्शनवैलक्षण्येन** । यथान्धानां प्रत्येकमसती दर्शनशक्तिव्यक्तिस्तत्पङ्गावपि न भविष्यति । तथेन्द्रियविषयदृष्टदृश्यशक्तयो

१ °परमाणुतां° ग ।

नाभविष्यन्, भवन्ति तु तस्मात्प्रत्येकं विद्यमानशक्तय एवेन्द्रियविषयपरमाणवः समुदायेऽभिव्यक्तशक्तयो भवन्तीति । अत्रोच्यते—**नन्वेवमभ्युपगतनिराकरणफलैवेयं प्रत्यक्षव्यवस्था** । अभ्युपगतं 'सञ्चितालम्बनाः पञ्च विज्ञानकाया' इति तस्याभ्युपगतस्य निराकरणं फलमस्याः प्रत्यक्षव्यवस्थायाः । कुतः ? असञ्चितपरमाण्वालम्बनाश्रयणात् प्रत्येकं दर्शनशक्तिमतामिन्द्रियविषयपरमाणूनां दर्शनशक्तिव्यक्तिरित्यस्यां कल्पनायां यत्र सञ्चिताः परमाणवश्चक्षुर्विज्ञानोत्पादनशक्ता इत्येतदाश्रितं भवति पञ्चानां विज्ञानकायानामसञ्चितालम्बनत्वं तच्चाभ्युपगतं निरुणद्धि सञ्चितालम्बनत्वमिदं कल्पनान्तराश्रयणम् । किं कारणं ? प्रत्येकं दर्शनशक्तिख्यापनात् शिबिकावाहकसाधर्म्यात्त एव हि दर्शनशक्तियुक्ताः प्रत्येकमिति भवति । स्यान्मतम्–ननु प्रत्येकशक्तानामेव सञ्चये तच्छक्त्यभिव्यक्तिरित्युक्तम् । आचार्य आह–सत्यमुक्तम्, एतदयुक्तं । किं कारणम् ? **जनकानन्यथात्वात्** । न हि ज्ञानस्य जनकेभ्यः परमाणुभ्योऽन्यः सञ्चयोऽस्तीति प्रागेतद्विस्तरेण प्रतिपादितम् । तस्माज्जनकानन्यत्वात् सञ्चयाभावात्प्रत्येकं दर्शनशक्त्यभिव्यक्तिः प्रत्यक्षव्यवस्थाभ्युपगतनिराकरणफलैवेयम् । अथवा जनकानामन्यः प्रकारोऽन्यथा तद्भावोऽन्यथात्वम्, तत्प्रतिषेधो जनकानन्यथात्वं तस्माज्जनकानां–परमाणूनामतीन्द्रियाणामनन्यथात्वादैन्द्रियकत्वव्यवस्थानाभावात् सञ्चयस्यार्थान्तरभूतस्याभावादसति परमाण्वालम्बनश्रयणं तदवस्थम्, अथवा युक्तैषा कल्पना त्वयाश्रयि न स्वलक्षणविषयं प्रत्यक्षमित्येतत्प्रतिज्ञानसंवादित्वात्सन्निर्वोढुकामेन । यस्मात्प्रत्येकं ते समुदिताः कारणमित्येतत्प्रत्यक्षविषयसमर्थनवचनमादिप्रतिज्ञातेन तुल्यं वर्तत इत्यादिप्रतिज्ञातवत् । आदिप्रतिज्ञातानुरूपं या हि प्रतिज्ञा स्वलक्षणविषयं प्रत्यक्षमिति सैतेन वचनेन निरुध्यते यस्मात्स्वलक्षणविषयत्वप्रतिसमाधानेन निर्वहणमेतत् स्वलक्षणविषयं प्रत्यक्षमित्यादौ प्रतिज्ञाय प्रत्येकं ते समुदिताः कारणमिति ब्रुवताऽणूनां स्वलक्षणत्वात् प्रत्यवेक्षितव्याऽर्थापायसाध्यसाधनसम्बन्धं[2] हि वक्तव्यम्, अहो साधु, किन्तु पुनरत्र देवानां प्रिय ! भवतो दोषजातम् । किं तत् ? **अनेकार्थजन्यस्वार्थसामान्यगोचरनिरसनम्** । तत्रानेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरमिति चोद्योत्तरपक्षपरिग्रहेण प्रत्यवेक्षितव्यार्थापायसौस्थित्यार्थनिगमनवचनमनेन तु निरस्यते । अथ मा भूदेष दोष इति प्रत्यवेक्षितपूर्वापरानुमतनिगमपरिग्रहेण वा आदिप्रतिज्ञातार्थनिरसनम् । वाशब्दस्य विलक्षणत्वात् स्वलक्षणविषयप्रत्यक्षत्वं वा निरस्यते । अनेकार्थजन्यस्वार्थसामान्यगोचरता चोभयं वा निरस्यत इति । किं चान्यत् ? प्रत्येकं ते समुदिताः कारणमिति वचनाद-

---

१ नन्व° ग । २ °व्योऽर्थोपर्थ° ग ।

व्यस्ता इत्येतदर्थादापन्नमिति तदेव पुनः स्मारयति । दोषान्तरैरनेकान्तवत् । द्वयोरन्तरयोरवस्थातव्यम् । द्वावन्तौ द्वौ देशौ द्वयोर्देशयोरवस्थेयं । तैः परमाणुभिरेकतः प्रत्येकसमुदितैः, किमिव? अनेकान्तवत् अनेकान्तेन तुल्यं वर्तत इति अनेकान्तवत् । यथा द्रव्यान्तरपर्यायान्तरयोरवतिष्ठमानाः परमाणवः । त एव तत्समुदायश्चेति व्यपदिश्यन्ते तथा प्रत्येकतायां चावस्थेयमित्यनेकान्तसाधर्म्यं दर्शयति । चशब्दः समुच्चये । किं समुच्चिनोति ? ] समुदायसमुपरितनं प्रत्येकतायां च समुदाये चावस्थातव्यमिति । अग्न्यभावाच्च तदशक्यशक्ते समुदायेऽग्नेः शक्यं दहनादि ह्लादनस्नेहनाद्यशक्यम्, अम्भसस्तु स्नेहनह्लादनादि शक्यमशक्यं दहनादि । तदशक्ये शक्तः तदशक्यशक्तः प्रत्येकाशक्येऽशक्तः समुदायः, वाक्यार्थस्तु लोकव्यापिनोऽपि परमाणवः सङ्घातभेदपरिमाणापेक्षा एव चाक्षुषत्वादिभाजो भवन्ति नान्यथेत्युभयत्र स्याद्वादिनो जैना यद्वदन्ति तदेव तत्राप्यापन्नम् । कुतः ? साक्षात्तदुक्ततत्त्वत्वात् । तथैव साक्षादुक्तम् । तत्त्वमेष परमाणूनां प्रत्येकं चक्षुर्विज्ञानोत्पादने न शक्तः समुदिताः शक्ता इति । एवं तावत्साक्षादनेकान्ताभ्युपगमः । अर्थापत्त्या वाभ्युपगत एव । अनेकैकत्वभृशगत्यर्थसमुदायपरिग्रहाच्च समित्येकीभावे स चैकीभावोऽनेकस्य । 'इण् गतौ' । अयनं–गमनं गतिराय इति पर्यायाः । उत्कृष्ट आय उदायः संगतो भृशं आयः, समुदायशब्दस्य तत्परिग्रहात् प्रत्येकं तेषु समुदिता अनेकैकीभूतभृशगतय इत्यर्थः कृतस्तस्माच्चानेकान्तवादाभ्युपगमः । किं चान्यत्? इतरथापि चैषां समुदाय एव न स्यात् । न्यायतोऽपीत्यर्थः । एतत्प्रतिज्ञानसमुदाय एव न स्यात् । प्रत्येकमभूतत्वाद्वन्ध्यापुत्रवदित्येष न्यायः । यथा प्रत्येकमभूतानां वन्ध्यापुत्राणां समुदायो नास्ति तथा परमाणूनामिति । न त्वयमन्यायः प्रत्येकमभूतत्वासिद्धेः परमाणूनामिति चेन्नेत्युच्यते— बौद्धैरेवोक्ता त्रयातिरिक्तसंस्कृतक्षणिकनित्यत्वाभ्युपगमेन सहासङ्गतिरस्य । यदुक्तं वः सिद्धान्ते—'बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिके च तत् ।' इति । आकाशस्याप्रतिसंख्याप्रतिसंख्यानिरोधाख्यत्रयादन्यत्प्रत्ययजनितत्वात्संस्कृतं, संस्कृतत्वाच्च क्षणिकानित्यं, क्षणोऽस्यास्तीति क्षणिकं क्षणमात्रमेवास्य कालो न परत इति क्षणिकानित्यमेव । न कालान्तरावस्थाप्ये नित्यत्वम् । लौकिकाभिमतघटादिवत् । इत्येतेनाभ्युपगमेन सह प्रत्येकं ते समुदिताः कारणमित्यस्याभ्युपगमस्य सङ्गतिर्नास्ति । किं कारणम्? । प्रत्येकत्वप्राप्त्यनन्तरमेव विनष्टत्वात् । एकैकस्य परमाणोः स्वरूपलाभसमनन्तरमेव विनष्टत्वात् कः प्रत्येकं समुदायः? । को वा देशतोऽत्यन्तं रूपादिभेदेन यावदनभिलाप्यतथावस्थानं भिद्यमानानां प्रत्येकं भाव इति सिद्धम् । प्रत्येकमभूतत्वं देशतः

१ °यार्थो ग । २ °यानां स्याग° क–ख–ग । ३ °भृशमत्यर्थ° क–ख ।

कालतश्चावस्थान्तराप्राप्तेरिति । प्रत्येकत्वप्राप्तिरपि चैवं नैव निर्मूलत्वं एव परमाणूनां, यापि प्रत्येकत्वप्राप्तिः सापि चैवमुक्तविधिना नैवास्ति स्वरूपप्राप्तिमात्रदेशकालाप्रतीक्षित्वविनाशित्वादसत्त्वाद्वन्ध्यापुत्रवत् । यथा वन्ध्यापुत्राणां प्रत्येकस्य प्रत्येकस्य प्राप्तिर्नास्ति तथा परमाण्वभिमतानां तथानवस्थानानामभावान्न प्रत्येकत्वप्राप्तिरिति । सहोत्पाददोष इति चेत्², तेषां परमाणूनामसत्त्वमसिद्धं तथानवस्थानावस्थानानामपि देशैक्येन कालैक्येन सहोत्पादाभ्युपगमात्तस्मादस्ति प्रत्येकत्वप्राप्तिरित्येतच्च न, तुल्यत्वात् परमाण्वसत्त्वस्य देशकालभेदोत्पादासत्त्वेन सहोत्पादासत्त्वस्य तुल्यत्वात् । विकल्पद्वयेऽपि यौगपद्यासिद्धेः । इदमसिद्धं द्रष्टव्यम् । किं भूतस्य सहता, अभूतस्य ? इति विकल्पद्वयानतिवृत्तेरेव प्रश्नः । उभयथापि न घटत इत्युत्तरं वक्तुमनसः । इतर आह–अभूतस्य सहतेत्ययुक्तो विकल्पः । एवं ब्रूयादभूतस्य खपुष्पस्येव सतोऽसतो वा सहतेति, यतः स विकल्पः पूर्वपक्षे ते तस्माद्भूतस्य सहतेति ब्रूमः । अत्राचार्य आह–त्वमेवैतद्विकल्पद्वयं 'तथावस्थाः प्रत्येकसमुदिताः कारणं परमाणवः' इति ब्रुवाणश्चिन्तय क एवमाहेति ? । किं न एतेन ? यो³ ब्रवीति स ब्रवीतु । यदि भूतस्य यदि तावद्भूतस्य सहोत्पादः । भवनानन्तरविनष्टत्वात् क्षणिकवादः । कुतः सहता ? । नास्त्यत्र कारणं सहत्वे कस्यचित्केनचिदित्यर्थः । उक्तवदित्यतिदेशात् । देशकालाभ्यामत्यन्तभेदे निरभिलाप्यस्वभावानां प्रत्येकत्वप्राप्तिरेव नास्तीत्युक्तम् । तथा तेषामसत्त्वापत्तेरणूनां कुतः सहतेत्यभिसम्बन्धः । प्रतिलब्धमहत्त्वस्य चोत्पाद उच्यते त्वया । तत्तु सहत्वं यौगपद्यमप्रतिलब्धमसत्त्वापत्तेरेव तस्मात्सहोत्पाददोष इत्यपरिहारः । अथाभूतस्योत्पादो यौगपद्येनेष्यते सापि सहता वो नोपपद्यतेऽनिष्टप्रसङ्गात् । किमनिष्टम् ? वन्ध्यापुत्रसमुदायोऽपि स्यादित्यनिष्टं । कुतः ? अभूतत्वादस्थितत्वादणुसमुदायवदितीदं साक्षादनिष्टापादनम्, अणुसमुदायोऽपि न स्यादभूतत्वादस्थितत्वाद्वन्ध्यापुत्रसमुदायवत् । अभूतत्वमस्थितत्वं च हेतुद्वयं शून्यक्षणिकवादिनोः सिद्धत्वादुक्तं सन्तानादिति चेत् । स्यान्मतम्–अभूतत्वमस्थितत्वं चेष्यते तेषां तथापि जन्मविनाशसन्तानसाध्यावच्छेदात् स्थितत्वमस्त्यतः सहोत्पाददोष इति । एतच्चायुक्तं । यस्मात्सोऽप्येवमेव, सोऽपि सन्तानो भूतो वा स्यादभूतो वा ? यदि भूतः कुतः सहता ? उक्तवत् भवनान्तरविनष्टेभ्योऽन्यस्य सन्तानस्याभावात् । अस्ति चेत्तद्विलक्षणो नित्यान्य इति सर्वक्षणिकप्रतिज्ञाहानिः, अथाभूतो वन्ध्यापुत्रवदित्याद्यभिहितदोषाक्रान्त⁴मेव । अथोच्येत वाक्यवस्तुतत्त्वेत्यादि यावत्ततो भिन्नमस्तीति । अथेत्यधिकारान्तरे । अथ सहतालम्बनविषयज्ञानपक्षे कल्पिताकल्पिता उपपत्तयो विफला भवन्ति सदोषाश्चेति तं परित्यज्येदमुच्येत⁵ । सर्व एवैष विरोधसं–

१ °त्व ग । २ चैतेषां ग । ३ मयो ग । ४ °काङ्क्ष° ग । ५ °युज्येत क-ख ।

क्लेशो बाह्यवस्तुतत्त्वप्रतिपत्तिजनितो विज्ञानाद्बाह्यं वस्तुतत्त्वमस्तीति प्रतिपत्तौ सत्यां जायतेऽयं संक्लेशः । यदि परमाणव आलम्बनं ततोऽतीन्द्रियत्वसश्चितालम्बनत्वाद्यभ्युपगमविरोधः । अथ समुदायोऽसत्त्वात् खपुष्पवदनालम्बनमेव । प्रत्येकं ते समुदिताः, स्ववचनविरोधादिदोषः । प्रोक्तन्यायेनेत्येवमादिविरोधोद्भावनजनितेन चित्तसंक्लेशेन किमर्थं वाच्यामहे ? । एवं तु सर्वदोषविनिर्मुक्तमिदं कल्पनान्तरमाश्रयामहे विज्ञानमात्रकमिदं त्रिभुवनम् । यदुक्तं—

'द्यौः क्षमा वायुराकाशं सागरः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा बहिरिव स्थिताः ॥' इति ।

न द्रव्यसंवृत्या, न पुनरेतस्यां कल्पनायामेवंविधः संक्लेशोऽस्ति, यत् इदं संवृतिसदिदं परमार्थसदिदमैन्द्रियकमिदमतीन्द्रियमित्यादि विकल्प्यमानं विज्ञानाव्यतिरिक्तमर्थजातमिच्छतां[1] स्यात् । ननु तत्ततो भिन्नमस्ति तस्मादनर्थको विचार इति । अत्रोच्यते—ननु देवानां प्रिय! त्वन्मतवदेव[2] विज्ञानवादविध्वंसनार्थोऽ[3]यमारम्भः । यथेदं कल्पनापोढं प्रत्यक्षमित्येतस्य त्वन्मतस्य तत्संवादिनो बुद्धवचनस्य च विध्वंसनार्थोऽयमारम्भः । तथा विज्ञानमात्रवादविध्वंसनार्थोऽप्ययमेवारम्भः । त्वत्तीर्थकराभिहतत्वात्तस्यापि । अथवा [4]तत्परमार्थत्वात् । तत्प्रतिपादनार्थत्वाच्च सर्वदेशनानां बौद्धानां तद्विध्वंसनार्थ एवायमारम्भः । एतदपि प्रमाणाभावादयुक्तमिति ग्राह्यं प्रमाणाभावश्च प्रमेयाभावादिति स दोषः स्थित एवेति दर्शयति । **निष्ठतु तावदित्यादि** । तं चोपायेन दर्शयिष्यन्नाह—बाह्यार्थभावे विज्ञेयत्वाभावः । तस्य विज्ञानमात्रत्वात् विज्ञेयत्वाभावे च तस्य विज्ञानत्वमपि नास्ति । विजानातीति विज्ञानम् । किं विजानाति विज्ञेयाभावे ? ततः प्रमेयत्वाभावात् प्रमाणत्वाभावः प्रत्यक्षस्येति ज्ञेयज्ञानं प्रमाणप्रमेयत्वविलक्षणं खपुष्पवत् । किं तत्प्रत्यक्षं नामेत्येष दोषो दुर्निवारः । स तावत्तिष्ठतु । इदं तावदस्तित्वाभ्युपगमे वा नान्यथा विचार्यते । **विज्ञानं हीत्यादि** । हिशब्दो दृष्टार्थे । दृष्टं हि लोके विज्ञानं प्रत्यक्षादि प्रत्यक्षमनुमानं च प्रमाणे विज्ञाने आदिग्रहणात् संशयविपर्ययानध्यवसायलक्षणानि च विज्ञानानि प्रमाणाभासाभिमतानि । इदमसि त्वं प्रष्टव्यः । तत्र निर्धार्यं कतमत्तव विज्ञानमात्रमिदं सर्वत्रैकधातुकमिति नैकमपि विज्ञानमात्रं भवतीत्यभिप्रायः । ब्रूयास्त्वं **प्रत्यक्षविज्ञानमात्रमिति** तत्र तावत्प्रत्यक्षविज्ञानमात्रं तस्यैवमवस्थत्वात् । तस्य प्रत्यक्षविज्ञानस्यैवमवस्था यथास्माभिर्व्याख्याता 'न रूपादिविषया न समुदायविषया न चक्षुरादिनिमित्ता संवृत्या परमार्थेन वा युज्यत' इति तस्मान्न प्रत्यक्षविज्ञानमात्रम् । स्यान्मतम्—अनुमानविज्ञानमात्रमिति । तदपि नानुमा-

---

1 °मिच्छता ग । 2 त्व° क-ख । 3 निबन्धना° क-ख । 4 मत्° ग ।

नविज्ञानमात्रम्? किं कारणम्?, तस्यापि तत्पूर्वकत्वात्, तस्याप्यनुमानस्य पूर्व-कत्वात्। प्रत्यक्षपूर्वकत्वात् प्रत्यक्षपूर्वकं हि स्वानुभवोत्तरभाविविकल्पात्मकमविक-ल्पज्ञानसमनन्तरजन्मानुमानं मानसमनिन्द्रियमयोगि मानसप्रत्यक्षपूर्वकमेवेष्यते[1]। तस्यैव प्रत्यक्षस्यापि सिद्धौ कुतोऽनुमानसिद्धिः? अतो नानुमानमात्रम्, अत आह—**तदसिद्धावसिद्धिरतन्त्वपटवत्**। यथा तन्तुपूर्वकस्य पटस्य तन्त्वसिद्धाव-सिद्धिः। तत्पूर्वकत्वात्, तथा प्रत्यक्षासिद्धावसिद्धिरनुमानस्य। एवं तावत्प्रमाणवि-ज्ञानमात्रत्वासिद्धिः। एवं तर्हि संशयभ्रान्त्यादिकल्पनाविज्ञानमात्रमस्तु। तदपि संशयभ्रान्त्यादिकल्पनादिमात्रं वा, न संशयमात्रं न भ्रान्त्यादिमात्रमादिग्रहणान्न स्वप्नानुभवानुभूतानुकारमात्रं न तैमिरिककेशोण्डुकाद्याकारमात्रम्, सर्वस्यास्य कल्पनात्मकस्य प्रमाणाभासस्यान्त एव प्रत्यक्षपूर्वकत्वादेव तदसिद्धावसिद्धेः। स्यान्मतम्—अनध्यवसायमात्रमस्त्विति। तदपि न, अनध्यवसायमात्रं नासंचेतितं वाव्यक्तसुखदुःखादिस्वरूपमित्यर्थः। किं कारणम्? अविग्रहात्मकत्वात्तस्य। नहि तदत्यन्तासंचेतितं नाम ज्ञानमस्ति। यद्यप्यव्यक्तज्ञानमस्त्यपटुत्वात्तदथ विग्र-हात्मकं न भवत्यतो विज्ञानमेव न भवति यस्माद्विजानातीति विज्ञानमिष्टम्। तच्च न किञ्चिद्विजानातीति नानध्यवसायविज्ञानमात्रम्। तस्मान्न विज्ञानमात्रं प्रमाणम्। प्रमाणाऽभाविज्ञानेष्वनन्तर्भावात्कतमद्विज्ञानमात्रमिदं सर्वम्? एतेभ्यश्च विज्ञानेभ्यो व्यतिरिक्तस्यान्यविज्ञानस्याभावान्न किञ्चिदेतद्विज्ञानमात्रं सर्वम्। इत्यलमतिविकाशिन्या संकथयेति। संक्षिप्योपसंहरति। प्रत्यक्षलक्षणस्य सर्वथा दूषितत्वात्। इतरथा ह्यद्यापि दूषणवचनप्रपञ्चस्य नैकस्यावकाशोऽस्तीति। एवं तावद्विशेषैकान्तवादिना कल्पितं लौकिकप्रत्यक्षविलक्षणं प्रत्यक्षं न घटते। स्वव-चनव्यपेक्षाक्षेपदुस्तरविरोधत्वात्। अनयैव च दिशा स्ववचनव्यपेक्षैवाक्षेपो द्रष्टव्य इति वाक्यशेषः। एषोऽतिदेशः कस्यचित्। अविशेषैकान्तवादिनोऽपि। अपिश-ब्दादनन्तरोक्तस्य विशेषवादिनोऽसंभवात्। उभयवादिनोऽपि। तत्र[2] यद्विशेषवा-दिनः प्रागुक्तं दोषजातं कल्पनापोढं प्रत्यक्षमिच्छतः कल्पनात्मकमेव हेतुपरम्प-रया परिपाट्या प्रत्यक्षत्वमनुमानमुभयैक्यं सङ्करः। अभावमनिर्देश्यत्वमस्वलक्ष-णता च कारकज्ञापकाविशेषापादनादभिधानार्थव्यपदेश्यता च। पश्चाच्च कल्पनापोढतामभ्युपेत्यादिस्वसामान्ययोर्लक्षणयोरभावाच्चक्षुषो रूपस्य तद्विज्ञान-स्याभाव इत्यादि लक्षणवाक्यमुद्दिश्य तदिदानीमुत्क्रमेण वाच्यमिति तद्दिशं दर्शयति—सर्वसर्वात्मकतायामित्यादिना यावदनक्षमिति। एवं हि लक्षणदूषणा-तिदेशः 'सर्वं सर्वात्मक'मित्यविशेषमिच्छतः साङ्ख्यस्यापि, सर्वात्मकैकस्य वस्तुनो रूपरसादिभेदेन श्रोत्रादिभेदेन च विकल्पयितुमशक्यत्वाद्विशेषैकान्तवादिन इव

[1] °मवेष्यते ग। [2] यत्र ग।

निर्विकल्पपरमार्थपरमाणुमात्रसाधर्म्यादविकल्पकमविकल्पकत्वाद्यथा पूर्वं प्रत्यक्षलक्षणोदाहरणवाक्ये दोषाश्चक्षुर्नैव चक्षू रूपं नैव रूपं विज्ञानं नैव विज्ञानमित्यादयः । तथा **श्रोत्रादिवृत्तिः प्रत्यक्षं** श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां मनसाधिष्ठिता वृत्तिः शब्दस्पर्शरसरूपगन्धेषु यथाक्रमं ग्रहणे वर्तमाना प्रमाणं प्रत्यक्षमिति ब्रुवतः सर्वसर्वात्मकत्वे निर्विकल्पत्वाद्विभागाभावात् किं श्रोत्रं यत्र त्वगादिभ्यो विभक्तं ?, किमश्रोत्रं त्वगादि यच्छ्रोत्राद्विभक्तं ? यच्चोक्तं श्रोत्रादीनि तत्र क आदिः ? । सर्वात्मकैकवस्तुत्वे प्रथमद्वितीयाद्यन्योऽन्यापेक्षविभागाभावात् । को नामादिर्मध्योऽन्तो वा ? का वृत्तिस्तेषां श्रोत्रादीनां पूर्वमवृत्तानां पश्चाद्वृत्तिः? । कालभेदेनावस्थान्तरत्वेन च विशिष्टा का वृत्तिर्वृत्स्युपरमलक्षणा विभागाभावादेव । किं प्रति कतमोऽन्यो भावोऽन्यमपेक्ष्य तं प्रत्यक्षमित्युच्यते । नपुंसकलिङ्गस्याव्यक्तगुणसन्देहविषयत्वात् । किं प्रतीति प्रश्नः । किं प्रति सर्वसर्वात्मकत्वैकैकं नापेक्ष्यते । किमक्षमिन्द्रियं यद्विषयव्यतिरिक्तं श्रोत्रादि परस्परव्यतिरिक्तं वा ?, किमनक्षमिन्द्रियव्यतिरिक्तं विषयो रूपादिः परस्परतो वा ? । इतिः प्रदर्शने । इत्थं विभागाभावाद्विभागेन लक्षणप्रणयनं स्ववचनव्यपेक्षाक्षेपदुस्तरविरोधनादिग्रहणात्किं शब्दादि किं मनः ? किमधिष्ठेयं ? केनेति ? । किं चान्यत् । त्वन्मतेनैव प्रत्यक्षलक्षणायोगः । यदुक्तं लोकशास्त्रे–'न हि वस्तुस्वतत्त्वसाक्षात्प्रतिपत्तिः प्रत्यक्षा वस्तुनः' । स्वं तत्त्वमसाधारणमात्मीयं रूपं वा तस्य साक्षात् प्रतिपत्तिर्न व्यवहिता सा । **प्रत्यक्षं तत्तु त्वन्मतवत्** । तत्त्वेवंलक्षणं प्रत्यक्षं त्वन्मत इव त्वन्मतवत् । यथा सर्वसर्वात्मकत्वे त्वन्मते श्रोत्रादिवृत्तेः सर्वसर्वात्मकवस्त्वेकदेशशब्दादिविषयत्वात्समुदायरूपत्वाद्वस्तुस्वतत्त्वस्य विभागाभावाच्छ्रोत्रादिवृत्तिर्न सम्भवतीत्युक्तम्, तथा तस्य निर्विकल्पस्य वस्तुनो वस्तुस्वतत्त्वसाक्षात्प्रतिपत्त्यभिमतं लौकिकं सामयिकं च प्रत्यक्षलक्षणं न घटते । **निर्विकल्पत्वात् सिद्धेः** । नैव तन्निर्विकल्पकं प्रत्यक्षं शब्दादिविभागविकल्पविषयित्वात्, अविभागरूपं च सर्वसर्वात्मकं वस्तुस्वतत्त्वम् । तद्विषयं च तन्न भवति । **ततश्च कल्पनात्मकं** । **कल्पनात्मकत्वादिभ्यो भ्रान्त्यादिवन्न प्रत्यक्षमिति वर्तते** । कल्पनात्मकत्वान्निरूपणविकल्पात्मकत्वादालम्बनविपरीतप्रतिपत्त्यात्मकत्वादध्यारोपात्मकत्वादसामान्यरूपविषयत्वात्तदतद्विषयवृत्तित्वात्सदसद्भेदपरिग्रहात्मकत्वात् सर्वथा साधारणार्थत्वात् भ्रान्तिसंशयानुमानादिज्ञानवदिति । **सञ्चितालम्बनस्थान उक्तवदित्यादि** यावन्नीलादिष्वभावादित्यनेनातिदिष्टग्रन्थार्थभावनोपायदिक्प्रदर्शनं करोति—**मा भूद्व्यामोह** इति । यादृक् सञ्चितालम्बनस्थानेऽस्माभिरुक्तं परमाणुनीलादीनां सञ्चयसामान्यं संवृतिसत्त्वादसदिति ।

---

१ नादि° ग ।    २ विशिष्टाकाश° क-ख ।

इह तु तद्विपरीतं समुदायपरमार्थत्वम् । नीलादिसंवृतिसत्त्वं, संवृतिसन्तो नीलादय ऐन्द्रियाः । न परमार्थसत्समुदायः । किं कारणं ? तस्य रूपाद्यात्मकत्वात् । तदेकदेशभूतस्य रूपादेरपरमार्थसतोऽप्यविभासावस्थस्य एकस्यासर्वस्यालम्बनस्यासञ्चितवत् । न ह्येकोऽसर्वः कदाचिदालम्बनं रूपं रसः शब्दो यथाऽसञ्चिताः परमाणवः पूर्वस्मिन् वादे नैन्द्रियिकाः । एवमसञ्चितवदस्मिन् वादे लोकलोकोत्तरव्यवहारप्रत्यक्षाभिमतेषु घटादिषु नीलादिषु चाभावान्न प्रत्यक्षं तद्विषयं ज्ञानमित्यभिसम्बन्धः । किमुक्तं भवति ? रूपादयः सर्वैकात्मरूपा एव सन्ति न पृथक्स्वरूपास्ततस्तद्विषयं ज्ञानमभावविषयत्वादप्रत्यक्षं वन्ध्यासुतादिविषयज्ञानप्रत्यक्षवदिति । अनया दिशा यदाभासं प्रत्यक्षं न नोऽक्षिविषयेऽस्ति । न तदाभासं प्रत्यक्षमित्यादि विशेषैकान्तवादिनं प्रति योऽभिहितः प्रपञ्चः स सर्वो योज्यः । **तथा सम्भावनेऽपि चेत्यादि** । रूपादेरेकस्य सत्त्वरजस्तमोगुणसाम्यावस्थानलक्षणप्रधानाख्यपदार्थत्वसम्भावनेऽपि नैव तत्साम्यावस्थानं शब्दादिभेदैकसर्वात्मकत्वाभावरूपं सम्भाव्यते । सम्भाव्यमानेऽपि च तस्मिन्नव्यक्ते तस्याव्यक्तस्यातीन्द्रियत्वादालम्बनत्वानुपपत्तेश्चक्षुरादिविज्ञानानां रूपादिसङ्घात आलम्बनमिति प्राप्तम् । ते च रूपादयः प्रत्येकं परमार्थतोऽसन्तः । इतिशब्दो हेत्वर्थे । इत्यतः कारणाद्रूपादिसङ्घातालम्बनत्वात्तेषां प्रत्येकं परमार्थसत्त्वाभावान्न विषयता । रूपादयो न चक्षुरादिविषयाः परमार्थतोऽसत्त्वाद्वन्ध्यासुतवत् । रूपादिविषयं वा न प्रत्यक्षम् । परमार्थतोऽसद्विषयत्वाद्वन्ध्यासुतज्ञानवत् । तस्मादयोनिर्बीजमकृतिबहुधानेकप्रधानाव्यक्तादिपर्याया[1]ख्यं यद्वस्तु तदतीन्द्रियत्वादप्रत्यक्षम् । यदिन्द्रियविषयं तत्परिणामभेदे सङ्घाते रूपादि न तत्परमार्थसदित्याद्यशेषं विशेषैकान्तवादिमते यथाभागं यो यो भागो यथाभागं तद्विपर्ययेणाविशेषैकान्तवादेऽत्र यद्यत्र घटते तत्तथानुसृत्य[2] योज्यमित्यतीतं ग्रन्थार्थं स्मारयति । तद्योजनोपायदिग्मात्रप्रदर्शनार्थमप्याह—**भेदाभेदसंवृतिपरमार्थस्थानव्यवस्थापनयेति** । ये तत्र भेदरूपाः परमाणवः परमार्थसन्तस्तत्र संवृतिसन्तः सर्वसर्वात्मकपरमार्थवादे यस्तत्राभेदः परमाणुसमुदायः संवृतिसन् सोऽत्र परमार्थसन्नित्यनया व्यवस्थापनया योज्यम् । पुनरुत्तरोऽपि ग्रन्थो योज्यस्तद्यथा—सर्वसर्वात्मकैकरूपान्तराविविक्तस्वतत्त्वे रूपादिसत्त्वादिसंघात इन्द्रियसन्निकृष्ट आलम्बनविपरीतैकरूपेयं प्रतिपत्तिः । व्यपदेश्यानेकात्मकनीलरूपविषया न च हेत्वपदेशव्यपदेश्यैषा । यतः सर्वात्मकग्रहणापदेशेन धूमेनैवाग्निसामान्यवद् गृह्यते नानिर्देश्यरूपम् । किं कारणम् ? ततोऽन्यत् कल्पितमेकं रूपम् । ननु सर्वस्य कारकहेतुत्वेनापदेशः । प्रत्यक्षप्रतिपत्तेर्न धूमवत् । ज्ञापकहेत्वपदेशतयाग्नेरि-

---

१ °पुत्र° क-ख । २ °नुष्टत्° ग ।

वार्थान्तरस्यानेकरूपत्वस्य । नन्विदमस्यैवार्थस्य प्रदर्शनार्थं प्रस्तुतमस्माभिर्यदिदं प्रत्यक्षं स्यात् कारकादेव स्वार्थादालम्बनाद्धेतोर्जायेत दाहानुभववत्प्रत्यक्षत्वादव्यवहितप्रतिपत्त्यात्मकत्वात्[2] प्रत्यक्षस्य स्वलक्षणविषयत्वादनध्यारोपात्मकत्वादिति यावत्। अपि च कारकतापि सर्वस्य नैव तत्र द्वितीयचन्द्रवत्परमार्थतोऽसत्त्वादनुरूपात्तद्व्याघृत्तिव्यवस्थानमात्रत्वाल्लोकवत्तु सर्वसत्त्वे विशिष्टोऽपदेशो व्यपदेशो ग्राह्यादन्यस्तेन व्यपदेशेन प्रमेयं व्यपदेश्यमनुमेयं न प्रत्यक्षं धूमानुमेयाग्निवदकारकतायां कारकतायां वा वस्तुनः पितृधूमादिवत् । अभिधानाव्यपदेश्यानेकात्मकत्वे अपि च नैवानुमिताग्निवदेवैकानेकविषयत्वान्नीलस्य । तद्धि नीलरूपनिरूपणं विकल्पः। प्रतिपरमाणु परस्परप्रतिभिन्नस्वतत्त्वानेकरूपरूपैकतत्त्वैकगमाध्यारोपात्सर्वसर्वात्मकैकरूपवस्तुरूपाद्यनेकरूपाध्यारोपाद्वा रूपान्तरसामान्यरूपविषयत्वात्तदतद्विषयवृत्तत्वादनपोहादपोहाद्वाग्न्यनुमानवत् तत्सामान्यात्मकेनैव परमार्थस्थितसञ्चयप्रज्ञप्तिनीलाणुभेदपरिग्रहात्मकत्वात्साधारणार्थविविक्तकल्पनात्मकत्वान्न प्रत्यक्षमप्रत्ययात्मकत्वाच्छब्दाश्रावणत्वप्रत्ययवत् । संवृत्यतीन्द्रियत्वाभ्यां हि न नीलादिषु न च सञ्चये कारणता तथा प्रतिपत्तिं प्रति अनुमानज्ञानमपि च तत्र[3] प्रतिपूर्यते। सम्बद्धगृहीतस्यान्यथा प्रतिपत्तेर्विरुद्धवदिति समानमेतत्कल्पनात्मकत्वात् । अन्यदपि यथासम्भवं तत्प्रक्रियापतितमुक्त्वा यदुभयोः सामान्यं तत् सर्वं योज्यम् । एवं तावत् विशेषाविशेषैकान्तवादयोः स्ववचनव्यपेक्षाक्षेपदुस्तरविरोधत्वात् लौकिकप्रत्यक्षविलक्षणं प्रत्यक्षं कल्पितमपि न[4] युक्तमित्युक्तम् । नानात्वैकान्तवादेऽपि सामान्यविशेषयोरयुक्तं प्रत्यक्षमिति वर्तते । कीदृशं वा तत् प्रत्यक्षं कथमयुक्तं वेति ? । **आत्मेन्द्रियमनोऽर्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्** । आत्मा मनसा मन इन्द्रियेणेन्द्रियमर्थेनेति चतुष्टयत्रयद्वयसन्निकर्षादुत्पद्यमानं प्रत्यक्षमित्येतदपि नानात्वैकान्तवादिनां मतं **द्रव्यादिविनिर्मूलत्वात्किमादीनि न प्रत्यक्षम्** । द्रव्यमादिर्येषां ते इमे द्रव्यादयो द्रव्यगुणकर्मसामान्यविशेषसमवायाः अद्रव्यत्वात्[6] खपुष्पवन्न स्युः, एवं गुणेभ्योऽन्ये न स्युरगुणत्वादकर्मत्वात् कर्मणोऽन्येऽसामान्यत्वात्सामान्यतोऽन्येऽविशेषत्वाद्विशेषेभ्योऽन्येऽसमवायत्वात्समवायादन्ये निर्मूलत्वाच्च खपुष्पवत्सर्वे, तस्य निर्मूलत्वं चापरिणामित्वाद्वन्ध्यापुत्रवदतोऽसत्त्वादात्मादीनामात्मनोऽक्षार्थाभावे किमात्मादि यत् सन्निकर्षात् ज्ञानमुत्पद्येत? कस्य तदात्मद्रव्याभावात्किं तद्गुणाभावात् । इतिशब्दो हेत्वर्थे । राजपुरुषोऽसीति न बिभेमीति यथा तथा इति न प्रत्यक्षमात्मादिद्रव्याणां ज्ञानादिगुणानां चाभावा-

---

१ °यदीह ग । २ °नियत्या° । ३ तन्न क–ख । ४ च ग–क । ५ °वादिनमन्तं° ग । ६ अद्रव्यत्वात् द्रव्येभ्योऽन्ये इति भाति ।

न्नास्ति प्रत्यक्षमित्यर्थः । तेषां चात्मादीनामन्यथा परमार्थतो विद्यमानानामने-कान्तात्मकानामेकत्वमेव, यावत् कल्पनादन्यथाध्यारोपात्कल्पनात्मकत्वादिभ्यो हेतुभ्यो भ्रान्त्यादिवन्न प्रत्यक्षमिति पूर्वोक्तं तदेव व्याचष्टे—द्रव्यरूपादीत्यादि यावत्कल्पनात् द्रव्यग्रहणेन पृथिव्यादीनां तत्कल्पितानां सर्वगुणानां गुणग्रहणेन भवनग्रहणेन सत्ताया विशेषग्रहणेन गोत्वादीनां यावदन्त्यविशेषस्य । कारणग्रहणे-नावयवादिद्रव्याणां संयोगादिगुणानां कर्मणां च ग्रहणम् । कार्यग्रहणेन द्व्यणुका-द्यवयविद्रव्याणां चित्रादिगुणानां च ग्रहणम् । तत्र परमार्थतः संश्चासंश्च पदार्थोऽ-नन्तरोक्तो द्रव्यादिस्तस्यानेकान्तः स्वतत्त्वं द्रव्यमपि रूपाद्यपि भवनमपि विशेषोऽपि कारणमपि कार्यमपीति । तस्य तस्यान्यतमैकान्तकल्पना तदतत्त्वं द्रव्यमेव गुण एव कर्मैव भवनमेव विशेष एव न तत् स्वतत्त्वमपीति । तस्मात्कल्पनात्मकत्वं सिद्धम् । ततः कल्पनात्मकत्वादिभ्यो भ्रान्त्यादिवदप्रत्यक्षं, कल्पनात्मकत्वादयः प्रागुक्ता-ऽध्यारोपात्मकालम्बनविपरीतप्रत्ययत्वादयः । **अतः सर्वप्रमाणाविरोधीत्यादि यावद्विधिरिति** । अत इत्यनन्तरोक्तसर्वोपपत्तिप्रपञ्चतो यत्प्राक् प्रतिज्ञातं यथा लोकग्राहमेव वस्त्विति तन्निगमयति । **सोपपत्तिकं सर्वप्रमाणाविरोधितत्त्व-व्यवहारसमवस्थालोकपरिग्रहणवदेवेति** । प्रत्यक्षानुमानागमप्रमाणैरनवधा-रितकारणकार्योभयानुभयात्मकं तस्य तस्य वस्तुनो भावस्तत्त्वमविरोधि तस्मिंस्तत्त्वे तत्त्वस्य तत्त्वेन वा व्यवहारस्तस्मिन् समवस्था यस्य लोकस्य तस्य लोकस्य परिग्रहः । स सर्वप्रमाणाविरोधितत्त्वव्यवहारसमवस्थालोकपरिग्रहस्तद्वत्तेन तुल्यं वर्तत इति । एवेत्यवधारणे । तादृग् लोकपरिग्रहवदेव सामान्यविशेषौ न तु सामान्यमेव विशेष एव परस्परं भिन्नावभिन्नावेवेति वा यथा शास्त्रेषु कल्पिताविति । अथवा सर्व-प्रमाणाविरोधिनि तत्त्वव्यवहारे समवस्था यस्य स लोकः सर्वप्रमाणाविरोधितत्त्वव्य-वहारसमवस्थस्तस्य परिग्रहवदेव सामान्यविशेषौ नान्यथेति यथा प्रतिपादितं लोक-वदेव घटादिविषयाविति । यथा लोके घटादिभवनमेव सामान्यं । विशेषश्च द्रव्यक्षेत्रकालभावरूपभवनाविशेषाविशेषाभ्यामुक्तविधिना कार्यकारणादिभेदेन वा नियतौ सर्वत्र न मर्यादयेत्यनवधृतस्वभावौ । **इति विधिः** । इतिः प्रदर्शने । एवं विधिरित्थं विचारितो यः पृथगुद्दिष्टः । एषं च वेदनादिभिरपि लोकप्रमाणक आज्ञा-निकवाद उपजीव्यत इति । नयानामेकैकस्य शतधा भेदात्सप्तनयशतान्यर्था व्याख्यायन्ते, तेषां पुनश्चतुर्धा संक्षेपः । क्रियाज्ञानविनयवादसमवसरणवचनात् । तत्रोक्तं तेऽज्ञानिकवादः । 'किंचिन्न ज्ञायते, को वा । एतद्वेद ? किं वाऽनेन ज्ञातेने-

१ °नामेकात्तामेतया क-ग । २ °दन्य° क-ख । ३ ग्रहणात् ग । ४ °स चासंश्च ग ५ एव क-ख ।

त्यशक्यप्राप्यफलत्वाभ्यां वस्तुतत्त्वविचारो न युज्यते, क्रियाया एवोपदेशोऽतः श्रेयानिति लेशेनाभ्युपगतत्वाद्यस्यायमन्यभेद इति तस्यैव ज्ञानवादस्यान्योऽयं भेदः। कतमोऽसौ भेदः ? । सर्वमिदं ज्ञानप्रतिबद्धमेव जगत् यत् पृथिव्यादीति, कथं ? रूपादिमत्त्वात् घटादिवत्। आदिग्रहणात्पृथिव्यप्तेजोवायवः। नन्वेते पदार्था अज्ञान एव, किमर्थमज्ञानप्रतिबद्धं जगत् पृथिव्यादीत्युच्यते ?। उच्यते—आकाशकालदिगात्मेन्द्रियमनःप्रभृतीनामपि तद्व्यतिरेकेणानुपलब्धेर्न सन्ति, तन्मयत्वादेव च तद्वदचेतनानि। अत आह—इन्द्रियाण्य[2]पि च तन्मयान्येवा[3]चेतनानीति । तन्मयत्वानुमानं च भूयस्त्वाद्गन्धवत्त्वाच्च। पृथिवी गन्धज्ञाने तथा तेजो वायुश्च, रसरूपस्पर्शेषु रसरूपस्पर्शविशेषादिति । स्यान्मतम् प्रत्यभिज्ञानाहङ्कारेच्छादिविशेषलिङ्गदर्शनादात्मा तद्गुणस्तद्व्यतिरिक्तोऽस्तीत्येतच्चायुक्तम्। गुणगुणिनोर्भेदमिच्छतां ज्ञानोदन्यत्वसाम्यात्पृथिव्यादिगुणत्वेऽपि तुल्यानुमानत्वादभ्युपेत्याप्यात्मादिव्यतिरेकं तत्करणत्वात्तेषामिन्द्रियाणां कारणत्वात्तानि वास्य करणानि तत्करणो ज्ञः । तैः करणैः प्रकाशितं घटादि स्थूलमज्ञं प्रकाश्यत्वादेवं चान्यमप्यर्थं प्रकाश्य प्रतिपद्यमानेऽपि प्रतिपद्येत ज्ञः संभाव्यमानप्रतिपत्तिरपि पुरुषः स्थूलमेवार्थं प्रतिपद्येताज्ञानात्मकं कारणानि च ज्ञानि । अचेतनकरणप्रकाशितमप्यचेतनं प्रदीपप्रकाशितघटादिवदेव स्यात् स्थूलं । न च परमाण्वादि सूक्ष्मं शुद्धं चेतनस्वरूपपुरुषादि वा स्यादज्ञानादिप्रतिबद्धं तस्यापि चेन्द्रियसन्निकृष्टस्येत्यादि सत्यपि च तस्य स्थूलस्य ग्राह्यत्वे तत् स्वरूपाज्ञानादज्ञो[4] न सम्बद्धमेव तस्येन्द्रियसन्निकृष्टद्र[5]व्यान्तरव्य[6]तिरिक्तमसाधारणं यत् स्वरूपमात्मादेर्वातीन्द्रियस्य क्वचित् कदाचिददृष्टत्वादिदमिदमिति न निरूपणोपायोऽस्ति। निरूपणं निर्णयज्ञानमिष्टं । किं कारणं न निरूपणोपायोऽस्तीदमिदमिति चेदुच्यते—प्रत्येकं समुदाये वा तद्दृष्टानुपपत्तेः, तस्यासाधारणरूपस्यापूर्वस्यापूर्वत्वादेव दृष्टानुपपत्तिर्निर्णयानुपपत्तिश्च प्रत्येकं ताव[7]त् स हि घट एकैकः कृष्णादिरूपोऽपूर्वत्वाद्दृश्यते स्वरूपतः । तत एव प्रत्येकमनिरूपितस्वरूपाणां कुतो निरूपणं समुदाये ? सिकतासु प्रत्येकमनिरूपितस्य समुदाये तैलस्य निरूपणाभाववत् । निश्चयेन रूपणं निरूपणम् । तदुपायाभावादज्ञानप्रतिबद्धमेव सर्वमिति साधूक्तम् । स्यान्मतम्—अनुभवितुर्बाह्यविषयमिदमिदमिति निरूपणं मा भूद्यदि न भवति स्वसंवेदनं त्वान्तरं सुखदुःखादिषु । किं निरूपणं न भवतीति ? उच्यते स्वसंवेदनेनासनाद्यभ्यवहृतं परिणमतीत्यादिव्यभिचारान्न भवति । प्राणापानार्थं सञ्चेतयन्नेव हि कुरुते सर्वो लोकः । अभ्यवहृतमपि खलरसभावेन रसरुधिरादिभावेन च परिणमयन्न सञ्चेत-

---

१ °दीनि ग । २ °ण्योऽपि ग । ३ °ने वा° ग । ४ °दज्ञेन क–ख । ५ °भव्या° ग । ६ °मसि° क–ख । ७ तावन्न ग ।

यति स्वयमेव, तथा सुप्तादीनां चलनकण्डूयनस्फुरणादिक्रियाः कुर्वतामसञ्चेतयमानानामेव ताः क्रिया दृश्यन्ते सुप्तमत्तमूर्च्छितगर्भाः। सुप्तादयस्तथान्यमनसामव्यक्तचलनकण्डूयनस्फुरकर्दमस्पर्शसंवेदनं गन्धादिज्ञानं सुप्तादीनां चाम्लद्रव्यास्वादनमसञ्चेतितं रसानास्वादनमित्यर्थः। आदिग्रहणात् क्षुतजृम्भितकासितादयः। यथैताः क्रिया असञ्चेतितास्तथा स्वसंवेदनमपि। इत्थं कल्पिताकल्पिततथाभूतप्रत्ययानुपपत्तेः। कल्पितस्तावत् कल्पितत्वादेव तथाभूतो न भवति प्रत्ययः। अकल्पितोऽपीत्थमुक्तविधिना नोपपद्यते। तथाभूतः प्रत्ययः शुद्ध इत्यर्थः। तस्मात् कल्पिताकल्पिततथाभूतप्रत्ययानुपपत्तेरज्ञानानुविद्धमेव सर्वं ज्ञानमिति परिच्छेदार्थश्च प्रमाणव्यापारः, प्रमाणं हि व्याप्रियमाणं यथार्थपरिच्छेदार्थमिष्यते। न चेत्थं तत्परिच्छेदोऽस्तीति वैधर्म्यं दर्शयति। स्यान्मतम्—अज्ञानप्रतिबद्धमित्यज्ञानशब्दोच्चारणादेव ज्ञानाभ्युपगमः कुतो भवति, प्रतिषेधस्याब्राह्मणवदन्यत्र प्रसिद्धविषयत्वादन्यथा प्रतिषेधानुपपत्तेः। स्ववचनविरोधाच्च तदपि न चाज्ञानमित्युक्तविरोधः। किमिव[2]? रधकपूर्णकमातृव्यपदेशवत्। कुतः? विशेष्यप्राधान्यादनवधारणात्। का भावना? यथा राधकस्य पूर्णकस्य वैकैव माता विपक्षिता भवति तदा राधकमातेति राधकेन विशिष्यमाणा, पूर्णकमातेति पूर्णकेन वा, अथ राधकपूर्णकमातेति उभाभ्यां वा। सर्वथा राधकस्यैव पूर्णकस्यैव वा मातेत्यवधारणं नास्ति। विशेष्यप्राधान्यात्तथा ज्ञानाभ्यां तदेव विशिष्यते। वस्त्वति विशेष्यप्राधान्यान्नोक्तिविरोधो ज्ञानाज्ञानयोरविशेषात्। ननु यथा विशेषणप्राधान्यादवधारणं नीलमुत्पलमित्यतस्तेषामवबोधार्थभेदात्। ज्ञानत्वमज्ञानत्वं चाविशिष्टमिति तत्प्रदर्शयन्नाह—**संशयविपर्ययानध्यवसायनिर्णयावगमावबोधार्थत्वात्**। 'गम्लृ सृप्लृ गतौ' अवपूर्णगमनमवगमोऽवगमश्चावबोधः। 'बुध अवगमने' इति वचनात्। सर्वेषां संशयविपर्ययनिर्णयानध्यवसायानां अवगमार्थत्वादवगमस्य बोधाबोधपर्यायत्वात्। तस्मादेतस्मिन्नयभङ्गेऽज्ञात एव शब्दस्यार्थः। भङ्गग्रहणं भङ्गान्तरसूचनार्थम्। **परस्पर** इति निरपेक्षाणां भङ्गानां वृत्तेर्मृषात्वात्तद्विपर्यये सत्यत्वात्तेषां च विधिनियमयोरेव भङ्गत्वान्नयानां तस्मादस्मिन्नेव नयभङ्गे शब्दस्याज्ञातोऽर्थो नान्येषु तेष्वप्यन्येऽन्येऽर्था इत्येतस्य दर्शनस्य ज्ञापकमाह—यथा चाहुः[3]—'अस्त्यर्थः सर्वशब्दाना'मिति श्लोकः। सत्तामात्रमर्थः। सर्वशब्दानां कोऽप्यस्यार्थोऽस्ति न निरर्थकः शब्दः, स पुनरर्थो न निरूपयितुं शक्योऽयमयमिति। एतत्प्रत्याय्यलक्षणम्। तत्र दृष्टान्तोऽपूर्वदेवतास्वर्गशब्दानामर्था यथा तेषामत्यन्तापरदृष्टत्वादीदृशोऽपूर्वः स्वर्गो देवता वेदृशीति न प्रतिपद्यामहे निरूपणेन। तथागतादि[4]-

---

१ रसेन मा° ग। २ किमव ग-क। ३ बहि° ग। ४ तथा गवादि° क-ग।

शब्दानामप्यर्थैस्तत्समैरेव भवितव्यं, न हि गम्लौगम्लगर्जनादिष्वर्थव्यवस्था विशेषरूपेति कश्चिदस्त्यर्थ इत्येतावत् प्रतिपत्तव्यं तस्मिन्नेव नयभङ्गे । सर्वाणि च पदानि वाक्यार्थः । तद् यथा—देवदत्त ! गामभ्याज शुक्लां दण्डेनेत्यत्र परस्परा-विवेकेन सङ्कीर्णरूपाणि पदान्येकार्थानि । अन्वयव्यतिरेकाभ्यामनुगम्यमानं सम्पिण्डितमिवार्थं ब्रूयुर्न प्राग्भूतं तस्मात् सर्वाणि पदानि वाक्यार्थः । पदान्येव वा वाक्यार्थः । नैकैकं न तद्व्यतिरिक्तं यथोक्तमर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागः स्यादिति । ननु यथान्यैः कल्प्यतेऽन्यथा ।

> आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी ।
> एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥
> पदमाद्यं पृथक् सर्वं पदं सापेक्षमित्यपि ।
> वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ॥ इति ॥

लौकिकत्वादशक्यप्राप्यफलत्वाभ्यामेव । क्व पुनरयं नयेऽन्तर्भाव्यते ? । किं द्रव्यनयभेदे पर्यायनयभेदे ? उच्यते—व्यवहारदेशत्वाच्चास्य द्रव्यार्थतो लौकि-कसम उपचारः 'प्रायो विस्तृतार्थो व्यवहार' इति वचनात् । तस्य द्रव्यार्थभेदाल्लोक-व्यवहारविषयो हि व्यवहारस्तदेकदेशविषयो विधिनयस्तस्माद्द्रव्यार्थभेदः । यथा—

> दव्वट्ठियणयपगई सुद्धा संगहपरूवणाविसओ ।
> पडिरूवे पुण वयणत्थनिच्छओ तस्स ववहारो ॥
> —सन्मति० का० १, गा० ४.

तस्य शब्दार्थव्युत्पत्तिदर्शनार्थमाह—**द्रव्यशब्द इति** । द्रोरवयवो द्रव्यमिति व्युत्पादितत्वात् । अथ द्रुः कः ? । 'दु द्रु गतौ' तत्तुल्यार्थमव्युत्पन्नं प्रातिपदिकं 'द्युद्रुभ्यां मः' (पा.५।२।१०८) इति निपातितत्वात् । तस्यार्थो दुर्गतिर्यात्रा व्यवहारः लोकस्येति । तस्या यात्राया अवयव एकदेश इत्यर्थकथनात् स एकदेशः क इति चेदुच्यते—**एकदेशोऽसमस्तवृत्तिरन्यथावृत्तित्वात्** । समस्तलोकव्यवहार-विपरीतवृत्तित्वान्मिथ्यादृष्टिरित्यर्थः । सा पुनरस्या विधिवृत्तेरेकदेशवृत्तिता कुतः परिच्छिद्यत ? इति चेल्लोकत एव परिच्छिद्यत इत्यर्थः । यस्माल्लोके तदेकदेशवृत्तिता मृद्घटादिसामान्यविशेषत्वद्रव्यत्वानां मृत्सामान्यं घटो विशेषः मृदः सामान्यं द्रव्यत्वं, घटो विशेषः । छिद्रबुध्नखण्डौष्टसम्पूर्णरक्तकृष्णतादिः सर्व एवैष परित्याज्योऽर्थकलापः समस्तवृत्तौ नयानां यथा स्वप्रमाणवशाद्व्यवस्था-प्यस्तस्या ज्ञानानुविद्धत्वैकान्ताद्वक्ष्यमाणदोषसम्बन्धाच्च लौकिकस्याप्यन्या युक्तिः । इतिः परिसमाप्तौ । विधिनयशतभेदे दिगिति । तस्मादन्यभवस्तु अलौकिकत्वात्

---

१ द्रष्टव्यं घटविशेषः ग ।

खकुसुमवदिति गतार्थम् । अभिप्रायार्थः । स तु मन्यते लोकैकान्तसाङ्ख्यादिपरिकल्पितमवस्त्विति । व्यतिरेके घटवदिति । यद्वस्तु तल्लौकिकमेव यथा घटः । कार्यं कारणं वा सामान्यं वा विशेषो वा यो वा स वास्तु यथा लोकप्रसिद्धिः पृथुबुध्नादिप्रागुक्तसामान्यविशेषभवनात्स च लौकिक इति । व्यतिरेके वैधर्म्ये सर्वनयानां जिनप्रवचनस्यैव निबन्धनत्वात्किमस्य निबन्धनमिति चेत् । उच्यते—निबन्धनं चास्य इति, आया भंते ! नाणे अन्नाणे ? इति स्वामी गौतमस्वामिना पृष्टो व्याकरोति–गोयमा ! नाणे नियमा । अतो ज्ञानं नियमादात्मा ज्ञानस्यात्मव्यतिरेके वृत्त्यदर्शनात् । 'आया पुण सिय नाणे सिअ अन्नाणे ? । आत्मा पुनः स्यात् ज्ञानं स्यादज्ञानम् । अज्ञानमप्यसौ ज्ञानावरणीयकर्मवशीकृतत्वात् संशयविपर्ययानध्यवसायबाहुल्यादित्यसात्सूत्रादेतस्मिन्मिथ्यादर्शननिर्गतमज्ञानोक्तेर्विरोधसमाधिमवददिति । विधिभङ्गारः प्रथमो द्रव्यार्थभेदः समाप्तः ॥

## अथ क्रियावादः[1] ।

अयमपि तु विधिवृत्त्यैकान्तोऽपि प्रतिषेधादयुक्त इति कः पुनः सम्बन्धः? । स्वविषयसङ्घातनेनार्थानां भावान्नात्मभिर्विधिनियमवृत्तिभिरनेकान्तविदितप्रत्येकतत्ताभिः समधिगम्याजैनसत्यत्वसाधनवृत्तौ विवक्षितद्वादशविकल्पविशेषेणैकैव वृत्तिरधिकृतेत्यनन्तरोक्ताया विधिवृत्तेरपि प्रत्यवबृत्त्या मिथ्यादृष्टित्वादयमपि तु विधिवृत्त्येकान्तस्त्याज्यः । कस्मात्? अयुक्तत्वात् । अयुक्तत्वं विप्रतिषेधात् । विरुद्धः प्रतिषेधो विप्रतिषेधः । सर्वमुक्तं मृषेति प्रतिषेधवत् । अपिशब्दात् सामान्यविशेषोभयवादैकान्तः प्रथमनयदूषितोऽनुमत इत्ययमभिसम्बन्धः । कथं विप्रतिषेध इति चेदुच्यते । यदुक्तं त्वया 'सर्वमज्ञानानुविद्धमेव ज्ञानं । न च ज्ञानाज्ञानयोः कश्चिद्विशेषोऽस्ति । संशयविपर्ययानध्यवसायनिर्णयानामवबोधैकार्थत्वान्न लोकतत्त्वं ज्ञातुं शक्यम् । विफलश्च विवेकयत्नः शास्त्रेषु' इति । तद्यदि लोकतत्त्वमज्ञेयमेव।सर्वशास्त्रविहितलोकतत्त्वव्यावर्तनं तद्वप्रत्ययम्, एवमशक्यप्राप्यफलत्वाभ्यां प्रतिषेध्यस्वरूपज्ञानविषयत्वाच्च किं त्वयैवेदं विदित्वाऽविदित्वा वा सामान्यविशेषौ स्वविषयौ परविषयौ वा स्यातामित्यादि लोकतत्त्वं शास्त्रान्तरेषु कल्पितं दूषितम्? । विदित्वा चेत्, न तर्हि तन्मतं न विदितम्, अथाविदित्वा ततः कथं दूषितमित्युभयथापि न युज्यते प्रतिषेधो विरुद्ध[2]त्वात्, प्रतिषिध्यते प्रतिषेध्यं च न ज्ञायत इति हास्यमेतत् । स्यान्मतम्—

प्रतिषेध्यं ज्ञायते तैस्तस्य वस्तुनः सत्त्वादिगुणत्रयात्मकक्षणतद्रूपद्रव्यादिषट्पदार्थात्मकादितया बहुधा कल्पितस्यानुपपत्तेरिति, एतदपि विप्रतिषिद्धं तेषामपि मतानां लोकतत्त्वान्तःपातिनां मिथ्याविधिकत्वं ज्ञातमज्ञातं वा स्यात् इति तुल्यविकल्पत्वात् ज्ञाताज्ञातत्वयोश्च तद्दोषाविमोक्षात् सामान्यं स्वविषयं परविषयं चेत्थमित्थं च न युज्यते, तथा विशेष इति प्रपञ्चितत्वात् । अज्ञातं चेत्तर्हि सर्वमप्रत्ययत्वाच्च प्रतिषेध इत्युक्तम् । ज्ञातं चेत् कथं ज्ञातुमशक्यं लोकतत्त्वमित्यप्रत्ययमेव । स्वयमसमीक्षितवाच्यवाचकसम्बन्धत्वात्, तेन च स उन्मत्तवदेव तावदशक्यं प्राप्तुं लोकतत्त्वमित्युक्तं विप्रतिषेधेऽप्युक्तमनर्थको विवेकयत्नः शास्त्रेष्विति तत्रापि विप्रतिषेधात् । यद्यप्युक्तमनर्थको विवेकयत्नः शास्त्रेष्विति तत्रापि विप्रतिषेधात्तु तज्ज्ञानमफलमेव किमिति शास्त्रविहितार्थप्रतिषेधप्रयासः? । शास्त्रविहितार्थज्ञानं तत्प्रतिषेधोपायज्ञानं चावधार्य किं सफलमफलम्? । यद्यफलं विज्ञानं शास्त्रविहितार्थान् प्रतिषेधित्सतः प्रयासोऽप्यफल एव ज्ञातत्वात् पूर्ववत् । अथ सफलमफलमेव लोकतत्त्वज्ञानमिति व्याहन्यते, अतः 'को वा एतद्वेद । किं वानेन ज्ञातेने'त्येतदयुक्तमुक्तम्, विप्रतिषेधात् । यदप्युक्तम् 'वस्तुतत्त्वाशक्यप्राप्तेः क्रियाया एवोपदेशो न्याय्यस्तत्पूर्वकत्वात् सुखावाप्ते'रिति।अत्रोच्यते—क्रियो-

१ क इत्येतं क ख । २ विरुद्धत्वात् प्रतिषिध्यतोऽप्रतिषेधः चेत् क-ग । च यथार्थं क-ग ।

पदेशन्याय्यत्वाभ्युपगमोऽपि चैवं विघटेत । विघटतादिति कथं निष्ठुरमुच्यते, विघटेतेति न सम्भावनयोच्यते । दाक्षिण्यलोकज्ञानाभ्यां को हेतुर्विघटते ? । संसेव्यविषयस्वतत्त्वानुपातिपरिणामविज्ञानविरहितत्वात् । समित्येकीभावे । आत्मसाद्भावेन सेव्यमानस्य विषयस्य तत्त्वमाहारादेः शब्दस्पर्शरसरूपगन्धात्मकस्य स्वरूपं

'वातादिप्रकोपशमोऽपचयप्रलयावहः ।
नागरातिविषामुस्ताक्काथः स्यादामपाचनः' ॥ इति ।

तत्तत्त्वानुपातिपरिणामविज्ञानं तदनुपतितुं शीलमस्येति । किमुक्तं भवति ? आसेव्यमानस्य वस्तुनस्तत्क्रियात एव स्वरूपानुपातेन विपाकः परिणामः । तद्विज्ञानविरहितत्वम् । स इत्थं विपाकः सुखाय दुःखाय वेत्येतद्विज्ञानं हिताहितप्राप्तिपरिहारार्थम् । ननु भवतां नास्त्येवातस्तद्विरहितत्वात् क्रियोपदेशोऽपि 'अग्निहोत्रं जुहुयात् स्वर्गकामः, तन्दुलान् पचेद्भोक्तुकामः' इत्यादिर्दृष्टार्थो न घटते । अज्ञातवैविध्यवस्तुतत्त्वपरिणामवान् अवैद्यौषधोपदेशवत् । यथा कस्यचिदविज्ञातरसवीर्यविपाकप्रभावद्रव्यगुणविशेषभागाभागसंयोगस्य देशकालातुरप्रकृतिसाम्याग्निबलाबलवतो रोगसमुत्थाननिदानादिलक्षणानभिज्ञस्यौषधोपदेशो न घटते । तथा 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्याद्युपदेशः । अथवा हिताहितप्राप्तिपरिहारार्थत्वात् सर्वोपदेशानां तदभावात् क्रीडितमेवास्त्वितीदं बालकादिग्रहणवत्, तज्ज्ञानविरहितस्योपदेशश्रवणग्रहणधारणतर्कमानुषनोद्यमर्थानुबन्ध्येव स्यादितीदमर्थप्रदर्शनार्थं द्वितीयमुदाहरणार्थम्, उपदेशादेव न ज्ञानयोग इति चेत्

स्यान्मतम्–पुरुषस्यातीन्द्रियार्थदर्शनशून्यत्वात् । स्वर्गापूर्वकर्मसम्बन्धज्ञाने पूर्वविज्ञानकारणाभावाद्वन्ध्याया दौहित्रस्मरणवत् द्रव्यगुणरसवीर्यविपाकादिज्ञानस्यानुमानं पूर्वविज्ञानकारणं संभाव्येत, तस्मादुपदेशादेवाग्निहोत्रकर्मस्वर्गफलाभिसम्बन्धादि ज्ञानमित्येतच्चायुक्तमुभयथापि पौरुषेयत्वाद् दृष्टादृष्टार्थत्वेनोपदेशज्ञानस्यापि पौरुषेयत्वात् । ज्ञानतो[2] वचनतश्च पुरुषाधीनत्वादिति वा यथा त्वमतीन्द्रियेष्वर्थेषु पूर्वविज्ञानकारणाभावं मन्यसे पुरुषस्य पुरुषज्ञानवचनानां तद्विषयाणां चाप्रामाण्यं रागादियोगात्, तथाऽसर्वज्ञोपदेशस्योपदिष्टज्ञानस्य श्रोतृज्ञानवचनयोश्च ज्ञानत्ववचनत्वाभ्यां पौरुषेयत्वानतिवृत्तेर्भारतरामायणादिवदप्रामाण्यम्[3] । अग्निहोत्राद्युपदेशस्यातीन्द्रियार्थस्य प्रामाण्यवत् सांख्याद्यतीन्द्रियार्थोपदेशप्रामाण्यं वा । वानरमूलिकादिपरिज्ञानवत्तस्य तद्विषयं तत्तद् ज्ञानं स्यान्न तु सर्वौषधादिविषयैकपुरुषज्ञानमतो वैद्यकादिष्वपि पूर्वज्ञानकारणाभावः तद्विषयैकपुरुषविज्ञानवदतीन्द्रियग्राह्यसर्वपदार्थविषयैकपुरुषविज्ञानाभ्युपगमो वावश्यंभावी । किं कारणम् ?

---

१ वेव्यद्य° ग । अज्ञानवैधव्य° क-ख । २ ज्ञानवतो क-ख । ३ त्वानति° क ।

वेदवचनयोरन्यथानुपपत्तेः । पुरुषमन्तरेण वेदनं वेदः ज्ञानमित्यर्थः । तेन च ज्ञानस्य वचनं परप्रत्यायनं च तदुभयप्रत्ययनं स्वप्रत्यायनं च नोपपद्यते । तयोः पुरुषसमवायित्वात् । उक्तं च—

रूपविबन्धः सम्बद्धः प्रामाण्यं प्रत्ययः क्रिया ।
शब्दस्य पुरुषाधीना ज्ञानं वा नान्यदात्मनः ॥ इति ॥

औषधोपदेशाज्ज्ञानवदग्निहोत्राद्युपदेशाज्ज्ञानम् । तज्ज्ञानवत्तदपि वा प्रमाणान्तरगम्यमिति । एवं तावत् क्रियोपदेशमभ्युपगम्य दोष उक्तः । अनभ्युपगमस्यापि उपदेशाप्रसिद्धिरपि चैवं भवतः,त्वन्मतेनैवेति वाक्यशेषः। सर्वस्योपदेशस्य सांख्याद्युपदेशवल्लोकतत्त्वान्वेषणादृते सम्भवाभावात् । उपदेशो व्याख्या । असौ च व्याख्या पदविषया वाक्यविषया प्रमाणविषया तद्वस्तुविषया वा वेदव्याकरणसाङ्ख्यादिशास्त्रविकल्पिता यथास्वं प्रक्रियाभिः, तत्र यथा सांख्यादिप्रक्रियादिर्वस्तुतत्त्वं घटादेर्लोकतत्त्वान्वेषणपरया व्याख्यया विना नाधिगम्यते । इतस्तथा व्याख्यायते । एवमग्निहोत्रादि संज्ञासंज्ञिसम्बन्धव्युत्पादनेन व्याख्यायते । प्रकृतिप्रत्ययादिविभागेन पदविषयं वाक्यविषयं प्रमाणविषयं च । प्रत्यक्षानुमानागमबाधाभ्युच्चयविकल्पाङ्गाङ्गिभावविकल्पादिलोकतत्त्वान्वेषणमन्तरेण नाधिगन्तुं[1] शक्यमित्युपदेशस्तत्त्वान्वेषणपरः सर्वः प्रवर्तते । तत्र यथा सांख्याद्युपदिष्टार्थेष्वशक्यप्राप्तिरुपदेशानर्थक्यं च । तथा वेदव्याकरणमीमांसाद्युपदेशानामपीत्युपदेशाप्रसिद्धिः । अथ लोकतत्त्वान्वेषणपराणां तेषां उपदेशानां शक्यप्राप्त्यर्थोपदेशसाफल्ये शक्येते[2] । कः पराभ्युपगमे प्रद्वेषः ? । इहापि च यथा लोकत एव प्रत्यक्षानुमानगम्यघटपटादितत्त्वपरिच्छेदः शक्यते कर्तुम्, एवं पदवाक्यप्रमाणपरिच्छेदोऽपि शक्यो घटादिपदात् शब्दार्थप्रत्ययविषयस्य लोकत एव वर्णानुपूर्व्यादिनियतवाच्यवाचकप्रत्ययाव्यभिचारस्य प्रसिद्धेः । एवं वाक्ये प्रमाणे च योज्यम् । उक्तं च—

प्रमाणानि प्रवर्तन्ते प्रमेयैः सर्ववादिनाम् ।
संज्ञाभिप्रायभेदात्तु विवदन्ते तपस्विनः ॥ इति ॥

तस्मादुपदेशानां त्वन्मतेनैव सर्वेषामप्रामाण्यसिद्धिर्लोकतत्त्वान्वेषणपरत्वे सत्यशक्यप्राप्त्यफलत्वेनाभ्युपगतत्वात् सांख्यादिशास्त्रकारोपदेशवदतो दृष्टादृष्टार्थक्रियोपदेशे पदवाक्यप्रमाणविषयव्याख्यावैयर्थ्यप्रसङ्गान्न वेदशास्त्रोपदेशसिद्धिर्लोकतत्त्वान्वेषणपरत्वानतिवृत्तेस्तर्कशास्त्रवाच्यलोकतत्त्वविचारविज्ञानसाफल्यं वा । उपदेशाप्रसिद्धौ परीक्षकत्वहानिः । पदवाक्यप्रमाणविषयाव्यभिचारज्ञानार्थत्वात् परीक्षायाः, परीक्षैव चोपदेशः परीक्षाव्याख्ययोरनर्थान्तरत्वात् । स

१ °नानधि° ग । २ वाक्ये क–ग ।

चोपदेशस्त्वन्मतेनैवैवं नावतिष्ठते । लोकतत्त्वान्वेषणात्मकत्वात् । स्यान्मतम्—पद-वाक्यप्रमाणानामपि सामान्यविशेषादिघटादिजगत्तत्त्वविचारवद् व्यवस्थैव प्रमाणानामपि प्रमाणान्तराधिगम्यत्वेऽनवस्थादोषप्रसङ्गादिति ।

अत्रोच्यते—प्रमाणानवस्था तावन्नास्ति चन्द्रार्कमणिप्रदीपादिवत् स्वपरावभासित्वात् प्रमाणानाम् । पदादीनामभ्युपगम्यापि त्वन्मतेऽनवस्थामाह—तस्यापि त्वनवस्थाने जगत्तत्त्वस्य प्रमाणविचारस्य वा क्रियाविधाय्यपि शास्त्रं नावतिष्ठेत । तस्यापि लोकतत्त्वान्वेषणात्मकत्वादनतिवृत्तेरप्रमाणात् । इतिशब्दो हेत्वर्थे । अयं हेतुः क्रियाविधायिशास्त्रानवस्थानात् इत्यतस्तत्प्राप्य पुण्याद्यभावः क्रियाविधायिशास्त्रोपदिष्टक्रियातिव्यङ्ग्याऽपूर्वाभाव इत्यर्थः। कतमं पुनस्तत्क्रियाविधायि शास्त्रमुच्यते ?। यथा-'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति[1] एतच्छास्त्रम् । इदं तु पुनः किं विधिरनुवादोऽर्थवादः ? । उच्यते—विधिः, कथमुपलक्ष्यते विधिरिति ? अप्रसिद्धार्थविषयविधायितया लक्ष्यते । अत्राप्रसिद्धमग्निसम्प्रदानं हवनं विधीयते स्वर्गस्य सुखसंज्ञस्य तत्प्राप्त्याश्रयस्य विशिष्टदेशाद्यात्मकस्य वा तदभिलाषस्य च कर्तरि सिद्धत्वात् स्वर्गावाप्तावुपायोऽग्निहवनमित्युपायस्यापूर्वत्वात् । कथं पुनस्तत्क्रियाभिव्यङ्ग्याऽपूर्वाभावः ? त्वन्मतादेवोक्तवत् । इतश्च तर्कोऽस्थापितलोकतत्त्वाज्ञानानपेक्षत्वात्तस्य विधेरसंव्यवहार्यत्वात् तद्विहितक्रियाफलसम्बन्धाभावः । दृष्टान्त आरोग्यार्थिनि डित्थभक्षणोक्तिवत् । यथा आरोग्यार्थिनि पुंसि डित्थं भक्षयेत्युक्तिस्तत्क्रिया च विफले अप्रसिद्धत्वादेवं त्वदुक्ते क्रिये अशक्यप्राप्त्यर्थे चेत्यशक्यप्राप्त्यादिमत्सांख्यादिविवेकयत्नतुल्यत्वात् तवापि । अथो[2]त्पेतेत्यादि ।

अत्राह—मा मंस्थाः सांख्यादियत्नतुल्यत्वमेतस्य, किं कारणम् ? वैधर्म्यात् । तद्यथा—कर्तव्यतां विधायेतिकर्तव्यताविधानात् तत्राग्निहोत्रं जुहुयादिति कर्तव्यतयाऽग्निहोत्रं विधीयते। ततः पुनःपुनरुत्तरत्र विशेषेतिकर्तव्यता विधीयते तदग्निहोत्रमेवमेवं च कर्तव्यमिति । यद्यथा—'अग्निष्टोमादिसंस्थाविशेषैर्द्रव्यगुणदेवताकर्तृकर्मकालादेशादिविशेषैश्च। वसन्ते ब्राह्मणो यजेत, ग्रीष्मे राजन्यः, शरदि वा यजेत वैश्यः, होला[3]को प्राज्ञैरुद्धषभयज्ञ उदीच्यैर्वायव्यैः श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवास्मि भूमिं निधत्ते''इत्यादि त्वया प्रतिपत्स्यत इति शिष्यमनुशास्ति। तत उत्तरकालमेवंप्रकारमेवाग्निहोत्रं नाम कर्म भवति विशेषविधानार्थप्रतिपत्तिबलेन सुसिद्धं भविष्यति। तस्य शिष्यता सांख्यादिविवेकप्रयत्नवैलक्ष्यत्वेन इतरार्थाविचारेण घटपरमाण्वादिकार्याकारणसामान्याविशेषादिस्वरूपाविचारेणेति। अत्रोच्यते—ननु चैवमपीत्यादि । नन्वित्यनुज्ञापने ।

---

१ तैत्तरीयसंहितायाम्। २ अथोते °क ख-। अथो ने° ग। ३ होत्वाको क-ख ।

कर्तव्यतेति । या कर्तव्यता प्रतिपत्तिरग्निहोत्रादिविषया सा प्रतिपत्तित्वाल्लौकिककर्तव्यताद्यर्थतयानुसृतेरेव । प्रत्येकं पतनं प्रतिपत्तिः, स्याद् द्विविधा—आध्यात्मिकी बाह्या च । तत्राध्यात्मिकीदं कर्तव्यमिदं न कर्तव्यमित्यादिका बुद्धिरेव । बाह्या तु द्विपदचतुःपदधनधान्याद्यर्थमयी क्रिया । सा द्विविधापि लोकप्रसिद्धमेवार्थमनुसृत्य भवितुमर्हति नाप्रसिद्धं, तस्मादग्निहोत्रादिप्रतिपत्तिरपि लोकतत्त्वानुसृतेरेव नान्यथा। किंविषया सा स्यात्? नालिकेरद्वीपजातवृद्धस्य धेनुप्रतिपत्त्यभाववदिति । तद्दर्शयति—कर्तव्यविधानानन्तरं चेति, कर्तव्यतावसरः । लौकिककर्तव्यताद्यर्थतत्त्वानुसृतेरेवेति वर्तते प्रसिद्धकर्तव्यप्रतिपत्त्यनन्तरं प्रसिद्धेतिकर्तव्यताप्रतिपत्त्यवसर इति न्यायस्तदुभयमलौकिकत्वादग्निहोत्रसामान्यस्याग्निष्टोमादिविशेषस्य द्रव्यमन्त्रदेवताग्नियमाद्यात्मनश्चाप्रसिद्धेरयुक्तम् । किं चान्यत्—न्यायासंभवं च तद्व्यावर्तनार्थंलोकप्रसिद्धकर्तव्यतेतिकर्तव्यतावैधर्म्यं दर्शयन्नाह—यथा घटादिकर्तव्यतायां घटं कुर्विति, ततः पुनरितिकर्तव्यताक्रम एवमिति प्रकारनिर्देशं दर्शयति । मृत्पिण्डं चक्रमूर्धनि संस्थाप्य दण्डेन भ्रमयित्वा द्वाभ्यां पाणिभ्यां शिबकाद्याकारविशेषान् क्रमेण निर्वर्तयेरिति प्रसिद्धकर्तव्यताविधानोत्तरकालं प्रसिद्धेतिकर्तव्यताविधानं घटादिविषयमुपपन्नं प्रसिद्धार्थत्वान्न त्वग्निहोत्रकर्तव्यतायाः पशुवधादीतिकर्तव्यतायाश्च प्रसिद्धिरप्रसिद्धत्वादग्निहोत्रशब्दस्य। काञ्चिदपीति। कर्तव्यताकर्तव्यतां वा वक्तुमशक्यत्वादत आह—ननु घटवदग्निहोत्रशब्दः काञ्चिदपि कर्तव्यतां ब्रवीति, अपिशब्दादितिकर्तव्यतामपीति ।

स्यान्मतम्—जुहुयादित्ययं तर्हि ब्रवीति 'हु दानादनयोः' इत्यस्याः प्रकृतेः क्रियावाचिन्याः विध्यर्थलिङ्प्रत्ययान्तत्वाच्च हवनमग्निविषयमतस्तत्कर्तव्यतां जुहुयादित्येष शब्दो ब्रवीति । अत्रोच्यते—एवमपि तदवस्थं सत्यमयं ब्रवीति तत्कर्तव्यतां किन्तु हवनमात्रस्य तस्याप्यप्रसिद्धस्यैव। नन्वग्निहोत्रे कर्तव्यतां जुहुयादित्याख्यातस्य पूर्वापरीभूतानिष्पन्नावयवक्रियार्थवाचित्वात्। नाम्नां पिण्डितनिष्पन्नार्थवाचित्वात्। किं कारणम्? विविक्तार्थवाचित्वाभिमतानां शब्दानां पदान्तरार्थावृत्तेः। तत आह—जुहोतेर्हि धातोरयं प्रत्यय उत्पन्नः स कर्तव्यतां हित्वा पदान्तरकर्तव्यतायां कथं प्रवर्तेत?। 'प्रत्ययग्रहणं प्रकृतिप्रत्ययौ प्रत्ययासहत्वात्' इति परिभाषितत्वादाप्तेः। स्यान्मतम्—अथ तदेव तत्, यदेवाग्निहोत्रं तदेव हवनम्। यदेव हवनं तदेवाग्निहोत्रमिति। एतत्तावदनयोरैकार्थ्यं प्रसिद्धिविरुद्धं नामाख्यातयोर्भिन्नार्थत्वप्रसिद्धेरभ्युपेत्याप्येकार्थवाचित्वमनयोः पौनरुक्त्यपरिहारार्थं लाघवार्थं च जुहुयादित्येवास्तु, किमग्निहोत्रमित्यनेन? । इतराप्रसिद्धिपौनरुक्त्यपरिहारार्थमाह—

---

१ ° ममी क–ख । २ 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति पात० म० भाष्ये ।

**पदान्तरकर्तव्यतायां तावदित्यादि** । तावच्छब्दः क्रमार्थे, यत्तावदुक्तं पदान्तरकर्तव्यतायां कथं प्रवर्ततेऽन्यत्र परिहारोऽस्मिन् परिहारेऽभिहितौ पौनरुक्त्यप्रसिद्धिदोषावपि तदेव तदित्येतत्पक्षगतौ परिहृतावेवेत्यभिप्रायः । तत्र हवनपदान्तरकर्तव्यतामपेक्षते । केन न्यायेन? वाक्यन्यायेन । को वाक्यन्यायः? भेदसंसर्गाभ्यां परस्पराकाङ्क्षासम्बन्धस्तयाऽऽकाङ्क्षया पदान्तरार्थे वर्तते पदम् । यथा सब्रह्मचारिणा सहाधीत इत्युक्ते येन समानो ब्रह्मचारी तेन सब्रह्मचारिणा, य एवाधीते तेनैव समान इत्याकाङ्क्षा भवति । सामर्थ्यान्नान्[3]येन केनचित्सामर्थ्यमपेक्षेतेत्यर्थः । ननु यथा पदार्थे परिच्छिन्ने घट इति न पदार्थान्तरमपेक्षते । पदेन सा पुनरपेक्षा घटवत् घटशब्दवदभेदनिर्देशाद् घटार्थत्वेन घटः शब्द उक्तः घटशब्दस्यार्थवत्त्ववत् अग्निहोत्रशब्दोऽसर्वस्याप्यर्थवत्त्वमपेक्षतेऽन्यथाग्निहोत्रशब्दोऽनर्थकः स्यात्, तन्मा भूत् तदानर्थक्यमित्याकाङ्क्ष्यते । न चैदेवं ततो दोष इति । यदि तु निरपेक्षोऽग्निहोत्रशब्दो हवनप्रकृत्यर्थमात्र एव वर्तते ततः को दोषः? ततोऽग्निहोत्रशब्दः प्रमादाधीन आपद्यते । अग्निशब्दस्य च न पृथक्कश्चिदर्थो हवनप्रकृत्यर्थमात्रत्वात् ततश्च दशदाडिमादिश्लोकावयववत् प्रमादाधीन आपद्यते । निराकाङ्क्षत्वान्न पुनरेवमिष्यते । तत एवं वचनव्यक्तिर्भवति । अग्निहोत्राख्यं हवनं कुर्यादग्निहोत्रसंज्ञाक्रियाकाङ्क्षा हवनं कुर्यादिति । किमिव? घटवत् यथा घटं कुर्यादित्युक्ते सामान्यचोदनायाः प्लवनाद्विशेषाभिसम्बन्धमन्तरेण नैरर्थक्यं स्यात् तन्मा भूदिति घटं कुर्याद् घटक्रियां कुर्यादिति वचनव्यक्तिस्तथाग्निहोत्रं जुहुयादिति ।

आचार्य आह–**एतदुक्तं दृष्टान्तवैषम्यात्। अर्थभेदासिद्धेरभ्युपेत्याप्याकाङ्क्षितमर्थभेदमग्निहोत्रहवनयोरप्रसिद्धेः**, दृष्टान्तेन प्रसिद्धेन घटेन वैषम्यमिति। तद्दर्शयति–**नहि किञ्चिदग्निहोत्रं नाम हवनं घटवत्प्रसिद्धं तदनूद्योच्येत**। यथा घटवस्तु लोके प्रसिद्धमभूत् यमनूद्य तद्विषयं कर्म कुर्याद् घटं कुर्यादित्युच्यते। न तादृगनुवदनमात्रोपपन्नमप्रसिद्धत्वादग्निहोत्रहवनयोर्नाप्याकाङ्क्षात्मकृतमैक्यमस्तीति तद्दर्शयति । न हि धर्म्येण यदग्निहोत्रं संज्ञिकं हवनं तत् कुर्यादित्यग्निहोत्रहवनयोरैक्येन प्रसिद्धौ सत्यां तद्विषयं करणमनुविधीयेत । नापि हवनं यत् कुर्यादिति हवनक्रियामनूद्य तदग्निहोत्राख्यमित्यैक्येन विधानं युज्येत, परेणाग्निहोत्रस्य हवनस्य वा अविहितत्वाल्लोके शास्त्रान्तरेषु वा प्रमाणान्तरेण वाऽप्रसिद्धत्वादग्निहोत्रहवनक्रिययोः कथमनूद्य विधानं घटते? । **अत एव तूभयमप्यशक्यम्**। अत इत्येतस्मादन्तरोक्ताद्धेतोर्वाक्यान्तरेण प्रमाणान्तरेण वा प्रतीतत्वात् । उभयमप्यशक्यं विशेषणं विशेष्यं च प्रधानमुपसर्जनं च विधि-

१ ° तिहिवो ग । २ °तं चेवे ° ग । ३ ° न्यायेन ग । ४ ° यत् ग ।

रनुवादश्च शेषः शेषी च । उत्सर्गोऽपवादश्चान्यतरस्याप्यर्थाप्रतीतेः । किं हवनक्रिया विशेषणमग्निहोत्रविशेषणं हवनं विशेष्यम्? एवं विध्यनुवादप्रधानोपसर्जनोत्सर्गापवादशेषशेषाभावादिषु खपुष्पखरविषाणयोरिवायुक्तमिति । तुशब्द एवकारार्थे । विशेषेण प्रोक्तवदेव विशेषणत्वादि न घटत इति विशिनष्टि । कथमशक्यमिति चेद्दर्शयति । **यदि विशेष्येणैव विशेषणीयं हवनं कुर्यात् । तच्चाग्निहोत्रसंज्ञकमिति ।** हवनक्रिययाऽग्निहोत्रं विशेष्येत, अग्निहोत्रं वा हवनमिति । यदग्निहोत्रं तद्धवनं कर्मेत्यग्निहोत्रेण हवनं विशेष्येत । इतिः प्रदर्शने । इत्थं विशिष्येत यदि विशेषेण विशेष्यतया प्रयोजनमवश्यं तच्च नैवं शक्यमप्रसिद्धार्थत्वात् । यदप्युक्तम्—अनूद्याग्निहोत्रं हवनक्रिया विधीयते । हवनं वा अनूद्याग्निहोत्रं विधीयत इति । एतदुक्तं वाक्यभेदापत्तेरिति।अत आह—**अनुवादविधिविषयत्वे वाक्यभेदापत्तेरिति ।** तत्रैकं ह्यनुवादकमेकं विधायकम् । तयोरन्यतरद्यथेष्टं तेऽस्तु, ततो भिन्नार्थत्वात् वाक्यभेदोऽनयोरापद्यते, यथा कुशलतरोऽनयोर्देवदत्तो ज्ञेय इति प्रसिद्धमर्थमनूद्य आनयैनमित्यानयनं विधीयते। देवदत्तमानयेति देवदत्तानयनं वा विधत्य विदुषोर्यः कुशलतरोऽनयोरित्यनुवादे प्रसिद्धार्थानुवादे विधिविषये द्वे वाक्ये । एकमेकस्यानुवादत्वेऽन्यस्य च विधित्वे वाक्यभेदापत्तिरतो नैषोऽपि व्याख्यानाद्वा शोभन इति।

स्यान्मतम्—वाक्यभेदापत्त्यादिदोषाः सम्भवन्ति । क्रियाया एव विधेयत्वात् यथोक्तं नैतद्विचार्यते । अनत्वान्नात्वानिति (?) । किं तर्ह्यालब्धव्यो नालब्धव्य इति। तथा 'स्वभावसिद्धं द्रव्यं क्रिया चैव हि भाव्यत' इति तस्मादग्निविषया हवनक्रियैव विधीयतेऽतो दृष्टान्तवैषम्यं नास्ति । द्रव्यस्याविधेयप्रतिषेध्यत्वात् घटं कुर्यात् मा कार्षीदिति । किं तर्हि? घटक्रियां कुर्यादिति । तथा हवनं कुर्यादग्निहोत्रं कुर्यादिति हवनाग्निहोत्रं कुर्यादिति हवनाग्निहोत्रक्रिययोरतिदेशो[1] न्याय्य इति । अत्रोच्यते—नापि घटादिकर्तव्यतायामित्येवमादि, यथा घटादिविषया कर्तव्यता मृदानयनमर्दनाभ्युपक्रमात्मिका लोके प्रसिद्धा न तथा काचिदग्निहवनकर्तव्यता नाम प्रोक्षणबहिरास्तरणाज्यप्रक्षेपाद्युपक्रमात्मिका । मन्त्रपूर्वक्रिया क्रमवती प्रसिद्धा यथा कर्त्तव्यतयाऽतिदिश्येत । हवनाख्ययाग्निहोत्राख्यताग्निहोत्राख्यया वा हवनाख्यताऽतिदिश्येतेति ।

**अथ पुनरित्यादि** । अथेत्यधिकारान्तरापेक्षान्तरम्, अधिकारान्तरमनन्तरोक्तविधिना न निर्वहति हवनं कुर्याद् जुहुयादिति । हवनविधावग्निहोत्रानुवाद इत्यस्मिन्नर्थे अप्रसिद्धत्वाद्विशेषणविशेष्यताद्यभावाद्वाक्यभेदापत्तेश्च द्रव्यस्य क्रियया वा विधाने निर्वोढुमशक्ये परेणोच्येत—नैव हवनं कुर्यादिती-

१ °कार्यत्वे ग । °कार्थत्वे ख । २ °रिति देश्यो ग । ३ ते क-ख । ४ यथा कर्तव्यता निर्दिश्येत क-ख ।

त्यादि कर्तव्यतावाक्यतात्यागेन परिहारं मन्यते । पक्षान्तरसंश्रये सोपपत्तिके निर्दोषं च कतमत् पुनः पक्षान्तरम्? इत्यत आह—किं तर्ह्यग्निहोत्रं कुर्यादित्येतत्पक्षान्तरमाश्रीयते? । उपपत्तिश्चात्राग्निहोत्रशब्दे जुहोतेर्धातोर्दर्शितार्थत्वात् कर्तृप्रत्ययार्थे च कृच्छ्रे[1] दर्शितार्थत्वादयं जुहुयादिति हुधातुः लिट्प्रत्ययान्तः, स च लिट् कर्तरि विहितः 'कर्तरि कृच्छ्रः[2] कर्मणि चे'ति । कर्तृशब्दश्च कृञ्प्रकृतिस्त्वजन्तः कर्तरि क्रियया निर्वर्तकेऽभिधेये कृतो लकाराश्च भवन्तीति । तथा कर्मणि विहितोऽपि कृल्लकारो वा कृत्सर्वं नातिवर्तते । भावे विहितस्तु क्रियामात्रार्थत्वात् कर्त्रर्थे एव । किं करोतीति सर्वक्रियाविशेषेषु पचत्यादिषु विशेषणप्रश्नप्रदर्शनात् जुहुयादित्ययं कुर्यादर्थ एव । यथा भूयते देवदत्तेन, सुप्यते देवदत्तेनेत्येवमाद्यकर्मकेष्वपि स्वपिति भवतीति । अग्निहोत्रशब्देन पुनस्तद्विशेषभूतो जुहोतेरर्थोऽभिहित एव तस्मादग्निहोत्रं कुर्यादित्ययमर्थ इति ।

अत्रोच्यते—एवमपि कर्तृप्रत्ययकृद्दर्शनेनेति परोक्तं प्रत्युच्चारयति । एवमिदानीं कुर्यादग्निहोत्रमित्येतत्पक्षान्तरम् । होत्रशब्दोक्तहवनार्थता कर्तृप्रत्ययान्तकर्त्र[3]र्थता च जुहोतेरित्येतत्त्वयोक्तम्, मया युक्त्या सहावधारितम् । तथापि जुहोत्यर्थस्य त्यागोऽर्थभेदश्च । जुहोत्यर्थत्यागस्तावत् कर्तृविशिष्टक्रियासामान्यमात्रवाचित्वाभ्युपगमात् । जुहोतेश्च क्रियाविशेषत्वात् । सामान्यविशेषयोश्चान्योऽन्यतो भिन्नत्वात् कुर्याच्छब्दार्थं जुहुयाच्छब्दो ब्रवीतीतिवचनात् होत्रशब्देन दर्शितार्थत्वाज्जुहोतेरनर्थक इति त्वयैव त्यक्तत्वात् । ततश्च जुहुयाच्छब्दोऽपि होत्रशब्दार्थं, होत्रशब्दोऽपि जुहुयाच्छब्दार्थं ब्रवीतीति नामाख्यातयोः प्रत्येकं द्व्यर्थवृत्तित्वाद्भेदश्च । होत्रशब्दः क्रियावाची नामवाची च, तथा जुहुयाच्छब्दोऽपीति । एवं शब्दार्थसङ्करः प्रसिद्धिविरोधश्च जायते । यथा पूर्वापरीभूतभावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यवसानभूतं सत्त्वं नामभिर्वर्ज्यापत्तिरिति जुहोत्यर्थत्यागभेदाभ्यां हेतुभ्यां जुहोत्यर्थत्यागभेदत्यागवत् सर्वधात्वर्थविशेषत्यागः । यथा जुहोतिः कर्तृप्रत्ययान्तस्तत्सर्वप्रकृत्यर्थवान् । एवं पचतिपठत्यादयः सर्वे धातवो धातुत्वात्तद्वाचिनः । तस्मात् सर्वधात्वर्थविशेषास्त्यक्ताः । विशेषशब्दस्य भेदार्थत्वान्नामाख्यातद्व्यर्थवृत्तित्वात् पूर्वोक्तकरोत्यर्थवद्भिन्नार्थता च, ततश्च सर्वधात्वर्थविशेषत्यागान्न त्यागापत्तिरपि । तस्य कृत्सर्वस्य सर्वधात्वर्थसामान्यभूतस्यापि त्याग आपद्यते । किं कारणम्? विशेषाभावे निराश्रयस्य सामान्यस्याभावात् करोतीत्युक्ते किं करोति, जुहोति, पचति, पठतीत्यादि विशेषसंश्रयेण विना करोतेरर्थाभावात् । अपिशब्दात् सङ्करप्रसिद्धिविरोधपौनरुक्त्यदोषाश्च । आसन्नश्रुताऽग्निहोत्रकर्तव्यत्वा-

१ कृते । २ कृतः । ३ ° कृञर्थभाव ° क-ख ।

न्नेति चेत्। स्यान्मतम्—संसर्गाभेदभिन्नात् सामर्थ्याच्छब्दपृच्छार्थव्यवच्छेदो विशेषलिङ्गाद्भवति। यथाह—

> संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
> अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
> सामर्थ्यमौचिती देशः कालो व्यक्तिस्वरादयः ।
> शब्दस्यार्थव्यवच्छेदे विशेषस्मृतिहेतवः ॥ इति ॥

तत्र यच्छब्दसन्निधिसंज्ञकं सामर्थ्यं तद्व्यवच्छेदकारणमिहाप्यस्ति, तद्यथा—आसन्नश्रुताग्निहोत्रशब्दात् तच्चोदितकर्तव्यतैवात्र सम्बध्यते। तस्मान्न जुहोत्यर्थस्तत्त्वसत्कर्तृप्रत्ययकृत्सर्वदर्शने सत्यप्यग्निहोत्रं कुर्यादिति हवनविषयस्यैव करणस्योपादानात्। चेदित्याशङ्कायाम्। एवं चेन्मन्यसे तदपि न, आसन्नतरश्रुतजुहोत्यर्थत्यागात्। यथा आसन्नश्रुताग्निहोत्रसान्निध्यात् तदर्थोपादानं न्याय्यं मन्यसे ततोऽप्यासन्नतरश्रुतजुहोतिशब्दार्थोपादानं न्याय्यतरं किन्न मन्यसे ? । स चार्थस्त्यक्तस्त्वया[1]। तदुपादानेऽपि चाप्रसिद्धतादिदोषास्तदवस्थाः। स्वपदार्थं त्यक्त्वा पदान्तरार्थे कथं वर्तितेति चोक्तं अभ्युपेत्येत्यादि।

पदान्तरार्थाभिधानं दोष उच्यते—परपदार्थविधानेऽपि च पदान्तरपरिश्रुतहोत्रमात्रवृत्तत्वात्। जुहुयादर्थमात्रमेवेति कुर्यादर्थोपादानमभेदकम्। पदान्तरेऽग्निहोत्रपदे परिश्रुतं परिगतं ज्ञानं किं तद्धोतृमात्रं न तद्व्यतिरिक्तं अर्थान्तरं गम्यतेऽतो[2] जुहुयादित्येतस्य शब्दस्य योऽर्थस्तन्मात्र एव वृत्तः कुर्याच्छब्दः। इतिशब्दो हेत्वर्थे। अस्माद्धेतोर्जुहुयाच्छब्दार्थमात्रत्वाद्वा कुर्यादित्यस्यार्थस्योपादानमभेदकम्। नास्ति भेदोऽस्येत्यभेदकमभिन्नार्थम्। कुतोऽभिन्नार्थं न भवतीति चेद्भवनं कुर्यादित्यस्माद्वाक्यार्थात् तस्मात् त एव दोषाः। स्यान्मतम्—मात्रग्रहणात् सिद्धिः, अग्निपदविशिष्टसमासत्वात्[3]। न हि होममात्रमेव श्रूयते। किं तर्हि ? अग्नेरग्नावग्नये वा होत्रमग्निहोत्रं तत् कुर्यादिति भिन्नोऽर्थ इति। एतच्चायुक्तम्। तिङ्प्रत्ययार्थैकीभूतप्रकृत्यर्थत्वात्। होत्रमात्रवृत्तत्वं सिद्धमेवेत्यर्थः। यत्र तिङ्प्रत्ययार्थेनैकीभूतप्रकृत्यर्थमात्रं प्रकृत्यर्थमात्रवृत्तिर्वा दृष्टा। यथा प्रलम्बनेऽभ्यागच्छतीति वैधर्म्येण कुम्भकारवत् काण्डलाववत् समासत्वात् कुम्भकारवदेव विशिष्टार्थत्वमिति चेत्, तदपि नोपपद्यतेऽग्निसमासत्वात्। न ह्यस्ति अग्निशब्दस्य होत्रशब्देन तिङ्प्रत्ययार्थसाकांक्षेण समासः। 'सुप्सुपा समर्थेन सह समस्यते' (पा० २।१।४) इति वचनात् तिङ् तेनास्ति[4]। क्षारास्तीतपिबतादिषु समासदर्शनाददोष इति चेत्। न, परिगणितेभ्योऽन्यत्राभावात्। तिङन्तप्रतिरूपकनिपातेषूपात्तत्वाच्च तेषां 'अस्तिनास्तिदिष्ट-

---

[1] °र्थस्त्यक्तस्तत्° क-ख। [2] °ऽसौ क। [3] समामावात् क-ख। [4] तेनास्ति ग।

मति०'( पा. ४।४।५० ) रिति प्रातिपदिकवत्[1]। अन्यथा देवदत्तः पचतीत्यत्रापि समासः स्यात्। ननु भवति सामर्थ्याभावाच्च समासानुपपत्तिः 'समर्थः पदविधिः' ( पा. २।१।१। ) इत्यधिकारादसामर्थ्यं च सापेक्षत्वात् यथा संकुलाखण्डप्रातिपदिकस्य संकुलया खण्ड इति समासानुपपत्तिस्तद्वन्न च प्राधान्याभावाद्देवदत्तस्य गुरुकुलमित्यनेन तुल्यम्। तत्र तु प्रधानत्वाद्भवति समासः। उक्तं तु भवति हि प्रधानशब्दस्य सापेक्षस्यापि समास इति। न चात्राग्निशब्दस्य होत्रशब्दस्य वा प्राधान्यमस्ति। कुर्याज्जुहुयादिति तिङन्तस्य क्रियावाचिनः प्राधान्यात् साधनानां साध्यसिद्ध्यर्थप्रवृत्तित्वात्। अपशब्दो हि नामार्थविशेषविवक्षायां तदभिधायित्वरूपातिक्रमात्। यथा गोणीशब्दो हि सास्नादिमत्यर्थे सत्त्वाभिधायिगोशब्द[3] एव। यथा गावीशब्दोऽपि गव्यवसेयः। सक्तिर्गावीत्यस्मिन्नर्थे शब्द एव। तथा चोक्तं—

यस्तु प्रयुङ्क्ते कुशलो विशेषे, शब्दान् यथावद् व्यवहारकाले[4]।
सोऽनन्तमाप्नोति जयं परत्र, वाग्योगविद्[5] दुष्यति चापशब्दैः[6] ॥ १ ॥
( पाणि० व्या० म० भाष्ये )

तस्मादपशब्दश्चाऽयमस्मिन्नर्थे कुर्यादर्थोपादानं च भेदकमिति। साधूक्तं त्यक्तजुहोतिकर्त्रर्थग्रहे तु निःक्रियाकर्तृत्वात् कुर्यादर्थाभावः। अथाचक्षीथा एतद्दोषभयात् त्यक्त्वा जुहोत्यर्थं निःक्रियं कर्त्रर्थमात्रमेव गृह्यते कुर्यादिति कर्तव्यतामात्रचोदनार्थः। एवं च सति त्यक्त्वा जुहोतिकर्त्रर्थग्रहे तु तुशब्दो विशेषणात्यन्ताभावे। तेनैवं विशेषयति, करोति कुर्यादित्येवमादिशब्दानां कृत्यप्रकृतीनां घटादिकर्मापेक्षानन्तरेण किं करोतु किं कुर्यादित्यनिर्णितार्थत्वात्कोऽर्थः स्यात्? कृत्सर्वाभावे कर्त्रर्थस्य निःसाध्यस्वककर्तृत्वं स्यादतः कुर्याच्छब्दो निरर्थकः। त्यक्तस्वप्रकृत्यर्थत्वात् तादृग्विधस्य कृदादिप्रकृतिरहितस्य पादादिप्रत्ययान्तस्य प्रयोगस्यादर्शनात्। अभ्युपेत्यापि प्रयोगं जुहोतिप्रयोगासत्त्वं ब्रूमः। असत्त्वमप्रशस्तत्वं कुतः? त्याज्यत्वात्। त्याज्यत्वं त्वया त्यक्तत्वात्। असन्मतेनार्थाभावात्। अर्थाभावश्चोक्तविधिना सिद्ध एव। तस्मात् त्याज्यत्वादसत्त्वं जुहुयादित्यस्य प्रयोगस्य दृष्टान्तो व्याधिवत्। यथा व्याधिस्त्याज्यत्वादप्रशस्तः तथा जुहोतिशब्दोऽपि सार्थ इति।

किं चान्यत्—**क्रियानामस्ववृत्तीत्यादि**। आख्यातस्य क्रियार्थं च रूढस्य स्वार्थं विप्रकीर्णावयवकलापं त्यक्त्वा पिण्डितहोत्रस्य स्वार्थोपादानम्। न च तमप्युपादाय तत्रैवावतिष्ठते। किं तर्हि? पुनरपि सत्त्वार्थं त्यक्त्वा क्रियार्थोपादानमेवं नामशब्दस्यापि सत्त्वावृत्तिं स्वां त्यक्त्वा क्रियार्थोपादानं क्रियार्थं त्यक्त्वा सत्त्वार्थोपादानमिति। ताभ्यामेव च त्यागोपादानाभ्यां कुर्याज्जुहुयादित्येतयोरपि शब्दयोः सामान्य-

१ ° जातीय ° क। २ °पक्ष्यणपस्य° क-ग। ३ सत्त्वेयनो क-ग। ४ °युक्तौ क-ग। ५ ° वद् क। ६ ° ब्दः ग।

विशेषार्थयोरितरेतरार्थवृत्त्या भेदः स्वप्रकृतिबलेन पिण्डनविप्रकरणात् तद्भेदवत्तद्ब-लेनास्यापि। तथा तद्वाधिन्योः प्रकृत्योरपि भेदस्ताभ्यां त्यागोपादानाभ्याम्। कयोः प्रकृत्योरिति चेद्धातुप्रातिपदिकयोर्भेदस्तत आह–धातुप्रातिपदिकप्रकृतिभेदोऽपि न, तद्भेद एव सः। कुतः पदभेदः? इति चेत्, पदान्तरविषयत्वात्। पदान्तरस्य विषयोऽस्येति पदान्तरविषयं तत्पदमाख्यातं नाम वा तद्भावात् पदान्तरविषयत्वात् कुर्याज्जुहुयादिति। अथवा वाक्यार्थविचारः प्रश्नमीमांसकस्य। यदुक्तं प्राग्'वा-क्यभेदो विध्यनुवादत्वापत्तेः'इति। स तु न केवलो वाक्यभेदः पदभेद एव वा। किं तर्हि? धातुप्रातिपदिकभेदोऽपीत्यभिसम्बध्यते। नन्वनुवर्तनात् तत्र को हेतुरिति चेत्। अज्ञातस्याग्निहोत्रस्य क्रियाविशेषणत्वेनानुवादात्। अज्ञातार्थो विधिः, ज्ञाता-र्थोऽनुवादः। अग्निहोत्रमज्ञातत्वाद्विधीयते। तत् कुर्याज्जुहुयाद्धवनं कुर्यादिति जुहोतिक्रियया विशेष्य प्रसिद्धस्य विहितस्यैवानुवदनादिति प्रागुदितमर्थमुपप-त्तित्वेनोपदर्शयति—

**ततश्च किमेवं चेत्यादि, यावत्तस्य प्रभावः**। एवं चेत्यनन्तरनि-र्दिष्टक्रियानामस्ववृत्तित्यागोपादानाभ्यामेव श्रुतेर्यासौ प्रतिपत्तिः जुहुयादि-त्यस्याः पदश्रुतेर्हवनक्रियाविधानमर्थो जुहुयाद्धवनं कुर्यादिति तस्या भावः सा न भवत्यनर्थार्थाधिगतेर्यच्छब्द आह तन्नः प्रमाणमिति च हीयते। नामाख्यात-योरर्थभेदत्यागोपादानदोषेभ्यश्च शब्दाव्यवस्थानात्, तदव्यवस्थानात् पुरुषबुद्धिव-शेन शब्दार्थावस्थानम्। कुतः? स्वप्रत्युपेक्षानुवादे न्यायेन च तत्त्यागात्। स्वयं प्रत्यु-पेक्षितोऽर्थस्त्वयायमस्य शब्दोऽस्यार्थ एवं भवति न वेति दोषवत्त्वादयं त्याज्योऽयं गुणवत्त्वादाश्रयणीय इति विचार्य स्वमतिप्रमाणीकरणेन श्रुतिप्रामाण्यत्यागः कृतः। ततः तत्त्यागात् कर्त्राद्यर्थप्रतिपत्तिवशेन शब्दार्थावस्थापनात् तु पुरुषस्य ज्ञानमेव प्रमाणीकृतं तस्यैव विध्यर्थवदवस्थितस्यानुवदनात्। अतश्च ते वादावसानं विग्रहस्था-नं पुरुषज्ञानप्रामाण्याश्रयेण क्रियोपदेशवाक्ये प्रमाणीकरणात् प्रतिज्ञात्यागः प्रति-ज्ञान्तरगमनलक्षणम्, एष च प्रतिज्ञात्यागप्रतिज्ञान्तराश्रयणदोषः, इतरत्राप्यर्थव्या-ख्याने हवनं कुर्यादित्येतस्मिन् भवति। कस्मात्? स्वप्रत्युपेक्षानुवादेन च तत्त्यागात्। कर्त्राद्यर्थनियतप्रतिपत्तिवशेन शब्दार्थस्थापनात्। एवमेव स प्रकृतिप्रत्यय एवाग्नि-होत्रशब्दो वा बाध्यते। शब्दप्रामाण्यत्यागेन स्वमतिप्रामाण्यावलम्बनात्। एवं तर्हि यथाश्रुत्यग्निहोत्रवद्धवनमपि ग्रहीष्यते। आह–न शब्दार्थं त्यजाम्युक्तदो-षभयात्। किं तर्हि? या वा श्रुतिर्यथाश्रुति यथाग्निहोत्रशब्दश्रवणात् तदर्थो गृह्यते। तथा हवनमपि जुहुयाच्छब्दश्रवणाद्ग्रहीष्यते ततो न दोषोऽस्तीति। तदेकत्र हव-नमग्निसम्प्रदानविशिष्टकर्मकारकतयोच्यतेऽन्यत्र स्वविशिष्टकर्तृकतयेति। अत्रोच्य-

---

१ निरस्ता क-ख।

ते। नन्वर्थद्वयविधानमशक्यमेकेन वाक्येन। अग्निसम्प्रदानकस्य कर्मभूतस्य हवनस्य तद्विशिष्टस्य च कर्तृकत्वस्य यथा ब्राह्मणसम्प्रदानकहविर्दानवाक्येन शुक्लगवानयनमपि। इतर आह। नैव हवनं विधीयत इत्यादि। जुहुयाच्छब्देनैव हवनं विधीयते। किं तर्हि? अग्निहोत्रशब्देन विहितं हवनमनूद्यते विध्यनुवादयोर्भिन्नलक्षणत्वात्। किं तयोर्लक्षणमिति चेत्? उच्यते—प्राप्तमनूद्यते वाक्यान्तरेण यथा पण्डितः तिष्ठतीति, शास्त्रज्ञः पण्डित इति वाक्यान्तरविहितपाण्डित्यस्य स्थानानुवादात्। अप्राप्तं च विधीयते यद्वाक्यान्तराप्राप्तिमद् विज्ञातं प्रमाणान्तरेण तद्विधीयते। यथा स्वर्गकामो जुहुयादिति। अत्रोच्यते—यद्येतद्विध्यनुवादयोर्लक्षणं नानुवादो हवनस्य युज्यते यस्मान्न च प्राप्तिरस्ति हवनस्याविहितत्वात्[1]। इतर आह—अस्ति प्राप्तिर्हवनस्याग्निहोत्रस्य हवनत्वात् तस्य त्वविहितत्वादित्यत आह—यदग्निहोत्रं हवनमेतत् पुनरुक्तं तर्ह्येवमनयोरग्निहोत्रहवनविधानयोरविशेषः। एतच्चार्थं[2] पुनरुक्तं च नानुवाद उन्मत्तवाक्यवत्।

अनुवादलक्षणाभावं चास्य दर्शयति—विधिविहितस्य हि अनुवदनमनुवाद इति। हिशब्दो यस्मादर्थे। यस्माद्विधिवाक्यविहितस्यार्थस्य पश्चादर्थविशेषप्रापणार्थानुवादोऽनुवादस्तदत्र लक्षणं न घटते। अग्निहोत्रहवनविधेयत्वात्। अग्निहोत्रस्य हवनस्य चैकीभूतयोर्विधेयत्वात्। तन्निगमयति—अनुवादयोग्यतेति। अथापशब्दो वानुवादो यथा कथंचित् स्यात्। स्यान्मतम्—वक्तुर्विवक्षितपूर्विका शब्दप्रतिपत्तिरित्यस्य हवनस्य विधानं विवक्ष्यतेऽनुवादो विवक्ष्यत इति। एतदपि यथा कथंचित् स्याद्विहितार्थाभावाद्विवक्षेच्छयोरनर्थान्तरत्वादिच्छामात्रतश्च। निरुपपत्तिकस्यार्थस्यासिद्धेर्न स्यादित्यभिप्रायः। यद्यपि यथा कथञ्चित् स्यात् ततः पुनरुक्तदोषाभाव एव स्यात्। इष्यते च पौनरुक्त्यं शब्दतोऽर्थतश्च। 'उक्तार्थशब्दार्थकथनमविशेषेण पुनरुक्तमन्यत्रादरादिभ्य' इति पौनरुक्त्याभावः। उक्तं हीति पुनरुक्तापवादमर्थविशेषापेक्षं दर्शयति—अनुवादात् पण्डितमानयेत्युक्ते पण्डितो देवदत्त इत्यनुवादो न पुनरुक्तम्। एवमादरे स्वामिन्! स्वामिन्निति। वीप्सायां ग्रामो ग्रामो रमणीयः। भृशार्थे द्यूतं द्यूतम्, मृदु मृदु, शनैः शनैरिति। विनियोगे घटं कुरु, घटं कुर्विति। हेतौ कृतकत्वादनित्यो घटस्तस्मात् कृतकत्वादिति। असूयायां विपर्ययस्यास्यं हसति हसतीति। ईषदीषदिति, स्तोकं स्तोकमिति। संभ्रमे स्वागतं स्वागतमिति। विस्मये विद्याधरो विद्याधर इति। गणने एकमेकं द्वे द्वे इति। स्मरणे आ! विदितो विदितः पाटलिपुत्रे दृष्टोऽसीति। एवमाद्यर्थविशेषाभावे पुनरुक्तदोषावश्यंभावात्। न चेदनुवादत्वमस्य पौनरुक्त्यमेवास्य। पौनरुक्त्याभावे नानुवादत्वं तस्मादिदं त्वनुवादाक्षममयोग्यमित्यर्थः। कतमज्जुहुया-

---

१ °त्वादिति। अन्य °क-ख। २ °अर्थांव°ग। णर्थात्वेच्छब्दो क-ख।

दित्येतत् पद कुतो विधीयमानत्वात् योऽर्थो विधीयते न सोऽनूद्यते । आख्यायमानपण्डितत्ववद् यथायं पण्डितो देवदत्त इति विधीयमानपाण्डित्यो देवदत्तो नानूद्यते । तथा जुहुयादित्येतदप्यपूर्वोपदेशत्वाद् अनुवादवैधर्म्याच्चास्य तल्लक्षणाभावात् । किं तल्लक्षणमिति चेत् ? विहितमेव त्वनूद्यते च विशेषविधानार्थं यथा पटुर्देवदत्तः, पयसैनं भोजयेति तल्लक्षणाभावात् । किं तल्लक्षणाभावात् ? । नानुवादो यत्र न विशेषो विधीयते मौलविधेरेव सः । एवं तर्हि विशेषविधानादनुवादोऽस्तु तद्वदिति चेत्तन्न भवति । यस्मान्न चात्र कः कश्चिज्जुहोति । पुनर्वचनेन विशेषो जन्यते । जुहुयादित्यनेन शब्देनाग्निहोत्रशब्दाभिहितादर्थान्न कश्चिदन्यो विशिष्टोऽर्थोऽभिधीयते यतोऽनुवादः स्यात् । ततश्च प्राक्तनमेव सञ्जातम् । यावदेवाग्निहोत्रं कुर्यादिति वाक्यविकल्पेऽभिहितं तावदेवाग्निहोत्रं जुहुयादित्यत्रापि वाक्ये ततोऽधिकं न किञ्चिदस्ति । एवं यां तां गतिं गत्वा कल्पयित्वापि सर्वथा सर्वप्रकारेणाग्निहोत्रं जुहुयादित्यस्मिन् वाक्येऽग्निहोत्रकर्मण्येवान्तर्भावितहवने जुहुयाच्छब्दप्रकृत्यर्थे किमतिरिच्यते ? । पौनरुक्त्यदोषव्यपेतो विधिर्लिङ्कर्तर्यास्ते, विधौ विहितस्य लिट्प्रत्ययस्य कर्तृकारकस्य तन्मात्रोऽर्थ आस्ते न दूषितः । अन्यत् सर्वं पुनरुक्त्यादिदोषदुष्टमेवेत्यर्थः । अग्निहोत्रं कुर्यादग्निहोत्रं जुहुयादित्येतयोर्वाक्यार्थविकल्पयोरुक्तदोषत्वादतो नानुवादः । उक्तदोषसम्बन्धादित्यर्थः । कथमिति चेत् ? उत्तरविशेषासम्बन्धनात् विधीयमानपण्डितत्ववदित्येतदनन्तरोक्तार्थसमाहारार्थं साधनं गतार्थम् । तस्मात् कर्त्रर्थमात्रमवशिष्यते । शेषं पुनरुक्तम् ।

**अथोच्येतेति** । परमतमाशङ्कते—अथाऽन्यथोच्येत विधिलिङ्कर्त्रर्थः प्रत्ययार्थोऽनुक्तत्वादवशिष्यतेऽवश्यं च वाच्योऽसौ तस्मिन् प्रत्ययार्थेऽवशिष्यमाणेऽकायवाच्ये 'प्रकृतिपरव्यवस्थाया' इति हेत्वर्थे पञ्चमी । प्रकृतेः परः प्रत्ययः प्रयोक्तव्य इतीयं व्यवस्था तस्याः व्यवस्थाया मर्यादायाः स्थितेः हेतोरावश्यकं प्रकृत्युपादानम्, तस्मिंश्चावश्यके प्रत्युपादाने प्राप्ते कतमा प्रकृतिरुपादातुं योग्येत्येवं विचारयतः इदं मे योग्यमिति प्रतिभाति । वरमासन्ना प्रकृतिरुपात्ता, अर्थः पुनरस्या न विवक्ष्यते । गतार्थत्वात् तस्मादविवक्षितार्था सा । सत्यपि नान्तरीयकत्वे प्रत्यासन्नप्रकृत्युपादाने विलक्षणां सत्यां परित्यज्याविलक्षणा जुहोतिप्रकृतिरेवोपात्तेत्यवसेयम् । प्रयोगोऽग्निहोत्रं जुहुयादिति चोच्यते । एवं तर्हि वरं वरं कमित्यादि, चेन्मन्यसे वरमासन्नप्रकृत्युपादानम् । नान्तरीयकत्वादिति । तत्राहमेव ते वरं वरं कं साहायकं ददामि बुद्धेः ? कर्तृप्रत्ययान्तया कृञ्प्रकृत्या प्रत्याय्यते स्फुटतरमतोऽग्निहोत्रं कुर्यादित्येवास्तु । इतर आह—त्वयैव सम-

१ °शब्दोय° क-ख । २ तत्र ग । ३ विधीयते क-ख । ४ अर्थोन्वयो °क । अथो त्वयो° ख ।

र्थितत्वादेवमेवास्तु । आचार्य आह-स्यादेवं यदि सापि चार्थस्थितिर्निर्दोषा स्यात् किन्तु साऽपि चापक्षिप्तवाच्यार्थस्थितिरुक्तवत् । तस्यामप्यर्थस्थितौ निराकृतो वाच्योऽर्थः जुहोत्यर्थत्यागभेदाभ्यामित्यादि प्रबन्धेनोक्तत्वात्। यथा श्रुतार्था-भावादिदोषात् पौरुषेयत्वादिप्रसङ्गाच्च । एवं तावन्न्यायेन परीक्ष्यमाणमेतद्वाक्यं न युज्यते। पुरुषतर्कलक्षणेन, यद्यपि पुरुषतर्कलक्षणं न्याय्यमतिलंघ्यापौरुषेयो नित्यो वेदाख्यः क्रियोपदेशः पुरुषंगतरागादिदोषाशङ्काहेतुविनिर्मुक्तः प्रमाणम्। पुरुषकृतानि हि वाक्यान्यविद्यारागाद्यवियुक्तपुरुषवदप्रामाण्यान्यफलाऽशक्यप्रा-प्तिनित्यानित्यादिवस्तुतत्त्वविचारविषयाणि सफलशक्यप्राप्तिपुरुषहितोपायक्रियोप-देशात्तु वेदवादः श्रेयानितीष्टं तथापि तद्वचनादेवास्मिंस्तु न्यायेऽतिलङ्घ्यमाने क्रियोपदेशवादोऽपि तत्त्ववादवदेव त्यक्तः स्यात्। किं कारणम्? तत्रापि यदृच्छा-भ्युपगमात् । अविद्यारागाद्यवियोगादेव सर्वपुरुषाणां वक्तृश्रोतृपुरुषाधीनत्वाच्चो-पदेशपरम्पराया न कश्चिद्बुद्धिपूर्व उपदेशः, अतः सुप्तमत्तादिविप्रलापवद्यदृच्छयाभ्यु-पगतो वेदो वैदिकैः, अत इदमापन्नम्। 'को वा तद्वेदाग्निहोत्रं जुहुयात् स्वर्गकाम' इत्येतद्वाक्यं सार्थकं निरर्थकं वेति ? किमिव ज्ञायते बालप्रलापवत्? । यथा हि बालैरनियतक्रियाकारकैरसम्बद्धमुक्तमबुद्धिपूर्वत्वाज् ज्ञातुमशक्यम् । केनार्थेन? अर्थप्रत्यायनार्थवदिति। किं कारणम्? व्यवस्थोपेतबालशब्दप्रयोगो ह्यर्थप्रत्य-यनार्थः स्वनिश्चितार्थप्रतिपादनसमर्थनियतवर्णानुपूर्वीकः प्रत्युपेक्षितवाच्यवाचक-सम्बन्ध इतीयं लोकशास्त्रव्यवस्था। ततोऽपेतब्रह्मादिसर्ववेदवादिवचनमविद्यारागा-द्यवियोगात् तेषाम्, इत्यशक्यप्राप्तिरग्निहवनविधानादिवाक्यार्थस्य । तस्मात् को ह वैतद्वेद बालप्रलापवद् व्यवस्थापेतमुदितम्। किं चान्यदफलं चैतदित्यत आह-किं वाऽनेन ज्ञातेन यदेतज्ज्ञवेदज्ञा अग्निहोत्रकर्मज्ञा एवमुक्तवन्तोऽग्निहोत्रं जुहुयादि-ति वाक्यमव्यक्तमव्यक्तार्थमस्फुटार्थं यस्मादव्यक्तज्ञाना एव ते पुरुषत्वादविद्या-योगाच्च दशदाडिमादिश्लोकवादिवत् । अविद्यायोगं दर्शयति-यद्यद् ज्ञाना-दिति, रागादियोगं च दर्शयति। यदि द्वेषादेः। इतर आह-विफलोऽयं प्रयासोऽनि-ष्टापादने तेऽभ्युपगमत्वात् को वा आह ज्ञवचनमेतत्। ननु प्रागुक्तं संशयविपर्यया-नध्यवसायसंपृक्तत्वात् निर्णयस्याप्यज्ञानमेवेति। अथवा को वाह ज्ञवचनमेतदिति। तस्य पुरुषस्य सर्वत्र प्रमाणभूतस्याभावात्। किं तर्हि? शब्दस्यैव च निर्दोषत्वादिति।

अत्राचार्य आह-यदि संशयादियोगान्न ज्ञः प्रमाणं तर्हीदमज्ञोक्तत्वादुन्मत्तवा-क्यवदिति क्रियोपदेशसाफल्यवादः क्व गच्छतीति चिन्त्यताम्। एवं तावद्बुद्धिपूर्व-कमकारादिवर्णानुपूर्व्या शब्दोच्चारणं चेतनोदीरितं काकभाषितं पुरुषभाषितं वा

१ ज्ञस्य क-ख। २ कालवाशितं पुरुषवासितं क-ख।

तुल्यम्। अथाचक्षीथाः काष्ठपाषाणादिसंघट्टजनिताचेतनशब्दवत् सर्वमचेतनं प्राप्यते चेतनत्वं कुतोऽस्य प्रामाण्यमचेतनत्वात् आकाशवत्, एवं च कृत्वाऽचेतनत्वात् कुतोऽस्य वचनम्? यच्छब्द आह–तत्र प्रमाणमितीष्टं भवता भाषणं वचनमुक्तिः शब्दोच्चारणं भावसाधनत्वात् वचनशब्दस्याचेतनत्वाद्वक्तृत्वमस्य नास्तीत्यर्थः । कथम्? अज्ञोदीरितत्वादेव च। वचनत्वमस्य नास्ति वाच्यार्थप्रतिपादनाभिसन्धिपूर्वकं तत्। तदभावे तूक्तमित्यत आह–काष्ठशब्दवदित्थमचेतनत्वेऽपि न घटते वेदवाक्यप्रामाण्यमत्राह। यदुक्तं प्राक् 'को वाह ज्ञवचनमेतदि'ति द्वितीये विकल्पे । न ब्रूमः सर्ववक्तृवचनाप्रामाण्यमिति, स्ववचनविरोधदोषात्। किं तर्हि? सर्वज्ञवीतरागाद्यभावाद्ग्रन्थस्य सर्वभावश्च भावविषयस्य कर्तुरप्रामाण्यं न तु वक्तुरनादिनिधनस्य वक्तृपरम्परागतस्य वक्तृवचनयोः क्वचित् प्रामाण्यादिति ।

अत्रोच्यते–**आदिवक्तृवचोत्तरवक्तर्यपि** । यथादिवक्तारोऽप्रमाणमसर्वज्ञत्वादवीतरागत्वाच्च शास्त्राणां सर्वभावस्वभावविषयाणां यथार्थज्ञानवचनहीनास्तथा हि–मदनादिप्रसिद्धानां शास्त्राणामध्येतारो यथार्थज्ञानवचनहीनास्तस्मादुभयेषां ज्ञातृत्ववक्तृत्वयोर्यथार्थयोरनाश्वासस्तुल्यः। किमिव? धातिकमन्त्रादिवत्। यथा धातुविषयाबलादिवादिकानां ज्ञानानि मन्त्रवचनानि च विप्रलम्भभूयिष्ठत्वादनाश्वासनानि । आदिग्रहणाद्वशीकरणमन्त्रयोगादिवत् । तत आहादिकर्तृवच्चोत्तरवक्तर्यपि वातिकर्मवादिवत् तु वचनानाश्वासतुल्यतेत्यलमतिप्रसङ्गिन्या कथया । किंच–यदुक्तमविवक्षितार्थानर्थकापि कर्तृप्रत्ययसाहायककारिणी जुहोतिप्रकृतिरुपात्तेत्येतदपि न्यायविरोधादयुक्तम्। कथम्? **क्वचिच्चेत्यादि**। क्वचिच्चेति न सर्वत्र। यथा नक्षत्रं दृष्ट्वा वाचो विसृजन्तीति। कतरद्देवदत्तस्य गृहम्? अदो यत्रासौ काक इति । नक्षत्रे त्राणपक्षिणि वोपयुक्तार्थयोरेव दृष्ट्वा काकशब्दयोः सार्थकयोः काकगृहोपलक्षणेऽर्थे सत्येव नक्षत्रदर्शनकाकार्थाविवक्षया न्यायादनपेता न्याय्या दृष्टा।नानार्थकस्यैवोन्मत्तप्रलपितादेस्तथा तयोरग्निहोत्रहवनयोः सार्थकार्थवत्त्वेन दृष्टयोस्तदविवक्षया च सार्थकत्वं दृष्टमतो न्यायापेतमेतदुक्तमविवक्षितार्थस्यानन्तरीयकत्वात्। प्रकृतेः प्रयोगो जुहुयाच्छब्दस्येति । किं कारणम्? प्रयुक्तस्यानर्थकत्वाभावप्रसङ्गात् । यद्येष न्यायः शब्दानां प्रयोगे नियतो न स्यान्नान्तरीयकत्वादपि प्रयोगे साधुत्वमेव स्यात् । ततश्च प्रमादादप्रमादाद्वा प्रयुक्तस्य शब्दस्यानर्थकत्वाभाव एव स्यात्। प्रमत्ताप्रमत्तवज्ज्ञविशेषश्च स्यान्न त्वेवं भवति दृष्टशिष्टेष्टविरुद्धत्वात्। स्यान्मतम्–उपलक्षणादिप्रयोजनायां विशेषविवक्षायां किमनया स्वार्थाविवक्षया सर्वस्य शब्दप्रयोगवक्तुर्विवक्षितपूर्विकत्वात् प्रवृत्तेरविवक्षाविवक्षयेत्येतदयुक्तम् । विवक्षाविवक्षयोरनियमेन शब्दासंवृत्तौ सत्यामप्रयोजनायां चाविवक्षायामग्न्याद्यविवक्षाभावे विशेषहेतुर्वाच्यः। अग्निशब्द-

स्यापि जुहोतिप्रत्युपादानवत् नान्तरीयकत्वात् प्रयोगोऽर्थोऽस्याविवक्षित इति प्राप्तम्। ततश्च भस्महोत्रं जुहुयादित्येतद्वाक्यं साधीयः, अग्निहोत्रं जुहुयादित्येतत् साधीयः। इति केन हेतुना परिच्छेद्यम्? किं चान्यत्–युक्ततरी तु तदविवक्षा। अग्न्याद्यविवक्षा । किं कारणम् ? वक्ष्यमाणन्यायदर्शनात्। वक्ष्यमाणो हि विधिविधिनयेऽयं न्यायो द्रक्ष्यते भवता 'पुरुष एवेदं सर्वं'[1]मित्यादि । तद्दर्शनाच्चेदमग्न्यादिविकल्पासत्त्वान्नाग्निहोत्रं न होतेत्यर्थाभावादेवाविवक्षा न्याय्या। किं कारणम्? अर्थतत्त्वतत्रत्वात्तस्याः। अर्थवशाद्वा विवक्षा वा भवितुमर्हति नान्यथेति ।

तदुपसंहृत्याह–एवं तावदित्यादि। एवम्–अनन्तरोक्तोपपत्तिविधिना।अग्निहवनं कुर्यादित्येतस्मिन्नर्थे प्रदर्शितदोषत्वात्। अथवा अग्निहोत्रं कुर्यादग्निहोत्रं जुहुयाद्धवनं कुर्यादग्निहोत्रं हवनं कुर्याज्जुहुयादित्येवमाद्यर्थेषु प्रदर्शितदोषत्वात्, तावच्छब्दः क्रमार्थः। दोषान्तराभिधानमपि भविष्यति।एष तावद्दोष इति अप्रत्यायकत्वमस्य वाक्यस्य। कुतः? **अप्रत्यवेक्षितार्थयाथातथ्योक्तेर्बालप्रलापवत्**। यथातथाभावो याथातथ्यमर्थस्य याथातथ्यमर्थयाथातथ्यं तस्मादर्थयाथातथ्यात् तस्याप्रत्यवेक्षितस्याविचारितस्य । किंस्वरूपोऽयमर्थः ?। प्रमाणं प्रमेयः, केन वा रूपेण प्रमाणं प्रमेयो वेत्यप्रत्यवेक्षितस्यार्थस्योक्तेः। शब्दस्यार्थस्य वा अप्रत्यायकस्वरूपमप्रत्यवेक्ष्योक्तत्वात् तदप्रत्यायकत्वम् । अर्थत्वाच्चशब्दस्तदभिधेयो वा प्रत्यवेक्षितयाथातथ्योक्तेरेवाप्रत्यायकः प्रधानादिवदिति वैधर्म्येण तस्मादप्रत्यवेक्षितार्थयाथातथ्योक्तेः । यदि शब्दद्वारेण यद्यर्थद्वारेणोभयथाप्यप्रत्यायकत्वं सिद्धमतश्चाप्रत्यायकत्वादनुपदेशत्वं बालप्रलापवदेव ।

किं चान्यत्–अग्निहोत्रं हवनं कुर्यादित्यस्मिन्नेवानन्तरोक्तेऽर्थे दोषान्तरक्रमः । **त्वदभिप्रायवदित्यादि**। त्वदभिप्रायेण तुल्यं त्वदभिप्राय इव त्वदभिप्रायवत्। यथा त्वदभिप्रेताग्निहोत्रहवनं कुर्यादित्येतस्मिन्नर्थे हवनानुवादेन विशिष्टेऽग्निहोत्रेऽभ्युपगम्यमानेऽग्निहोत्रस्य त्वदिष्टस्य कर्मणः साङ्ख्यादिपरपरिकल्पितात्मादिवस्तुतत्त्वस्यालौकिकस्याप्रसिद्धस्य दुर्ज्ञानत्ववदलौकिकत्वादप्रसिद्धस्वरूपत्वात्। दुर्ज्ञानत्वमविज्ञातस्य च करणासिद्धिः सा हवनक्रिया न सिद्ध्यतीत्यर्थः।

अत्र परेणाथोच्येत परिहारः–**विध्यन्तरविधानशैल्या तत्सिद्धिरिति** । अग्निहोत्रं जुहुयादित्येतस्माद्विधेरन्यो विधिर्विध्यन्तरं यूपं च्छिनत्तीत्यादिस्तस्य विधानविवक्षितनिरूपणं पूर्वं पश्चादिति कर्तव्यताभिनिरूपणं शैलीस्वभावः शैल्या दृष्ट्वा विधित्वादस्या विधेयां शैलीत्यनुमानात् सिद्धिर्भवति। कस्य पुनर्विधेः? विध्यन्तरविधानशैल्या सिद्धिर्दृष्टा। यथा यूपं च्छिनत्तीत्यादि, यावत् पलाशमष्टाश्रमित्यादीनि । शैल्यनुत्पादन दृष्टान्तमाह–यथात्र पूर्वमविवक्षितनिश्चयावधारणात्मिका कर्तव्यता-

---

१ ऋ.वे.म. १०, सू. ९० । ऋक् सं० मण्ड० १०, सू.९० ऋ० २। श्वेताश्वत०उ०अ३, १५.

चोदिता पश्चादष्टाश्रि पलाशं बैल्वं चैत्यादीतिकर्तव्यताचोदनया स्वरूपं व्यवस्थाप्यते, तथेहापि ।

आचार्य आह—एतदपि न, वैषम्यात् । दृष्टान्तदार्ष्टान्तिकयोः शैलीवैषम्यात् । तद्वैषम्यं कालतः प्रसिद्धितोऽवधारणतश्च । तत्र कालतस्तावन्न हि स च्छेदनक्रियाकाल एव यूपो भवतीति वाक्यशेषः,च्छेदनाद्यानर्थक्यप्रसङ्गात् । किं तर्हि ? च्छेदनादिक्रियाभिः संस्कृतः सन् भविष्यति यूप इत्थंस्वरूपस्य तस्य काष्ठस्य तदा यूपत्वं नामतो युक्तम् । यूपस्वरूपं कालान्तराभाव्युपेक्षितं न पुनरग्निहोत्रस्य तदैव सतः संस्कारनिरपेक्षस्य कालान्तराभाव्यर्थोपेक्षणमिति वैषम्यम् । इतर आह—ननु वत्सवृत्तेत्यादि यावत् स्थूणेन्द्र इति । यथात्र तादर्थ्यात् ताच्छब्द्यमेवम् । यूपार्थं दारु यूप इति तत्कालत्वात् । अत्रोच्यते—

च्छेदनस्य संस्कारता न विहिता स्यात् । यूपस्य निर्वृत्तत्वात् । तन्निर्वर्तनार्थो हि च्छेदनसंस्कारात्[1] । तस्यामसत्यां च संस्कारतायां च्छिदिरविवक्षितार्थः स्यादसंस्कारार्थत्वेऽनर्थक एव च्छिदिः स्यात् इत्यर्थः । तस्माद्यावदेव यूपं स्वीकरोति सत्त्वेन परिगृह्णातीत्युक्तं भवति तावदेव च्छिनत्तीत्युक्तं भवति, छिनत्तेः संस्कारार्थरहितत्वान्मा भूदयं दोषो दृष्टविरुद्धत्वाददृष्टार्थो वा स्यादिति वर्तते । नैवादृष्टार्थस्तत्फलत्वादेवम् । तावत्कालतः शैलीवैषम्यादयुक्तमुक्तं विध्यन्तरविधानशैल्या तत्सिद्धिर्यूपं छिनत्ति, पलाशमष्टाश्रिमित्यादिवदिति । अवधारणवैषम्येऽपि अत इयमित्यादि । अनन्तरोक्ता येयं भावना तयैव भावनयाऽवधारणवैषम्येऽपि भावयिष्यामि । अत आह—या तत्र भावना । यूपं च्छिनत्ति च्छेदनेन यूपं स्वीकरोतीतिच्छिदेः[2] संस्काराभावे यूपस्वीकरणार्थतया उक्तत्वात् । तत्र च कथमवधार्यमुच्यते । न च च्छेदनमेवावधार्यते करोतीति वर्तते । कस्तत्र दोष ? इति चेद्यत एवकारस्ततोऽन्यत्रावधारणमष्टाश्रिकारणादीनामसंस्कारत्वप्रसङ्गः। तदत्र प्रसक्तम् । तत्तु नेष्यते किन्तु करोत्येवेत्यवधार्यते, स्वत्वेन परिग्रहमात्रप्रतिषेधार्थमेषावधारणभावना यूपे, सेह[3] हवनविधिवाक्येन[4] न शक्याश्रयितुं, किं कारणमशक्येति चेदवधारणासम्भवाद्धवनेनाग्निहोत्रं करोतीति । कथं पुनरसम्भवः ? । यस्माद्धवनेनाग्निहोत्रं करोति न प्रव्रज्यादिना न च करोत्येवेत्यवधार्यते । स्वर्गादिकामाभावे करणाभावादित्यवधारणवैषम्यम् । हवनेनाग्निहोत्रं करोतीति हवनाद्यन्यस्याग्निहोत्रस्याभावात् । अत एव प्रसिद्धिवैषम्यमपि, तस्याग्निहोत्रस्याप्रसिद्धस्य क्रियाकलापाभिमतार्थानामवयवत्वात् प्रसिद्धयूपद्रव्यच्छेदनादिवैषम्यं मात्रग्रहणं नामधेयत्वसामान्यमेवानुमीयेत । नार्थविशेष इदं तदग्निहोत्रं नामास्त्विति । तस्मात् प्रसिद्ध्यप्रसिद्धिभ्यामपि वैषम्यमिति ।

---

१ °र° ग । २ °च्छेदैः ख-ग । ३ °स्नेह° ग । ४ °विधेवाक्यन° ग ।

अतस्तदर्थत्रयमुपसंहृत्य हेतुहे(त्र)यनिगमनार्थमाह—**शैलीप्रामाण्ये चास्य शैल्या यूपक्रियायाथार्थ्यात्**। शैलीप्रामाण्यं चावलम्ब्यमानस्याग्निहोत्रस्य यूपक्रियाया उक्तविधिनैवायाथार्थ्यात् । यथार्थस्य भावो याथार्थ्यं । न याथार्थ्यमयाथार्थ्यं तस्मादयाथार्थ्यात् । यूपक्रियाया अग्निहोत्रक्रियायाः शैलीसाम्यं नास्ति । अतो न युक्तं विध्यन्तरविधानशैल्या तत्सिद्धिर्यूपच्छित्त्यादिवदिति । अथवा शैलीप्रमाणं शैल्यनुमानं तस्मिंश्च शैलीप्रामाण्येऽभ्युपगम्यमाने चाग्निहोत्रस्य शैल्या यूपक्रियायाः अयाथार्थ्यात्[1] कथंकारं विधिविध्यन्तरशैल्योस्तुल्यार्थाप्रसिद्धेर्[2]लौकिकत्वादनुमानाऽनुपपत्तेः । लोके हि दृष्टमनुमीयते । ननु यूपकरणमष्टास्रादिरूपमग्निहोत्रकर्मधर्म्यस्वरूपपृथग्भूतं प्रसिद्धमस्ति । यतस्तच्छैल्याग्निहवनशैल्यनुमीयते । तस्माच्छैलीप्रामाण्ये चास्य शैल्या यूपक्रियाया याथार्थ्यात् तत्सिद्धिरयुक्तैव । हवनाग्निहोत्रयोर्भेदेऽपि हवनानुवादविशिष्टाग्निहोत्रविधित्वे चोक्तन्यायेन दृष्टान्तवैषम्यान्न शैल्यनुमानमिति आह—**ननु सेवादिवत् क्रियामात्रत्वादितिकर्तव्यताभ्यः प्रतिपत्तिः**। यद्यप्यग्निहोत्रक्रियामात्रत्वयूपच्छेदादिशैलीवैषम्यं तथापि सेवादिक्रियावदेव तद्भविष्यति यथा हि सेवेत्युपस्थानाञ्जलिकरणादिस्वाम्याज्ञानुवृत्तिभजनार्था विशेषेण मनोवाक्कायपरिस्पन्दभेदात्मिकैकैव स्वामिचित्तानुरोधलक्षणा सेवा । एवमग्निहोत्राख्या एका क्रिया न सा स्वावयवकलापव्यतिरिक्ता काचिदस्ति, तस्मात् ता एव पश्वालम्भनप्रोक्षणादिक्रिया अग्निहोत्रमित्यभेदेनोच्यन्ते । आदिग्रहणात् कृषिवाणिज्यादिक्रियामात्रत्वं, ताभ्य एव इतिकर्तव्यताभ्यः प्रतिपत्तिः तथेहापीति ।

अत्रोच्यते–तत्र **भजनार्थसेवाज्ञातत्वे तासां सेवार्थत्वात्**। अत्रापि दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादित्यभिसम्बन्धस्तद्दर्शयति । भजनं भक्तिः सैवार्थः सेवाया इति भजनार्थसेवा तस्याः सेवाया ज्ञातत्वे तासां तदवयवाभिमतानामुपस्थानाञ्जलिकरणादीनां सेवार्थत्वात्, अज्ञातत्वे तदर्थाप्रतिपादनात् । ज्ञाता एव हि ताः[6] सेवेति प्रतिपत्तिं जनयन्ति नान्यथा । न त्वेवमग्निहोत्रावयवक्रिया ज्ञाताः । तस्माद्वैषम्यमवश्यं चैतदेवम्, इतरथा प्रति क्रियां पृथक्त्वापत्तेः । यथा कृषिसेवयोः परस्परं तदङ्गक्रियाणां च पृथक्त्वम् । तदङ्गत्वेनाज्ञातत्वात् । एवमग्निहोत्रस्य तदङ्गक्रियाणां स्यात्, ननु भवति तदङ्गभावेनाज्ञातत्वादग्निष्टोमादीनामिति । आह–नात्रापि दानाद्यर्थत्वाद्वैषम्यम् ? किं कारणम् ? अत्रापि 'हु दानादनयो'रिति दानाद्यर्थत्वाद्धवनादीनामज्ञातत्वमतोऽग्निहोत्रस्यापि ज्ञातदानाद्य-

---

१ °श्रा° ग । २ °त्यक° ग । ३ °स्तुल्याथौं ग । ४ प्रसिद्धौरलौ° क-ख । ५ त्वद् क° ग । °त्वात् क । ६ तामेवेति ग ।

ङ्गक्रियात्वात् साम्यमेव सेवादिभिः । किं चान्यत्–**उत्तरक्रियामात्रत्वाच** । यथा सेवाया उत्तरक्रियामात्रत्वमुपस्थानादीनामेवमग्निहोत्रस्याग्निष्टोमादीतिक-र्तव्यतानामित्येतदपि न, **लोकविदितदानाद्यर्थानुबद्धेतिकर्तव्यतामात्रा-र्थतापत्तेः** । एवमपि **लोकविदितैर्दानाद्यर्थैरनुबद्धाया** इतिकर्तव्यताया योऽर्थस्तन्मात्रार्थत्वमापन्नमग्निहोत्रस्य, लोके ह्यनुग्रहार्थं स्वस्य निसर्गो दानं । संगत्य प्रीत्या दानमस्मिंस्तत्संप्रदानम् । तस्मै दानं यत्र स्वपरानुग्रहो विद्यते तादृशे त्यागो दानम् । न तु यत्र क्वचन मूत्रपुरीषादिविसर्गवद्द्रव्यविसर्गः भस्मनि वा सर्पिःप्रक्षेपवत्, तस्मात् स्वपरोपकारकमेव अग्नौ सर्पिरादिविसर्जनम् । सर्वस्यात्र चैतद्दिष्टं दृष्टं वा ? किं कारणम् ? **अग्निसम्प्रदानविरोधात्** । तस्याग्नेर्दहना-त्मकस्य सर्वद्रव्याणां विनाशकस्य सम्प्रदानत्वविरोधाच्छिन्नपाणेर्मत्स्याभयदान-वत् । मुषितस्य वा चौराभयप्रदानदानवत् । अग्नय इति सम्प्रदानविशेषयोर्लोक-यज्ञतुल्यत्वादलौकिक एव गृह्यमाणेऽर्थे इदमेवं नैवं चेति विचारोऽर्थो वा न भवन्ति । यदि भवेच्चतुष्पात्त्वे सत्युत्प्लुत्य गमनाल्लोकमनोहरिणवन्मण्डूकस्तत एव निर्लोमा हरिणो मण्डूकवत् स्यादिति प्रसिद्धिविपरीतं सिध्येल्लोकाप्रामाण्य-करणत इति तत्प्रसक्तमिहापीत्यत आह—न तु लौकिक एव गृह्यमाण इत्या-द्युक्तदर्शनवदिति **नैवं सेत्यादि** । अत्राप्यनिष्टापादनसाधनम् । नैवं सा तथा-भूतार्था हवनक्रिया । तदाभत्वात्, तदाभत्वमस्याः परमार्थेनादानात्मिकापादा-नत्वेनादानात्तच्च सिद्धम् । यथा बालरमणकादिक्रियायां स्वाद्वन्नादिसंज्ञादि-क्रियायामन्योऽन्यदानभोजनादिक्रियास्तदाभा एवमिदमपि दानमन्यै प्रैष इति इदं त्वत्रानिष्टापादनम् । प्रधानादिवादसाधुता च । **प्रसिद्धिविपरीतेत्यादि** प्रसिद्धेर्विपरीतं तत्त्वं तद्भावस्तत्त्वम् । प्रसिद्धिविपरीते तथैव स्थितोऽर्थोऽस्य वादस्य तद्भावात् सिद्धिविपरीतत्वस्थितार्थत्वाद्वेदवादात् साधुता स्यात् । प्रधानसंसर्ग-क्षणभङ्गाद्यात्मकादिवादानां प्रधानादिवादानां[3] वा असाधुताभ्युपगमवदुक्तहेतो-र्वेदवादात् साधुता वा स्यादित्युभयथाप्यनिष्टापादनम् ।

**अथाग्निहोत्रमित्यादि** । अथेत्यधिकारान्तरे । अथैतेषु विकल्पेष्वग्निहोत्र-शब्दस्य क्रियावाचित्वे सर्वथा दोषोत्पादभीतेन परेणाग्निहोत्रमित्यस्यापूर्वविशे-षाभिधानार्थत्वैव कल्प्यते । न पूर्वोऽपूर्वः दृष्टो धर्मविशेषः तदभिधानमर्थः प्रयो-जनं व्यापारस्तद्भावोऽपूर्वविशेषाभिधानार्थतैव कल्प्यते । विशेषशब्दः परस्परवि-शिष्टाभिर्यज्ञसंस्थाभिरग्निष्टोमादिभिरिष्टिभिः पश्वादिभिर्वक्तव्याऽपूर्वापि विशेष्यते ।

---

१ °दीनि ग । २ °नैयस्ये° ग । ३ वादिनां ग । वादीनां क । ४ °वादित्वे ग । ५ कल्पते ग । ६ °श्राभिर्य° क-ख ।

द्रव्यमन्त्रदेवतादिविशिष्टाभिर्मा भूद्यज्ञसंज्ञायाः क्रियाया एव धर्मत्वम् । यथा कैश्चिन्मीमांसकैरेवं व्याख्यायते–'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' (ऋ० १०, ९०, १५) इति । किं कारणम्? तस्मिन्नर्थे प्रत्यक्षत एव नित्यायाः क्रियाया अनन्तरं फलसम्बन्धादर्शनात् । क्रियावैफल्यदोषप्रसङ्गत्वादग्निहोत्रमिति धर्मः क्रियाऽभिव्यङ्ग्य इत्युच्यते । कार्ये कारणोपचारादग्निहोत्राभिव्यङ्ग्योऽग्निहोत्रमिति । ततोऽग्निहोत्रं धर्मं जुहुयाद्भावयेत् स्वर्गकाम इत्येष वाक्यार्थो निर्दोष इत्येवमर्थं स्पष्टीकारयितुं विधिविधिनयः पृच्छति–

तथा सत्यपूर्वाभिधाने कोऽर्थः कृतः स्यात्? । अर्थशब्दस्य प्रयोजनाभिधेययोर्दृष्टत्वात् । कोऽर्थः साधितः? किं प्रयोजनम्? कथं स्यात्? । कोऽभिधेयः समर्थितः स्यात्? विधिनयो ब्रवीति–यः स्वर्गकामः स हवनेनेतिकर्तव्यताविशेषेण स्वर्गं भावयेदित्ययमर्थः कृतः साधितः स्यादित्यर्थः । विधिविधिनय आह–विद्यापर्यायतत्त्वज्ञानोत्पादनार्थत्वाद् विद्यानिराकरणार्थत्वाच्च शब्दप्रयोगः । स किमूनीकृतमर्था विद्याया इति न किंचिदूनीकृतमित्यभिप्रायः । तत्समर्थयति—यावदेवेत्यादि, यदुक्तं भवति यः स्वर्गं कामयते स जुहुयादिति । तदुक्तं भवत्यपूर्वं जुहुयात् स्वर्गं काम इति नापूर्वोऽर्थोऽधिकोऽग्निहोत्रशब्देन लभ्यते । हवनेनैव तस्याभिव्यङ्ग्यत्वात् । जुहुयात् स्वर्गकाम इत्येतावतैव गतार्थत्वात् । जुहुयाद्धर्मं भावयेत् स्वर्गकाम इत्येतस्यां वाक्यार्थव्यक्तौ कोऽग्निशब्देन होत्रशब्देन चार्थः? इति । अत आह–ततो भावनस्य गतार्थत्वाद्धवन्तं धर्मं भावयतो हेतुकर्मसाधनसाध्यस्य धात्वर्थस्य भावनस्य जुहुयाच्छब्दप्रयोगादेव गतार्थत्वान्नार्थः कश्चिदग्निहोत्रमित्यनेन । एवं तावदग्निहोत्रशब्दस्य प्रयोगो निरर्थकः, प्रसिद्धिविरुद्धा चेयं कल्पना लोके वेदे वा । तस्य तदर्थाभावात् अभ्युपेत्याप्यपूर्वविशेषाभिधानमप्रत्यक्षत्वान्निरूपणं हवनेन नोपपद्यत इति ब्रूमः निरूपणवैधर्म्यात् । इह हि यद् घटादि वस्तु मृदानयनमर्दनादिक्रियया निरूपणार्थं प्रत्यक्षत उपलब्धित्वेन व्यपदिश्यते । अनया क्रियया घटो निर्वर्तते स्यात् तत् कार्यमिदं कारणमिति दृष्टकारणकार्यसम्बन्धत्वात् ।

ननु जात्वदृष्टपूर्वस्य साधर्म्याद् दृष्टान्ताभावेऽनुमानाभावात् । अत आह–**न च स प्रत्यक्षोऽपूर्वो यतस्तेन निरूपणमारभ्येत** । हवनस्य कार्यं तत् इदं चास्य कारणमिति निरूपणं व्याख्येत्यर्थः । सा कथं व्याख्येति चेदुच्यते । येन हवनेन दृष्टापूर्वनिर्वर्तनशक्तिना निर्वर्त्योऽग्निहोत्राख्योऽपूर्वो निर्वर्तते तत् तथानुष्ठातव्यं हवनं यथा मृदानयनादिक्रिया घटनिर्वर्तनार्थमिति । तत्र न

---

१ °त्वर° क–ख । २ ऽस्यासत्° क–ख । ३ °भ्याद° ग । ४ स क–ग ।

युज्यतेऽत्यन्तमदृष्टकारणकार्यसम्बन्धत्वादनयोः संभावनयैतदपि कृत्वा कल्पनात्मिकयोक्तमपि न संभवतीति येऽभिहिता दोषास्तत्परिहारमनादृत्य परेण प्रसिद्धमात्रप्रतिपादनार्थमथोच्येत—अस्यास्तावत्प्राप्तेः प्रसिद्धिर्भविष्यतीति। ततो दोषपरिहारो भविष्यतीति । प्राप्तिरिति 'स्त्रियां क्तिन्' (पा.३।३।९४) इत्यत्र अयादीनां चेति वक्तव्यम् । 'गुरोश्च हलः' (पा०३।३।१०३) इत्यप्रत्ययेनापवादेन मा भूद्वा चेति प्रापणात् प्राप्तेर्वाक्यान्तरप्रापिता प्रसिद्धिर्भविष्यति । अग्नये होत्रमग्निहोत्रमिति । चतुर्थीसमासो योगविभागादस्वमाद्युपसंख्यानाद्वा रूपसिद्धिस्तदर्थप्रसिद्धिश्च । ततः करणं तत्फलसम्बन्धश्च । कर्तुरिति सर्वमुपपन्नम् । कतमस्माद्वाक्यात्[1] प्रापिता प्रसिद्धिरिति चेत् वक्ष्यमाणे वाक्यान्तरे यदग्नये प्रजापतये च सायं जुहोतीति । घृतेन पयसा दध्ना जुहुयादिति तदनुबन्धाच्चेति कर्तव्यतैव कर्तव्यता तस्याः प्राप्तेर्वाक्यान्तरप्रापितायाः अनुबन्धात् सम्बन्धादनुपरताकाङ्क्षादुत्तराः सर्वा इतिकर्तव्यता एव कर्तव्यतास्तासां चेतिकर्तव्यतानां प्रसिद्धिरग्निहोत्रस्य प्रसिद्धिस्तदात्मकस्येति ।

अत्रोच्यते—न तर्हि पुनर्जुहुयादिति वाच्यं स्यात् अग्निहोत्रशब्देनैवाग्निप्राजापत्यादिसम्प्रदानजुहोत्यादीतिकर्तव्यतेत्युक्तार्थत्वात्[2] । पुनरपि प्रागभिहितो यो नहि[3] कश्चिज्जुहोति पुनर्वचनेनेत्यादिग्रन्थार्थः स एव दोषप्रपञ्चोऽस्मिन्नपि व्याख्याध्वन्युपस्थितः । अपि चैवमित्यादि । किं चान्यत्—अत्रापि पुरुषप्रमाणकवादापत्तिः, किं कारणम्? **उत्तरोत्तरविरोधपरिहारविचारप्राप्यार्थपरिग्रहात्** । अग्निहोत्रहवनयोः पौनरुक्त्यादिदोषाद्विरोध इत्युक्तेऽनुवादविधित्वेनेति परिहारः, पुनः प्रसिद्धत्वाद् विरोध इत्युक्ते कुर्यादर्थो जुहुयाच्छब्द इत्येवमादिविचारैः प्राप्योऽर्थोऽन्वयापरिगृहीतोऽतः स्वबुद्धिप्रामाण्यावलम्बनात् पुरुषप्रमाणकस्तर्क आश्रितो भवति । **तर्क आश्रितो भवति** । तर्कलक्षणं च अविज्ञाततत्त्वार्थकारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति किमिव सामान्याद्यर्थैकान्तवदेव । यथा सामान्यमेव विशेषा एव सामान्यविशेषश्चेत्येकान्तार्थपरिग्रहे[5] प्रागुक्तविधिना पूर्वोत्तरविरोधपरिहारप्राप्योऽर्थोऽशक्यप्राप्तिरफलः पुरुषप्रमाणत्वात् तथायमपि तर्कः स चानिष्टः इत्यपि च तर्कोऽप्रतिपूर्णो यदि न भवताश्रीयेत[6] । किन्तु प्रतिपूर्णः । कस्मात्? दोषत्रयात्, कतमस्माद्दोषत्रयात्? पौनरुक्त्यादेः असत्कार्यवादाभ्युपगमात् । पुनस्तत्त्यागात् । जुहुयादुक्तेः पौनरुक्त्यादिदोषाः प्रागुक्तवत् ।

---

१ °वास्यात प्रविता ग । २ °तेनो° ग । ३ योऽनहि° ग । ४ °थरन्व° ग । ५ सामान्यं विशेषा° ग । ६ भवेदाश्री° ग ।

असत्कार्याभ्युपगमप्रदर्शनार्थमाह–**एकावस्थामात्रविच्छिन्नेत्यादि**, यावत् कुर्यादिति । कारणे कार्यस्यासत्त्वैकान्ताभ्युपगमात् । **एकावस्थामात्रविच्छिन्नपूर्वापरत्वाग्न्यादिभिन्नवस्तुत्वाभिनिवेशविधानाच्चेति** । तच्छब्दाज्जुहुयादुक्तेश्च एकस्यैवावस्था एका च सावस्था च एकावस्था । तत्परिमाणमेकावस्थामात्रं तिमितसरःसलिलवदविच्छिन्नम् । तस्यैव पुनस्तत्त्वं विच्छिन्नं पूर्वस्यापरस्य बन्धनादेरग्न्यादेर्भस्मादेर्घटपटादेश्च परविषयसामान्यवादिमतवत् सर्वैक्यापन्नस्य सतोऽग्न्यादेर्भिन्नवस्तुत्वेनाभिनिवेशः, तदभ्युपगमेऽग्निरिति परमाणुद्व्यणुकादिभूम्यत्वादिसंयोगसम्भूतवनस्पतीभूताग्निभस्मत्रुटितपरमाण्वादिविच्छिन्नावस्थामात्रत्वे सत्यग्निरिति भवति । क्रमेण परिणामभेदाभ्युपगमात् तस्य विधानादग्निहोत्रं जुहुयादिति च हवनक्रियानुष्ठानं, तत्फलाभिमतः स्वर्गः तयोश्च सम्बन्ध इति परस्परं विघटितत्वान्नोपपद्येत । पूर्वापराभ्युपगमयोः किं कारणं विघटितमिति चेदुच्यते । कारणे कार्यस्यासत्त्वैकान्ताभ्युपगमात् । इति विघटनप्रदर्शनम् । एवं हि कारणे घृतादौ कार्यस्याग्निहवनकर्मणस्तत्कार्यस्य च स्वर्गादेरसत्त्वे सति कारणमुपपद्यते, तच्च सति नोपपद्यते सिद्धौदनपचनवत् । विशिष्टैकाग्न्याद्यवस्थाभ्युपगमे च पुरुषादिकारणात्मकसर्वैक्याभ्युपगमविरोधिनि सत्युपपद्यते । नान्यथेति ।

अत आह–[1]**सर्वगतसत्कार्यकारणवृत्तित्वे भेदविधिनिर्विषयत्वात्** । सुप्तसुषुप्तजागरितत्वाद्यवस्थं क्रमेणैकमेव युगपद्वा सर्वगतं पुरुषाख्यं कारणम् । तच्च सत्कार्यं सर्वगतं च तत्सत्कार्यकारणं च तदितिविग्रहात् । वक्ष्यमाणविधेर्विधिनयदर्शनेन । तद्वृत्तित्वेनाग्निहोत्रं कुर्यादितिभेदविधेर्निर्विषयत्वमग्न्याद्यभावात् । यथोक्तम्–

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ २ ॥
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो[2] विशन्ति[3] ॥ ३ ॥

तथा 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति'-(ऋ० वे० मं० १० सू० ९०) इत्यादि । एतद्दर्शनं प्रतिपादयिष्यते । अतः **सर्ववस्तुसन्निधीत्यादि** । सर्ववस्तूनां संनिधौ सद्भूतैव सा हवनक्रिया तथापि भेदाः साधनान्यस्याः । घृतेन पयसा जुहुयादित्यादिभेदक्रिया एवाग्निहवनक्रियायाः साधनानि । तान्यन्तरेण तदभावात् । साधनासम्बन्धाभिनिर्वर्त्येत विधीयते तदन्वनुष्ठात्रापि तदुपदिष्टभेदसाधननिष्पाद्येनाऽभ्युपगम्य यो यो भागो यथाभागं कारकाणां विज्ञाता स आत्मा यस्या[4] इतिकर्तव्यतायाः सा यथाभागकारकविन्यासात्मिका तथेतिकर्तव्यतया गवालम्भनात् प्रक्षेपादिप्रकाररूपया अनुष्ठीयते सामर्थ्यात् । अतोऽसौ प्राग्नासीदित्याश्रिता, कस्मात्? कार्यत्वेन परिगृहीत-

---

१ स्वर्ग° ग । २ यश्च तयोर्वि° ग । ३ कैवल्योपनिषदि । ४ अस्या ग ।

त्वात् । कुर्याज्जुहुयादित्यादिवचनात् कार्यत्वेन निर्वर्त्यत्वेन परिगृहीतैव सा, दृष्टान्तो विशेषैकान्तवस्तुवदिति । यथा विशेषैकान्तवादिना कार्यमेव न कारणमिति प्रतिक्षणोत्पत्तिविनाशात्मकत्वात् प्रतिपन्नं वस्तु तत्प्राग् नास्ति । तच्च त्वयाभ्युपगतम् । क्रियाभ्युपगमादिति त्वां प्रति साध्यसाधनधर्मान्वितो दृष्टान्तः । मयापि च त्वदभ्युपगम्योक्तत्वादिति । साध्यसाधनमेवमनेन तर्केणासत्कार्यवादोऽभ्युपगतस्त्वया भवति । स चाप्रतिपूर्णस्तर्कोऽसिद्धहेतुकत्वात् प्रतितर्केण बाध्यत्वाच्च । ननु तत्त्वमेवं वस्तुनोऽसत्कार्यत्वम्, किं कारणम्? व्यङ्ग्यत्वात् । व्यङ्ग्यादि सा क्रिया न कार्या । अविवक्षितप्रत्येकसमुदितघृतादिद्रव्यधर्मत्वेनाभिव्यक्तेः । को दृष्टान्तः? पिण्डकालघटवत् । यथा मृत्पिण्डकाल एव घटो विद्यमानोऽपि साधनान्तरापेक्षाभिव्यक्तत्वात् नोपलभ्यते । शुक्रशोणितावस्थायामिव वा देवदत्तस्तदवस्थाविशेषान्तरत्वे सत्युत्तरकालमुपलभ्यत्वात् । कार्यत्वादेव वा प्रकाश्यघटवदभिव्यञ्जनस्यैव कारणाख्यत्वात् । इतरथा वन्ध्यापुत्रोऽपि क्रियतां सत्कार्यत्वात् घटवत् । एवं तर्हि सत्त्वरजस्तमसां साम्यवैषम्यव्यक्ताव्यक्तता एककारणत्वस्य बाधिका स्यादिति चेन्नेत्युच्यते । कुतस्तत्त्व एवान्यथाभूतेः[1] । न ह्यव्यक्तावस्था नाम काचिदस्ति । किं तर्हि? तत्त्व एवान्यथाभावोऽस्ति, तस्य भावस्तत्त्वम् । तस्मिंस्तत्त्व एव तद्भावावस्थायामेवान्यथाभवनात् । तदेव हि वस्तु स्वरूपावस्थायामेवान्यथाभवति । यद्यन्यदन्यथाभवेत् मृत्पिण्डोऽपि पटो भवेत् । न तु भवति, साधर्म्यदृष्टान्तश्च घटस्वात्मवत् । यथा घटो घटस्वात्मन्येव[2] स्थितो नवः[3] पुराणतयोत्पद्यते । तथा स एव मृत्पिण्डोऽन्यो घटो भवति । न तु सांख्याभिमताव्यक्तता नाम काचिदस्ति । यदि स एव घटो नवः पुराणतयाऽन्यो न भवेत् । न पुराणः स्यान्नैव[4] एव स्यात् । ततोऽन्यो वा घटादिः[5] पुराणघटः स्यान्नैव वा कश्चिदपि भवेत्, तस्मात् तत्त्व एव तथाभूतेर्नाव्यक्तता[6] नाम काचिदस्ति ।

अत्राह—घटस्वात्मवदित्ययं दृष्टान्त उपपद्यते नवत्वावस्थानन्तरं पुराणत्वावस्थानुभवात् । मृत्पिण्डकालघटवदिति न युज्यते तत्त्व एवान्यथाभावात् । पिण्डानन्तरं हि शिवको भवति । न घटो न स्तूपकच्छत्रकस्थालककोशकुशूलका इति । अत्रोच्यते—तुल्यप्रत्यासत्तित्वात् । यथा घटो भवति कुशूलकात् । तथा कुशूलकः कोशकात् । कोशकः स्थालकात् । स्थालकः च्छत्रकात् । छत्रकः स्तूपकात् । स्तूपकः शिवकात् । शिवकः पिण्डात् । पिण्डो मृद इति । मृद एव तथा तथाभूतेः । अथवा किमनया सांख्यसृष्टिक्रमिकवचनानुमत्या? तस्यामेव मृत्पिण्डावस्थायां

---

१ तथा° ग । २ °घटस्वा° ग । ३ न वा ग । ४ स्वतत्र ग । ५ °प° ग । ६ °रन-वस्था° ग ।

घटो भवतीति प्रतिपद्यस्व स्तिमितसरःसलिलवत् तरङ्गवक्तृ[1]त्व एवान्यथाभवना-न्नास्ति[2] तत्रापि क्रम इत्यतस्तदुपदर्शनार्थमाह–

**मृत्पिण्डघटवदिति** । अथवा तत्त्व एवातथाभूतेरिति पाठः । तत्त्व एव तद्भाव एव सति तेन तेन प्रकारेण भवनात् पिण्ड एव मूर्तिस्वभावरूपाद्यात्मके शिबकाद्यात्मना नीलरक्ताद्यात्मना च भवनादिति । अत एव च कारणमात्रमसौ तत्त्व एवातथाभूतेस्तथाभूतेर्वा कारणं प्रमाणमसौ हवनक्रिया घृतादिकारणेभ्यो न व्यतिरिक्ता । उक्तहेतोरसत्कार्याभावात् कारणमात्रमसौ क्रियेति प्रतिपत्तव्यमव-श्यम्, न केवलं क्रियैव कारणमात्रं सह फलेनापि सा कारणमात्रं, फलमप्यस्याः स्व-र्गाख्यं सुखादिघृतादिकारणान्यथाभवनमात्रम् । अत्रोपनय[3]हेतू प्रतिपादितार्थावेवं[4] ।

**तदात्मत्वात्[5] तन्निर्वृत्तत्वात्** इति । तस्यात्मा स आत्मास्येति वा तदात्मा तेन तस्मिंस्तस्य स एव वा निर्वृत्तस्तद्भावस्तन्निर्वृत्तत्वम्, तदात्मत्वं च तस्मात् तदात्मत्वान्निर्वृत्तत्वाद् घटमृद्वत् । घटस्य मृत्त्वं घटमृत्त्वं । मृदेव घटः । घट एव मृद्यथा प्रतिपादितं तत्त्वे एवातथाभूतेस्तथाभूतेर्वेति । तद्वत् तस्मात् कारण-मेव क्रिया क्रियाफलं च । एवं तावदप्रतिपूर्णस्तर्कः प्राङ्नासीत् तत्क्रियाकार्यत्वेन परिगृहीतत्वादिति । असिद्धहेतुत्वात् प्रति तर्केण बाध्यत्वाच्चेति । सुष्ठूच्यते । किं चान्यत्–स्वयमेव त्वया परित्यक्तत्वाच्चाप्रतिपूर्ण एवं[6] । कस्मात् ? एकान्तवादस्वा-भाव्यात् । एवं स्वभावा ह्येकान्तवादाः सर्वोक्तमृषात्ववादवत् । यथोक्तं त्वया तद-नुबन्धाच्चेति कर्तव्यतेति ब्रुवता कारणे कार्यस्य सत्त्वमभ्युपगम्य सत्त्वं च त्यक्तं भवत्यतो न क्रमः इति । कर्तव्यताकर्तव्यताभ्युपगमोऽस्त्वित्यादि । इतिशब्दस्य प्रकारार्थवाचित्वादित्थमित्थं च कर्तव्यं घृतेन जुहुयात् पयसा जुहुयादित्यादि-प्रकारा कर्तव्यतेतिकर्तव्यता सैव कर्तव्यता कारणभूतास्ता एव प्रोक्षणादिक्रिया अग्निहोत्रमित्यभ्युपगमात् पूर्वोत्तरावस्थानुबन्धात् । विच्छिन्नपूर्वोत्तरावस्थस्य कस्य-चिदभावात् कारणमेव कार्यम् । सर्पस्फटाटोपमुकुलप्रसारणकुण्डलीकरणवत् । यज्ञोप-वीतसूत्रतन्तुत्वपटत्वानुबन्धात् सूत्रमेव यथा यज्ञोपवीताख्यां लभते । तथा समवस्था-नात् तथा तन्तव एव पटस्तद्वत्संस्थानमात्रभिन्नस्य कारणस्यैव कार्यत्वमित्ययमभ्यु-पगम आपद्यत इति । इतिशब्दो हेत्वर्थे । एतस्मात् संस्थानामात्रभिन्नकारणकार्य-त्वाभ्युपगमापत्तेर्हेतोः कार्यस्य त्यागः । कुर्यादित्ययं, हिशब्दः कार्यार्थे सत्यर्थ-वान् भवति, नान्यथा । पुनरितिशब्दो हेत्वर्थे । ततश्च कुर्यादर्थत्यागात् । स्वशब्दार्थापत्तिविषयद्विपरीतार्थत्वाद्विवक्षाभेदव्याघातः । अग्निहोत्रं जुहुयादि-त्यनेन स्वशब्देनैवासत्कार्यवादोऽभ्युपगतः । तदनुबन्धाच्चेति । कर्तव्यतेत्य-

१ °दृत्त° ग । २ °न्नास्त° ग । ३ °चय° ग । ४ °र्थत्वे च ग । ५ तत्र एव भवति ग । ६ एवाकस्मादे° ग ।

र्थापत्त्या कारणात्मककार्यवादोऽभ्युपगतः, तयोरन्योन्यविपरीतार्थत्वाद्विरुद्धत्वाद्विवक्षाभेदो व्याघातश्च । विवक्षाभेदस्तावदसत्कार्यवाचिनः शब्दस्य कारणात्मककार्याभिधानाभ्युपगमात् । कारणात्मककार्यवाचिनश्चासत्कार्याभिधानाभ्युपगमात् । अत एव च परस्परतो विरोधाद् व्याघातोऽनयोरर्थयोः । [1]अर्थद्वयस्य स्वशब्दार्थापत्तिविषयस्याभ्युपगमाद्विवक्षाभेदोऽयं पुरुषबुद्धिवशाद्वेदवादप्रामाण्यमपौरुषेयं व्याहन्तीति विवक्षाभेदव्याघातः । स च त्वया तत्त्वा[2]नपेक्षणदोषान्नेक्ष्यते । वस्तुतत्त्वविचारप्रद्वेषिणो वा कार्यकारणस्वरूपानपेक्षिणोऽपि बलादयं कारणकार्यतत्त्ववाद आपद्यतेऽनेकान्तरूपो वस्तुनस्तादात्म्यात् । अनपेक्ष्यमाणोऽपि स्वमतव्याघातीति । एवं कारणात्मकत्वेऽभ्युपगतेऽपि यदीतिकर्तव्यता जनयतीति इष्यते । ततो न सा कर्तव्यता घृतादिकारणे इतिकर्तव्यताव्यतिरिक्ता काचिदस्ति । ततः सा तज्जन्या न भवति क्रिया, नात्मनैवात्मानं जनयतीत्यर्थः । कस्मात्? जनकत्वात् कारणत्वात् पूर्वत्वाद्विधायकत्वान् मातृवत् । यथा माता नात्मानं जनयति । किं तर्हि? ततोऽन्यां दुहितरं जनयति । एवमियमितिकर्तव्यता जनिका सती तथाकारणत्वात् पूर्वत्वाद्विधायकत्वादिति व्याख्येयानि । वचनवदिति । अत्र यथा वचनमपि नात्मानं जनयति, बुद्धिं तु ततोऽन्यां वाच्यविषयां जनयति । तथेतिकर्तव्यतेति । अथ मा भूदेष दोष इति जनकत्वमसिद्धं तस्या जन्यत्वात् । जन्या हि सेति ।

अत्रोच्यते-अथ जन्या सा एवं तर्हि न जनिका न कारणं जन्यत्वादित्यजन्यत्वात् कार्यत्वात् । अपूर्वत्वाद्विधेयत्वात् पुत्रादिवदादिग्रहणाद्वाक्यार्थज्ञानवत्, तस्मात् स्वविहितदो[3]षत्वाज्जन्यत्वे जनकत्वे वा दोषानतिवृत्तेरयुक्तमितिकर्तव्यतैव कर्तव्यता । तदनुबन्धादिति ।

किं चान्यत्—कारणमात्रत्वे सति कर्तव्यतां प्रतीतिकर्तव्यता परिसमाप्ता वा स्यादपरिसमाप्ता वा? । तत्र तावद्यदि प्रत्येकमितिकर्तव्यताऽस्तु कर्तव्यतापरिसमाप्ता । ततः प्रतीतिकर्तव्यतासमाप्तेरितिकर्तव्यतान्तरानारम्भः । एकया[4] घृतेन जुहुयादित्यनयैवेतिकर्तव्यतया । तन्मात्रपरिसमाप्तायाः कर्तव्यतायाः कृतत्वात् पयसाद्यसमाप्त्यादीनामितिकर्तव्यतान्तराणामारम्भो निरर्थकः प्राप्त अनारम्भ एव वा । तस्या अपि कारणं कारणमात्रत्वात् [5]इतिकर्तव्यतेति त्वयैवाभ्युपगतत्वात् । न्यायतश्च घृतादिकारणद्रव्यमात्रत्वस्य क्रियायाः प्रतिपादितत्वात्, सिद्धौदनपचनवदनारम्भ एव प्राप्तः । एवं तावत् प्रत्ये[6]कपरिसमाप्तो दोषः । प्रत्येकत्वसमाप्त्यं च कारणाभावात्, तथा तावद्यदि शिबिकावाहककारणत्ववत्

१ °रर्थचार्थ° क-ग ।   २ न त्वा ग । न वा क ।   ३ °बोध° ग ।   ४ °त्वा° ग ।
५ °प्रत्या° क-ग ।   ६ प्रति क ।   ७ प्रत्येष क-ख ।

प्रत्येकमसमाप्ता च कर्तव्यतेतिकर्तव्यतास्तु तथाप्यकारणता प्रत्येकमकारणत्वात् सिकतातैलवत् । इतिशब्दस्यैवमर्थत्वादेवंशब्दस्य च प्रकारार्थत्वादेवं कर्तव्यमिति कर्तव्यं घृतादिप्रक्षेपस्वरूपकर्तव्यता । अतथा तावत् न तथा अतथा । तत्तथात्वं न[1] प्राप्नोति प्रत्येकमकारणत्वादित्यतथा तावत्, ननूक्तं शिबिकावाहकवहनशक्तिवत् समुदाये सति कर्तव्यताशक्तिरिति ।

अत्रोच्यते–समुदायस्यापि च तन्मात्रत्वादवयवमात्रत्वात् उक्तवदिति । उक्तं हि तत्त्व एवातथाभूतेस्तथाभूतेर्वेति । अवयवा एव हि समुदायीभवन्तः, नो चेत् सिकतातैलवदेव न स्यात्, तिलसमुदाये तैलमपि । किं चान्यत्—अभिमतविध्यनुवादवैपरीत्यदोषप्रसङ्गश्च । तत्र तावद् घृतेन जुहुयात् पयसा जुहुयादित्यादिवाक्येषु घृतादेर्विधेयत्वाभिमतस्य कारणमात्रस्य हवनकार्यस्यान्यस्य तन्मात्रेतिकर्तव्यतामात्रहवनार्थत्वादग्निहोत्रं जुहुयादित्यत्र श्रुतहवनानुवादाभावोऽपि हवनस्य घृतादिव्यतिरिक्तस्याभावात्, ततश्च घृतादिविधानवत् ज्ञानार्थाभिमतस्य हवनबाह्यस्य विधायकतैव साम्नानुवादकता । अनुवादकता च घृतादेरज्ञातार्थविधायकाभिमतस्यापि कारणमात्रवृत्तित्वाद्धव[2]नवदिति । कारणमात्रे वृत्तिरस्य तत् कारणमात्रवृत्ति घृतादिहवनं चोक्तविधिना कार्याभावस्य प्रतिपादितत्वात् । तस्मात् कारणमात्रवृत्तित्वाद्धवनघृतादेरनुवादकता । घृतादिवद्धव[2]नस्य विधायकतेति । एवं चेति विध्यनुवादयोरन्योन्यस्वभावसङ्कराव्यवस्थितात्मस्वभावत्वान्न विधिर्नानुवादोऽस्ति । अत एवमुक्तप्रकारेणावाक्यत्वम् । अनुवादत्वादविधायकत्वाद्विच्छिन्नार्थपदवत् । यथा विच्छिन्नार्थमेकं पदमधिकृतपदार्थान्तरसम्बन्धगामि वैतन्न वाक्यमत एव विध्यनुवादत्वाकाङ्क्षार्थाभावात्, तथाग्निहोत्रं जुहुयात् स्वर्गकामो घृतेन पयसा जुहुयादित्यादीति । यस्यापि पदार्थो नास्त्येव तं प्रति काकरुतवदिति दृष्टान्तः । तथा काकरुतमर्थान्तराकाङ्क्षारहितमवाक्यमविध्यनुवादत्वात् तथेदमपि। ज्ञाताज्ञातविशेषाच्चैवं घटज्ञानवत् । एवमिति कारणमात्रकार्यत्वाभ्युपगमे साधुतासाधुतयोः । साधुता तावद्गौरित्यादेः पदस्याग्निहोत्रं जुहुयादित्यादेर्वाक्यस्य विधेयत्वमनुवादत्वं च नोपपद्यते। शब्दो हि ज्ञातार्थोऽज्ञातार्थो वा प्रयुज्यते । ज्ञातार्थोऽनूद्या[3]ज्ञातार्थं विधानार्थं प्रयुज्यते । स पुनर्ज्ञातार्थः स्वत एव प्रत्यक्षादिना प्रमाणेन ज्ञातेऽर्थे प्रयुज्येत वाक्यान्तरेण वा परेणार्पि[4]तार्थः। यथायं देवदत्त इति। अयं शब्दस्य प्रत्यक्षदृष्टार्थवाचित्वादनूद्य देवदत्तत्वं विधीयते। वाक्यान्तरवेदितार्थानि वा पदान्यनूद्याभ्याजनं विधीयते । देवदत्त ! गामभ्याज

१ °ने° ग । °मेव क । २ °द्वचनस्य ग । ३ °ऽतथा क । °न ह्या ख । ४ परेण पितोर्थं° क–ख ।

शुक्लामिति। ज्ञाताज्ञातार्थता पदानां वाक्यानां च साधुत्वाभिमतानां प्रत्येकं सर्वेषां व्यर्थता दृष्टा। को दृष्टान्तः? घटज्ञानवत्। यथा घटज्ञानस्यारातीया भागाश्चक्षुराद्युपलभ्या ज्ञाताः परान्तर्बुध्नादिभागा न ज्ञाताः शेषा लोकप्रसिद्धाः। साधुता पदवाक्यशब्दानां कारणात्मकार्यवादेऽस्मिन्न घटते। सर्वस्यैकात्मकत्वे ज्ञाताज्ञातभेदानुपपत्तिः। एकस्यैव वा तदुभयाभावाद्विध्यनुवादत्वाभावस्योक्तेः। काकरुतादिवदिति। नाप्यसाधुता वाक्यभेदानर्थक्यादिदोषसम्बद्धा घटते। यस्मात् कारणात्मककार्यवादेऽर्थान्तराभावात्। ज्ञाताज्ञातालम्बनविध्यनुवादार्थयुगपद्विवक्षावृत्तिवाक्यभेददोषपरिकल्पनापरिश्लथया यथासंख्येन। ज्ञातालम्बनोऽनुवादः[1], अज्ञातालम्बनो विधिः, तयोरर्थयोर्युगपद्वक्तुमिच्छा युगपद्विवक्षा, एकस्मिन्नर्थे तस्या वृत्तिरसौ व्यर्थतावाक्यभेदः। देवदत्ताख्यानवाक्यस्यैव [गवयस्यैव] गवानयनचोदनायां देवदत्तान्वाख्यानवदनुवादः। गवानयनविधानवाक्यस्य वा देवदत्ताख्यानवाक्यवद्देवदत्तविधानमिति। यत्रेयमेकस्य[2] शब्दस्य युगपदर्थद्वयाभिधानशक्त्यभावाद्वाक्यभेददोषपरिकल्पना तस्याः परिश्लथता[3] अर्थभेदाभावात्। अतोऽसाधुतापि शब्दानां नास्ति। 'सर्वे साधवोऽसाधवो वा शब्दाः प्रशस्ताः' इति।

किं चान्यत्—न केवलं वाक्यभेददोषो भेदाभावदोषश्चापदार्थात्मकश्रुतिभेदोऽपि वृथैवं[4] साध्वसाधुत्वाभ्याम्। एवमिति कारणात्मककार्यवादाभ्युपगमप्रकारेणोक्तमतिदिश्य संक्षिप्य साधनमाह सोदाहरणम्—एकार्थत्वाद् घटकुटवदिति। यथा प्रतीतार्थयोर्घटकुटशब्दयोरेकार्थत्वादन्यतरप्रयोगो वृथा साधुत्वाभिमतयोरसाधुत्वाभिमतस्य गोशब्दमात्रस्य वाचादिसास्नादिमदर्थे युगपद्प्रयुक्ते चैकार्थत्वादर्थभेददोषपरिकल्पना परिश्लथतेऽतिवर्तते। तस्मात् पदवाक्यशब्दयोः साधुत्वासाधुत्वाविशेषाच्छिष्टेतरलोकव्यवहारविशेषः। एवं ते जुहुयादुक्तेः पौनरुक्त्यस्ववचनविरोधौ। स्वशब्दोक्तासत्कार्यवादत्यागः कारणात्मकसत्कार्यवादाभ्युपगमश्चेत्यप्रतिपूर्णतर्कता सदोषत्वादित्युक्तम्। यद्यप्येतत् त्वयाभ्युपगतं कारणात्मकं सत् कार्यत्वात्, तदप्यसमीक्ष्याबुद्धिपूर्वकमेवोक्तमित्यतस्तत्प्रदर्शनार्थमाह—इदं चाज्ञातमपि सत् त्वया तत्त्वमेवैवं विवेक्तारं प्रति प्रदर्शितं घुणाक्षरवत्, यथा घुणः काष्ठमुत्किरन्नक्षराकारामपि रेखामुत्किरति यदृच्छया तथा त्वयेदं तत्त्वमेवैवं कारणात्मकं सत्कार्यत्वं प्रदर्शितमितिकर्तव्यतैव कर्तव्यतेति ब्रुवता तत् पुनर्विवेक्तारं प्रति प्रदर्शितमित्थमसत्कार्यं भवतीत्थं सत्कार्यमिति यो वाच्यवाचकसाधनस्वरूपविधिविज्ञस्तं प्रत्येव दर्शितम्। नात्मतुल्यबुद्धीन्[5] प्रति दर्शयन्नपि स्वयं तद्विवेकं न वेच्छति। अथोच्येत—कारणमात्रकार्यदर्शनमिहेत्यादि, यावद्वच-

१ °नुपादः ग। २ यद्यव° ग। ३ °श्लाघता° ग। ४ यथैवं ग। ५ °त्थ° क-ख।

नच्छलादिति । अथ त्वयैवमुच्येत न मया कारणकमात्रकार्यदर्शनैकान्तोऽभ्युपगम्यते । यतस्त्वयैते दोषा मां प्रत्यापाद्यन्ते, किं तर्हि मयाभ्युपगम्यते ? न कारणमेव न कार्यमेव नोभयमेव नानुभयमेवेत्यविचार्य वस्तुतत्त्वैकान्तपरिग्रहमकृत्वा कारणं कार्यं उभयमनुभयं वाभ्युपगम्यतेऽस्मिन् 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इति वाक्ये यत्कारणमात्रकार्यप्रदर्शनमनुयात्वा परित्यक्तमिह विधिनये सदपि यत्तदत्र **निर्मूलापविद्धक्रियावाक्यप्रबन्धम्**, निर्मूलमपविद्धः क्रियाप्रबन्धो वाक्यप्रबन्धश्च यस्मिंस्तदिदं निर्मूलापविद्धक्रियावाक्यप्रबन्धं तस्मात् कारणमात्रकार्यदर्शनस्य तद्दोषपरिहारार्थमिष्टमतो विवक्ष्यतेऽनवधारितैकान्तदर्शनत्वात् । कारणमात्रत्वं त्यक्त्वा यत् कार्यासत्त्वं[1] तदेवाग्निहोत्रं जुहुयादिति वाक्ये कारणमात्रकार्यदर्शनमेव सत् असत्कार्यमिति विवक्ष्यतेऽभ्युपगमे च । किं कारणम् ? **अलब्धवृत्तित्वात्** । अलब्धा[2] वृत्तिरनेनेति अलब्धवृत्ति कार्यं तस्मादलब्धवृत्तित्वात् खपुष्पवत् । यथा खपुष्पमलब्धवृत्तित्वादसत् तथा कार्यं स्वर्गापूर्वादि अलब्धवृत्तित्वादसत्, लब्धवृत्ति चेत्[3] कुर्याज्जुहुयादिति न चोद्येत सिद्धौदनार्थं पचेदित्यचोदनवत् । अतोऽसत्कार्यमागृह्य स्वर्गादि तत्प्राप्त्यर्थं क्रियाऽऽश्रीयतेऽग्निहोत्रं कुर्यादिति । **तद्द्विविधम्** । तच्च कार्यं द्विविधमनितिकर्तव्यतात्मकमितिकर्तव्यतात्मकं च । तत्रानितिकर्तव्यतात्मकं च कार्यं घटादि यूपादि च लोके वेदे च दृष्टं मृदानयनमर्दनदण्डग्रहणचक्रभ्रमणादीतिकर्तव्यतात्मकं घटाख्यं कार्यं न भवति । तदुपरमेऽपि पृथगुपलब्धेस्तथाष्टाश्रिकरणादीतिकर्तव्यतात्मको न भवति यूपः । इतिकर्तव्यतात्मकं पुनः कार्यं **प्राप्तिसंवादि** प्राप्त्या संवदितुं शीलमस्य प्राप्तिसंवादि । यथा सेवादि उपस्थानाञ्जलिकरणादिरूपैव सेवा ताभ्यः पृथगनुपलब्धेः तत्कार्यं न कारणमात्रं नेतिकर्तव्यतात्मकं घटादि यूपादिवत् । कुर्यात् प्रतिपादितादसत्कार्याकार्यवादात् कुर्याच्छब्दप्रतिपादितादग्निहोत्रं कुर्यादित्यत्र कुर्याच्छब्देन प्रतिपादिताद्घटं कुर्यादिति प्रतिपादितघटासत्कार्यार्थवाक्यवदिदमपि वाक्यं स्फुटतरासत्कार्यार्थम् । किं कारणम् ? आदौ मध्येऽन्ते च कर्तव्यताभ्युपगमात् । अतोऽसत्कार्यवादस्योपक्रमप्रभृत्यपवर्गपर्यवसानेषु क्रियाविशेषेष्वभ्युपगतत्वात् । यदुच्यते त्वया दोषजातं तत् त्वद्वचनात् प्राप्तिप्रापितेतिकर्तव्यतैव कर्तव्यतेति वचनच्छलात् कारणमात्रकार्यात्वापत्तिस्ततो विध्यनुपपत्तिरित्यादि सर्वं दोषजातं नास्तीति, एतदपि नोपपद्यते विधिविधिनयदर्शनोपपा[4]दयिष्यमाणकारणमात्रत्ववादात् । अभ्युपेत्याप्यसत्कार्यवादोक्तावपि नैवास्य वाक्यताप्राप्त्यनुबन्धप्रापितेतिकर्तव्यताकर्तव्यत्वार्थ-

१ यत्वा सर्वा त्वं क–ग । २ अलब्धवृत्तिरनेनेति लब्धवृत्ति ग । ३ त्वे° ग । ४ °पर्यापर्याद° ग ।

स्याग्निहोत्रहवनकारणार्थस्य वाक्यस्य वाक्यता । कुत इति वा कर्तव्यता वाक्यासिद्धौ तदसिद्धेस्तत्सिद्धौ तत्सिद्धेः[1] । ततः पुनरितिकर्तव्यताऽवाक्यम् । तदवाक्यत्वे तद्बलप्रतिष्ठाप्यकर्तव्यतावाक्यमप्यवाक्यम्, तत्र तावद् घृतेन जुहुयादित्येतदितिकर्तव्यतावाक्यमवाक्यमनुवादत्वादुन्मत्तप्रलापवत् । यथा कामोन्मत्तस्य पक्षीति दर्शनभ्रान्तेर्हा प्रिये! इत्यादि प्रलापो न वाक्यं प्रसिद्धार्थानुवादाभावात् । एवं घृतेन जुहुयादित्यस्यापि तदभावात् तत्कर्तव्यताभावः । अनुवादत्वं चाचोद्यघृतसम्प्रदानकहवनविधानविधिवाक्यस्य विध्यनुवादयोश्चान्योऽन्यनिराकाङ्क्षयोरन्यतराभावः । स्यान्मतम्—विधिमात्रस्य द्वारं द्वारमित्यनुवादमात्रस्योद्घाट्यतामिति दृष्टत्वान्नोपेक्षेतेति चेत्? न, तत्रापि बहिरङ्गस्थितप्रकरणादिभ्यः तत्सिद्धेरपेक्षैव । तस्मादिहेतिकर्तव्यतैव कर्तव्यतेतिवचनात् कर्तव्यतावाक्यस्यैवासिद्धेः । घृतेन जुहुयादित्यस्य प्रसिद्धार्थस्यानुवादत्वाभावादवाक्यत्वम् । तदवाक्यत्वात् तद्बलप्रतिष्ठाप्याग्निहोत्रहवनकर्तव्यताविधिवाक्यासिद्धिः । अत आह—**जुहुयादित्यस्योक्तवदेवेत्यादि** । जुहुयादग्निहोत्रं कुर्यात् । हवनं कुर्यात् । अग्निहोत्रं हवनं कुर्यात् । प्राप्त्यनुबन्धप्रापितघृतादीतिकर्तव्यतात्मककर्तव्यताग्निहोत्रं कुर्यात् । अग्निहोत्रमपूर्वं कुर्यादिति उक्तविकल्पेषु प्रागभिहितदोषसम्बन्धात् । एतैः सर्वैः प्रकारैः प्रयोगस्य परिक्षायां निर्मूलार्थत्वमविषयत्वादविषयत्वमपूर्वार्थत्वादपूर्वार्थत्वमज्ञानार्थत्वादज्ञानार्थत्वं प्रमाणान्तरेण वा प्रागविहितत्वादिति तमुपसंहृत्याह—इतिकर्तव्यतावाक्यप्रत्ययापि न कर्तव्यतागतिः । **केदमभिहितं जुहुयादिति** यदुच्यते त्वया यत् जुहुयात् तद् घृतादिनेति हवनमनूद्य घृतादिना तद्विधानं क्रियेत, यथा घटं कुर्यादिति प्रसिद्धं घटमनूद्य तत्करणविधानं तत्तु न प्रसिद्धम् । कथं न प्रसिद्धमग्निहोत्रम्? जुहुयादित्यत्र हवनस्योक्तत्वादिहानुवदनं न तूपपन्नमिति[2] चेत् न, तस्यैव सर्वप्रयोगपरीक्षायामर्थाभावात् । तत्र तावत् हवनापूर्वकरणार्थतायाः प्रधानाग्निहोत्रश्रुतित्यागाद्यापत्तिरर्थाभावादित्याद्यभिसम्बध्यते[3] । क्रमोल्लङ्घनेन विकल्पद्वयोपन्यासस्तुल्योत्तरत्वात् । हवनं कुर्यादग्निहोत्राख्यमपूर्वं कुर्यादित्येतयोरर्थविकल्पयोः प्रधानस्याग्निहोत्रशब्दस्य तदर्थस्य च त्याग आपद्यते । घृतेन जुहुयादित्यादिष्वनुवादसफलीक्रियार्थमग्निहोत्रं जुहुयादित्यत्र जुहुयाच्छब्दस्य स्वप्रकृत्यर्थस्य सार्थकत्वेऽग्निहोत्रशब्दः पौनरुक्त्यान्निरर्थक आपद्यते । अथ प्रधानत्वादग्निहोत्रस्य मा भूदग्निहोत्रशब्दो निरर्थक उच्यते । ततो जुहुयाच्छब्दनैरर्थक्यात् प्रयोगो नोपपद्यते । विहितार्थाभावेऽनुवादे वाभावात् । प्रधानत्वं चाग्निहोत्रस्य साक्षात् स्वर्गादिकाम्यपुरुषार्थसाधनत्वेन विधानात् ।

---

१ °दित्यतत्सिद्धेः क-ख । २ तत्तू° ग । ३ °दित्ययत्यद° ग । °दिस्वा° ग ।

जुहोतिप्राधान्ये च तदनुपपत्तिः । अत्र च ननु घटवदग्निहोत्रशब्दः काञ्चिदपि कर्तव्यतां ब्रवीतीत्यादि सर्वो ग्रन्थः पूर्वोत्तरपक्षप्रसङ्गतो योज्यो यावन्नापि घटादिकर्तव्यतायामिव काचित् क्रिया प्रसिद्धा, ययाग्निहोत्राख्यता हवनस्यातिदिश्येत । हवनाख्यता वाग्निहोत्रस्येति हवनं कुर्यादित्ययमुक्तोत्तरार्थविकल्पः। अपूर्वार्थपक्षेऽप्यग्निहोत्रशब्दस्य जुहुयाच्छब्दस्यैकार्थत्वात् प्रधानापूर्ववाच्याग्निहोत्रशब्दस्य त्यागस्तथैव विशेषस्तु, अर्थाग्निहोत्रमित्यपूर्वविशेषाभिधानार्थतैव कल्पते तथासत्यपूर्वाभिधानेन कोऽर्थः ? इत्यादि यावत्तदनुष्ठातव्यमिति ग्रन्थश्च योज्यः। आदिग्रहणात् पुरुषप्रमाणकताशब्दप्रामाण्यत्याग इत्यादिदोषस्ततः प्रधानाग्निहोत्रश्रुतित्यागाद्यापत्तिरर्थाभावात् । क्वेदमभिहितमित्यादि । अग्निहोत्रोभयकरणार्थतयोरपि जुहोतित्यागाद्यापत्तेरग्निहोत्रं कुर्यादग्निहोत्रहवनं कुर्यादित्येतयोरपि विकल्पयोस्तुल्योत्तरत्वात् । उभयार्थविकल्पस्याग्निहोत्रं कुर्यात् हवनं कुर्यादित्येतयोः पक्षयोरुक्तदोषदुष्टत्वात् समानोत्तरत्वादिति । अत्रापि 'अथ पुनरेवमनिर्वहती'त्यादिग्रन्थो योज्यः सप्रपञ्चो यावत् त्वदभिप्रायवस्तुहवनानुवादविशिष्टाग्निहोत्राभ्युपगमेऽपि चाग्निहोत्रस्यात्मादिवस्तुतत्त्ववदप्रसिद्धस्वरूपत्वात् कारणासिद्धिः । शैलीप्रसिद्धौ च्छिदिवदित्यादि, च्छिदाविव च्छिदिवत् । यथा च्छिदौ दृष्टलौकिकयूपमात्रफलत्वं, नादृष्टालौकिकहवनात्मकाग्निहोत्रत्वं तथाग्निहोत्रत्वम् । तथाग्निहोत्रं जुहुयादित्यस्यापि तच्छैल्यैवाग्निहोत्रहवनात्मकम् । अहवनात्मकाग्निहोत्रत्वाच्चाग्निहोत्रत्वं प्रसक्तम् । छिदिनिर्वर्त्ययूपवत् । अत्र च 'एतदपि न, वैषम्या'दित्यादिग्रन्थो योज्यो यावच्छैलीप्रामाण्ये चास्य शैल्या यूपक्रियायाथाथ्यां'दिति । ततश्चानग्निहोत्रत्वप्रसङ्गाद् यदग्नये होत्रं तदग्निहोत्रमिति तावन्मात्रार्थत्वात्प्रधानस्य स्वर्गसाधनताभिमतस्यानग्निहोत्रत्वाद् घृतेन जुहुयादित्यनेनानुवादेन प्राधान्यस्वर्गकामानभिसम्बद्धजुहोत्यर्थानुवादेन किं प्रयोजनमितिकर्तव्यताकर्तव्यतया ? प्रधानेन स्वर्गकामेन विना किं तया ? यथोक्तम्—

> "[2]कातरसतेन सूरं सूरसहस्सेण पंडि[3]तं भरसु ।
> अलसं जेण व तेण व णवर कतग्घं परिहराहिं ॥" इति ।

प्रधानार्थमप्रधानत्यागदर्शनात् प्राप्तिप्रतिपाद्यप्रसिद्धौ अग्निहोत्रे प्राप्त्या प्रतिपाद्या प्रसिद्धिः तस्मिन् प्राप्तिप्रतिपाद्यप्रसिद्धौ । क्व ? अग्निहोत्रे । यदग्नये च प्रजापतये च सायं जुहोतीत्यनया प्राप्त्या प्रतिपाद्यप्रसिद्धौ तु तस्मिन्न जुहोतिप्रयोगो दाना-

---

१ °त्ते° ग । त्तेः °श्रुति° ख । २ कायरसएण ख । ३ पंडियं क ।
४ छाया—कातरशतेन शूरं शूरसहस्रेण पण्डितं भर ।
अलसं येन वा तेन वा नवरं कृतघ्नं परिहर ॥

दिप्रसिध्युपरोधेन दहन एव तावद्विधेयः। तावच्छब्दः क्रमार्थे। जुहोतीत्ययं धातुर्लोकप्रसिद्धदानादनार्थो न भवति। किं तर्हि? दहनेनाग्निना दाहयेद् घृतादिद्रव्यमित्युक्तं भवति। अग्निहोत्रं जुहुयादित्येतदिति परिभाव्य पश्चात् प्रसिद्धे दहने घृतेन जुहुयाद् घृतं दाहयेदग्निं, अग्निना घृतं दाहयेत्। अग्निर्घृतं दहेदिति ज्ञानार्थमनूद्येतिकर्तव्यताविधिर्योक्ष्यते लोकप्रसिद्धिवैपरीत्येन व्युत्पादनेनान्यथा। अन्यथा तु लोके दहनादिष्वदृष्टत्वात्। कथं दहनमनूद्य घृतादीतिकर्तव्यता विधीयते? । तथाऽप्रसिद्धेरविधायक एव कुतस्तदनुवादः? इतिशब्दो हेत्वर्थे। इत्येतस्मात् कारणात्। तथा तेन प्रकारेण दहनार्थत्वेनाप्रसिद्धेरग्निहोत्रं जुहुयादित्यत्रैव तावज्जुहुयाच्छब्दो दाहनस्याविधायको ह्यत एवानुवादः। अत्रैव ननु सेवादिवत् कर्तव्यताप्रतिपत्तिरितिकर्तव्यताभ्य इत्युपक्रम्य ग्रन्थो योज्यो, यावद्वेदवादासाधुता वा तद्वदिति। एवं तावज्जुहुयाच्छब्दस्य दाहनार्थत्वाभावादयुक्तं होत्रशब्दस्य वा तथाभूतार्थाभ्युपगमे चेति। अभ्युपेत्यापि दाहनात्मकमेव दानमिति दोषक्रमः। कोऽसौ प्राप्तेर्व्युदासः?। येयं प्राप्तिर्यदग्नये च प्रजापतये च सायं जुहोतीति। यया प्रापितमग्नौ प्रक्षेपो दानमिति तस्याः प्राप्तेर्व्युदासः। कस्माद्? घृतेन जुहुयादित्यत्र जुहोतिप्रयोगात्। अन्यथा प्राप्तौ श्रुतेन जुहोतिनोक्तत्वात् तदर्थस्य गतत्वादप्रयोगार्हत्वात् पौनरुक्त्यमस्य स्यात्। प्रयुक्तस्त्वयमतो ज्ञायते प्राप्तिश्रुतजुहोतिरनर्थक इति तस्मात् प्राप्तेर्व्युदासो जुहोतिप्रयोगात्। यदा वायं घृतेन जुहुयादिति प्रयुज्यते तदा ह्ययमवगतार्थ इति विज्ञायेत। यद्यन्येन शब्देनास्यार्थोऽनभिहितः स्यात्। किं कारणम्? अप्रमत्तप्रयुक्तत्वात्। अप्रमत्तेन हि वेदेन प्रमत्तात् पुरुषाद्विलक्षणेन रागाविद्यादियोगरहितेन प्रयुक्तोऽयम्। त्वन्मतेन लौकिकेनैव वा पुरुषेणाप्रमत्तेन विदुषा प्रयुक्तत्वात्। अस्मन्मतेन मा भूत् सर्वपुरुषाप्रामाण्ये शब्दानां च पुरुषाधीनोपलब्धित्वादप्रामाण्यमेवेति। अयं हि घृतेन जुहुयादित्यत्र जुहोतिशब्दोऽप्रमत्तप्रयुक्तेन येन केनचिद्बालगोपालादिप्रयुक्तकल्पेन तुल्यः। काकरुतादिकल्पेन तुल्यः। क इव? इषे त्वादिवत्। यथा—

'इषे त्वोर्जे त्वा वायवं स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण॰'

(यजु॰ १।१)

इत्यादि। शब्दा अवगतार्था इति विज्ञायन्ते। तथायं घृतेन जुहुयादिति वाक्ये जुहोतिः प्रमत्तप्रयुक्तत्वादवगतार्थ इति विज्ञायेत। नान्यथा। अथवाक्षरविद्यावत्। यथा—

'द्वे विद्ये वेदितव्ये·········परा चैवापरा च ॥ ४ ॥

······अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' ॥६॥

(मुण्ड॰ १।१)

---

१ °द्भुत ग।

इतीयमक्षरविद्या क्वचिदवगतार्थेति विज्ञायते अप्रमत्तप्रयुक्तत्वात्। तथायमपि जुहोतिप्रयोगो नान्यथा। तद्यदि प्राप्तिप्रापितदानार्थोऽग्निहोत्रं जुहुयादित्यत्र होत्रशब्दो जुहोतिशब्दो वा ततोऽयं घृतेन जुहुयादिति पुनर्जुहोतिर्न प्रयुज्येत, प्रयुक्तस्तु तस्मात् प्राप्तिर्व्युदस्तेति। एवं तर्हि प्राप्तिवाक्यवृत्तजुहोत्यनुवाद इति चेत्। स्यान्मतम्—प्राप्तिवाक्येऽग्नये जुहोतीति श्रुतस्याग्निसम्प्रदानकस्यादानार्थस्य जुहोतेरनुवादोऽयं घृतेन जुहुयादिति। जुहोतिरित्येतच्च न तत्र विधिलिङ्विषयस्यावृत्तेरज्ञातत्वान्नैवमप्युपपद्यते तत्र प्राप्तिवाक्ये जुहोतीत्यव्यापार्यमाणकर्तृसाधनदानार्थजुहोतिधातुप्रयोगस्य विधिलिङो विषये व्यापारेणार्थवृत्त्यभावात्। अस्य च जुहुयाच्छब्दस्य विधिलिङ्विषयस्य नियोगार्थस्य नियोगरहिते जुहोतिशब्दार्थे तत्रावृत्तेरयं विधानार्थो न विदित एव तस्मादज्ञातत्वात् प्राप्तिवाक्यवृत्तजुहोत्यर्थानुवादायोग्यता। 'प्राप्तमनूद्यते, अप्राप्तं विधीयत' इतिवचनात्। तस्मादनुवादायोग्यत्वादयुक्तमुक्तं प्राप्तिवाक्यवृत्तजुहोत्यनुवाद इति। विध्यनुवादस्य तद्विषयतेति चेत्, स्यान्मतं लक्षणशास्त्रेऽभिहितम् 'व्यत्ययो बहुलम्' (पा० ३।१।८५)

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन॥

(पा० म० भा० ख० ३, पृ० ११५)

तस्माज्जुहोत्यर्थे जुहुयाच्छब्दस्य प्रयोगात् प्राप्तमेवानूद्यते तद्विषयत्वादेवास्यापीति। एतदपि[1] न, अज्ञातत्वादेव। अनुवादत्वात् सव्यापारणार्थशब्ददर्शनान्निर्व्यापारणार्थत्वाच्च इदं त्वया सन्निहितदेवताकोशपानेन[2] प्रत्याय्यं[3] विशेषलिङ्गाभावात्। कुत एवं ज्ञायते जुहोत्यर्थे जुहुयाच्छब्दः प्रयुक्तो न स्वार्थ एव जुहोतिर्वा जुहुयादर्थे प्रयुक्त इति?। तस्मादविदितार्थत्वाद्विधित्वं, विधित्वाच्च नानुवादोऽननुवादत्वाच्चैवमपि न युक्तम्। अभ्युपेत्यापि जुहोत्यर्थे जुहुयाच्छब्दस्य वृत्तिदोषक्रमः। हवनाच्च भावनमेवमनवगमितमेवाभिप्रेतस्य स्यात्। विध्यर्थाभावात् पुरुषो हवनकर्मण्यनियोजित एव। ततो भावनं स्वर्गाख्यस्य विशिष्टसुखलक्षणस्य देशविशेषस्य विशिष्टसुखसाधनभूतदयाभिप्रेतस्यार्थस्य भावबोधकं स्यात्। यदर्थमितिवृत्तमिदं वाक्यं स्वर्गाख्यफलसाधनेऽग्निहोत्रकर्मणि पुरुषं नियोक्ष्यामीति। तदर्थं हि वाक्यमग्निहोत्रं जुहुयादित्येतत् प्रवृत्तमनेनैव कर्मणा स्वर्गो भाव्यते। तस्मादिदं कुर्विति तदर्थज्ञापनाभावे किमनेन वाक्येन जुहोति जुहोतीत्युक्तेन?। अत्राह—प्रागभिहिताग्निहोत्रकरणवाक्यार्थविकल्पगतदोषपरिहारार्थमियमर्थव्याख्याऽऽश्रीयते। प्राप्तिविहितस्वरूपसिद्धेरग्निहोत्रस्येत्यादि। इदं तावद्व्यवस्थितं यदग्नये च प्रजापतये च सायं जुहोतीत्यनया प्राप्त्या विहितमग्निहोत्रस्य स्वरूपं

१ तदपि क–ग। २ °मानेन ख। ३ प्राप्यम् ग।

सिद्धम् । अतः प्राप्तिविहितस्वरूपसिद्धेरग्निहोत्रस्य कर्मत्वेन च श्रवणात् । कस्य ? कर्तुः स्वर्गकामस्य कर्मत्वाभिधानात् । ततः किमिति चेत् ? । स्वर्गशब्दाभिहित-विशिष्टकर्मविषयकामाभिधायिशब्दश्रवणात् कर्मापि तदग्निहोत्राख्यं तदनुरूपं वि-शिष्टमेवेत्युक्तं भवति, अतः स्वर्गकामकर्मत्वाभिधानादवगमितकामानुरूपकर्मोक्त-स्वर्गकामशब्दावबोधेन कामानुरूपस्यैव कर्मण उक्तत्वादेव तद्विध्यक्रियाविशेष-गतेर्विशिष्टफलविषयकामः पुरुषः कर्ता । कर्मापि तदनुरूपत्वाद्विशिष्टमेव तद्वि-धैव । क्रियापि अप्रसिद्धफलविषयकामसम्बन्धिकर्मा, अप्रसिद्धं यथा तथावदनु-ष्ठानव्यापारविशेषोऽपि विशिष्टोऽप्रसिद्ध एवेति गम्यते । किं कारणम् ? । तत एव शब्दात् तस्य क्रियाविशेषस्य गतेर्वाक्यान्तराभावात् तद्विशेषगतिरतः क्रियाविशेष-गतेः क्रियाप्राप्यत्वाच्च कामस्य न ह्यन्यः कश्चिदुपायोऽस्ति कामप्राप्तौ क्रियातः, क्रियया शब्देन वा तदर्थावगमनात् । यथा त्वलकस्य वीथीमध्यपतितस्य हस्तं प्रसार्य कपर्दिकां देहि कपर्दिकां देहि भो ! इति वा रारट्यमानस्य कामोऽवगमितः क्रियया शब्देन वा प्रकरणविशेषसम्बन्धात् । सा च क्रिया नोपदेशमन्तरेण सिद्ध्यति । अलकावगमितकामरटनवदग्निहोत्रं स्वर्गकाम इत्युक्ते कुर्यादित्यर्थादापन्नो विध्यर्थोऽवगमितकामत्वात् । तस्यालकस्य यो वार्थः स च विशेषसम्बन्धो वाक्य-न्यायेन भवति, यथा सब्रह्मचारिणा सहाधीत इति समानेन ब्रह्मचारिणाऽधीते । केन सामान्येन समानेन ? प्रकृतविशेषणत्वात् प्रकृताध्ययनक्रियेणेति गम्यते । एव-मिदमपि वाक्यम्, अनेन वाक्यन्यायेन प्रकृतस्वर्गकामाग्निहोत्रकर्मानुरूपविध्यर्थ-क्रियोपदेशतास्येति गम्यते । अतो हेतुहेतुमद्भावः प्रतिपादितः । प्राप्तिविहितस्वरूपसि-द्धेरग्निहोत्रस्येत्यादि यावज्जुहुयादित्यर्थापन्नार्थोऽनुवादोऽग्निहोत्रं स्वर्गकाम इत्येतावता कुर्याद्वाक्यशेषेण वाक्येन गतार्थत्वात्, तदेवं जुहुयादित्यनुवादो न विधेरितीयं व्याख्या न्याय्या व्यक्तार्थोपपत्तित्वात् । प्रागभिहितव्याख्याविकल्पसमुत्थदोषा-भावाच्च न्याय्येति मन्तव्या, यस्मादादिवाक्ये प्रधानश्रुत्यत्यागगुणकृदपीति । यदभिहितं प्रागग्निहोत्रं जुहुयादित्यस्य वाक्यस्याग्निहोत्रं कुर्यादित्यर्थव्याख्या-विकल्पे 'विध्यर्थवाचित्वाभिमतश्रुतप्रधानजुहोत्यर्थत्यागस्ततः पुरुषप्रमाणकता । तदत्यागे वाक्यभेदापत्तिः पौनरुक्त्यादिदोषजातं तदप्यत्र नास्ति' जुहुयाच्छब्दस्या-नुवादत्वादेव हवनं कुर्यादित्यत्राप्यग्निहोत्रप्रधानत्याग इत्यादिदोषजातं तदपि नास्ति । तस्मादियं व्याख्यादिवाक्ये प्रधानश्रुत्यत्यागगुणकृदपीति । तस्य जुहोतेर-नुवादत्वेन पौनरुक्त्यत्यागभेदाद्यभावात् । चेदित्याशङ्कायाम् । एवं चेन्मन्यसे इत्येवं ब्रुवन्तं परं दृष्ट्वाचार्य उत्तरमाह—तन्नार्थापत्तेरित्यादि । एषापि व्याख्या

१ °स्येत्यादि° ख । २ स्यांधल° ग । ३ °ति° ग । ४ ता हे° ग । ५ श्रुत° ग । ६ तन्ना° ग ।

नोपपद्यते । किं कारणम्? पौनरुक्त्यत्वात् प्रयोगायोग्यत्वं ततश्चानुवादत्वासम्भवस्तस्मादनुवादासम्भवात् तन्नेत्यभिसम्बन्धः । इदं च पुनरुक्तमर्थापन्नस्य शब्दार्थपुनर्वचनलक्षणे पुनरुक्ते निग्रहस्थानविकल्पे । द्विविधं पुनरुक्तं निग्रहस्थानम् । तद् यथा—शब्दार्थयोः पुनर्वचनं पुनरुक्तमर्थादापन्नस्य स्वशब्देन पुनर्वचनं वेति । तस्मादिदमर्थादापन्नस्य पुनर्वचनं विशेषविधानमन्तरेणार्थापन्नार्थस्य स्वशब्देनोच्चारणात् । घृतेन जुहुयादित्यत्रं न स्यात् पुनरुक्तं घृतविशिष्टहवनविधानात् । इह तु स्वर्गकामानुरूपकर्मानुरूपाक्रियाविशेषविध्यर्थताया उपदेशवृत्तेरेव गतार्थतयाभ्युपगतत्वात् । घृतविशिष्टहवनविधानजुहोत्यनुवादतायाश्च मूलवाक्यगतजुहोत्यर्थासिद्धेरननुवादतैव । किं चान्यत्—जघन्यतरा चेयं व्याख्या । कस्मात्? साक्षाच्छ्रुतविधेर्जुहुयात्त्यागेन चार्थापन्नार्थाश्रुतानुदितजुहुयाद्विकल्पनात् । स एव पुरुषप्रमाणकत्वदोषः शब्दाप्रामाण्यदोषश्च जुहुयादित्यस्य क्रियाशब्दस्य विध्यर्थस्य साक्षाच्छ्रुतस्य प्रत्यक्षस्य त्यागं कृत्वार्थापन्नार्थस्यार्थादापन्नोऽर्थोऽस्येत्यर्थापन्नार्थः । कोऽसौ? स एव जुहुयाच्छब्दोऽनुवादाभिमतः । तस्याश्रुतस्यार्थापन्नार्थस्य तूदितविकल्पनात् अनुवादकल्पनात् । तन्नातिवर्तते । किं चान्यत्—**विधीयमानवाक्यार्थविषयानुवादनाच्च,** विधीयमानो वाक्यार्थो विधीयमानवाक्यार्थः, स विषयोऽस्येति विधीयमानवाक्यार्थविषयः स एव जुहुयाच्छब्दस्तस्यैवानुवदनं स एवानुवादस्तस्माद्विधीयमानवाक्यार्थविषयानुवादनाच्च । किं संवृतम्? वाक्यभेदस्य पुनरुक्तस्य चाङ्गीकरणम्? न हीदमेव वा स्वर्गकामाभिसम्बद्धाग्निहोत्रं विधानं तदनुवदनं च कर्तुं शक्नोति स्वर्गकामकर्तृकस्याग्निहोत्रकर्मणो वाक्यान्तरेणाप्रापितत्वात् । यथायं देवदत्त इत्यत्र तु देवदत्त एवानूद्यते विधीयते च । प्रत्यक्षसिद्धस्त्वदसो विषयोऽनूद्यते । एवमिह प्रसिद्धार्थाऽपेक्षया स तु नास्ति । तस्मादुभयार्थकल्पनादेकस्य तदसम्भवाच्च वाक्यभेददोषः । पौनरुक्त्यं तु विशेषविधानाभावात् । विशेषविध्यर्थो ह्यनुवादो युक्तो यथायं देवदत्त इत्ययं शब्दः । प्रत्यक्षप्रसिद्धार्थं अनूद्य देवदत्तविधानम् । न तु तथात्र कश्चिद्विशेषो विधीयते । तस्मादविशेषाभिधानात् पौनरुक्त्यम् । तस्मादग्निहोत्रं जुहुयादित्यस्य वाक्यस्य प्रथमत्वादेकवाक्यगतत्वाच्चानयोर्विध्यनुवादयोरर्थापन्नाग्निहोत्रकर्मविधित्वे जुहोतेरनुवादत्वे वाक्यभेदपुनरुक्तदोषाङ्गीकरणान्नेत्येवाभिसम्बध्यते । एवं तावदग्निहोत्रं जुहुयादित्यत्र जुहुयाच्छब्दो नानुवादो घटते । न चाग्निहोत्रं स्वर्गकाम इति विधिः । किं चान्यत्—अनुवादानुवादस्य च प्राप्तविशेषणपरार्थविषयार्थत्वात् । अनुवादत्वं हि प्राप्तविषयार्थं यथायं देवदत्त इत्ययं शब्दार्थः । प्राप्त्यर्थप्राप्तो देवदत्तार्थोऽधुना

---

१ चाच्छ्रु° ग । २ °नुदिव° ग । ३ वाच्या° ग । ४ स्त्विदमा ग ।

प्रापणीयः । एवं प्रसिद्ध्यप्रसिद्धिभ्यां विशेषणविशेष्यौ तावेवोपकारकोपकार्यत्वाभ्यां पदार्थस्वार्थौ न तथाग्निहोत्रं जुहुयादित्यत्र प्राप्तविशेषणपदार्थविषयत्वमग्निहोत्रजुहुयाच्छब्दयोरतोऽप्राप्ताविशेषणापरार्थत्वासाम्यादनुवादत्वाभावः । अभ्युपगम्यापि प्राप्तादिदोष उच्यते । यत्पश्चादुच्यते कर्तव्यताप्रसिद्ध्यर्थमितिकर्तव्यतावाक्यं घृतेन जुहुयादिति तस्य विधिविषयविप्रकृष्टीभूतत्वं जुहुयाच्छब्दस्यानुवादाभिमतस्य। किं कारणम्? प्राप्तविशेषणपरार्थविषयत्वादनुवादस्य।अप्राप्तविशेष्यस्वार्थविषयत्वाद्धि वेदादिवाक्यगत एव तावज्जुहुयाच्छब्दोऽनुवादो घटते । प्राप्तत्वाद्यभावात् तस्यानुवादस्तु घृतेन जुहुयादित्यत्र जुहुयाच्छब्द इष्टः स्यात् तत्प्रतिरूपकस्तस्यार्थप्रतिशब्दकस्यैवेत्यापन्नोऽप्राप्ताविशेषणापरार्थत्वात् । विधेर्विषयविप्रकृष्टीभूतार्थश्चेति ततश्च विधिविषयविप्रकृष्टीभूतार्थत्वान्न कर्तव्यताविषयत्वमितिकर्तव्यतायाः । यथा दशदाडिमादिश्लोकावयवानाम् । किं चान्यत्—इति विघटितेत्यादि, यावद्गण्डस्योपरि स्फोट आपादित इति । इतिशब्दो हेत्वर्थे । यस्मादित्थं कर्तव्यविषयविप्रकृष्टत्वमितिकर्तव्यताया इत्यादिदोषजातं विध्यनुवादत्वाभावात्, तस्माद् घटितविघटितं प्रागीषद् घटितमासीत् । सेवादिवदितिकर्तव्यतैव कर्तव्यतेति तदप्यनया प्राप्तिविहितस्वरूपसिद्धेरित्यादिकया कल्पनया विघटितमुक्तविधिनैव ततश्च प्रतिसमाधेये विरुद्धतरदोषापादनं विधिविषयविप्रकृष्टीभूतार्थत्वादिति, ततश्च प्रतिसमाधेये तस्मिन्नेव वाक्येऽनुवादत्वाभावादवाक्यत्वादिति दोषदुष्टे तत्प्रतिसमाधानार्थमुच्यते त्वया अहो परमविदुषा चिकित्सकेनापेक्षितपूर्वापरक्रियाविधिविपाकेन चिकित्सयैव गण्डस्योपरि स्फोट आपादितः । तस्मादप्रसिद्धार्थत्वान्न मौलौ जुहोतेर्नेतरो वानुवादो घटते । यदि भवतो घृतेन जुहुयादित्यस्यानुवादत्वमिष्टं ततोऽहमेव ते बुद्धिसंविभागं करोमि । श्रूयताम्, लौकिकजुहोत्यर्थानुष्ठानप्रकृतोपदेश एव त्वयं परमणुवादः स्यात् । लौकिको हि दानादनार्थो जुहोतिस्तदर्थानुष्ठानप्रवृत्तोपदेशो यद्यस्य विषयः स्याद्द्याद्द्यादिति तदर्थप्रसिद्धेस्तद्विषयोऽनुवादो युज्यते विधिर्वा यस्मै कस्मैचिद् यदि किञ्चिद्द्यान्न घृतं दद्यात् तेन जुहुयाद्यदि भुञ्जीत घृतेन जुहुयादित्येतस्मिन्नर्थेऽनुवादो घटते स चानुपपन्ननियमार्थ उपदेशः । समीकृत्य व्याख्यातोऽर्थोऽस्य शब्दस्य ते मया तथापि तु पुनस्त्वदिष्टविरुद्धार्थमेतदापद्यते लोकेऽनुपपन्ननियमोपदेशार्थत्वदर्शनात् विचित्रयोर्दानभोजनयोः स्वपरप्रीतिहेतुत्वात् । यथोपपत्तिर्घृतेन पयसा दध्ना गुडेन च भुञ्जीत, तान्येव च बुभुक्षा चेद्द्यादिति । न तु यथाक्षिवैद्यके त्रिफलां घृतेनैव भक्षयेन्न गुडेन, गुडस्य चाक्षुष्यत्वात् । यथोक्तम्—

"प्रभूतक्रिमिमद्यासृङ्मेदोमांसकफो गुडः ।
चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मणो भयम्" ॥ इति ।

किं चान्यत्—इदं वाग्निहोत्रं जुहुयाद्यदग्नये च प्रजापतये च सायं जुहोति । घृतेन जुहुयात् । सूर्येण जुहोति तेन हवनं क्रियत इत्येवमादिविध्यनुवादार्थवाद-वाक्यगते जुहोतिः श्रूयमाण उपस्थानादीतिकर्तव्यतानतिरिक्तसेवनक्रियानामधेय-मात्रार्थत्ववत् प्राप्तिविहितेतिकर्तव्यतानतिरिक्तहवनक्रियानाममात्रार्थो विप्रकीर्णा-वयवकलापाकारा क्रियैववास्यार्थोऽसिद्धरूपो न सिद्धरूपो यथा यूपघटादि, तन्मात्र-त्वात्तु तस्याः क्रियायाः प्रकरणानुबन्धनात् प्रकरणेनानुबन्धयन् वक्ता ब्रूते श्रोता च प्रतिपद्यते । क्रियामात्रमवश्यमनेन शब्देन कर्तव्यमित्येतावच्चोद्यत इति । तस्मात् क्रियामात्रत्वात् प्रकरणानुबन्धनात् हित्वा त्यक्त्वा जुहोतिप्रयोगबाहुल्यं सर्वं जुहोतिप्रयोगात् । क्रियामात्रे प्रतिपाद्ये नान्तरीयकत्वात् कृञ्प्रकृतिलिङ्कर्तृता च दर्शयितव्येति, तत्प्रतिपादनार्थमभिमतवाक्यार्थतास्य स्यात् एवं कल्प्यमाने । तन्निदर्शयति—यदग्नये च प्रजापतये च सायं जुहोति तद् घृतादिना स्वर्गकामः कुर्यादिति । एतावता तदर्थस्य सुगमत्वात् । जुहोतिप्रयोगबाहुल्यमप्रत्ययरटितमेव पुनरन्यत्रान्यत्र जुहुयात् जुहोतीत्यादि । किं चान्यत्—त्वद्वचनाच्चप्रमाणनिय-मागमोऽनुपदेशकश्च विवेक्तुरपीति सम्भाव्येत । योऽप्यज्ञप्रयुक्तशब्दार्थोन्नयन-समर्थो विवेक्ता पुरुषः पदवाक्यप्रमाणज्ञस्तं प्रत्यप्ययं वाक्यप्रयोगोऽप्रमाणनियमा-गमोऽनुपदेशकश्च । अप्रमाणनियमागमः प्रत्यक्षानुमानगम्यार्थासंवादादनुपदेशक-स्त्वगमकत्वात् तत् पुनः सम्भावयामि । भवेदेवं, मा मंस्थाः । निष्ठुरमप्रमाणनिय-मागमोऽनुपदेशकश्चेत्यवधार्यैवोच्यत इति । कुतः? । अप्रत्यवेक्षितार्थत्वात् । पौर्वा-पर्यायोगाप्रतिसम्बद्धार्थत्वात् घटितानुमितिविध्वंसनात् अप्रत्यवेक्षिता जुहोति-बाहुल्यप्रयोगनिर्विषयत्वादिभिः पूर्वापरसम्बन्धरहितता पृथगर्थाभिमतानां विध्या-दिशेषाभावात् । घटितविध्वंसनमितिकर्तव्यतैव कर्तव्यतेति घटितस्यादिवाक्य-गतजुहोत्यनुवादाभ्युपगमाद् घटितानुमितिविध्वंसनमित्येतेभ्यो हेतुभ्यः अप्रमाण-नियमागमोऽनुपदेशकश्च वाक्यप्रयोगः । दृष्टान्त उन्मत्तप्रलापवत् । यद्वाक्यमुन्म-त्तादिप्रलपितम् । पुरुषोच्चारितशब्दसामान्यात् । सद्वाक्यवदतोऽसमानमप्रमाण-नियममगमकं च । यथा—

"शङ्खः कदल्यां कदली च भेर्यां तस्यां च भेर्यां सुमहद्विमानम् ।
तच्छङ्खभेरीकदलीविमाना उन्मत्तगङ्गाप्रतिबन्धभूताः ॥ १ ॥" इति ।

तथेदमपि विवेक्तुरप्यर्थप्रतिपादनसमर्थं न भवतीति । एवं विचार्यमाणमिदं वाक्यं दोषेभ्यो न मुच्यते । अथवा नैवायं दोषो, न च विचारयोग्योऽयमुद्ग्राहः ।

प्रत्यपेक्षाप्रामाण्ययोर्निर्विषयत्वात् । ज्ञानं हि प्रमाणमप्रमाणं वेति विचार्यते प्रत्यपेक्षते च । तत्र प्रामाण्यस्य मुख्यत्वात् । न ह्यत्र तदुपादिष्टप्रामाण्यवत् प्रामाण्यमङ्गीक्रियते तस्मात् प्रत्यपेक्षायाः प्रामाण्यस्य च ज्ञानविषयत्वात् । त्वन्मतादेव वेदस्य ज्ञानाभिमतत्वान्न विचारो न प्रमाणभावो वास्त्यज्ञानत्वाद्वेदस्य । त्वया हि प्रागेवोत्पततोक्तं 'न हि किञ्चित् ज्ञानं निश्चितं विशुद्धं चास्ति । सर्वस्य संशयाद्यज्ञानानुविद्धत्वात्' इति । तद्दर्शयन्नाह–त्वन्मतात्तदोनज्ञानवच्च इति । न यथा ज्ञानकार्यत्वात् ज्ञानात्मप्रयुक्तशब्दचैतन्यमपि कार्ये कारणोपचारादत्र कार्यप्रमाणात् तत्त्ववदिति वा । ततः किमिति चेत् ? । अप्रमाणनियमोऽनुपदेशकश्च वेदः । अचेतनत्वादाकाशवत् । यथाकाशमचेतनत्वादप्रमाणं कूटस्थनित्यत्वाच्च न ज्ञानवद्वचनमेवं वेदोऽपीति प्रामाण्योपदेशाभावः। यदपि च प्रसह्येत्यादि, प्रसह्य बलात्कारेण परं कश्चित् पुरुषमवगणयतैकवीरमन्येनाक्रम्य परिभूयासन्मतं यदपि चाग्निहोत्रं जुहुयादित्यत्र कारणेषु घृतादिष्विवितिकर्तव्यतात्मसु स्वर्गादिफलस्य खपुष्पवदसत्त्वमुच्यते । एवंविधेष्विति सर्वेतिकर्तव्यतानामादिमध्यावसानेषु तत्पुनरसत्त्वमेकान्तेन न कथञ्चित् कार्यादिसत्त्वमपीत्येतत् पक्षनिरपेक्षं सर्वथा नास्त्येवेति त्वयेष्टम् । तदपि चान्याय्यमेव । यतो यदेतदसत्त्वं नाम त्वया कचिन्मन्यते, नामेति मिथ्याकल्पितनाममात्रमेव तत् । यत् त्वया क्वचित् सत्त्वनिरपेक्षमसदिति चिन्त्यते कथं पुनरन्याय्यं तदसत्त्वमिति चेदुच्यते–न्यायेन बाध्यत्वात् । कतमो न्यायः ? इति चेदेवं तर्हि क्रमः । ततोऽन्यत् कार्यमसतोऽन्यदित्यर्थः । कुतस्तत् ? समर्थविकल्पत्वात् । असङ्गतार्थोऽसमर्थोऽसम्बद्धो विकल्पतः । तेनासता सहासम्बद्धो विकल्पोऽस्येति तदसमर्थविकल्पं कार्यं तस्य कार्यस्यासमर्थविकल्पत्वात् । ततोऽन्यत्वम्, किमिव ? घटपटवत् । यथा घटविकल्पाः पृथुबुध्नाधर्ग्रीवादयः । मृदुचतुरस्रादिभिः पदविकल्पैरसङ्गताः पटविकल्पाश्च तैरित्यसङ्गतौ घटपटौ परस्परतः । एवमसद्विकल्पैरसङ्गतं कार्यं तस्मात् ततोऽन्यदिति । स्यान्मतम्–असद्विकल्पासङ्गतत्वं कार्यस्यासिद्धं तत्र प्रसिद्धमेव । यस्माद्विकल्पासामर्थ्यं वा सदसत्कार्ययोरसतः कार्यस्य च सिद्धमेवेति गृहाण विकल्पचतुष्टये द्वयोरेव सम्भवात् । असत् खपुष्पं कार्यमङ्कुरादि तयोर्विकल्पाश्चत्वारः । १खपुष्पमसत् कार्यमप्यसत् । २खपुष्पं सत् कार्यमसत् । ३खपुष्पमसत् कार्यं सत् । ४खपुष्पं सत्कार्यमपि सत् । इत्येषु चतुर्षु विकल्पेषु कार्यखपुष्पयोरुभयोरसत्त्वं कार्यासत्त्वमेवेत्येतद्विकल्पद्वयं स्यात् सम्भवेत्, किं कारणम् ? उभयसत्त्वकार्यसत्त्वयोः प्रतिपक्षोऽभ्युपगम एव सत्कार्यवादः प्रतिपक्षोऽसत्कार्यवादस्य । इतिशब्दो हेत्वर्थे । इत्यस्माद्धेतोर्वादाभावः । तस्माद्वादाभावादुभयाभावः कार्याभावविकल्पाभा-

---

१ इत्यतौ ग । इत्येतौ क–ख । २ सत्कार्ययोः क–ग ।

वावेव सम्भवेताम् । नेतरौ । ततश्च तयोरुभयासत्त्वकार्यासत्त्वविकल्पयोस्तद्, यदि तावदुभयासत्त्वं ततोऽसत्त्वाविशेषादेवाविशेषः खपुष्पकार्ययोरसत्त्वाविशेषादेव विशेषे कार्याविर्भाववत् खपुष्पाविर्भावोऽप्यायत्यां स्यात् । एष्यति कालान्तरेऽस्माद्वर्तमानात् क्षणात् अन्यस्मिन् क्षणे भवेत् । दृष्टान्तः असत्कार्यवत्, बीजादङ्कुरवत् । न चैतद् दृष्टमिष्टं वा । खपुष्पप्रादुर्भाव इति । अथैतस्मादनिष्टापत्तिदोषाद् दृष्टेष्टविरोधादपसर्पन् ब्रूयास्त्वं न कार्यप्रादुर्भाववत् खपुष्पप्रादुर्भाव इष्यते । असत्त्वकार्यमिति निश्चितम् । ततः को दोषः ? इति चेदुच्यते । तद्वैलक्षण्यान्न तर्ह्यसत् खपुष्पम्, असत्कार्यवैलक्षण्यान्नेदानीमसत् खपुष्पं किं तु सदिति प्राप्तमसत्कार्यवैलक्षण्यं खपुष्पस्यायत्यामप्रादुर्भावस्तस्मादसत् कार्यवैलक्षण्यादायत्यामप्रादुर्भावान्न तर्ह्यसत् खपुष्पम्, ? किं तर्हि ? सत् । को हेतुः ? असद्विलक्षणत्वात् । असता कार्येण सह विलक्षणत्वात् । दृष्टान्तो घटवत् । यथा घटोऽसद्विलक्षणत्वात् सन्नेवं खरविषाणमप्यायत्यां प्रादुर्भवता कार्येण वैलक्षण्यात् सत् प्रसक्तमितर **उदुम्बरपुष्पवत्**। इतरे इति वैधर्म्यदृष्टान्तः । यदसत् तदसद्विलक्षणं न भवति यथोदुम्बरकुसुममिति । परस्यानिष्टापादनार्थत्वादसद्वैधर्म्यं खपुष्पस्येति । ननु घटासत्त्वं पुष्पसत्त्वविलक्षणम्, स्यान्मतम्—घटस्यासत्त्वं पटात्मना पटासत्त्वं घटात्मनेति तयोरितरेतराभावलक्षणासत्त्वं वैलक्षण्यं च परस्परतो, दृष्टान्तौ च घटपटौ सन्तौ, तस्मादसद्वैलक्षण्यस्य सत्यपि दर्शनादेवैकान्तिकतेति चेत् । उच्यते—**न, सतो वैलक्षण्यात्** । नानैकान्तिकतास्य हेतोः सतो वैलक्षण्यात् । सत एव वैलक्षण्यं तद्वीतरेतराभावात्मकं वैलक्षण्यं सत एव नासतः । तस्मादसतो वैलक्षण्यं न भवति, किं तर्हि ? सद्वैलक्षण्यमपि तत् सत एतदपेक्षया तद्रूपेणासत्त्वात् । अयं तु कार्यस्यायत्यां प्रादुर्भावोऽसताख्यपुष्पेणात्यन्तविलक्षणोऽप्रादुर्भावश्च खपुष्पस्य कार्येण सतेति नास्ति सतो वैलक्षण्यं सता तद्विशेषधर्मत्वात् । रूपादिविशेषधर्मवैलक्षण्यवत् । अथवा **सतोऽवैलक्षण्यात्**, सतः अवैलक्षण्यात् । सतस्तु घटादेः पटादिना सह वैलक्षण्यं नास्त्येव सत्त्वान्वयाविशेषात्, देशकालाकारादिमात्रविशेषस्याविशेषत्वादङ्गुल्यादिविशिष्टकान्ताविशेषवत् । अथवा न तर्ह्यसत् खपुष्पं, कस्माद्धेतोः ? सदसद्विलक्षणत्वात् । सतासता च विलक्षणत्वात् । सच्च द्विविधम् । तुल्यजातीयं घटस्य घट एवातुल्यजातीयं पटादि असच्च, सच्च कार्यमायत्यां भावादङ्कुरादि खपुष्पमत्यन्ताप्रादुर्भावात् कार्येणासता लक्षणसता च घटपटादिना त्वन्मतेनेतरेतराभाववैलक्षण्येन तुल्यजातीयेन च भावानां परस्परवैलक्षण्यवद् दृष्टान्तो घटवदिति, यथा पटस्तुल्यजातीयेभ्यो घटान्तरेभ्यो तुल्यजातीयेभ्यश्च पटादिभ्यश्च सद्भ्यो विल-

---

१ °र्भवत् क-ख । २ °काङ्गा° ग । ३ °ण्यं न ग । ४ °र्थं च ग ।

क्षणः, असतश्च खपुष्पादेः संश्च दृष्टः। तथा खपुष्पं घटवत् सदसद्विलक्षणत्वान्नासत् सदेवेत्यर्थः। 'द्विः प्रतिषेधः प्रकृतिं गमयति' इति कृत्वा इतर उदुम्बरपुष्पवद् यदसत् तदसद्विलक्षणं यथोदुम्बरपुष्पं त्वन्मतेनात्रापि वैधर्म्यदृष्टान्तः। खपुष्प-खरविषाणोदुम्बरपुष्पादीनामसत्त्वाविशेषादनिष्ठापादनसाम्यात् साध्यान्तःपाति तस्माद्वैधर्म्यदृष्टान्तेन नार्थः। अस्तु, तदसद्विलक्षणत्वमितरेतराभावापेक्षत्वात् कथमसद्विलक्षणं खपुष्पमिति चेत्? । आयत्यां प्रादुर्भवता कार्येणासता वैलक्षण्यस्य त्वयैवाभ्युपगतत्वात् त्वन्मतनिवारणार्थत्वादस्य प्रयासस्य, नास्माकं दोष इति। **अथैवमपीत्यादि**। अथ ते प्रादुर्भावाप्रादुर्भाववैलक्षण्ये सत्यपि कार्यखपुष्पयो-रसदेव खपुष्पमित्ययं निश्चयोऽसद्वैलक्षण्याद् घटवदित्यस्माच्यायान्निवर्त्यमानो-ऽपि न निवर्तते, अप्रादुर्भावात्मकं च तत् खपुष्पमित्येतच्च वैलक्षण्यमित्यत एव 'प्रादुः प्राकाश्ये जन्मनि च' तथाविः–प्रादुर्भवति प्रकाशं भवति गृह्यते ज्ञायते उद्यते जायत इति वा, तेष्वाविर्भवतीति एवं चाप्रादुर्भावात्मकस्य खपुष्पस्यासत्त्वे-ऽर्थादापन्नं, न तर्हि प्रादुर्भावात्मकत्वात् कार्यमसत् सदेवेत्यर्थः। को दृष्टान्तः? निवृत्तघटवत्, यथा निवृत्तो घटः प्रादुर्भावात्मकत्वात् प्रकाशात्मकत्वात् सन्नेव तथा कार्यमपि सत्। अस्याश्चार्थापत्तेरेकान्तिकत्वान्न जात्युत्तरता यथा गेहे देवदत्तस्याभावे स्थितिमतो हि भावानुमानमर्थापन्नमेकान्तिकत्वान्न जातिवादः। अस्माकं त्वत्राभिप्रायः। सदेव कदाचिदुपलभ्यते जायते वा नात्यन्तासदिति। **दर्शनादर्शने च सद्विषये** इत्येतदुत्तरत्र दर्शयिष्यामो विचारस्यास्य तत्फल-त्वात्। अथैवमपि त्वया कार्यस्य सत्त्वं नेष्यते ततः असत्त्वे कार्यस्यायत्यां न प्रादुर्भवेत् कार्यमसत्त्वात् खपुष्पवत्, प्रादुर्भवति तु तस्मात् सत्। शेषं पूर्ववदेव। अतीतग्रन्थमतिदिशति—**विपर्ययेणेति**। अर्थतः शब्दतस्तद् द्वयो-र्विपर्ययेण योज्यः। तद् यथा–अथ न खपुष्पाप्रादुर्भाववत् कार्याप्रादुर्भावोऽसच्च कार्यमिति निश्चितं, न तर्ह्यसत् कार्यं सदेव तत्। असद्विलक्षणत्वाद् घटवदितर उदुम्बरपुष्पवत्। ननु घटासत्त्वं पटासत्त्वविलक्षणं न सतो वैलक्षण्यात्, अथैवमपि वैलक्षण्ये कार्यासत्त्वविनिश्चयो न निवर्तते, प्रादुर्भावात्मकं च तत्र। तर्हि प्रादुर्भावा-त्मकत्वादसत् कार्यं निवृत्तघटवत्, असत्त्वादायत्यां न प्रादुर्भवेदसत्त्वात् खपुष्पवत् इति। तदुपसंहारार्थमाह–**अतः कार्यं सत्। आविर्भावात्मकत्वात् निवृत्तघटवत्। वैधर्म्येणाकाशघटवत्**। आकाशमेवाकाशस्याकाशे वा घटः आकाशघटः, स त्वनाविर्भावात्मकत्वान्नास्ति न तथा कार्यमनाविर्भावात्मकं तस्मात् तत् सदिति। असच्च खपुष्पमनाविर्भावात्मकत्वात् घटवत्। वैधर्म्येण निर्वृत्तघटवदिति। तयोः सदसतोः कार्यखपुष्पयोर्वैलक्षण्यं दर्शयति–यदि भवन्मतेन कार्यखपुष्पयोरसत्त्वमेव

तुल्यं, तुल्ये वा सत्त्वे विशेषो वक्तव्यः । अस्माद्विशेषहेतोः कार्यसत्त्वे[1] सत्यपि प्रादुर्भवति । न तु खमितिनोच्यते, चेद्विशेषहेतुरविशेषोऽनयोरविशेषे च वैलक्ष्ण्यानुपपत्तिः खपुष्पखरविषाणयोरिवासतोः । दृष्टं च वैलक्षण्यमायत्यां प्रादुर्भवत्यां तत्त्वविशेषे तयोर्नोपपद्यते तस्माद्धेतोरविशेषवैलक्षण्यानुपपत्तेर्घटघटस्वात्मवत् । यथा घट एव घटस्वात्मेति तयोर्न वैलक्षण्यमविशिष्टत्वादेवमविशेषः स्यात्, न तु भवति, दृष्टत्वादुक्तत्वाच्चाविर्भावयोस्तस्मात् तयोर्यथासंख्यं सत्त्वमसत्त्वं चावश्यमेषितव्यम् । इतर आह—नैवास्त्यविशेषोऽसतोऽपि यस्माच्चतुर्विधोऽसन्निष्यते प्राक्प्रध्वंसेतरात्यन्ताभावाख्यः । घटस्य मृत्पिण्डादिकपालादिघटादिखरविषाणादिवदिति । अत्रोच्यते—**विशेषोन्नयनेऽपि तु विशेषस्य सदाश्रयत्वात् सत्त्वं घटवदिति** । अपिशब्दो नाभ्युपगमं दर्शयति । नैवाभासस्य खरविषाणवन्ध्यासुतादेः परस्परतो विशेषोऽस्त्यवस्तुत्वात् त्वन्मतेनैव । अस्मन्मतेन तु वस्तुत्वमभावस्यापि कस्यचित् प्रमेयत्वसामान्यविशेषत्वादिहेतुभ्यस्त्वदभ्युपगतेभ्यः प्रमाणवत् । अतस्त्वन्मतेनैवाभावस्य भावाद्विशेषः । परमार्थतो नास्ति । अभ्युपेत्यापि ब्रूमो विशेषोन्नयनेऽपि तु येन केनचित् प्रकारेण सदाश्रयाभावस्त्वत्परिकल्पितश्चतुर्विधोऽपि विशेषत्वाद्रूपादिवद् घटवत् । ततश्च विशेषस्य सदाश्रयत्वात् सत्त्वं घटवत् । यथा घटः सन्तं पृथिव्याद्यर्थमाश्रित्य वर्तमानः सन्नेव स्वयमेव वात्मानमाश्रित्य वृत्तेः सन्नेव[3] । विशेषोऽपि सदाश्रयत्वात् । **सन्निति** । इतिशब्दो हेतुदृष्टान्तदार्ष्टान्तिकोपसंहारे । इत्थं भावाभावयोः सामान्यमेव न[4] विशेष इति । एवं तावत् कार्यखपुष्पयोरुभयोरसत्त्वमेवेति साम्यमापादितम् । द्वितीयविकल्पो विचार्यते—**अथैवं तत्साम्यमित्यादि** । अथैतदापादितं सामान्यमनिच्छितकार्यसत्त्वपरिहारेणोभयासत्त्वाभ्युपगमादायातमिदमन्यतरासत्त्वं कार्यसत्त्वपरिहारेणाभ्युपगम्यते । प्रतिपक्षवादादन्यत् पूर्वोक्तद्वयान्यतरविशिष्टम् । किं तत् ? कार्यमेवासदिति । अवश्यं द्वयोरन्यतराभ्युपगमेऽवधारणमापद्यते । तच्चावधारणं 'यत एवकारस्ततोऽन्यत्रावधारण'मिति परिभाषितत्वाच्छास्त्रेषु, लोके च दृष्टत्वादवधारणफलत्वाच्च वाक्यस्यैतदुपपद्यते कार्यसमीप एवकार इति । कार्यमेवासदिति कार्यशब्दसमीपे एवकारप्रयोगादितिशब्दस्य हेत्वर्थत्वादन्यत्र प्रतियोगिनि असत्त्वे नियमः । असच्छब्दवाच्येऽर्थे खपुष्पादौ नियमस्तत्रैवकाराभावात् । न कार्यशब्दार्थे, यथा वृक्षश्चूत इत्यत्र चूतो नियमाद्वृक्षो वृक्षस्तु चूतोऽन्यो वा स्यादित्यनियमः । तथेहापि कार्यमेवासत् न तु खपुष्पाद्यकार्यमसत् । किं तर्हि ? सत्, तच्च सदेव कार्यमिति नियम्यते । यदि सदपि[5] कार्यं स्यादस्तु, को दोष इति ? तद्दर्शयति—**असत्त्वं**

१ कार्यासत्त्वे ग । २ खपुष्पमिति नो° ग । ३ °भवेदं ग । सन्नेवं ख । ४ तु ख । ५ सदृश° ग ।

कार्यं एव नान्यत्रापीत्यकार्ये खपुष्पादाविति । इतिशब्दो हेत्वर्थे । स्यादवधारणाद्धेतोरित्यर्थः । एवं सति को दोष इति चेत् ? उच्यते–ततश्च न खपुष्पमसदिति प्रसक्तं, दृष्टेष्टविरुद्धं सत्त्वं खपुष्पस्येत्यर्थः । तथा चेत्यादि, **यावन्नाममात्रे विसंवादः**, एवं च कृत्वा कार्यमसत् खरविषाणं सदिति सञ्ज्ञया सतोऽसदित्यसतश्च सदिति संज्ञा क्रियते । कार्यासत्त्वमिति, ततः खरविषाणविपरीता ये निर्वृत्ता घटादयस्तेषां घटादीनामसत्त्वेन तुल्यं कार्यस्यासत्त्वं सतामेवासत्त्वेन तुल्यं विपरीतं नाममात्रमग्नेर्मङ्गलनामवत् । न वा च कश्चिदर्थस्य सत्त्वे विसंवादोऽसत्कार्यमिति । किंचान्यत्[2]—**कार्यसत्त्वनिवृत्त्यैकान्तत्यागाच्च स्ववचनादिविरोधापत्तिः** कार्यसत्त्वनिवृत्तिः, कार्यसत्त्वं तदवधारणमेवातः कार्यमेवासदिति । तस्य त्यागोऽनन्तरोक्तविधिना प्राप्तस्ततश्च कार्यसत्त्वनिवृत्त्येकान्तत्यागाच्च स्ववचनादिविरोधापत्तिश्च । स्ववचनविरोधस्तावत् तदेव कार्यमसदित्युक्त्वा तस्यैवकारणसामर्थ्यात् सत्त्वापादनात् तदेव सत् तदेवासदिति ब्रुवतः । अथवा यदि कार्यं प्रथमं सदथासत् कथं कार्यं क्रियते ? । घटो घटतया व्यज्यते दीप्तमेव क्रियत इति वक्ष्यति । तथाभ्युपगमादभ्युपगमविरोधः । तथा लोकेऽप्रसिद्धत्वाल्लोकविरोधः । तत्त्व एव तथाभूतेरनुमानविरोधः । तथा मृत्पिण्डघटादिकारणकार्यदर्शनात् प्रत्यक्षविरोधः । एवं तावत् कार्यमेव सन्न खपुष्पादीत्यवधारणदोषः । कार्यमेवासन्न कारणमित्यस्यावधारणस्य प्रतिपक्षवादापत्तेः । अथैवमवधार्यते कार्यमसदेवेति । तत्रापि 'यत एवकारस्ततोऽन्यत्रावधारण'मित्यसत्समीप एवकारात् कार्यमसत्त्वेनावधार्यते । कार्यं न यदा सत् । असत् तु कार्यं वा स्यात् खपुष्पादिवेत्येवमसत्, एवकारे त्वसदनवधृते पूर्वो दोषो योऽसत्त्वाविशेषादित्यादिः । स एव कार्यखपुष्पयोरसत्त्वे आयत्यामाविर्भावानाविर्भावकृतो विशेषो न स्यादित्यविशेषापत्तिदोषः प्रागुक्तः स एवात्रापि । अत्रोच्यतेत्यादि अविशेषापत्तिदोषस्य च परिहारार्थमथोच्यते तत्त्वयेति परमार्थमाशङ्कते–कथमसत्त्वादेव तयोः कार्यखपुष्पयोः कारणकाले विशेषासम्भवः ? । यथा खपुष्पमसत् तथा कारणकाले कार्यमप्यसदेवेति नानयोः कश्चिद्विशेषोऽस्ति । न ह्यसतो निरुपाख्यस्य खपुष्पस्य वृत्तफलकेसराद्यवयवसौरभादिविशेषाः खरविषाणकुण्ठतीक्ष्णत्वादिभ्यो भिन्नलक्षणाः सन्ति, उभयेषां अवस्तुत्वान्निरुपाख्यत्वाच्चेत्यस्मादविशेषात् कारणकाले यदेव कार्यासत्त्वं तदेव खपुष्पासत्त्वमपीति । ततः किं परिहृतमिति चेन्नावधारणकृतो दोषः परिहृतो भवति । कार्यमेवासदसदेव कार्यमित्यवधार्यमाणे खपुष्पसत्त्वं, कार्यखपुष्पयोरविशेषः । इत्येतौ

---

१ कार्यमेव क–ख । २ चान्यस्य ग । ३ °दिति वे° ग । ४ कार्यनयमा° ग । ५ °मथ ग । ६ दोषः । इत्यवधारणकृतो दोषः ग ।

दोषौ तयोरविशेषाभ्युपगमान्न स्त इति । नापि पूर्वस्तुल्यत्वापत्तिदोषः । कार्यस्यात्यात्मनाविर्भावः खपुष्पस्याविर्भाव इत्यविशेषोऽस्यापि तुल्यत्वापत्तिदोषस्य । अभावोऽसतोविशेषाभावादनेकविषयत्वात् तुल्यस्य । अयमनेनाभ्यामेभिरिमाविमे वार्थास्तुल्या इति हि तुल्यत्वमनेकविषयं दृष्टं, न हि तदेव तेन तुल्यमिति । अत्रोच्यते—एवमप्येकत्वाद्विशेषाभाव इति त्वयैव कार्यखपुष्पयोरसत्त्वाविशेषोऽभ्युपगतः। 'एकरूपत्वादवस्तुनः' इति तदवस्थ एवाविशेषदोषः । तस्यैवेदानीमविशेषदोषस्यापादानार्थं विकल्प्यतेऽन्यदनिष्टापादनम्—

यथैव हीत्यादि । यथैव खपुष्पस्योपादानं पूर्वदृष्टश्रुतानुभूतं बुद्धौ सिद्धं वाकारादिविशिष्टत्वं नास्तीत्यनुपादानमबुद्धिसिद्धं च खपुष्पम् । ततः किमनुपादानबुद्धिसिद्धत्वाभ्याम् ? । तन्निःसामान्यं निर्विशेषं चेति सिद्धम् । एवं घटादेः कार्यस्य मृदाद्युपादानं बुद्धिसिद्धत्वं सामान्यविशेषत्वं च न स्यात् । तच्च मृद एव। येनाकारेण भवनं देशकालनवपुराणकृष्णरक्तत्वादिघटभेदेऽपि तुल्यतया सामान्यम् । विशेषश्च पटादिभ्यः । तच्च खपुष्पस्योपादानबुद्धिसिद्धत्वसामान्यविशेषवत्त्वं च स्यात्। उभयोर्निरुपाख्यत्वात् । न त्वेतदिष्टं तस्मादस्त्यनयोर्विशेष इति सत् कार्यम्। अथ सामान्यविशेषोपादानबुद्धिसिद्धत्वसद्भावौ कार्यखपुष्पयोरिष्येते त्वया विशेषौ, खपुष्पवदभवदपि तदसदेव खपुष्पवदिति येन प्रकारेण खपुष्पं न भवति नोत्पद्यते तेन प्रकारेणाभवदपि अन्यथा भवदपि उत्पद्यमानं कदाचिद्दृश्यमानमपीत्यर्थः । उपादानबुद्धिसिद्धत्वसामान्यविशेषवत्त्वप्रकारेण भवदपि तत् कार्य्यमसदेवेष्यते । ततश्चैवं सत्ययमपरो दोषः । निर्वृत्तमपि तद्ध्यसत् कार्यमिति वर्तते सोपादानबुद्धिसिद्धत्वसद्भावेऽपि । कस्मात् ? सामान्यविशेषवत्त्वात् कारणकालकार्यवत् । यथा कारणकाले कार्यमसत् त्वन्मतेन सामान्यविशेषवदपि सोपादानं बुद्धिसिद्धमपि तथोत्तरकाले निर्वृत्तमपि तदसदेव स्यात् कारणकालवदिति । कार्यवच्चाभवदपि खपुष्पमसन्न स्यात् । कार्यप्रादुर्भावप्रकारेणाभवदपि तस्मिन्नभवनप्रकारविशेषे सत्यपि सत् प्राप्नोति खपुष्पं निःसामान्यनिर्विशेषत्वात् । तद्धि खपुष्पं निःसामान्यं निर्विशेषं चेति सिद्धम्,अतस्तस्य निःसामान्यनिर्विशेषत्वात् सत्त्वं स्यात् । को दृष्टान्तः ? सामान्यविशेषवत् कार्यवदिति सिद्धे वैशेषिकमतालम्बनसामान्यविशेषदृष्टान्तो निःसामान्यनिर्विशेषाणां सामान्यविशेषाणां वस्तुत्वं खपुष्पतुल्यमेवेति काका दर्शितं भवति । प्रकृतार्थोपनयस्तु यथा सामान्यविशेषौ घटत्वादिर्निःसामान्यो निर्विशेषश्च संश्चेति सिद्धस्तथा खपुष्पमपि सत् स्यात् । किं चान्यत्—कार्यासत्त्ववैलक्षण्याद्वा कारणवत् असन्न स्यात् खपुष्पमिति वर्तते । कार्यस्य

---

१ वाक्याद् ग । २ °पतग° क-ख ।

घटादेरसत्त्वेन खपुष्पस्याप्रादुर्भावानुपादानाबुद्धिसिद्धत्वनिःसामान्यविशेषवैलक्ष-ण्यात् । खपुष्पमपि सत् स्यात् कारणवत् । एतैश्च प्रकारैः सिद्धमेव कार्यात् सत्त्व-वैलक्षण्यमिति सिद्धो हेतुः, निर्वृत्तत्वादिप्रकारेण च कारणस्य तद्वैलक्षण्यं सिद्धमिति साधर्म्यं कारणखपुष्पयोः । कारणं वा खपुष्पवत् कार्यासत्त्ववैलक्षण्यादसत् स्यात् कार्यस्यासत्त्वं वा त्याज्यमित्यभिप्रायः । अनेकार्थोपादानादिमत्त्ववदित्यादि । अथ भवता खपुष्पसत्त्वप्रसङ्गदोषभयाद् युक्तं प्रतिपादनमपि कार्योपादानादिमत्त्ववत् खपु-ष्पस्याप्युपादानादिमत्त्वं नेष्यते । आदिग्रहणाद् बुद्धिसिद्धसामान्यविशेषवत्त्वानि नेष्यन्ते । इदं कार्यस्यासाधर्म्यं खपुष्पेण सहेष्यते । **असत्त्वकार्यमिति, निश्चि-तमित्यादि,** पूर्ववच्चक्रकद्वयप्रवर्तनमिति ग्रन्थमतिदिशति—

तदेव कथं पुनर्भाव्यते ? यदि कार्योपादानादिमत्त्ववत् खपुष्पस्योपादानादि-मत्त्वं नेष्यते कार्यं वा सदिति निश्चितं तद्वैलक्षण्यादनुपादानादिवैलक्षण्यात्, तद्व-सत् खपुष्पं तदसद्विलक्षणत्वाद् घटवदितर उदुम्बरपुष्पवत् । ननु घटासत्त्वं पटासत्त्वविलक्षणं न सतो वैलक्षण्यात् । अथैवमपि वैलक्षण्ये खपुष्पासत्त्वविनिश्चयो न निवर्तते । अनुपादानादिमत्त्वात् । न तद्ध्युपादानादिमत्त्वात् कार्यमसत् । अस-त्त्वेनोपादानादिमत् स्यात् खपुष्पवत् । एतदपि पर्ययचक्रकं शेषं पूर्ववदेव विपर्ययेण । अतः सत् कार्यमुपादानादिमत्त्वान्निर्वृत्तघटवद्वैधर्म्येणाकाशघटवदित्यादिरपि या-वत् सदाश्रयत्वात् सत्त्वं घटवदिति । एतद्विपर्ययचक्रकम् । एवमुभयासत्त्वेऽन्यतरा-सत्त्वे तु । अथैतत् साम्यमुभयासत्त्वान्मा भूदित्यन्यतरासत्त्वं कार्यसत्त्वाभ्युपगम-परिहारेण कार्यमेवासदिति । अत्र **कार्यसमीप** इत्यादि, यावत् **स्ववचनादि-विरोधापत्तिः** । पुनरप्यसदेवकारे त्वसदनवधृते पूर्वदोषः । **अथोच्यते** इत्यादि, यावत् **कार्यासत्त्ववैलक्षण्याद्वा कारणवदिति** स एव ग्रन्थ उपादानादिम-त्त्वविशेषणकृतो विशेष इति । अतः कार्यं सदुपादानादिमत्त्वात् कारणस्यात्मव-द्वैधर्म्येणाकाशघटवत् । असच्च खपुष्पमनुपादानत्वाच्च घटवत् इतरो निर्वृत्तघट-वत् । तथा सत् कार्यं बुद्धिसिद्धत्वान्निर्वृत्तघटवत् इतरो नभोघटवत् । असच्च खपुष्पं बुद्ध्यसिद्धत्वात् घटवदितरो निर्वृत्तघटवत् । एवं सामान्यविशेषाभ्यामपि योज्यम् । तस्मात् कार्यं सत् कारणवन्न तु खपुष्पमित्यर्थः ।

आह—ननु सत्त्वेऽपि कारणवत् प्रत्यक्षत्वं प्रसज्यते त्वत्परिकल्पितं मृत्पिण्डा-वस्थायां कार्यं घटाख्यं प्रत्यक्षं स्यात् सत्त्वात् कारणवन्मृत्पिण्डवदित्यर्थ इति ।

**अत्रोच्यते—नाव्यक्तत्वात्** । नैष दोषः । कस्मात् ? अव्यक्तत्वात् । तस्यां[1] हि मृत्पिण्डावस्थायां घटोऽनभिव्यक्तत्वादिन्द्रियैर्नोपलभ्यते द्वितटीखातहस्तीव पूर्वं

१ तासां ग ।

खननात्। एवं हि मृदवयवा भित्तिगताः खननात् प्रागपि विद्यमानाः खननोत्तरकालं हस्त्याकारव्यपदेशं लभन्ते। न च ते प्रागभिव्यक्तेरनुपलब्धत्वान्न सन्ति। अथवा कार्ये सत्यपि ह्यव्यक्ते भूगन्धवदप्रत्यक्षत्वं कार्यस्य। यथा भुवो गन्धो विद्यमानोऽपि न घ्राणेन्द्रियगोचरमागच्छत्यव्यक्तत्वात् सलिलसिक्तस्तूत्तरकालमभिव्यक्त उपलभ्यते। तथा मृदवस्थायामप्रत्यक्षो घटः कुलालप्रयत्नदण्डचक्रसूत्रादिकारणाभिव्यञ्जितः पश्चादुपलभ्यतेऽतस्तस्य प्रत्यक्षत्वं भवतीति को दोषः?। अत एव च प्रकरणचिन्तेति। प्रकरणसमदोषोऽनेकान्तत्वात्। उक्तमनेकान्तिकत्वमस्य हेतोः। यत एव प्रकरणविन्यासनिर्णयार्थमपदिष्टः सन् प्रकरणसमः। इह हि घटादेः कार्यस्याप्रत्यक्षत्वादेव चिन्ता समुत्पन्ना, किं घटादिकार्यसमोऽसदिति? अप्रत्यक्षत्वस्य सत्यसति च दर्शनात् मूलोदकादौ खरविषाणादौ वेत्यतो व्यभिचरत्यप्रत्यक्षम्। तथा सत्त्वमपि प्रत्यक्षाप्रत्यक्षयोर्दर्शनात्, सतोऽप्रत्यक्षस्य मेरूत्तरकुरुद्वीपग्रहग्रहेनगृहादेः खरविषाणादेश्चासत इत्यनेकान्तादिति। एवं तर्हि दर्शनादर्शनयोः प्रादुर्भावाप्रादुर्भावयोश्च समानः प्रकरणसमदोष इति चेत्। न, जन्मप्रकाशविषयविशेषस्योक्तत्वात्। उपादानादिमत्त्वाविशेषाच्च त्वत्पक्षे न समानो दोष इति। एवं न हीत्यादि, यावत् तथोपसंहारमेव।

इतर आह—त्वदुक्तसाधनप्रपञ्चस्य कार्यासत्त्वेऽपि तुल्यत्वान्मयापि शक्यं वक्तुं कार्यसत्त्वस्य कारणे त्वन्मतस्य निवारणे कृते कार्यासत्त्वं भवितुमर्हति। तत्साधनं श्रूयताम्—

यदेतत् समानकारणं ततोऽन्यत् कार्यं तद्विकल्प्यासामर्थ्याद् घटपटवत्। अत्रापि कारणं सत् कार्यं सत्, कारणं सत् कार्यमसत्, कारणमसत् कार्यं सत्, कारणमसत् कार्यमसदिति चतुर्षु विकल्पेषु द्वयोः पूर्ववत् प्रतिपक्षवादापत्तेस्त्यागादुभयसत्त्वमन्यतरसत्त्वं च स्यात्। तत्रोभयसत्त्वे तावत् तद्यदि तावदुभयसत्त्वं सत् ततः सत्त्वाविशेषादेवाविशेषे सर्वत्वैकत्वभेदो न स्यात्। मृदेव सर्वं पिण्डशिवकादिघटापिठरकपालादिकार्यं त्वेकमेव पिण्ड इति वा शिवक इति अनन्यदेकमेवं तु कार्यैकत्ववत् कारणैकत्वमपि स्यात्। अथ न कार्यैकत्ववत् कारणैकत्वं, सच्च कार्यमिति निश्चितं तद्वैलक्षण्यान्न तर्हि सत् कारणमसद्विलक्षणत्वादुदुम्बरपुष्पवत्। इतरो निर्वृत्तघटवत्। न तु घटत्वं पटसत्त्वविलक्षणं नासतो वैलक्षण्यात् इतरेतरासत्त्वात्। अथैवमपि वैलक्षण्ये कारणकार्यसत्त्वनिश्चयो न निवर्तते। अनेकात्मकं च तत् सर्वात्मकमित्यर्थः। न तर्ह्येकात्मकत्वात् कार्यं सत्, सत्त्वं एकात्मकं न भवेत्। सत्त्वात् कारणवत्। एतत् प्रथमचक्रकम्।

शेषं पूर्ववद् विपर्ययेणेत्यादि। यदुक्तं तदपि। अथ न कारणसर्वत्ववत् कार्य-

सर्वत्वं सच्च कारणमिति निश्चितं तद्वैलक्षण्यादितरेतरासत्त्वात् । एतत् द्वितीयं चक्रकम्[1] । अतः सर्वात्मकत्वसतः कारणादन्यत् कार्यमेकात्मकत्वात् कुम्भादि-विलक्षणम्[2] । एकात्मकत्वसतश्च कार्यादन्यत् कारणं सर्वात्मकत्वादिव कुम्भ इति । तथानुवृत्तिव्यावृत्ती अनुवृत्तिर्मृन्मृदिति पिण्डशिवकादिषु व्यावृत्तिर्घटः पिठर इति । तद्यदि तावदुभयसत्त्वं सत्त्वाविशेषादेव । अविशेषे कार्यव्यावृत्तिवत् कारणव्यावृत्तिरपि नासत्त्वादघटवच्च न कार्यव्यावृत्तिस्तत्कारणव्यावृत्तिः सच्च कार्यमिति निश्चितं तद्वैलक्षण्यान्न तर्हि सत् कारणमसत् सद्विलक्षणत्वादुदुम्बरपुष्प-वत् । इतरो निर्वृत्तघटवत् । ननु घटसत्त्वं पटसत्त्वविलक्षणं नासतो वैलक्षण्यात् । अथैवमपि वैलक्षण्ये कारणसत्त्वविनिश्चयो न निवर्ततेऽनुवृत्त्यात्मकं च तत्, न तर्हि व्यावृत्त्यात्मकत्वात् कार्यं सत् । सत्त्वेन व्यावर्तेत सत्त्वात् कारणवत् ।

द्वितीयं चक्रमविपर्ययेण । शेषं पूर्ववद्विपर्ययेणेत्यादि ।

अथ न कारणानुवृत्तिवत् कार्यानुवृत्तिः । सच्च कारणमिति निश्चितं तद्वैलक्ष-ण्यान्न तर्हि सत् कार्यमसद्विलक्षणत्वात्, उदुम्बरपुष्पवत् । इतरो घटवत् । ननु घटसत्त्वं पटसत्त्वविलक्षणं नासतो वैलक्षण्यात् । प्रथमं विपर्ययचक्रकम् ।

अथैवमपि वैलक्षण्ये तत्सत्त्वविनिश्चयो न विनिवर्ततेऽनुवृत्त्यात्मकं च तन्न[3] तर्हि व्यावृत्त्यात्मकत्वात् कार्यं सत् सत्त्वेन व्यावर्तेत सत्त्वात् कारणवत् ।

एतद्द्वितीयं चक्रकं विपर्ययेण ।

अतोऽनुवृत्तिसतः कारणादन्यत् कार्यं व्यावृत्तत्वात् पङ्क्तिरिवैका, व्यावृत्तिसतश्च कार्यादन्यत् कारणमनुवृत्तत्वादेकस्मादिव पङ्क्तेः । आदिग्रहणादसदनुक्रान्ताविर्भावा-नाविर्भावचक्रकद्वयमपि योज्यम् । यदि तावदुभयसत्त्वं ततः सत्त्वाविशेषादेवाविशेषे प्राक्कार्यानाविर्भाववत् कारणानाविर्भावोऽपि स्यात् । अथ न प्राक्कार्यानाविर्भाववत् कारणानाविर्भावः । सच्च कार्यमिति निश्चितं तद्वैलक्षण्यान्न तर्हि सत् कारण-मसत् सद्विलक्षणत्वाद् घटवदितर उदुम्बरपुष्पवत् । ननु घटसत्त्वं पटसत्त्वविलक्षणं नासतो वैलक्षण्यात् । अथैवमपि वैलक्षण्ये कारणसत्त्वविनिश्चयो न विनिवर्तते । नित्याविर्भावात्मकं च तन्न तर्हि सततानाविर्भावात्मकत्वात् कार्यं सत् सत्त्वे प्राग-प्याविर्भवेत् । सत्त्वात् कारणवत् । प्रथमे शेषं पूर्ववदेव विपर्ययेण । अथ न कारण-सतताविर्भावः सच्च[4] कारणमिति निश्चितं तद्वैलक्षण्यात् तर्हि सत्कार्यमसत् सद्विलक्षण-त्वादुदुम्बरपुष्पवत् । ननु घटसत्त्वं पटसत्त्वविलक्षणं नासतो वैलक्षण्यात् ।

द्वितीयं चक्रकम् । इत्येवमाविर्भावानाविर्भावविचारेण द्वे चक्रके मते इति ।

---

१°कं क्रमतः । सर्वा° घ । °श्च सतं ग । २ वैककणः क । ३ तन्न ग । ४कारणसत्त्वमि° क-ख ।

अत्रोच्यते—नासिद्धत्वात्–नैतदुपपद्यतेऽस्मत्पक्षसाधनवत् त्वत्पक्षसाधनम् । किं कारणम् ? असर्वत्वादिहेतूनामसिद्धत्वात् । यस्मादस्माकं सर्वमेवानुवृत्तिरेव कारणमेवोपादानमेव बुद्धिसिद्धमेवेतीति । तस्मादसर्वत्वादेरसिद्धत्वात् तद्विकल्पाभावात् तदसमर्थविकल्पत्वासिद्धिस्ततः कारणात् कार्यमन्यदित्येतन्न सिद्ध्यतीति । तत्रासर्वत्वासिद्धौ प्रतिपादितायां व्यावृत्त्यादीनामसिद्धिरापादितैव भविष्यतीत्यसर्वत्राभावमेवापादयितुमाह—

यदि हि घटोऽसर्वकार्यत्वाभिमतो मृत्पिण्डासत्त्वाभिमतादन्य इतीष्यते तद्वदेव घटवदेव कार्यवदेव दण्डादेरप्यसर्वत्वं विप्रकृष्टस्यापि, किमुत सन्निकृष्टस्य शिवकादेः सर्वस्मादन्यत्वात् घटवत् । तस्मादेकैकस्यासर्वत्ववत् सर्वस्याप्यसर्वत्वात् सर्वत्राभाव इति सर्वत्वैकत्वभङ्गचतुष्टयाभावः । तदसमर्थविकल्पत्वमप्यत एव नास्ति । तथाऽनुवृत्त्याद्यभावश्च तत एव नास्ति । यथैकस्य घटस्य मृदनुवृत्त्यभावस्तथा सर्वघटेषु तथा शिवकादिष्वप्यभाव इत्यनुवृत्त्यभावादनुवृत्तिव्यावृत्तिकृतविकल्पाभावश्च । एवं कारणोपादानबुद्धिसिद्धसामान्यैः सत्प्रतिपक्षैः विकल्पचतुष्टयासिद्धिस्तदसमर्थविकल्पा सिद्धिश्चापादनीया । ततः कारणादन्यत् कार्यमित्येतन्न सिद्ध्यति ।

किं चान्यत्—स्वोक्तविरोधादिवत् । स्ववचनाभ्युपगमलोकव्यवहारप्रत्यक्षानुमानविरोधाः । आदिग्रहणात् प्रमाणग्रहणात् प्रत्यक्षानुमानग्रहणं विशेषस्वरूपविरोधौ च कण्ठ्योक्तौ वक्ष्यति । तत्र स्ववचनविरोधस्तावत्–यदि कार्यं घटवत् क्रियते तत् कथमसत् खपुष्पवत् कार्यं च ? स्वेन वचनेन स्वमेव वचनं विरुध्यते । अथासत् खपुष्पवत् कथं कार्यं घटवदिति सैव स्ववचनविरोधभावना विपर्ययेण । तयोरेव शब्दयोर्विरोधदर्शनार्था यस्मान्मृद एव हि घटः क्रियते । हिशब्दो यस्मादर्थे । यस्मात् सर्पस्फटाटोपकुण्डलीभवनवन्मृद एव घटीभवनम् । तथा प्रकाशतां व्यक्तिर्विमलता क्रियते, करणं यथा पृष्ठं कुरु पादौ कुर्विति तद्दर्शयन्नाह—

घटः क्रियते घटतया व्यज्यते विद्यमान एव व्यक्तीभवति । को दृष्टान्तः ? । स एव घटो दीपेनेव क्रियया व्यज्यते दण्डादिव्यापारणात्मिकया । तथा च विशेषणविशेष्याऽप्रसिद्धिरपि कार्यमसदिति व्याघातः प्रोक्तः स्ववचनविरोधभावनात एव खपुष्पनिर्वृत्तघटयोरिव न कार्यमसता विशेष्यम् । नाप्यसत् कार्येणेति । न परस्परतो विशेषणं विशेष्यं चेति विशेषणविशेष्याप्रसिद्धिरस्मादेव कारणादत एवेत्यादि, यावत् न खेदः कर्तव्यो भवति । यत् त्वया व्याख्यानमनुष्ठितमितिकर्तव्यतैव कर्तव्यतेति यत्नेन महता पूर्वोत्तरचोद्यपरिहारपक्षाव्यवच्छेदवता प्रतिपादनार्थं न क्रियायां क्रियाव्याख्यानार्थः खेदः कर्तव्यः । किं कारणम् ? सामान्यादिवस्तुविचारखेदस्याव्यवस्थितपरमार्थत्वात् सर्वस्य क्रियाया

एवोपदेशो न्याय्य इत्यस्याभ्युपगमस्योपरोधात् । एवं तावद् ज्ञानपूर्वकक्रियोपदेशपक्षे स्ववचनविरोध उक्तः । यस्मिन्नप्यग्निहोत्रं जुहुयादित्यादिक्रियोपदेशोपजीवनं नास्त्यज्ञानप्रतिबद्धमेव सर्वमित्येकान्तः, तस्मिन्नज्ञानप्रतिबद्धैकान्तेऽपि च ज्ञानप्रतिबद्धत्वे स्ववचनस्य विरोधः । असत्कार्यमिति ज्ञात्वोक्तं चेत् तर्हि सर्वमज्ञानप्रतिबद्धमेवेत्यज्ञानप्रसिद्धत्वात्, अथाज्ञात्वा कथं प्रतिपादकं सार्थकं चेति स्ववचनविरोधः । त्वयाप्येतदेवमिति निश्चित्याभ्युपगम्योक्तत्वादज्ञानप्रतिबद्धाभ्युपगमस्य च तेन विरोधादेवमित्यवगमादभ्युपगमविरोधः कृतः । लोकज्ञानव्यवहारात् तद्विरोधः । ज्ञानपूर्वको हि लोकव्यवहारस्ततस्तस्याज्ञानप्रतिबन्धाभ्युपगमाप्रतीतेर्लोकरूढिविरोधः । प्रमाणविरोधस्तु प्रस्तुत एवेति । प्रत्यक्षविरोधस्तावत् तथा लोके दृष्टत्वात् । क्रिययाभिव्यज्यमानस्य घटादेः कार्यस्य दीपेनेव सत उपलब्धेरनुमानविरोधज्ञापकत्वाद्विशेषविरोध इति । अस्यासत्कार्यमिति ज्ञापकवाक्यस्य ज्ञापकत्वविशेषेष्टेः । प्रत्यक्षस्ववचनादिविरोधेषु धर्मविशेषविपर्ययसिद्धेर्विशेषविरोधः । तेष्वेवाप्रयोगप्रसङ्गाद्धर्मस्वरूपस्य प्रतिपिपादयिषितस्य निराकरणाद्धर्मस्वरूपविरोधः । एवं धर्मिस्वरूपविरोधस्तदुभयविरोधश्च यथायोगमापाद्यः । इत्यलमतिप्रसङ्गिन्या कथया ।

तस्मादयुक्तोऽसत्कार्यवादोऽग्निहोत्रं जुहुयादितिकर्तव्यतैव कर्तव्यता । कुर्यादिति चाभ्युपगतः परेणेति । अत इत्यादि, अत एतेभ्यो दोषेभ्यो निःसृत्य किं प्रतिपत्तव्यम्? । उच्यते—अतः पूर्वोदितदोषासम्बन्धेन ये पूर्वमुदिता विधिवादिना सामान्यैकान्तवादे विशेषैकान्तवादे सामान्यविशेषनानात्ववादे दोषाः, मयापि च ये दोषा उक्ताः सामान्यादिविचारप्रत्याख्यायिनः क्रियोपदेशवादिनः, अज्ञानवादिनश्च तेषामुभयेषामपि दोषाणामसम्बन्धेनेदं प्रतिपत्तव्यम् । आत्मैव सामान्यमिति । ननु पूर्वदूषितमेवैतन्मतमात्मैव सामान्यमिति । 'सुखं सुखं च सुखादिसमुदायश्चे'त्यादि पूर्वोत्तरपक्षप्रपञ्चेनेति । अत्रोच्यते–नात्मशब्दस्य पुरुषपर्यायत्वात् । अवयवानभ्युपगमात् समुदायवादपरिहारेणान्यपुरुषसामान्यस्यावस्थावतोऽवस्थाभ्योऽनन्यस्य तत्स्वरूपावस्थानात् तद्वैधर्म्यादात्मेति न वस्तुस्वरूपपर्यायवाचिनोऽत्र ग्रहणम् । किं तर्हि? अतति सततं गच्छति तांस्तानवस्थाविशेषान् स्वरूपापरित्यागेनेत्यात्मा, स एव सामान्यं चैतन्यलक्षणम् । एवं तर्हि विशेषाभावे कस्य सामान्यमिति सामान्याभावप्रसङ्गः समभूदिति विशेषा वक्तव्याः । उच्यते, सामान्यं पुरि शयनात् पुरुषः । विशेषास्तु तस्यैवावस्थावतोऽवस्थाः जाग्रत्सुप्तसुषुप्ततुरीयाख्याः । तासां स्वावस्थानां पुरुषः सामान्य-

---

१ साधकं ग । २ धर्मं° ग । ३ ना° क-ख । ४ °वाक्य° क-ख ।

मिति । किं निदर्शनमिति चेत् ? घटग्रीवादिरूपादिनवादिभेदाभेदसमवस्थावत् । यथा घटस्य स्थूला ग्रीवा, बुध्नं मध्यावस्था, सूक्ष्माश्च रूपादयो देशभेदभिन्नाः कालभेदभिन्नाश्च नवपुराणावस्थाः । तेषामेवावस्थाभेदानामभेदेन समवस्था घट इति तद्वदात्मैव स्वावस्थानां सामान्यमेवं च कल्प्यमानं सर्वसर्वात्मकत्वसत्कार्यत्वमूल-रहस्यानतिक्रमेण कल्पितमिति । गुणश्चात्र विद्यते । एवं हि सर्वसर्वात्मकं सच्च कार्य-मिति मूलरहस्यमेतन्नातिक्रान्तं भवति । पुरुषात्मकत्वात् सर्वस्य तद्विकारमात्रत्वाच्च भेदानां तत्रैवान्तर्लयाविर्भावात् सर्वकार्याणां कृकलासवर्णविशेषाणामिव कृकलासे। **अविचारोऽपि चेत्यादि, यदपि चानर्थको विवेकयत्नः शास्त्रेष्वित्यविचा-रितमिष्यते । सोऽप्यनेनैव युक्तिमार्गेण तत्त्वेनैकमाश्रित्य न्याय्यः,** तस्य भावस्तत्त्वमात्मनो भावेनैक्यमाश्रित्य न्यायादनपेतो न्याय्यो नाज्ञानप्रतिबन्धात् । यद्यज्ञानप्रतिबन्धादविचारस्ततः स्वयमेव विज्ञाते प्रमाणप्रमेयभावाभावादयुक्त-मित्युक्तम्, इह तु ज्ञानात्मकपुरुषस्वरूपैक्यापत्तिसन्निश्चये निश्चितमेवैतत् । किं विचारेण ? गतार्थत्वात्, न तु ज्ञातुमशक्यत्वादिति । अयं तस्य प्रवृत्तिपर्यायस्य विधिर्विधिविधिः स्थितिराचारः प्रवृत्तिर्मर्यादेत्यस्य विधिनयस्यायमेव विधिराचारः स्थितिरित्यादि । एवं प्रवृत्तिरित्यर्थः । या चैतन्यात्मस्वरूपा प्रवृत्तिः सा विधेर्विधि-रित्येतमर्थं व्याचष्टे । यः पुनर्विधिः प्राक्तनः स न युज्यते यस्माद्विधिनेत्यादि[1] । भवतीति भावः । भूप्रकृतिः कर्त्रर्थः 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति वचनात् । भावे घञो विहितत्वाद्भूयत इति भावो न, भवतीति कर्त्रर्थ इति चेत् तत्रापि येन भूयते समानेन समानो भवतीति भावः । णप्रकरणे 'भुवश्चोपसङ्ख्यानम्' ( ) इति वा कर्ता सामान्यमित्येवं व्यवस्थितेऽर्थे सर्वतन्त्रसिद्धान्तेन व्याकरणेन तत्र विशेषमात्रवादे देशकालभेदे परस्परविविक्तद्रव्यदेशकालभावभिन्ने भवनेऽभेदे च द्रव्यादितया भवनमात्रे सामान्यवादे नानाभावे च सामान्यविशेषयोर्भेदाभेदं नानासु तासु यथासंख्यं बौद्धसाङ्ख्यवैशेषिकमतासु दोषान्न भावः, भावे कर्तुरभावात् । तत्प्रकृत्यर्थकर्तुरभावात् । इतिशब्दस्य हेत्वर्थत्वात् पञ्चमीमप्रयुज्य भवितुरभाव इत्युक्तं, प्रागुक्तन्यायेन भवितुरभावात् भवतीति भावो घटादिरिति व्याकरणदृष्टेन निरुक्त्यर्थेन समर्थितो विधिना । विविच्यते च सादृश्यासादृश्याभ्यां सादृश्यः समानो भवतीति पृथक् प्रतिज्ञायते तेषु विकल्पेषु दोषाणामभिहितत्वान्निर्दोषभव-नोक्तेश्च विविच्यते विधिना । किमेवं विविच्यत एव[2] ? नेत्युच्यते चेति प्रतिज्ञा, सा पुनरविविक्तैव कृता 'को ह वैतद्वेद ? । किं वानेन ज्ञातेन' ? इति वचनात् स एवं विधे-र्विधिर्न भवति विविच्यमानार्थविधानात् । स्ववचनविरोधदोषात् । अंशेन विवेकाच्च

१ विधेर्नै ग । २ एष ग ।

यत्राप्यंशेन विवेकस्तत्र विविच्यमानांशेऽपि च यथा भवनाद् विधिनयवादिना-भिहितं तद्वद्विविच्यते। न च विविच्यते, अत्रापि परमतद्दूषणात् स्वमतसाधनाच्च घटाविर्भावो विविच्यते न च विविच्यते तथा न भवत्येव विधित्वं विधेः । न विधिर्विहित एवमित्यभिप्रायः। कथं पुनर्विधीयते ? इति चेत्, लोकवत्। लोक इव लोकवत् लोकवदिति विधानात् । यदि लोकवदेव विधीयते विधिरुत्सर्ग एव न भवति। कथं न भवति ? किं न एतेन ? यदि कारणं [यदि] न भवति। विविच्यते प्रतिज्ञापि तदर्थद्वारिका न कार्या इत्याद्यविचार्य विधानान् न भवति। किं तर्हि ? यदुक्तं सूक्ततया–'सर्वात्मकत्वेन विधेरुत्सर्गः सिद्ध्यति तथा।' यथा तत्तथा-न्यथेत्यादि। अथवा यथा लोके दृष्टं तथा विधिर्विधिर्भवति । कथं पुनर्लोके विधिर्विधिः ? । उच्यते। इति विधिरित्यादि। इतीत्थमनन्तरं वक्ष्यमाणो विधि-र्विधिर्भवति लोके यथा तत्तथान्यथेत्यादि । मृत्पिण्डशिवकादिप्रकारेण तथान्यथा च भवति । तथा च[3] वक्तव्यं । तच्चातच्च यथोपपत्त्या भवति । तथा च वक्तव्यमेष विधिर्विधिः। एवं सोऽविवक्षितव्यावृत्तिरनङ्गीकृतभेदस्तिरस्कृतविशेषो निर्व्यावृत्ति-रेव विधिर्विहितो भवति। उत्सृष्ट इति पर्यायशब्देनोत्सर्गो विधिरिति सर्वत्रास्य विधिलक्षणस्य दर्शयति। कोऽसौ निदर्श्यतामिति चेत्। उच्यते— तद्यथा पुरुषो हीत्यादि। उक्तनिरुक्तः पुरुषशब्दः। हिशब्दो यस्मादर्थे। असौ ज्ञाताज्ञातशीलो ज्ञानधर्मा साधुर्ज्ञानमयो वा पुरुष एव। ज्ञातृत्वं च ज्ञानमयत्वात्। ज्ञानावयवो ज्ञानविकारो वा ज्ञानमयः सः । उपयोगलक्षणत्वात्। ततः किमिति चेत्?। तन्मयं चेदं सर्वं देवमनुजतिर्यग्नरकपृथिव्यादि घटादिभेदभिन्नं जगत्, तदेक-त्वात्, तस्य पुरुषस्यैकत्वात् वस्तुत्वात् तदेकत्ववत् सर्वैकत्वं सर्वैकत्वाच्चैकं स च जगच्च सर्वं भवतीति भावः। ननु घटपटादिभेदेन भवति ज्ञानमयपुरुषात्मकत्वाद् येन भूयते स एव भवतीति भावः । स आत्मैव सामान्यं समानो भवतीति तन्निर्णयार्थं प्रश्नोत्तरक्रमेर्ण ग्रन्थः। को भवतीत्यादिर्गतार्थः । यावत् कः स्वतन्त्रो यो ज्ञ इति। अज्ञस्यास्वातन्त्र्यादेव कर्तृत्वाभावात् काष्ठादिविप्रकीर्ण-पचननिर्वर्तनवत्। यथा काष्ठैः स्थाल्यामोदनं देवदत्तः पचतीत्यत्र देवदत्त एव पचनस्य निर्वर्तको ज्ञातृत्वान्न काष्ठादीति। तथा पुरुष एव न भवतीति भावः। इतर आह–ननु क्षीररसादि दध्यादेः कर्तृ 'क्षीराद्दधि भवत्यज्ञात्तत्कर्तृणो रसाद् गुडः। न च तत् क्षीरं रसो वा ज्ञ'मिति। ज्ञकर्तृत्वमनेकान्तिकमित्येतच्च न, तत्प्रवृत्ति-शेषत्वात्। तस्यैव ज्ञस्य प्रवर्तमानस्य प्रवृत्तेरपरिसमाप्तायाः शेषत्वात्। काल-क्रमभेदकृतस्तु विशेषो न निवार्यते। यथोक्तम्—

१ नभ° ग। २ सुकृत° ग। ३ यथा च भवति यथा क-ख। ४ °तरम्र° क-ख।

'शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः ।
दन्तनिष्पीडितः श्रेष्ठो यान्त्रिकस्तु विदाहकृत् ॥'

इति, गोप्रवृत्तिशेषक्षीरदधित्ववत् यथा गोः–धेनोः प्रवृत्तेरपरिसमाप्तायाः क्षीरं दधि नवनीतं वा घृतनिष्यन्दनाविशेषः । तथा पुरुषप्रवृत्तिशेष एव जगदिति ज्ञशेषत्वाद्वा चक्रभ्रान्तिवत् । का वा सा प्रवृत्तिः? प्रवर्तमानपुरुषव्यतिरिक्ता सर्वस्य ज्ञशेषत्वात्, दृष्टान्तं चक्रभ्रान्तिः । यथा कुलालप्रयत्नभ्रमितस्य चक्रस्य भ्रान्तौ कुलालप्रवृत्तिशेषत्वं ज्ञशेषत्वमेवं दध्यादेरपि ज्ञशेषत्वम् । गोर्ज्ञस्य शेषत्वं दध्नो गोभुक्ततृणाद्याहारस्य रसरुधिरादिपरिणतस्य ज्ञमन्तरेण क्षीरदध्यादिभावो नास्ति । नन्वित्यनुज्ञापने । चक्रभ्रान्तावपि[1] को भवितेति प्रत्यपेक्षायां जिज्ञासायां मूलभवितावश्यापेक्ष्ये घटभवनव्यवहारे मृद्वत्, यथा पिण्डशिवकव्यवस्था-क्रमेण घटभवनव्यवहारे मृदेवाद्या भवित्री । तथेहापि चक्रभ्रान्तौ भवनव्यवहार-त्वान् मूलभवितृद्रव्यमपेक्ष्यम्, परतः परतोऽपि येन भूयते यद्भवति तदेव मौलं कारणं तदेवेत्यर्थः । तस्माद् घटभवनमृद्वत् भ्रान्तिभवने कुलालाद्यपेक्ष्य कुलाल-शेषभ्रान्तिवच्च ज्ञशेषं सर्वम्, इतरथासौ नैव स्याद्भवितुरभावाद्वन्ध्यापुत्रवद्-मूलत्वादित्यर्थः ।

स्यान्मतम्—अचेतनानामपि अभ्रादीनां चेष्टादर्शनाद् ज्ञप्रयोगमन्तरेण प्रवृत्तिर्दण्डादीनामिति । एतच्चायुक्तम् । ज्ञस्यैव सुप्तावस्थत्वात्; न च चक्रदण्डादिकरण-निरीहत्वात् । न च चक्रदण्डादि स्वत एव भवति करणनिरीहत्वात् करणत्वान्निरी-हाणि निरीहत्वात् न स्वत एव ज्ञातुर्यत्नमन्तरेण तद् यत्नशेषं वान्तरेण तस्यैव सुप्तावस्था दण्डचक्रादिनिस्पन्दभूता निश्चेतनीभूता भवितुमर्हति । तस्मात् सापि सुप्तावस्था-न्यस्य चेतनस्यैव वृत्तिर्भवितुमर्हति । दधीव पयसः । यथा दधि पयसोऽवस्था तथा दण्डचक्रादि ज्ञस्यैव कुलालस्य, एतेन दध्याद्यपि ज्ञभवनमाख्यातमेव ज्ञशेष-सुप्तावस्थत्वात् । तस्यापि दध्यादेः कुलालयत्नशेषचक्रदण्डादिवद् ज्ञयत्नं ज्ञयत्नशेषं वान्तरेण प्रवृत्त्यभावात् । ज्ञवृत्तिमात्रत्वमेवेत्यर्थः । एतस्यार्थस्य भावनार्थं दृष्टान्त-माह–यथैव हीत्यादि । यथैव हि रूपरसगन्धस्पर्शशब्दा अमूर्तत्वेन सूक्ष्मां वृत्तिम-त्यजन्त एवेत्यादि । सूक्ष्मपूर्वकत्वात् । स्थूलस्य सूक्ष्मतां निरूप्य स्थूलत्वं निरूपयति-**न हि ते रूपादयः प्रतिनियतचक्षुरादिविज्ञानं प्रभावितस्वरूपा मूर्ताः स्थूला इति वा केनचिदिष्टाः**[3], तस्मादमूर्तास्तद्भावोऽमूर्तत्वं तेन ह्यमूर्तत्वेन वृत्तिः सैव वा सूक्ष्मा तामत्यजन्तोऽजहत एव । **स्वप्रवृत्तिप्रभावावबद्धमूर्तत्वप्रक्रमात्** स्वया प्रवृत्त्या प्रभावेन[4] वाऽवबद्धो मूर्तत्वेन प्रक्रमो येषां ते स्वप्रवृत्तिप्रभावावबद्धमूर्त-

१ वाधिको क–ख । २ तत्स्वत क–ख । ३ वाक्येन निर्दिष्टाः क । ४ भवा ग ।

त्वप्रक्रमाः परमाणवः, रूपादीनामात्मीयया प्रवृत्त्यावबद्धो मूर्तत्वेन प्रक्रमः परमाणूनां सभेदानां तान् परमाणूनध्यास्येति सृष्टेः क्रमं दर्शयति दृष्टान्तरूपेण—तत उत्तरकालं नानाप्रभेदपृथिव्यादिभेदस्थूलरूपा जायन्ते रूपादय एव। पृथिव्या अश्मलोष्ट-सिकतावज्रादयः प्रभेदाः । हिमकरकादयोऽपाम् । ज्वाङ्गारमुर्मुरादयस्तेजसः। उत्क-लिकामण्डलगुञ्जाझञ्झादयो वायोः । वृक्षगुल्मवल्लीलतावितानवीरुधो वनस्पतेः । कृमिपिपीलिकाभ्रमरादिमनुष्यदेवनारका जङ्गमानामेतत् प्रवृत्तेर्निदर्शनम् । प्रभावो ह्यचिन्त्यः। प्रभावस्याचिन्त्यत्वादमूर्तेर्मूर्तसम्भवः । रसवीर्यविपाकप्रभावाश्च वस्तुनः प्रवर्तमानस्य विपरिणामाः । तत्र निदर्शनम्—

> 'चित्रकः कटुकः पाके वीर्योष्णः कटुको रसे ।
> तद्वद्दन्ती प्रभावात्तु विरेचयति सा नरम् ॥' इति ।

यथैते पृथिव्यादयः सूक्ष्मा मूर्तरूपादिपूर्वकाः स्थूलत्वात् तन्तुपूर्वपटवत् । एवं ततोऽपि परतोऽपि परं रूपादिभ्यः, परतोऽप्यपरमन्यत् । परं वरिष्ठं प्रधानं कारणं रूपादिभावमापद्यत इति प्रतिपत्तव्यम् । तच्च परं यच्च कारणमात्मानम-मूर्तसूक्ष्मरूपादित्वेन स्थूलमूर्तपरमाणुद्विप्रदेशादिस्कन्धपृथिव्यादित्वेन चात्र विभजमानं प्रवर्तते ।

किं च इति । **रूपादिप्रविभक्तमप्रविभक्तं स्वतत्त्वं** परमाणुद्विप्रदेशादि-पृथिव्यादिष्वप्रविभक्तस्वरूपादितत्त्ववत्। किं पुनस्तस्य स्वतत्त्वम्? तस्य भावस्तत्त्वम्, स्वार्थिको भावे प्रत्ययः । तद्दर्शयति—यत्तद्भवति तदेव तत्त्वं। स्वं च स्वप्रभेदापेक्षया तन्न चा[त्रत्वा]नुसृतत्वात् परतत्त्वाभावेन विशिष्यते स्वतत्त्वमिति परमतापेक्षया चेति । इतर आह तत् किमिति निरूप्यमाचार्य आह—

ननु ज्ञातस्वतत्त्व आत्मेति रूपादिभिरेव निरूपितम्। तत् परं कारणमात्माज्ञात-स्वतत्त्वः । पुनः स्वरूपादिभिरेव निरूपितः रूपरूपक्रियया रूपितं निर्णीतं तु ज्ञानं निर्णयो रूपणमित्येकोऽर्थः । तद्धि रूपणं रूपमिति । यस्मात् कारणाद्रूपणं रूपमिति एषोऽर्थः । आदिग्रहणाद्रसनमास्वादनं रसः । एवं शेषाणामपि रूपणकृतात्मलाभ-निरुक्तत्वाद्रूपणता ज्ञानमेव रूपणपर्यायत्वात् । ज्ञानस्य विभक्ताविभक्तं ग्रहणमेव । विभक्तग्रहणं रूपं रसो गन्धः शब्दः स्पर्श इति ज्ञानं रूपमिति । अविभक्तं सर्वेषु, तद् द्विविधमपि ग्रहणमेव रूपम् । भावसाधनत्वाद्रूपशब्दस्य । ननु रूप्यते तत् तेन तस्मिन् वेत्यादि रूपं, न तु कर्मकर्तृकरणाधिकरणसाधनत्वम्, आदिग्रहणात् तस्मै तस्माद् रूपमिति सम्प्रदानापादानकारकभेदेभ्यो रूपमिति भवितुमर्हति । किं कारणम्? रस्यते स्पृश्यते इत्यादेरपि तत्रैव दर्शनात् । रूपेणोपलक्षितस्य ज्ञानात्मनो वस्तुनो रसादेर्गुणगुण्यद्रव्याद्वा गुणगुण्यव्यतिरिक्ताद्विरुक्तस्यानवस्थानाद्रूपस्य पुरु-

षभिन्नपुत्रत्वादिवत् । अनेकसम्बन्धेन पुरुषात् पितृपुत्रभ्रातृभागिनेयमातुलत्वादिधर्माः पृथग् नावतिष्ठन्ते । तथा रूपणात्मकं रूपं रसादिगुणव्यतिरेकेण तद्व्यतिरिक्तपरमाण्वादिद्रव्यव्यतिरेकेण वा नावतिष्ठते । परमार्थतस्तस्मादविभक्तरूपेण तत्त्वात्मका रसादिपरमाण्वादिपृथिव्यादिभेदाः । एवं तर्हि रूपेणाविभक्ततत्त्वात्मकानां रूपवदविभक्तग्रहणं चक्षुषैव स्यात् । रसनादिभिश्च ग्रहणदर्शनात् प्रत्यक्षविरुद्धेयं कल्पनेति चेत् । न, तस्य तत्त्वस्यानेकात्मत्वाभ्युपगमात् । द्विधापि रसाद्यभेदेन द्रव्याभेदेन वा रूपस्याविभक्ततत्त्वात्मकतायामपीत्यादि । यावद्द्रव्यादीति, शक्यं वक्तुं रूपं रस इति प्रत्यक्षं भेदेन दर्शनात् तस्यानेकात्मकस्य स्वप्रवृत्तिप्रभावावबद्धस्य प्रभेदानामुक्तत्वात्[1] । एवं तावद्रसादिगुणगणसमुदायो नास्त्यन्यः, परस्परतस्ते चान्ये रूपादयः । किन्तु रूपणस्वरूपभेदा[2] एवेत्युक्तम्, स्यान्मतम्—रूपादिभ्यो भिन्नमेकं द्रव्यं पृथग्ग्रहणापदेशादित्येतच्च न, रूपादिभ्यो भिन्नमिदमेकं द्रव्यं तच्चेति शक्यं वक्तुमिति वर्तते । कस्मात् ? रूपादिव्यतिरिक्तादर्शनात् । पूर्वत्र रूपादन्येषां रसादीनां प्रत्यक्षतो दर्शनाद्रूपमेव, न रसादय इति शक्यं वक्तुम्, इह तु रूपादिभ्यो भिन्नं द्रव्यमिति प्रत्यक्षेणादर्शनादशक्यमिति । कस्यां पुनः कल्पनायां प्रत्यक्षविरोधो नास्ति? । उच्यते,आत्मतत्त्वाविभक्तग्रहे तु प्रत्यक्षविरोधः । तत् कथं भाव्यते ? । चैतन्यमेकमेव रूपादिविभक्तमप्यविभक्तं चैतन्याव्यवच्छेदान्वयाद्रूपेण सामान्येनाविभक्तमेवैकत्वाद्रूपादिरूपेण ग्रहणविभागाद्विभक्तमपि सत् तदेकमेवानेकात्मकत्वाद्विभक्तमविभक्तं चेति प्रत्यक्षदर्शनं रसादिभेदरूपं रूपणाभेदरूपं च न विरुध्यते । रूपादिरूपत्वाच्चैतन्यस्य । यथा परैः परिकल्पितं भिन्नमिति, तत्र च रूपादिचैतन्येभ्यो भिन्नमत्र दर्शनाविरोधकारि सम्भवति । बाह्यं रूपरसादिगुणसमुदायात्मकं तदाश्रयद्रव्यात्मकं वा, किन्तु तदेव रूपादिचैतन्यात्मतत्त्वाविभक्तग्रहे तु दर्शनाविरोधकारि, चैतन्यस्यैव विभक्ताविभक्तात्मकत्वात् तथा तदनुभवदर्शनात् स्वरूपपरिच्छेदे ततोऽन्यस्य प्रमाणस्य सम्भवात् । किं तर्हि ? स एव तु व्यतिरेकस्यानुपपत्तेः, ज्ञानात् पृथग्भूतार्थस्यानुपपत्तेर्ज्ञानस्वतत्त्वात्मैव ग्राह्यो ग्राहकश्चैषितव्यः। अभिमतात्मप्रतिपत्तिवत् । यथा त्वभिमतः 'प्रतिशरीरं शरीरादिव्यतिरिक्तमात्मैवात्मानं शरीरादींश्च बाह्यानर्थान् प्रतिपद्यमानोऽपि स्वात्माधिगमे प्रमाणान्तराभावाद् ग्राह्यो ग्राहकश्च रूपादिभेदेन ज्ञानसुखादिभेदेन च स्वयमेव विपरिवर्तमान' इति । निदर्शनमप्याह—बुद्ध्यादीत्यादि । बुद्धिसुखदुःखेच्छाद्वेषादिकालाकाशदिगात्माद्यमूर्तं सूक्ष्ममुच्यते । रूपादयस्तु[3] स्थूला एव प्रत्यक्षत्वात् । सूक्ष्मस्थूलत्वादि च तेषां यथासंख्यं बुद्ध्यादीनां स्वतत्त्व एवेत्यभि-

१ प्रभेदेनानुक्त° क-ख । २ रूपेण क-ख । ३ भूवा° क-ग ।

सम्भन्त्स्यते । क्षीराद्यत्यन्तापरिदृष्टतत्त्वेत्यादियुगपद्भाविनः क्षीरावस्थायामत्यन्तापरिदृष्टा धर्मास्तत्त्व एव दृश्यन्ते । तद्यथा आद्रवो रसः, आकठिनं दधि, नूतमद्रुः[1] कठिनः । मस्तु द्रवमेव । आदिग्रहणात् क्षीरमपि धेनावत्यन्तापरिदृष्टेः धेन्वभ्यवहृततृणगोरक्तादावत्यन्तापरिदृष्टाः धेनुगतरसरुधिरादिपरिणतिविशेषक्रमागतप्रश्रवादयः तत्त्व एव प्रविभागेन व्यवस्थितास्तेषां व्यवस्थावत् सर्वस्य चेतनाचेतनस्य जगतश्चेतनात्मनि पुरुषेऽत्यन्तापरिदृष्टस्य व्यवस्था युगपदेव । यथा च तस्यैव क्रमभुवोऽन्ये धर्मा माधुर्याम्लादयः तथा पर्यायास्तत्त्व एव ज्ञानात्मके तस्यैव । नावस्थाश्चैताः[2] स्वमनीषिकया उच्यन्ते । किं तर्हि ? जिनवचनार्णवविप्रुष एवैताः । तद्यथा—

'से किं भावपरमाणू[3] ? भावपरमाणू वण्णवंते गंधवंते फासवंते' इति वर्णादीनां तत्त्व एवानेकात्मके तदात्मनां भावात् । एवं चेत्यादि । अस्मिन् ज्ञानात्मकैककारणविवर्तमात्रभेदवादे युक्त्यन्तरप्रतिपाद्यं सार्वज्ञ्यमयत्नेन लब्धं पुरुषात्मकत्वात् सर्वस्य । न हि पुरुषः कश्चिदात्मानं न वेत्ति । यथा तृणादिष्वत्यन्तापरिदृष्टं दधित्वं तत्कारणत्वात् तदात्मकं तथा सर्वज्ञताप्यस्य । का सा सर्वज्ञता ? ज्ञत्वमेवोत्कर्षपर्यन्तवृत्तं तदेव ज्ञत्वमुत्कर्षपर्यन्तं निरतिशयं क्वचित् प्राप्नोति तारतम्यात्, तरतमभावस्तारतम्यम्, ज्ञतरो ज्ञतम इति परस्परं उत्कर्षभेदस्तेन तारतम्येन युक्तत्वात् । तत्पर्यन्तेन निरतिशयेन विना[4] न भवितुमर्हति पर्वतोन्नतिवत् । यथा पर्वतोन्नतिस्तारतम्ययुक्तत्वात् विन्ध्यसह्योज्जयन्तपारियात्रेन्द्रपदमलयमहेन्द्रहिमवत्कैलासादीनामन्यतमस्योत्कर्षपर्यन्तं प्राप्तया निरतिशयोन्नत्या विना न भवति, एवं ज्ञत्वमपि । योऽपि कैलासमन्दरं वा नाभ्युपगच्छति तस्यापि शुषिरस्यावकाशदानसमर्थस्य पृथिव्याद्याश्रयस्य क्षेत्रस्य सद्भावात् । तस्य च समन्ततोऽनन्तत्वान्महन्महत्तरं महत्तममिति प्रमाणोत्कर्षस्य तत्र निरतिशयस्य दर्शनात् क्षेत्रप्रमाणवदिति दृष्टान्तः । अस्यामेव प्रतिज्ञायां हेत्वन्तरं प्रत्यवगमकात्मकत्वात् । प्रत्यवगमयतीति प्रत्यवगमकं तदेव ज्ञत्वं ततश्च निरतिशयोत्कर्षपर्यन्तम् । तद्दृष्टान्तः । खद्योतादितारतम्यवृत्तोद्द्योतवदिति । यथा खद्योतमप्यग्निप्रदीपतारकादिषु तारतम्येन वृत्तत्वादुद्द्योतो भास्करे निरतिशयोत्कर्षपर्यन्तो दृष्टः । तथा ज्ञानमपि क्वचिदिति ।

इतर आह—ननु वक्तृत्वादीनामित्यादि । ननु वक्तृत्वशरीरित्वनामवत्त्वजातिमत्त्वादीनां धर्माणां सार्वज्ञ्यव्यभिचारादसर्वज्ञतैव । किं चान्यत्—अत्रैवेन्द्रियप्रत्यक्षानुमानयोर्निर्विषये प्रकर्षोत्कर्षदर्शनाच्चासर्वज्ञतैवेत्येतच्च न, वक्तृत्वस्यापि

---

१ मूलमृदुः क । २ तावस्थाः । नैताः स्वमनीषिका । उच्यते ग । ३ स किं भावपरमाणुः ? भावपरमाणुः वर्णवान् गन्धवान् स्पर्शवान् । ४ न ग । ५ विना भ° ग ।

तारतम्यादुत्कर्षवृत्तेर्विपर्ययेण भवितव्यमित्यभिसम्बध्यते । वक्तृत्वादेव सार्वज्ञ्यं तावद् ब्रूमः । वक्ता वक्तृतरो वक्तृतम इत्युत्कर्षपरम्पराया निरतिशयनिष्ठत्वात् सर्वस्य वक्ता तथ्यस्य वेत्यवश्यमेषितव्यम् । तच्च सर्वस्य तथ्यस्य च वक्तृत्वात् तज्ज्ञ इति वक्तृत्वादेव सर्वज्ञोत्कर्षसिद्धेरयुक्तः सार्वज्ञ्यप्रतिषेधः । यदपि चेन्द्रियविषये तत्पूर्वकानुमानविषये चोत्कर्षतारतम्यमुक्तं तदपि नित्यानुमेयमहापरिमाणाकाशदृष्टान्तसाधर्म्याददोषाय । स्यान्मतम्–आकाशासिद्धेरदृष्टान्तमित्येतच्चायुक्तम्, अनुमानसद्भावात् । सातिशयपरिमाणकं वस्तु सति पक्षे भावविशेषत्वाद् घटवदिति । विभक्तपदार्थवादिमतापेक्षयैतदनुमानमविभक्तैककारणविवर्तनाद्भेदवादे वक्ष्यत्युत्कर्षनिरतिशयत्वम् । भावतारतम्ययुक्तत्वात् साधितं साधयिष्यमाणार्थानुसारेण प्रतिजानानः भावितार्थोपनयनार्थमाह–असर्वातथ्याभिधायिताभ्यां विपर्ययेण भवितव्यमसर्वज्ञताया वक्तृत्वात्सर्वज्ञताया वा अवस्थात्वाद् वक्तृत्वाव्यभिचारिण्या असर्वज्ञताया वाक्यरूपेणानुमानात्मतया स्थिताया इतरस्याः पदार्थतयेष्टाया वा अवस्थात्वात् । सा द्विविधाप्यसर्वज्ञतावस्थैव । तथा वस्तुतत्त्वाद्विशेषत्वादित्यादिहेतुसौलभ्यं दर्शयति, निदर्शनम्–ज्ञत्वाज्ञत्वावस्थावत् । ज्ञं चेतनं स्थावरजङ्गमं अरण्यकाष्ठादि तद्विधिविधिनयदर्शनेन जाग्रत्सुषुप्तावस्थे ते चैतत् पदार्थविषयं निदर्शनं वाक्यविषयं नीलोत्पलरक्तोत्पलवत् । यथा ज्ञमज्ञेनाज्ञं च ज्ञेन विना न भवति, नीलोत्पलमनीलेनानुत्पलेन रक्तोत्पलेन वा विना न भवति, तद्विपर्ययेण वाक्यार्थेन तथा सार्वज्ञ्यं चासार्वज्ञ्येन विना न भवत्यसार्वज्ञ्यं वा सार्वज्ञ्येनेति ।

इतर आह–धूमवत्त्वाग्निमत्त्वावस्थाविपर्ययेणापि तर्हि भवितव्यं तत्त्वतः । धूमस्यावस्थात्मकार्यस्याग्न्यव्यभिचारिणः क्वचित् कदाचिदप्यनग्न्यावदर्शनादवस्थात्वं संशयहेतुरित्यभिप्रायः ।

आचार्य आह–को विचारः ? । निश्चितमेवैतदनग्निरपि भवत्येवेत्यर्थः । तेनापि विपर्ययेणापि तत्त्वतो भवितव्यम् । नन्विदमेव वर्तते ज्ञानात्मकैककारणस्याग्न्यनग्न्यादिस्वावस्थात्मकत्वप्रतिपादनस्य प्रस्तुतत्वात् । एवमग्निं व्यभिचारयिष्यामः । परमते तावत् प्रतिज्ञार्थं भावयामः । तेन त्वित्यादि, ज्ञानात्मकत्वादात्मनस्तद्विजृम्भितविकल्पत्वाच्च शब्दस्य । यदुच्यते 'यच्छब्द आह तदस्माकं प्रमाण'मिति । सोऽपि शब्दो न पुरुषप्रवृत्तिमन्तरेण भवितुं वक्तुं वार्हतीति, पुरुषस्वरूपस्यैव तस्य वचनं युज्यते नान्यथेति । अस्मिन्नर्थे कारणमाह––उक्तत्वाद्वचनत्वाद्व्याकरणवत् पौरुषेयमिति । सर्वस्य पुरुषात्मकत्वं दर्शयति हेतुसौलभ्यं यथावद्वस्तुत्वादपीत्यनेन दर्शयति, सर्वस्य तदात्मकत्वात् तदवस्थामात्रत्वादित्यादि सर्वो हेतुरस्मिन्नर्थे भवतीतरथा स नैव वचनं स्याच्छब्दोऽपौरुषेयत्वात् खरविषाणवत् । किं च–अवचनं न वचनमित्यनेन नैव वा स्यादपुरुषात्मकत्वाद्वन्ध्यापुत्रवत् ।

आह—**नन्वित्यादि**, यदुच्यते त्वयैकस्मिन्नेव काले तस्यैवैकस्य वस्तुनोऽग्नित्वमनग्नित्वं चेति प्रत्यक्षादिविरुद्धम् । सामस्त्येनाभावात् ? आदिग्रहणादनुमानागमलोकव्यवहारविरुद्धमिति ।

आचार्य आह—**ननु प्रत्यक्षत इत्यादि** । सर्वप्रमाणज्येष्ठमूलप्रत्यक्षत एव व्रीह्यादि, आदिग्रहणादाम्रजम्बूफलादि, एकं वस्त्वेकस्मिन्नेव व्रीह्यवस्थानकाले भूम्यबादिसर्वात्मकत्वाद् व्रीहेः। कतमोऽसौ व्रीहिः क्षित्युदकबीजादिगतवर्णगन्धरसस्पर्शादिधर्मपरिणतिमन्तरेणेति । भूम्यादेः परस्परधर्मापत्तेः सर्वात्मकत्वं, सर्वात्मकत्वात् तन्मयस्य व्रीहेरप्यबादिवत् सर्वात्मकत्वं, तस्मादबादिरेव व्रीहिस्तेन विनाऽभावात् । तस्य तथाभवनात् व्रीहिस्वात्मवत्, तस्मान्नास्ति[1] प्रत्यक्षादिविरोधः । तत्काले तथाऽग्रहणादप्रत्यक्षतेति चेत्, स्यान्मतम्—व्रीहिकाले भूम्या बाह्यात्मकस्य वस्तुनः, तथा भूम्यबादिप्रकारेणाग्रहणान्न हि तद्वस्तु प्रत्यक्षं स्यात् । न हि तद्वस्तु व्रीहिमात्रमेवेति । उच्यते—**सर्वाप्रत्यक्षता तर्हि स चापीत्यादि** । सर्वस्य वस्तुनः सदापि सर्वेणात्मस्वरूपेण ग्रहणाभावात् न कस्यचित् प्रत्यक्षत्वं स्यात्; तद्दर्शयति—**नहि यद्यथा भवतीत्यादि** । व्रीहेरपि प्रत्यक्षत्वं नास्ति यथा विद्यते तथेन्द्रियग्रहणाभावात्, इन्द्रियेण तु तुषमात्रदर्शनात् तन्मात्रस्याव्रीहित्वात् । कणाद्यदर्शनात् कणमात्रस्याप्यव्रीहित्वात्, कुडवा[3]द्यदर्शनादित्यादिरूपरसगन्धस्पर्शानामन्यतमस्यैवेन्द्रियविषयत्वात् । अत आह—तुषकणादिरूपादिमात्रग्रहणावृत्तत्वाद्व्रीह्यादि चक्षुरादिप्रत्यक्षस्य । स्यान्मतम्—रूपस्य रूपमात्रत्वात् तर्हि प्रत्यक्षत्वमित्येतच्चायुक्तम् । यावद्रूपग्रहणवृत्तत्वाद्रूपादिप्रत्यक्षस्य रूपरसगन्धशब्दस्पर्शा रूपादयस्ते हि परस्पराविनिर्भागवृत्तयस्तेषु रूपमात्रग्रहणं कथं यथार्थं प्रत्यक्षं स्यादिति नास्ति प्रत्यक्षं, तस्मात् स्थितमेतत् सर्वं सर्वात्मकं ज्ञानस्वतत्त्वैककारणविजृम्भितमात्रं चेति । तस्यैवेदानीं स्वरूपोपदर्शनार्थमुच्यते—**तस्य चतस्रोऽवस्थाः** । तस्यानन्तरप्रतिपादितचैतन्यतत्त्वस्येमाश्चतस्रोऽवस्थाः । **जाग्रत्सुप्तसुषुप्ततुरीयान्वर्थाख्याः** । जाग्रदवस्था, सुप्तावस्था, सुषुप्तावस्था तुरीयावस्था । एताश्चान्वर्थाः । एताश्च बहुधा व्यवतिष्ठन्ते । चतुर्थामवस्थां मुक्त्वा तिसृणामेकैकस्याः प्रतिप्रक्रियं संज्ञादिभेदाल्लोकव्यवहारभेदाच्चानेकभेदत्वात् । चतुर्थी पुनरेकस्वरूपैव विशुद्धत्वात् । अथ साऽपि स्वरूपसामर्थ्यात् सर्वात्मनैवानेकधा विपरिवर्तते । तद् यथा—

जं जं जे जे भावे, परिणमति[6] पओगवीससा दव्वं ।
तं तह जाणाति[7] जिणो, अपज्जवे जाणणा णत्थि ॥[8] आव० नि० २६६७

---

१ तस्यान्नास्ति ग । २ भूम्याच्छाद्या° ग । ३ कुण्डका° ग । ४ बद्धा ग । ५ चापि ग । ६-७ °इ ।
८ यद् यद् यान् यान् भावान् परिणमते प्रयोगविस्रसाद्रव्यम् ।
तत् तथा जानाति जिनोऽपर्यये परिज्ञा नास्ति ॥

कास्ताः? उच्यन्ते–सुखदुःखमोहशुद्धयः सत्त्वरजस्तमोविमुक्त्याख्याः कार्याणि वासां यथासंख्यं तिसृणाम्। तद्यथा–प्रसादलाघवप्रसवाभिष्वङ्गोद्धर्षप्रीतयः। दुःखशोषतापभेदापस्तंभोद्वेगापद्वेषाः। वरणसदनापध्वंसनबीभत्सदैन्यगौरवाणि। चतुर्थ्यास्तु शुद्धं चैतन्यं सकलस्वपरिवर्तप्रपञ्चसर्वभावावभासनम्। अथवा ऊर्ध्वतिर्यगधोलोका अविभागा वा यथासंख्यमेव। ऊर्ध्वलोको जाग्रदवस्था, तिर्यग्लोकः सुप्तावस्था, सुषुप्तावस्थाऽधोलोकः। अविभागावस्था तुरीयावस्था। संज्ञिअसंज्ञि अचेतनभावा वा। संज्ञिनः समनस्काः देवमनुष्यनारकतिर्यञ्चो जाग्रति। सुप्ता असंज्ञिनः पृथिव्यबग्निवायुवनस्पतिद्वित्रिचतुरिन्द्रियामनस्कपञ्चेन्द्रियाः। काष्ठकुड्यादयः सुषुप्ताः। भवनमात्रं भावः। सर्वत्राविभागा तुरीयावस्थेति। अत्राह– विभागात्मनस्तस्यैवात्मनश्चतुरवस्थत्वात् कालभेदाभावाच्च चतस्रोऽपि प्रथमद्वितीयतृतीयतुरीयाख्याः स्युरित्येतदयुक्तम्। यस्मान्नियता एवैता विमुक्तिक्रमात्। सर्वज्ञता वा तुरीयमिति सुषुप्तावस्थायाः स्थिरीभूतचैतन्यायाः सुषुप्तावस्था, विमुक्तमलत्वाद्वितीया, मिथ्यादृष्ट्यादिका तृतीया, सम्यग्दर्शनचारित्रात्मिका मुक्तिप्रत्यासत्तेः सर्वज्ञता चतुर्थी। तत्पुनस्तुरीयं **निरावरणमोहविघ्नं**, निर्गता ज्ञानदर्शनावरणमोहविघ्ना अस्मिन्निति निरावरणमोहविघ्नं, मोहस्यैव महास्वापत्वात्। एकेन्द्रियादिषु स्त्यानर्द्धिउदयसद्भावाद्विशेषेण स्वापः। अविशेषेण तु सर्वप्राणिनां समोहानां मिथ्यादृष्टचचारित्राणां स्वापात्। 'सुत्ता[1] असुणी सया मुणिणो सया जागरंति' इति।

तच्च तुरीयं कैवल्यं, विगतावरणमोहविघ्नं रागद्वेषमोहप्रतिघातेभ्यो विविक्तादर्शनं विशुद्धं प्रतिपूर्णमेकं स्वतत्त्वमिति तत्पर्यायाः। किं रूपं तदिति चेत्। **निद्रावियोग आत्यन्तिकः**। तद्व्याख्यानं निद्रासम्बन्धि जाग्रदाद्यवस्थाविलक्षणमात्मस्वतत्त्वं निद्रासम्बन्धिन्यस्तिस्रोऽवस्था जाग्रत्सुप्तसुषुप्ताख्याः। तत्तद्विलक्षणमात्मनः स्वं तत्त्वं शुद्धं चैतन्यं स एवान्येन व्याख्याविकल्पेन परमात्मा विमुक्तः सर्वज्ञ एव व्याख्यातो वेदितव्यः।

करणात्मानं कार्यात्मानं च व्याख्यास्यामः। तत्र तावन्म**हामोहे**त्यादि, यावत् **करणात्मा** दर्शनचारित्रमोहोदयेन। यस्मात् सुप्ता मिथ्यादृष्टयोऽचारित्राश्च प्राणिनः। तस्मान्महामोह एव निद्रा, तदुदये स्वापः। तत्क्षये विबोधः। यथोक्तम्—

'यदा तु मनसि क्लान्ते, बुद्ध्यात्मानः श्रमान्विताः।
विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः॥' इति।

तस्या निद्रायाः क्षयोपशमोऽनन्तानां पुरुषपरिणत्यापन्नाष्टविधतद्घातिकर्मणामुदितानां क्षयादनुदितानामुपशमाल्लब्धिशक्तिरुत्पद्यते, तस्मिन्नेव पुरुषे ज्ञानदर्शन-

---

१ सुप्ता अमुनयः सदा, मुनयः सदा जाग्रति।

वीर्याविकल्पतया घातिकर्मक्षयोपशमशक्त्या निर्वर्तितानि, कृष्णसारशबलपक्ष्मपुटाकारेण चक्षुः शेषेन्द्रियाणि च यथास्वमाकारैः तान्येव चोपकृतान्युपकरणत्वेन मसूरक्षुरप्रातिमुक्तचन्द्रकयवनालिकानेकसंस्थानैः, ततस्तत्प्रत्ययं लब्धिजनितनिर्वृत्त्युपकरणेन्द्रियप्रत्ययं चैतन्यमुपयोगो जायते। 'लब्ध्युपयोगौ भावेन्द्रियम्' (तत्त्वार्थ० २।१८) इति वचनात्। तच्च प्रत्यक्षादिप्रत्यपेक्षणात्मकत्वात्। आदिग्रहणादनुमानागमात्मकत्वाद् जाग्रदवस्था। सैव करणात्मा। सुप्तजाग्रदवस्थयोश्चान्तरावस्था सुप्तजागरिका। तत्र स्वप्नदर्शनं भवति। यथोक्तम्–'णो सुत्ते सुमिणं पासइ। सुत्तजागरिआए वट्टमाणे सुमिणं पासइ।'[1] सा चापि जाग्रदवस्था करणात्माख्या, चेतनात्मा चेतना एवात्मा। तस्यैवार्थस्य[2] जागरणात्मत्वात्। द्रव्यपुरुषवत्। द्रव्यपुरुषो भूतो भावी वा, यथा[3] राजाऽऽसीद्भविष्यति वेति राजैवेत्युच्यते। करचरणगतचक्रपद्माद्याकृतिरेखादिलक्षणदर्शनात् तदेव हि शरीरमनुभूतराज्यं भविष्यद्राज्यं वा राजा, तथा करणात्मानः स्वपन्तो जाग्रतो वा चेतनात्मैव। अनुपयुक्तो वा द्रव्यपुरुषः तस्मिन् ज्ञेयेऽनुपयुक्तत्वात्। यथानुपयुक्तः पुरुषो[4] नात्मत्वेन परिणमित आत्मस्वरूपज्ञानत्वेनापरिणमितो द्रव्यपुरुषो द्रव्यात्मैव। तथा करणात्मा ज्ञानोपयोगरहितोऽपि चेतनात्मैवेति। एवं तर्हि परमात्मनः शुद्धचेतनात्मत्वात् सर्वात्मकत्वाच्च तस्य करणात्मावस्थानुपपत्तिरिति चेत् नेत्युच्यते। चैतन्यस्य सर्वात्मकतायामपि सत्यां निद्राग्रहणात्। सुप्तोत्थितस्य सावशेषनिद्रस्यैव यज् ज्ञानं सा जागरावस्था करणात्मा। व्यपगतनिद्रस्यैव सर्वज्ञावस्थेत्यनयोः करणात्मपरमात्मावस्थयोर्विशेषः। स्यान्मतम्–अर्थस्वरूपाग्रहणात् करणात्मावस्थयोः परमात्मात्यन्तवैरूप्यमित्येतच्चायुक्तम्। कस्मात्? अर्थस्य च तथातथात्वात्। ज्ञानमेव स ह्यर्थः। पुरुषसृष्टेरनेकरूपतायाः प्रतिपादितत्वादेकात्मविपरिवर्तोऽप्यनेकरूप एव। तेन तेन प्रकारेण तस्य भवनात् तथातथात्वात् तदपि करणज्ञानं ज्ञानमेव, करणमपि ज्ञानमेव वा ज्ञानविपरिवर्तत्वात्। एवं तावज्जाग्रदवस्था करणात्मा ज्ञानमेव। यथा चेदं ज्ञानं तथा जाग्रदवस्थाशेषः सुप्तावस्थाप्रारम्भमात्रं सुप्तावस्था, साऽपि ज्ञानमेव संशयादि ईषत्सुप्तता अयमपि करणात्मा।

---

१ नो सुप्तः स्वप्नं पश्यति, सुप्तजागरिकायां वर्तमानः स्वप्नं पश्यति। आगमोदयसमितिद्वारा-मुद्रितावृत्तौ त्वेवं पाठः—'सुत्ते णं भंते! सुविणं पासति, जागरे सुविणं पासति, सुत्तजागरे सुविणं पासति?। गोयमा! नो सुत्ते सुविणं पासइ, नो जागरे सुविणं पासइ, सुत्तजागरे सुविणं पासइ॥
भग० श० १५-उद्दे० ५ सू० ५७७

छाया—सुप्तो भगवन्! स्वप्नं पश्यति, जाग्रत् स्वप्नं पश्यति, सुप्तजागरितः स्वप्नं पश्यति? गौतम! नो सुप्तः स्वप्नं पश्यति, नो जागरितः स्वप्नं पश्यति, सुप्तजागरितः स्वप्नं पश्यति।'

२ चेतस्यै° क-ख। ३ °थायं य। ४ °मुदनो क-ख।

संशयादिज्ञानम्, आदिग्रहणाद्विपर्ययानध्यवसायौ। सा च सुप्तावस्थापि सतीषत् सुप्तता ज्ञानमेव पूर्ववदेव सर्वात्मकतायां वस्तुनः। तथातथात्वात्। स्थाणुः स्यात् पुरुषः स्यादित्यूर्ध्वतासामान्यस्य वस्तुत्वात्। यदि स्थाणुर्वयोनिलयनादिविशेषात्। यद्युत्थायोपविष्टत्वकरचरणचलनादिविशेषात् पुरुष इत्युभयथापि तस्य वस्तुनस्तथातथात्वात्, स्थाणुत्वपुरुषत्वाभ्याम्। तथा विपर्ययोऽपि विज्ञानमेव तथातथात्वात्। अर्थस्य स्थाणुपुरुषत्वाभ्यां विपर्ययेण चेति सैव व्याख्याऽत्रापि। साधनम्—चेतनात्मा सुप्तत्वाद्व्यपुरुषवत्। पूर्ववदेव व्याख्या। सुप्तत्वं जाग्रत्त्वं वा चेतनस्यैव भवति नाचेतनस्य कस्यचित्। यथा चैतद् ज्ञानम्। तथा अनध्यवसायोऽपि, न अध्यवसायोऽनध्यवसायोऽनभिव्यक्तबोधः। सोऽपि संशयविपर्ययाभ्यां विशिष्यमाणः स्वापः सुप्तत्वात्। **ज्ञानमेव चेतनात्मकत्वाज्जागरितवत्।** यथा जागरितावस्था ज्ञानमेव चेतनात्मकत्वात्, तथाऽनध्यवसायोऽपि चेतनावत्। यस्मात् तदेव चेतनमचेतनं च, तस्यैव बहुचेतनत्वादल्पचेतनत्वात्। चेतनं च तदचेतनं चेति विग्रहात्। चेतनाया एवाचेतनात्वाद्वा संशयादिवत्। आदिग्रहणाद् विपर्ययनिर्णयौ गृह्येते तद्वच्चेतनाचेतनावत्। ज्ञानमेवानध्यवसायः। अथवा सुप्तवत्। यथा हि सुप्त उच्छ्वासनिःश्वासादिक्रियास्वव्यक्तं चेतयमानोऽपि ज्ञाता, एवमनध्यवसायोऽपि करणात्मैव। व्यक्ततरः स्वापः विशिष्टस्वाप इत्यर्थः। एवं करणात्मा व्याख्यातः।

इदानीं कार्यात्मा व्याख्यायते—**यथा चैतदित्यादि** । यथा चैतदनन्तरव्याख्यातमनध्यवसायविपर्ययसंशयावितथप्रत्यक्षादि ज्ञानं चैतन्यं तथाऽनध्यवसायमपगताध्यवसायमनध्यवसायाचेतनाभिमतं द्रव्येन्द्रियपृथिव्यादि कार्यात्मा। आत्मा आत्मनैवात्मत्वेन परिणामितत्वादित्यादयो हेतवो वक्ष्यन्ते। सा च सुप्तावस्था द्रव्येन्द्रियम्। निर्वृत्त्युपकरणद्रव्येन्द्रिये व्याख्याते प्राक्। ते च पुरुषेणात्मत्वेन परिणमिते[1] भावेन्द्रियं[2] त्वात्मैव लब्धियुक्त उपयुक्तो वा। पृथिव्यादि च विपरिवर्तमानात्मत्वपरिणामापन्नमेव पृथिव्यप्तेजोवायुवनस्पतिद्वीन्द्रियादि तत्कार्यात्मा। सुषुप्तावस्था तदपि ज्ञानात्मकमेव सुषुप्तावस्थात्मकत्वात्। **हालाहलानुविद्धमदिरापानापादितनिद्रासुषुप्तवत्।** यथा हालाहलविशेषेण[3] सद्योमारकेणानुविद्धां मदिरां पीत्वा तदापादिताया निद्राया वशमुपगम्य सुषुप्तश्चेतन एव सन्न किञ्चिच्चेतयते पुरुषस्तथा द्रव्येन्द्रियपृथिव्यादिकार्यात्मा। अथवा[4]ऽनध्यवसायवत्। यथा जागरादिपूर्वव्याख्यातावस्थाभ्यो विशिष्टा सुप्तावस्थाऽनध्यवसायाख्या ज्ञानमेव, तद्वत् कार्यात्मावस्था द्रव्येन्द्रियपृथिव्यादि ज्ञानमेव। यथा निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धिवेदनीयानामुत्तरोत्तरोत्कर्षभेदावृतज्ञानशक्तेराचैतन्यविशेषस्तदा-

१ °तो ख-ग। २ °न्द्रियत्वमेव क-ख। ३ °विषेण घ। ४ अथवात° ख।

वरणापगमविशेषापादितचैतन्यविशुद्ध्युत्कर्षपर्यन्तप्राप्तसार्वज्ञ्यवद्वा चैतन्यावरण-प्रकर्षपर्यन्तप्राप्तं पृथिव्यादिज्ञानमेव, कर्मणश्चाष्टविधस्य सप्रभेदस्य पुरुषपरिणामैक्यापत्तेर्ज्ञानात्मत्वमिति चैतन्यमेव पृथिव्यादेः । अत आह–**योऽसौ पुरुषस्तदेव तत्** । द्रव्येन्द्रियपृथिव्यादि, तेनात्मत्वेन परिणमितत्वात् । को वात्र भेदः परिणामकपरिणम्ययोः? इत्याह—**तद्द्रव्यत्वात्** । स एव द्रव्यं तद्द्रव्यं सप्रभेदं कर्म । तस्मात् तद्द्रव्यत्वाद्भूम्यबादि व्रीहित्ववत् । यथा भूम्यम्ब्वाद्येव बहुव्रीहित्वेन परिणतत्वात् तद्द्रव्यत्वाद्व्रीहिर्भूम्यादिरेव भूम्यादिभिरेवात्मत्वेन परिणमितत्वाद् व्रीहिर्भूम्यादिरेव । तथा पृथिव्यादि पुरुष एव चेतनात्मकः । इतश्च योऽसौ पुरुषस्तदेव तत्, तत्कार्यत्वात् । यद्यस्य कार्यं तदेव तत्, पटतन्तुवत् । यथा तन्तूनां कार्यत्वात् पटस्तन्तुरेव, तथा पुरुष एव पृथिव्यादि पुरुषपूर्वकत्वप्रतिपादनस्य कृतत्वात् । इतश्च तेन विनाऽभूतत्वात् तदेव तत् । यद् येन विना न भवति तदेव तत् । यथा रूपादय एव पृथिव्यादयः । पृथिव्यादय एव रूपादयः । तेऽन्योऽन्यैर्विना न भूतत्वात् अन्योन्यात्मकास्तथा पुरुष एव काष्ठाद्यपि । किं चान्यत्—**तद्व्यतिरेकेणाभावात्** । यद्धि यद्व्यतिरेकेण न भवति तदेव तत् । यथा घटस्वतत्त्वस्वप्रत्ययादित्वम्[1] । **तद्देशत्वाच्च**, तस्य देशस्तद्देशस्तत्पुरुषस्यैव देशोऽवयवः स्वात्मा रथ्यापुरुषपाण्यादिवत् । तद्देशत्वं सृष्टेस्तत्पूर्वकत्वादिति हेतुः । यो यद्देशः स तत्स्वतत्त्वमेव । किमिव? घटस्वतत्त्वप्रत्ययादित्ववत् । यथा घटस्य प्रत्ययं नवमध्यपुराणता च घटस्वतत्त्वमेव, तथा पृथिव्याद्यचेतनमपि चेतनपुरुषत्वमेव । यदुक्तम्–'अचिन्त्यप्रत्ययभावामूर्तसूक्ष्मज्ञकारणरूपादिमूर्तस्थूलविपरिवर्ततत्पुरुषविपरिवर्तमात्रं पृथिव्यादि' इति युक्त्योपपादितम् । तत्रैव पुनः संसारसिद्ध्यै युक्त्योपपादनार्थं प्रस्तूयते । **चैतन्यादात्मेत्यादि, यावद्विपरिवर्तानन्त्यवत्** । चेतनभावश्चैतन्यम्, तस्माच्चैतन्यादात्मा पृथिव्यादि सुषुप्तावस्थाया विपर्ययेण वृत्तस्तत ईषद्विशुद्धावस्था इत्यर्थः । चैतन्यस्य रागादिविपरिणामात् । रागादेर्बन्धकारणत्वात् तदुपयुक्तः उपयोगस्वातन्त्र्येण । उपयोगो हि चेतना । तस्य स्वातन्त्र्यं कर्तृत्वात् । 'मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः' (तत्त्वार्थ० ८।१) इति वचनात् । रागाद्यात्मककषायविकल्पात्मकत्वान्मिथ्यादर्शनादीनाम्, तेन स्वातन्त्र्येण बद्ध्वात्मनाऽऽत्मानमस्वतन्त्रीकरोति तेनैव च स्वयं कृतेन बन्धेनास्वतन्त्रीक्रियते, मद्येनेव स्वयं पीतेन मद्यपः, स्वयं पूरितवेगया डोलयेव वा पुरुषो भ्रम्यते, कर्मडोलया कर्मबन्धेन रूपादिमत्त्वमनाद्यनन्तश्च आपद्यते । एवमेतदुभयं सन्तत्याऽनाद्यनन्तं च

१ च ग । २ °प्रत्ययाद्दित्वम् घ । ३ °यु° क–घ । ४ °प्रभावा° क । प्रत्यभा° ग ।

द्रव्यार्थतया। यथोक्तम्—'[1]पुव्विं भंते! कुक्कुडी पच्छा अंडए, पुव्विं अंडए पच्छा कुक्कुडी? रोहा! जा सा कुक्कुडी सा कुतो? अंडगाओ, जे से अंडए से कुतो? कुक्कुडीओ। एवं रोहा! पुव्विंपि एते पच्छावि एते सासया भावा। अणाणुपुव्वी एसा रोहा'! (भग०श० १, उ०६, सू०५३) इति। तथा–'[2]सव्वजीवाणं भंते! एक्कमेक्कस्स मातत्ताए पितित्ताए भातित्ताए भज्जत्ताए पुत्तत्ताए [3]दुहितित्ताए गोयमा! । असति अदुवा अणंतखुत्तो' इत्यादि। तच्च द्विविधं रूपादि सूक्ष्मं स्थूलं च, कर्मादि सूक्ष्मम्, आदिग्रहणादुच्छ्वासनिःश्वासभाषामनस्त्वादि कार्मणतैजसाहारकशरीरादि च तदात्मत्वगत्या, स्थूलं पृथिव्याद्यौदारिकवैक्रियशरीरात्मकत्वगत्या तदात्मत्वापत्त्या, एतत्प्रक्रिययैव प्रतिपादितमपि सुखग्रहणार्थं प्रतिज्ञायते । अनाद्यनन्तशः सूक्ष्मस्थूलशरीरादिरूपादिमत्त्वं प्रतिपद्यते चैतन्यमिति । कुतः? कार्यात्मत्वात्। कार्यात्मत्वं च तस्य सिद्धं रूपादिपृथिव्यादिभेदरूपेण विपरिवृत्तेः साधितत्वात्। इह त्वनाद्यनन्तशः सेति साध्यते। यो यः कार्यात्मा स सोऽनाद्यनन्तशो विपरिवर्तमानो दृश्यते। तद्यथा–मृद् घटेत्यादि, द्रव्यं मृद्भवति, मृद् घटो भवति, घटः कपालानि। ततः क्रमेण शकलशर्कराधूलिपांशुत्रुटिपरमाणवः। ततो रूपादयः। रूपादिभ्यः पुनरुत्क्रमेण परमाण्वादयो यावद्द्रव्यादित्वविपरिवर्तानन्त्यम्, आदिग्रहणाद्गुणकर्मसत्त्वादित्वेन विपरिवर्तवत्। एवं प्रकारस्य भवनस्य स्वजात्यपरित्यागरूपस्य देशकालभेदैकान्ताभ्युपगमेऽनन्तरवक्ष्यमाणदोषत्वात् । नान्यथैतदिति प्रतिपत्तव्यम्। अत्राह–नन्वेवमित्यादि, नन्विदमनादित्वात् कुक्कुट्यण्डकयोरिवानन्तत्वाच्च, कुत्सिता कुटिः कुक्कुटिरित्यर्थे कुक्कुटिशब्दस्य शरीरार्थव्याख्यानाच्च मुक्तस्यापि रूपाद्यर्थज्ञानपरिणामादविवेके चैतन्यरूपादिमत्त्वयोस्तुल्ये किमर्थं ज्ञानात्मकमित्युच्यते?। किं वा कारणं रूपादिमदात्मकमिति नोच्यते सर्वम्?। विशेषहेतुर्वा वाच्य इति, तद्दर्शयन्नाह परः–नन्वेवमनाद्यनन्तत्वे सतीति गतार्थम्। आचार्य आह–नैवं परिग्रहेऽपि कश्चिद्दोषः। किं कारणम्? अस्यैवार्थस्य [4]सिसाधयिषितत्वात्। चतुरवस्थात्मकत्वात् तस्य। तत एव रूपादिद्रव्येन्द्रियपृथिव्या-

---

१ आगमोदयसमितिद्वारामुद्रितावृत्तौ त्वेवं पाठः—'पुव्विं भंते! अंडए पच्छा कुकुडी, पुव्विं कुकुडी पच्छा अंडए? रोहा! से णं अंडए कओ?, भयवं! कुकुडीओ। सा णं कुकुडी कओ? भंते! अंडयाओ। एवामेव रोहा! से य अंडए सा य कुकुडी, पुव्विं पेते पच्छा पेते। दुवेते सासया भावा। अणाणुपुव्वी एसा रोहा!।'

छाया—पूर्वं भगवन्! अण्डकं पश्चात् कुकुटी, पूर्वं कुकुटी पश्चादण्डकम्?, रोह! तद् अण्डकं कुतः?, भगवन्! कुकुटीतः। सा कुकुटी कुतः? भगवन्! अण्डकात्। एवमेव रोह!। तच्च अण्डकं सा च कुकुटी। पूर्वमप्येते पश्चादप्येते। द्वावेतौ शाश्वतौ भावौ। अनानुपूर्वी एषा रोह!।

२ सर्वजीवानां भगवन्! मातृत्वेन पितृत्वेन भ्रातृत्वेन भार्यात्वेन पुत्रत्वेन दुहितृत्वेन, गौतम! आसन्नेवं अनन्तकृत्वः। ३ वी° क-ख। ४ °सत्ता° ग।

दिरूपः स एवोच्यते, तथा च सृष्टेः पूर्वमुक्तत्वात् । आह–चेतनाचेतनयोरैक्यापादनप्रस्तुतेज्ञः पुरुषस्तन्मयं चेदम् । स एव स्वतन्त्रो भवतीति च विशेषज्ञग्रहणं स्वतन्त्रग्रहणं च किमर्थमिति ? । आचार्य आह–तथा हीत्यादि भावयिष्यते, भवतीति भाव इत्युक्तम्, भावस्वरूपदर्शनार्थं तु यो भवति स वाच्य इति ग्रहणं तदपि तथा हीत्यादिना च । एवं च कृत्वा यत् प्रागुक्तं 'देशकालभेदभवनाभावदोषे वक्ष्यमाण' इति तत्परिहारेण ज्ञस्यैव भवनस्योपपत्तेस्तदन्वयाच्च सर्वदेशकालात्मकस्य भिदा देशकालाभ्यां भवनं सिद्ध्यति । तथा हि–वस्तु भवतीति शक्यं वक्तुम्, तद्भिन्नेत्यादि, देशकालभिन्नपृथिव्यादिभेदभूतपदार्थपरिग्रहे तु, अन्यथा तु घटभवनं यदेतत् प्रत्यक्षसंप्रसिद्धं तदपि न सिद्ध्यति । तत् कथम् ? देशभेदप्रत्ययेन तावदित्यादि । ग्रीवापृष्ठकुक्षिबुध्नौष्वा(!)दीनां देशभिन्नानां कपालशकलादीनां च यावत् परमाणुशो रूपादिशो निरुपाख्यत्वशश्च भेदाभावे घटभवनं न सिद्ध्यतीति वर्तते । एवं न श्वेतिकापीतिकाद्येकदेशभावे मृत् अश्मादिभेदान्न पृथिवी, पृथिव्यप्तेजोवाय्वादिभेदान्न द्रव्यम् । गुणकर्मभेदाद्वेति । तदेव हि द्रव्यं रूपगमनादिगुणकर्मभेदाद् यावन्निरुपाख्यत्वभेदात् समुदायाभावाच्च सम्बन्धाद्द्रव्यं द्रव्यादिभेदात् । द्रव्यगुणकर्मनानात्वान्नैकं सत्त्वम् । एवं तावद्देशभेदे घटभवनं न स्यात् द्रव्यादीनामनुपपत्तेः, कालभेदाप्रत्ययेनापि प्रतिक्षणमव्यपदेश्यभवनात् कतरद् घटभवनम् ? क्षणे क्षणेऽत्यन्तमसम्बद्धायःशलाकाकल्परूपाद्यात्मकत्वानुपपत्तेः । किं कारणम् ? मृद्भूतव्रीह्याद्यम्ब्वादि कालभिन्नभावभेदे मृदभावात् । अस्मन्मतेनामृद्भूतो व्रीह्यादिरम्ब्वादिश्चैक एव । कालान्तरावस्थाने सति तत्परिणामोपपत्तेः । त्वन्मतेन तु कालभिन्नभावभेदे क्षणे नवनवार्थासम्बन्धाद्भावभेदे व्रीहिरेव विनष्टो मृन्न भवति । न चोदकादि विनष्टं मृद्भवतीति निर्बीजत्वान्मृदभावः । मृदभावाच्च को घटः ? भवनं वा किं स्यात् ? । अस्माकं तु सामान्यान्वयाद्व्रीह्यादय उदकादय एव वा मृद्भवति घटो भवतीत्यादि युज्यते, परतोऽपि कपालादिपांशुव्रीह्यादिभूतेः । घटभवनात् परतोऽपि घट एव कपालादिर्भवति । कपालादेरपि परतो यावच्छर्कराभवनात् पांश्वादेरपि परतो व्रीह्यादेर्भवनात् । तस्माद् घटादिसर्वात्मकमेव भवति । न चेदेतदिष्यते एवं प्रकारकं भवनं, तत एवं घटादिसर्वात्मकस्यैकस्य देशकालव्यापिनः सत्त्वस्याभावात् । त्वन्मतेनैव प्रत्येकत्वस्य चेष्टस्य त्वया इतरेतरासत्त्वात्मकत्वात् कुतो भवनम् ?, भवितुर्घटादेर्घटः पटात्मना नास्ति, पटोऽपि घटात्मनेति देशतः । कालतश्च प्राक् पश्चाद्वा स एवेति न घटोऽस्ति । न घटं इति प्रत्येकं भिन्नत्वे भावानामभावात् को घटः ? किं वा भवनम् ? यथानुरूपादीत्यादि, यावदस्मदुपवर्णनवदेवाभिहितं भवति, यैश्च वर्ण्यते 'विज्ञानमात्रत्वं देशभेदाद् घटो भिद्यमानो

---

१ विशेष्य ज्ञ° क-ख । २ त्रिद्यादे° ग-घ । विद्या क-ख ।

रूपादिभेदेन भिद्यते यावन्निरुपाख्यश:, कालभेदेन च भिद्यमान: परमनिरुद्धक्षणोत्पत्तिविनाशनिरुपाख्यशो भिद्यते' इति, तै: सर्वभेदपर्यन्तं भेदं विधायापि विज्ञानमात्रमेव नान्यत् किञ्चिदिति व्यवस्थाप्यते। यथा तु तद्व्यवस्थाप्यते तथास्मदुक्तवदुपवर्णितमभिन्नमेकं विज्ञानमित्युक्तं भवति। ततश्च रूपरसादिघटपटादि विश्वभेदात्मकत्वात् तस्य रूपादे: परस्परविविक्तत्वे तु तद्विज्ञानान्वयाभावाद्रूपरसादिभेदपरिकल्पनाभावस्तदंशकल्पनाभावो निरुपाख्यत्वकल्पनाभाव इति विज्ञानमात्रता न भवति। अथ कश्चिद् ब्रूयात् तदपि विज्ञानं सत् सर्वभावशून्यत्वादित्येतच्चायुक्तम्। ज्ञानस्यापि त्वभावाभ्युपगमे **रूपाद्यपलापबीजनिरूपणादिनिर्मूलत्वात् प्रत्यक्षादिविरोधा:।** रूपादयो न सन्तीति यदपलापबीजं निरूपणं तदपि नास्तीति निरूपादिप्रतिषेधो न सिद्ध्यति, प्रत्यक्षतश्च स्वानुभवेन रूपस्य निरूपणमुपलभ्यते प्रतिस्वम्। आदिग्रहणादास्वादनघ्राणस्पर्शनश्रवणानुभवा उपलभ्यन्तेऽत: प्रत्यक्षविरोध:। तदनुसरणदर्शनादनुमानविरोध: आदिग्रहणात्, अनुसरणं हि स्वयमनुभूतस्यार्थस्य नाननुभूतस्य। तस्मादवश्यमात्मा ज्ञानस्वभाव एक: सर्वभावव्यापी विपरिवर्तमानोऽवस्थित: कारणमिति सिद्धम्, अत एवोक्तवदित्यादि। एतस्मादेवात्मव्याप्तिविपरिवृत्तिव्यवस्थितत्वाद्धेतोरुक्तेन तुल्यमुक्तवत्। रूपादीनां तत्त्वात्। रूपेणात्मकत्वात् ज्ञानस्वभावात्मावस्थाविशेषमात्रत्वात्। सर्वत्र सर्वभावेषु एष विशेषस्तस्यैव कारणपदार्थस्योपकारविशेषेभ्योऽपरो द्रष्टव्य:। सन्निपत्योपकारिणी बुद्धिरात्मन: साक्षादव्यवहिता भावानां स्वपरिवर्तविशेषाणामुपभोगे, भोक्ता तु स्वयमेव स्वपरयोरारादिन्द्रियाणि करणत्वाद् दूरात् प्रकाशादयोऽनुग्राहका:। इन्द्रियाणां दवीयांसस्तु रूपादयो,दविष्ठा घटादय:। औषधा व्यञ्जनादीनि इन्द्रियाणां पाटवजननादुपकार्युपकारित्वेन तदुपोद्बलकराश्चाहारा: सर्वभावगतासु ज्ञानवृत्तिष्विति। अत आह— **सर्वत्र सन्निपत्याराद्दूरादुपकारित्वेभ्यो** हेतुभ्य आत्मबुद्धीन्द्रियप्रकाशरूपघटौषधाहारादिषु ज्ञानवृत्तिर्भवतीति। अत्राह—**चेति ज्ञापकमेतस्मिन्नर्थे,** पूर्वोक्तमेव जैनैर्वक्ष्यमाणज्ञापकार्थमेकोऽहमनेकोऽप्यहमित्यादिकमतोऽपि लौकिकस्तदनुसारेणाह। न समहिम्नेति। पुरुष एवेदमित्यादि। एवेत्यवधारणे। भवितुरन्यस्याभावादुक्तवत् तस्यैव च भवनात्। इदमिति दृश्यस्पृश्यादीन्द्रियगोचरं लिङ्गगम्यं वा निर्दिशति सर्वमित्यशेषम्। तस्यैव सामान्यविशेषभेदप्रभेदानन्त्येऽपि सङ्गृहीतं बुद्ध्या, इदं च देशत: प्रदर्शनमिदं सर्वमिति। कालतस्तु भूतं भाव्यमिति अतीतानागतवर्तमानानां प्रदर्शनम्। भूतशब्दस्य वर्तमानातीतवाचित्वात्। उत पश्य प्रेक्षस्वेत्यर्थ:। अमृतत्वस्याक्षयत्वस्य ईशान: प्रभविता, स ह्यक्षयोऽजरोऽमर: पुरुष:,

१ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ऋ०वे०पु०सू०

ज्ञानस्याविनाशित्वात् । सोऽक्षयत्वमनुभवतीत्यर्थः । यथोक्तं—'अक्खरस्स[1] अणंतमो भागो णिच्चुग्घाडिओ सव्वजीवाणं' इति ( नन्दीसूत्रे पृ० १९५–२ ) । तद्व्याख्याननिदर्शनं च–'तंपि[2] जदि आवरिज्जिज्ज तेण जीवो अजीवयं पावे ॥' ( नन्दीसूत्रे पृ० १९५–२ ) । 'सुट्ठुवि[3] मेहसमुदए होइ पभा चंदसूराणं' इति ( नन्दीसूत्रे पृ० १९५–२ ) । यदिति यस्मात् कारणात् । अन्नेनातिरोहति । अद्यते[4] भुज्यतेऽश्यत इत्यन्नम्, पुद्गलद्रव्यं तेनैवात्मनानाद्यनन्तशोऽपि विपरिवर्तितत्वात् । तेनान्नेनासावतिरोहति वर्धते उपचीयते । तत्स्वारूप्याद्बालक इव नवनीताहारेण, तेन ज्ञानक्रिययोपष्टम्भोपलम्भात् करणकायविवृद्धेश्च । यथोक्तम्–'अन्नं वै प्राणाः', 'अन्नमयो ह्ययं पुरुषः ।' पुरि शयनात् पुरुषः । नाज्ञस्यैतत् सर्वं घटते, अतिरोहति भृशं रोहतीति । किं चान्यत्—अत एवेत्यादि । एतस्मादेव कारणात् सर्वत्वसिद्धिः । तस्य तत्त्वज्ञानस्वरूपस्य । तया च पुनः सर्वत्वसम्प्रसिद्ध्या आत्माद्याः ख्याताः । सततमतति गच्छति जानीते परिणमतीति चात्मा । सतो भावः सत्त्वं, स एव सन् भवति चेत्यर्थः । भूतस्तथा सदा भवतीति वा । पुरि शयनात् पुरुषः, शरीरे जगति वा स्वविजृम्भितविकल्पात्मके पूरणाद्गलनाच्च पुद्गलः, पुमांसं गिलतीति वा पुद्गलः । जीवशरीरतया विभज्य भोक्तृभोज्यभावाद्वृद्धिहानिभ्यामुत्पत्तिविनाशाभ्यां पूरणगलनाभ्यामित्यर्थः । जायते तैस्तैर्भावैरिति जन्तुः,पञ्चेन्द्रियमनोवाक्कायबलायुरुच्छ्वासनिःश्वासाख्यदशप्राणधारणात् प्राणी जीव इति चोच्यते, इत्येवमाद्यभिख्याः सर्वत्वे सति घटन्ते, तेन तेन धर्मेण व्यपदेशाविरोधात् । **मृदनुत्तीर्णघटपीठरादिवत्** । यथा मृदोऽनुत्तीर्णा घटपीठरादयो भवन्ति सन्निवर्तन्त इत्यादिभ्यो भ्वस्त्याद्यर्थेभ्यो नोत्तरन्ति भवनानुत्तरात् सर्वधातूनां भवत्याद्यर्थत्वात् । एवं ज्ञानस्वरूपः कर्ता भवत्यस्ति वर्तते ज्ञानस्वरूपभवनानुत्तरात् । अत आह–'भ्वस्त्यर्थादिभ्यः । सर्वस्यानुत्तरादस्तिभवतिविद्यतेपद्यतिवर्ततयः सन्निपातषष्ठाः सत्तार्थाः स्वादयश्च सर्वधातवस्तदर्थं नातिवर्तन्त इति' । यावदेव किञ्चिदुत्पद्यते विनश्यति व्यवस्थितं वा तस्य सर्वस्यासावात्मा स्वरूपं तत्त्वमित्यर्थः । इति पर्यायैः स्वरूपोपनयनम् ।

स्यान्मतम्-स्वात्मनि वृत्तिविरोधात् कथमात्मानात्मानं सृजत्युपसंहरति च बध्यते मुच्यते च ? न ह्यङ्गुल्यग्रं स्पृशति, नासिरात्मानं च्छिनत्ति इत्येतच्चायुक्तम्, शक्तिभेदात् कारकभेदोपपत्तेः, तन्तुवायकोशकारककीटवच्च । तदात्मका एवैते संहारविसर्गबन्धमोक्षाः । यथा तन्तुवायकीटः स्वशरीरजयैव लालया तन्तुं प्रसारयत्युपसंहरति च न चान्यतः कुतश्चित् तथात्मन एव संहारविसर्गौ ।

---

१ अक्षरस्यानान्तमो भागो नित्योद्घाटितः सर्वजीवानाम् ।   २ सोऽपि यदि आव्रियते तेन जीवोऽजीवत्वं प्राप्नुयात् ।   ३ सुष्ठ्वपि मेघसमुदये भवति प्रभा चन्द्रसूर्ययोः ।   ४ अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति । तैत्तिरीयो० व. २ अ. २

उक्तं हि—

यथोर्णनाभिः सृजते गृह्णते च । यथा पृथिव्यामौषधयः संभवन्ति ।
यथा सतः पुरुषात् केशलोमानि' ( मुण्ड० १।१।७ ) इति ।

अथवा—

'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा भवन्ति' ( मुण्ड० २।१।१ )
'तथाक्षरात् सम्भवतीह विश्वम् ।' ( मुण्ड० १।१।७ ) इति ।

बन्धमोक्षावपि । यथा कोशकारकीटकः आत्मानं वेष्टयति स्वं शरीरविनिर्गतेन कोशेन पुनश्च तत्रैव प्रलीयते, कश्चिच्च कोशकं च्छिद्रीकृत्य निर्गच्छत्येवमात्मनो बन्धमोक्षौ, नान्यत इति । किञ्चान्यत्–यथा च सुदीप्तादित्यादि । अयमपि दृष्टान्तोऽग्निस्वतत्त्वानतिवृत्त्या विरूपसम्भवात् पुरुषस्य तत्साधर्म्यप्रदर्शनार्थम् । यथा त्वाह–यथा सुदीप्तात् पावकादित्यादि । एवं तावत् पुरुष एव सर्वमित्युक्तम् । स एवोच्यते । कालोऽपि स एव । ज्ञत्वात्, कलनात् कालः, 'कल संख्याने' कलनं ज्ञानं संख्यानमित्यर्थः । यथा चाहुरेके–'कालः पचति भूतानि०'[1] इति श्लोकः । प्रकरणात् प्रकृतिः, स एवेति वर्तते । सत्त्वरजस्तमः स्वतत्त्वात् प्रकाशवृत्तिनियमार्थाद् गुणानामात्मस्वतत्त्वविकल्पने च भोक्ता । प्रकुरुत इति प्रकृतिः ।

यदाहुः—

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥' (श्वेताश्व० ४।१।५)

इति । रूपणान्नियमनान्नियतिः, रूपणाच्चक्षुषो विषयो रूपमेव न रसादयः । रसनाद्रसो, रसनविषयो न रूपादय इत्यादि । नियमनान्नियतिः, स्वो भावः आत्मनैव स्वेन रूपेण भवनात् स्वभावः । '[2]कः कण्टकाना'मित्यादि । येन हेतुना यत्र क्षेत्रे यथा येन प्रकारेण यस्मादाश्रयाद्वस्तुनः । यदा यस्मिन् काले यदर्थं च यत् प्रयोजनमुद्दिश्य प्रवर्तितव्यं तेन तत्र तथा तस्मात्तदा तदर्थं च प्रवृत्तिस्तथा राज्ञा ज्ञप्तः सूपकारः स्थाल्यामोदनं कुशूलात् तन्दुलानाकृष्य मृदुविशदमोदनं पेयां[3] वा यत्नपूर्वकं क्षुत्प्रशमनार्थं च पचतीति तत्पुनः प्रवर्तनम् । तदन्तरं चैतस्य न ततो व्यतिरिक्तं बहिर्भूतम् । स एव हीदं स एव पुरुषो यस्मादिदं सकलजगद्वृत्तं ततः प्रसृतं नानाभेदेन विवर्तमानमविवृत्तं च तत्स्वरूपापरित्यागात् । बहुधानकं बहुधानाश्रयः चेतनाचेतनादिप्रभेदा रूपमस्येति चेतनाचेतनादिप्रभेदरूपं यच्च यच्चेतनं नरतिर्यगमरनारकादि तत्प्रभेदाश्च रूपमस्य, काष्टकुड्यघटपटाद्यचेतनं च सप्रभेदमस्य रूपमन्वाह

---

१ पूर्णः श्लोकस्त्वेवम्—कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥—( शा. वा. १६६ )

२ कः कण्टकानां प्रकरोति तैक्ष्ण्यं ? विचित्रतां वा मृगपक्षिणां च ? ।
स्वभावतः सर्वमिदं प्रवृत्तं न कामचारोऽस्ति कुतः प्रयत्नः ? ॥

३ पेयात्यैपू° क-ख ।

चेति, जैनमतानुसारेणैवेत्यर्थः । तदेजति चलति स्पन्दते, नैजति न चलति न स्पन्दते, तद्दूरे तिर्यग्लोकेऽधोलोकेऽलोके च । तदुपान्तिके तदेकस्मिन् प्रदेशे दृश्यस्पृश्यादि तदन्तरस्य घटपटादेः सर्वस्य वस्तुनः साकारानाकारोपयोगलक्षणस्यात्मनस्तत्परिणतेरप्रतिघातात् । तदु सर्वस्य बाह्यतः तस्यैवालोकेऽपि सद्भावात् । सर्वस्यास्येति लोकगतभावनिर्देशात् तस्य बाह्यमलोक इति । 'अर्हण् बोधने'इत्यादेः विशुद्धिप्रकर्षविशेषाद्देवता अपि स एव । अर्हति सर्वलोकातिशयपूजां इत्यर्हन् । बुद्ध्यत इति बुद्धः । वर्धनाद्बृहत्त्वात् ब्रह्मा । वर्धमानो वा । व्याप्नोतीति विष्णुः । ज्ञानात्मनैव सर्वानर्थान् ईशनादीश्वरः । एतेभ्यश्च ज्ञानविशुद्ध्युत्कर्षभेदेभ्यस्तत्पर्यन्तप्राप्तेर्यावदर्हन्नपि भवतीति सम्भाव्यते । दुःप्रापत्वादार्हन्त्यस्य सम्भावनयोच्यते, शेषपदप्राप्तिषु सुलभैवेति । तामपि च दुरापां सर्वज्ञावस्थां परमविशुद्धां परमार्थाख्यां स एव प्राप्तुमर्हतीति । एवं विधिविधिनयविकल्पः पुरुषवादः ॥

अधुना नियतिवादो विधिविधिनयदर्शनाश्रयोऽभिधीयते–'सत्यं भवनं कर्तु'रित्यादि । सत्यं–युक्तमेतदुच्यते त्वया तत्र भवनस्वातन्त्र्यमुपलभ्यमानं पञ्चविधं शक्यमपह्नोतुम् । किं कारणम् ? भवनस्य क्रियात्वात् । या क्रिया सा भवितुरेव घटादेः परमाण्वादेर्वा, यथा पचिक्रिया पक्तुरेव भवति । स्वतन्त्रस्य भवनमपि च क्रिया क्रियात्वात्, भवित्रा विना न भवति पचिवत् । भविता च कर्ता स्वतन्त्रः कर्तृत्वादेव । न केनचिदसौ भाव्यते कार्यते क्रियते वा स्वातन्त्र्यात् कर्तृत्वात् । यत्तु स ज्ञ इति सम्प्रधार्यमेतत् । यत्पुनरुच्यते स्वातन्त्र्यात् कर्ता ज्ञ एवेत्यवधार्यम्, तत्र त्वया सहैतत् सम्प्रधार्यं विचार्यमस्ति, सौर्वज्ञ्यमेवेत्ययुक्तमित्यभिप्रायः । किं कारणमयुक्तम् ? सर्वज्ञस्यैव भवनाभ्युपगमे दोषदर्शनात् कर्तृत्वात् स्वातन्त्र्यमस्ति, को वारयति स यदि ज्ञः स्वतन्त्रश्चेत्युभयगुणसम्पन्न इष्यते ? । यदि ज्ञः स स्वतन्त्रोऽपि स्यात् नात्मनोऽनर्थमनिष्टमापादयेत्, ज्ञत्वे सति स्वतन्त्रत्वात् । को दृष्टान्तः ? विद्वद्राजवत् । यथा हि दैवपुरुषगतिज्ञो देशकालसहायसाधनसम्पन्नः पराक्रमवान् राजा नात्मनोऽनर्थमनिष्टं मरणपराजयादिकमापादयति, एवमसावपि नात्मनोऽनर्थमनिष्टमापादयेत् । दृष्टस्त्वयमनर्थोऽनिष्टो जन्मजरामरणरोगशीतोष्णादिः शारीरः मानसश्च शोकभयविषादेर्ष्याऽसूयादिस्तस्मादयुक्तमस्य ज्ञत्वमित्येतच्च न, निद्रावदवस्थावृत्तेरित्यादि नैतदुपपद्यतेऽनर्थानिष्टापादनानुत्पत्तिर्ज्ञस्यात्मन इति । कस्मात् ? निद्रावदवस्थावृत्तेः । निद्रावत्यवस्था निद्रावदवस्था तया वृत्तिर्निद्रावदवस्थावृत्तिस्तस्या वृत्तेः पुरुषताया एवास्वातन्त्र्यात् । ज्ञस्यापि स्वकृतनिद्राव-

---

१ सन्तुल्यताम्—'तदेजति तन्नैजति तद् दूरे तद्वदन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥' ईशावास्योपनिषद् १।५। २ पूजायाम्° इति सि० है० । ३ सर्वज्ञतैवे° क ।

स्थावृत्तिवशादस्वातन्त्र्यादाहितवेगवितटपातवत् । यथा कश्चित् पुरुषः स्वयमेव पूरितवेगस्तं वेगं निवर्तयितुमशक्तो वितटे पतति, तथा स्वतन्त्रमपि ज्ञमपि तत्परं कारणमात्मनोऽनिष्टमनर्थमापादयेत् । को दोषः ? । इत्यत्र कुतूहलं चेद् दोषं ब्रूमः । **ननु तज्ज्ञत्वेत्यादि** । नन्वेवं त्वया निद्रावदवस्थावृत्तिवशादाहितवेगवितटपातवदवस्थास्वातन्त्र्यादनर्थानिष्टापादनमिति ब्रुवता तज्ज्ञत्वाद्ययुक्ततैवैषा समर्थ्यते । तेनानया पूरितवेगया शीघ्रगमनक्रियया वितटपातो भविष्यतीत्यज्ञातत्वात् । ज्ञातत्वे वितटपातः स्वतन्त्रस्य नोपपद्यत इति स एव दोषस्तस्मात् तदवस्थमयुक्तत्वम् , **युक्तत्वाभिमतत्वेऽपि चेत्यादि** । यद्यपि स्वातन्त्र्यज्ञत्वाविनाभाविभवनबलोपबृंहितमात्ममयत्वमेवास्य सर्वस्य मन्यसे[1] तथापि त्वयमेव नियमः कर्त्रेतरत्वापादनाय, भवतीति वाक्यशेषः । कथं कृत्वा तद्भाव्यत इति चेत् ? उच्यते, भवति कर्तेति प्रागभिहिताक्षरार्थन्यायं तदीयमेवोच्चारयति । **यावदचेतनोऽपि भवतीति**, त्वयैव कारणान्तरास्तित्वमेवं ब्रुवता समर्थितं भवति किञ्चिदासामवस्थानाम् । स चाधिवज्ञाज्ञस्वतन्त्रास्वतन्त्रस्वविषयनियतकर्तृकरणाधिकरणकर्मादिनियतशक्तिदर्शनात् । देवदत्तकाष्ठस्थालीतन्दुलोदकादीनां तन्नियमकारिणा कारणेनावश्यं भवितव्यम् । किं कारणम् ? **तेषां तथाभावान्यथाभावाभावात्** । देवदत्तोऽधिश्रयणोदकसेचनतन्दुलावपनवपनोत्कर्षापकर्षणादिव्यापारस्वातन्त्र्य एव नियतो न ज्वलनसम्भवनवारणविक्लेद्यादिव्यापारस्वातन्त्र्ये, एवं तेषामपि काष्ठादीनां कारणादिस्वव्यापारविषयस्वातन्त्र्यनियमस्तथाभावः, तेषामेव कारणानां स्वव्यापारविपरीतशक्तिः परस्परतोऽन्यथाभावः । तयोस्तथाभावान्यथाभावयोरभावादभावप्रसङ्गादिति यावत् । दृष्टौ चेमौ तथाभावान्यथाभावौ तस्मान्नियतत्वान्नियमकारिकारणापेक्षनियमा एव भावाभावौ, तस्मान्नियतत्वान्नियमकारिकारणापेक्षनियमा एव स्तश्च कारणम् । नान्यदतो भवितुमर्हति नियतेरित्यत आह–**इति नियतिरेवैका कर्त्री** । इतिशब्दो हेत्वर्थे । अस्माद्धेतोर्नियमकारिकारणाविनाभावाद्भावनियमस्य नियतिरेवैका कर्त्रीत्यस्तु निर्दोषा कल्पना । कथम् ? **यस्मात् न हि तस्यां कदाचित् कथञ्चित्तदर्थान्यरूपमेकत्वं व्याघातिज्ञानात्मकैककारणवादे पृथिव्याद्यचेतनमकारणानुरूपमित्यस्ति** । व्याघातावस्थासु चतसृष्वपि कल्पितासु कारणपूर्वत्वाभ्युपगमात् कार्याणाम्, न हि नियतेर्नियममात्रस्य कर्ता भावानां सारूप्यवैरूप्यभेदेऽपि व्याघातोऽस्ति । कदाचिदिति व्यवस्थान्तरेऽपि । कथञ्चिदिति प्रकारान्तरेऽपि । तस्मात् कारणैकत्वेऽपि वैरूप्यदोषपरिहारसमर्थत्वान्नियतिकारणकल्पना श्रेयसीति । **अत्राह चेति** जिनवचनोपजीविनमेतदपि, ज्ञापकं पूर्ववत् ।

---

१ °ते ग । २ °त्रा ग । ३ °यपनैवोपनैवो° ग । ४ °न्वा° क–ख ।

'प्राप्तव्यो नियतिबले'त्यादि । कृतेऽपि यत्ने कार्यविपत्तिदर्शनात् । अकृतेऽपि नित्यादिदर्शनसम्पत्तिदर्शनात् कार्यस्य कारणानुरूपगुणस्तद्वैरूप्यविरोधपरिहारसमर्थोऽस्ति । किमयमेव गुणोऽन्योऽप्यस्ति ?, अस्तीत्युच्यते । कतमोऽसौ ? अयत्नप्रतिपाद्यतागुणः, स च मूर्ताद्ययुक्तविरुद्धधर्मापत्तिपरिहारेणेति, तद्दर्शयति—न च मूर्तामूर्तेत्यादि, यावद्यत्नप्रतिपाद्यमस्तीति तत्रोपपत्तिः । उभयथा तथाप्रविभक्तेत्यादि, यावन्नियतेः । तेन तेन प्रकारेण तथा तथा मूर्तत्वेनामूर्तत्वेन, चेतनत्वेनाचेतनत्वेन सौक्ष्म्येण स्थौल्येन च ऐश्वर्येण दारिद्र्येण चेत्यादिना प्रविभक्तानामर्थानां सर्वं वस्तु ज्ञेयं सदर्थ इत्यादिना चाप्रविभक्तानां सर्वेषामर्थानां यथातथाभावो याथातथ्यं तेन याथातथ्येन । तस्य तस्यार्थस्य सर्वस्य नियतस्य नियमेन तिष्ठतः प्रयोजकत्वं हेतुकर्तृत्वं स्थापनम् । तच्चैकरूपमेव सर्वत्र तस्या नियतेः । तस्माद्धेतोस्तथा तथा प्रविभक्तसर्वार्थयाथातथ्यां स्थापनैकरूपत्वान्नियतेर्नेदानीं नियमनमात्रैकव्यापाराया नियतेर्हेतुत्वप्रतिपादनाय यत्नः कश्चिदास्थेयः । प्रयत्नसाध्येष्वर्थेषु कृतकेष्वपि च तद्विषयक्रियाफलस्य तथानियतेर्व्यापिता नियतिकारणत्वस्य । स्यान्मतम्—नियतिनिबद्धत्वात् सर्वभावानक्रियाक्रियाफलयोरनियम इति तत्र भवति तद्विषयस्य घटादिविषयस्य मृत्पिण्डदण्डचक्रादिसाधनस्य प्रयत्नसाध्यस्य घटात्मनिर्वृत्तिरूपस्य क्रियाफलस्य तेन प्रकारेण नियतेर्नियतिरेवात्र कारणमिति ।

इदानीं तस्या नियतेः स्वरूपं चिन्त्यते—किं तावत् तेषामेव भावानां स्वं स्वं रूपं प्रति प्रतिभावं भिन्ना नियतिरुच्यते, उताभेदा सेति ? अत्र परमार्थतः अभेदासौ कारणं जगतः, नास्या भेद इत्यभेदा । कस्मात् ? भेदबुद्ध्युत्पत्तावपि परमार्थतः अभेदात् । अथवा कोऽसौ भेदो नाम नियतेरपि ? क्रियासाध्यसाध्यार्थरूपत्वभावानां नियम इति । चेतनाचेतनत्वादिबुद्ध्युत्पत्तावसत्यां परमार्थतो नियतिरित्येवाभिन्नत्वादभेदा । भेदबुद्धिस्तु तद्विकल्पमात्रभावापेक्षा, किमिव ? बालादिभेदपुरुषत्ववत् । यथा बाल्यकौमारयौवनमध्यमावस्थाभेदबुद्ध्युत्पत्तावपि पुरुषत्वमभिन्नमेवं नियतिरपि क्रियानियतफलभेदबुद्ध्यादिभेदेष्वभिन्नेति । आह—कथं परमार्थतो नास्ति भेदो भेदबुद्ध्याभासभावेऽस्याः ? दृश्यमाने हि भेदबुद्ध्याभासभावे किञ्चित् क्रियया

---

१ प्राप्तव्यो नियतिबलाश्रयेण योऽर्थः सोऽवश्यं भवति नृणां शुभोऽशुभो वा ।
भूतानां महति कृतेऽपि हि प्रयत्ने नाभव्यं भव्यं भवति न भाविनोऽस्ति नाशः ॥
सत्यं पिशाचाः स्म वने वसामो भेरीं कराग्रैरपि न स्पृशामः ।
अयं च वादः प्रथितः पृथिव्यां 'भेरीं पिशाचाः किल ताडयन्ति' ॥

२ नियमा° क-ख । ३ वा ग । ४ °वसत्यां घ ।

साध्यं किञ्चिन्नेति। किञ्चित् स्वत एव किञ्चित् परत इति। अथवा परमार्थतस्तु भेद एवास्तु सत्यप्यभेदबुद्ध्याभासभावे सतीति। आचार्यो द्विधापि चोदिते परिहारमाह—कथमित्यादि, यदि भेदोऽभिमतः तत्र कथं परमार्थतो भेदः?। अभेदबुद्ध्याभासभावेऽप्यभेदाभ्यनुज्ञानात् त्वयैवाभेदवदाभासते भेद एवेति। अथाभेद इष्टः, कथमभेदः?। भेदबुद्ध्याभासभावेऽप्यभेदाभ्यनुज्ञानादेव। यद्येकान्तबुद्धिस्त्वन्मते[1] परमार्थविषयत्वे वदा तदाभासा द्विधापि चाभेदस्याभ्यनुज्ञानादेवाऽभेदा सेति गृह्यताम्। किमिव? व्यवच्छिन्नस्थाणुपुरुषत्ववत्। परमार्थतः स्थाणुरेव वा पुरुष एवेति व्यवच्छिन्ने वस्तुनि यथोर्द्ध्वतासामान्यस्याभेदस्य दर्शनादभेदः, एवं सर्वनियतिषु क्रियाक्रियाफलरूपास्विति। सा पुनर्नियतिर्भेदादभेदरूपा कस्मादिति सकारणं स्वरूपनिरूपणमस्या उच्यते—सा चेत्यादि। सा च नियतिस्तदेव सर्वनियतिषु तस्या एवाविशेषात्। अतश्च[2] क्रियाक्रियानियत्यादिवैलक्षण्यात् आसन्ना प्रत्यक्षोपलभ्येष्वर्थेषु प्रत्यासत्त्या नियतत्वात्। अनासन्ना कार्यानुमानागमगम्येषु दूरत्वात्। इह च स्वर्गादिषु च तथा नियतेरासन्नानासन्ना च। किं कारणम्? तस्या एव तदतदासन्नानासन्ननानावस्थद्रव्यदेशादिप्रतिबन्धभेदात्, सा च सा च आसन्नानासन्ना च नानावस्था येषां ते तदतदासन्नानासन्ननानावस्था द्रव्यदेशादयस्तैः[3] प्रतिबद्धाया एव नियतेर्भेदाद् द्रव्यादित्वेन, आदिग्रहणात् कालभावाभ्यां च, सैव नियतिर्द्रव्यतो घटरूपेण सा भवति। पटरूपेण सा घटान्तरस्यासन्ना आकारप्रत्यासत्त्या पटाकारेण प्रत्यासन्ना। क्षेत्रतो यस्मिंश्चक्रमूर्द्धनि क्रियते तस्मिन्नेव यत्र वा भूप्रदेशे तिष्ठति ग्रीवादिदेशे वा तत्रैव नान्यथेति। कालतो यावत्कालेन निवर्तते यावन्तं वा कालं तिष्ठति सा कालनियतिः। भावतो यैर्वर्णैः कृष्णादिभिर्यथा भवति तथैवेति नियतिरेवं द्रव्यदेशादिप्रतिबद्धभेदाद्वस्तुविरचना नियत्येकत्वेऽपि। किमिव? मेघगर्भवत्। यथा मेघा गर्भं गृह्णन्तः यादृग् यावच्च जलं गृह्णन्ति यथा च तादृक् तावत्तथैव विसृजन्ति द्रव्यतः, क्षेत्रतो यत्र गृह्णन्ति देशे तत्रैव विसृजन्ति। कालतो मार्गशिरोमासे गृहीतं वैशाखे विसृजन्तीत्यादि। भावतो यथा गृहीतं क्षारमधुरादि तथैव विसृजन्ति। सत्त्वौषधिवनस्पतिशोषपोषकरादीति। तदुपसंहरति–'नाभाविभावो न च भाविनाशः' इति प्राक्तनेन वृत्तेन गतार्थम्। स्यान्मतम्–अयं नियमः कालात्, कालस्य क्रमाख्यत्वाच्च पूर्वोत्तरादिकालक्रमनियतपरिणामत्वाच्च भावानामिति, एतच्च न कालादयं विचित्रो नियमः। कस्मात्? वर्षारात्रादिष्वपि क्वचिदनियतप्रवृत्तेः। दृश्यते ह्यङ्कुरकिशलयपत्रपुष्पफलगर्भप्रसवादिव्यभिचारो वनस्पत्यादीनां सत्त्वानां च स्वतः प्रयोगतश्च वर्षाशरद्धेमन्तशिशिरवसन्तनि-

१ °तेन ख। २ एतश्च घ। अतश्च क–ख। ३ °दयश्चतु° क-ख।

दार्घेषु स्वपरिणामकालेष्वप्रवृत्तिदर्शनादस्वकालेषु च क्वचित् प्रवृत्तिदर्शनात् । यद्यपि मन्येत स्वभावादिति । तत्र च **स्वभावादित्यादि, यावदभ्युपगमविरोधः** । वनस्पतिसत्त्वादेर्बाल्यकौमारयौवनस्थविरावस्थाः, सर्वोऽसावस्य स्वो भावः स्वभाव इत्यतः बालादिकाल एव युवताद्यवस्था युगपत् स्युः, न च भवन्ति तस्माद्बालकाल एव युवादियुगपदभावे भेदक्रमेण नियतानां तासामेवावस्थानामुत्पत्तेः स्थितेः च्युतेश्च दर्शनान्न स्वभावः कारणम् । किं तर्हि? नियतिरेव कारणमभ्युपगन्तव्यम् । तथा तु तेन हेतुना तेन प्रकारेण दृष्टोत्पत्त्याद्यवस्थाभेदक्रमनियमेन तत्तथा नियतिरस्तु, तदनभ्युपगमे सर्वाविवेके सर्वावस्थानामविवेकेऽभ्युपगम्यमाने स्वभावाद्यभ्युपगमे सति ता अवस्था न स्युः । ते चावस्थारूपाः स्वभावा न स्युर्देवदत्तादेर्बाल्यादौ सुप्ताद्या वा, ततोऽवस्थास्वभावाद्यभावादभ्युपगत एव स्वभावो न स्यात् । ततोऽभ्युपगमविरोधस्ते जायते स्वभाववादिनः । आदिग्रहणात् तत्तदवस्थासहवर्तिनः पाण्याद्यवयवस्वभावस्य रूपादिबाह्यगुणस्वभावस्य पटुजडताद्यान्तरगुणस्वभावस्य वा भावादभ्युपगमविरोधः । अथवादिग्रहणात् कालस्यापि पूर्वोक्तन्यायेन युगपदभावेन वा भावादभ्युपगमविरोधः कालकारणिनोऽपि । तस्मादिदं प्राप्तमभ्युपगन्तुं तद्धि नियमो न नियतेरन्यतोऽवतिष्ठत इति । तस्या एव नियतेरेकत्वानेकत्वाविरोधपरिहारार्थं दृष्टान्तमाह—**यथा लोक इत्येकत्व एव पर्वताद्याकारावग्रहः** । एक एव लोकः सरित्समुद्रमहीध्रग्रामारामादिभिराकारैरवगृह्यमाणो भिद्यते भेदाभेदरूपेण नियतिः । एतद्बाह्यं निदर्शनम् । आन्तरं तु यथा ज्ञानमेकत्वेऽप्यनेकबोध्याकारं भवति । किं कारणम्? अन्यथा घटपटाद्याकारमन्तरेण ज्ञानात्मलाभाभावात् । एतस्योदाहृतस्यार्थस्य भेदाभेदस्वरूपभावनेयमुच्यते—**तथा नियमात्मकत्वादित्यादि, यावदङ्कुरादि भवतीति** । सा नियतिर्व्रीहिरित्येकस्मिन् वस्तुन्येका मूलादिभेदे वाङ्कुर इत्येवाभिन्ना । अङ्कुरकिशलयपत्रकाण्डादित्वाद्यवस्थाभेदाद्भिन्ना रूपरसादिभेदाद्वा भिन्ना, अनेकस्मिंश्च पृथिव्यम्बुतेजोवाय्वादिस्वरूपेऽर्थे पृथिव्यादीनामेव तद्भावापत्तेः । व्रीहिरित्येकत्वादभेदा । एकापि सती भिन्ना । अनेकापि सती भिन्ना, तथा तथा नियतार्थवशाद्द्रव्यदेशकालभावानामुत्पातादिष्वनियमदर्शनादनियतिकारणत्वं दृष्टं हि प्रसवादिवैकृतम् । आदिग्रहणात् प्रसवनिलयाहारक्रियाप्रकृतिवैकृतानि नरतिरश्चां विपर्ययेण संख्याकृतिवर्णावयवादिजन्मानि अभक्ष्यभक्षित्वं ग्रामारण्यकजलस्थलजन्मनां तच्चारिणां च वसत्यादिविपर्ययः । रोषक्षमादिशीलविपर्ययः । पलितस्यैवोत्पत्तिरित्याद्यवस्थाविपर्यय इत्येवमादिवैकृतदर्शनान्न नियतिरेव कारणमिति चेत्, नेत्युच्यते । अत्रापि तथा-

---

१ °वस्तु क । २ °ताद्रूपे° ग ।

नियतिवशेनेत्यादि, यावत् व्यतिक्रम उपलभ्यत इति । सापि तादृशी नियतिरेव कारणमिति । किं चान्यत्—न केवलं प्रसवादिधर्मव्यतिक्रम एव, किं तर्हि ? वस्तुस्वभावव्यतिक्रमश्च नियतिवशादेव । किञ्चान्यत्—सदसाध्यमित्यादि चतुर्भङ्गी स्फुटार्थत्वान्न विव्रियते । सा चोद्दिष्टा निर्देक्ष्यमाणा च । तथा च पुरुषो नियतेरेव तथा वृत्तत्वात् तत्साध्यासाध्यत्वे प्रतिपद्यते तत्र सदसाध्यत्वे निदर्शनम्—सदपि चाकाशं भूगन्धवदनभिभवं नास्याभिभवोऽस्तीत्यनभिभवं सलिलसेचनेन न साध्यमित्यर्थः । तथा सन्तमसस्थघटवत् प्रदीपादिनेवासाध्यम् । किं तत् ? आकाशादि सत्त्वात् साध्यं भूगन्धादिति प्राप्तेष्वसाध्यमेव । इदं तु स्त्रीपुंसंयोगात् साध्यमवन्ध्यापुत्रवदिति । प्राप्ते तद्व्यवस्थाविपरीतनियतिवन्ध्यापुत्राद्यसाध्यमेव नियतिवशादेवासत्त्वात् तन्न नियत्या सत् नियत्यैवासत् साध्यतामर्हति । किं कारणम् ? । साधनाविष्टक्रियासाध्यत्वात्, साध्यानां साधनाविष्टाया क्रियायास्तत्रावेशाभावः । तत्साधनानां साधनशक्तिशून्यत्वात् तस्माद्वन्ध्यापुत्रादीनां असाध्यत्वं स्त्रीपुंसयोगक्रियायाप्यसाध्यत्वेन नियतत्वात् । साध्यार्थाभावे च साधनानां साधनत्वाभाव इति तद्दर्शयति—क्रिया हीत्यादि । हिशब्दो यस्मादर्थे । यस्मात् क्रियासाधनेषु काष्ठादिषु वर्तमाना सन्तमर्थं साध्यं विक्लेद्य तण्डुलविपरिणामात्मकमोदनादिकमर्थमाविशति प्रत्यर्थनियतत्वात्, ज्वलनाद्युपनिधानार्थेषु प्रत्येकं नियतत्वात् काष्ठादिसाधनानुषङ्गस्यासाध्यत्वाभावाद्वन्ध्यासुतादेः । सा स्त्रीपुंसम्प्रयोगक्रिया किमाविशतु ? तस्मात् तद्विपरीतनियत्यसाध्यं वन्ध्यापुत्रादि । इदं पुनरित्यादि असत्साध्यं घटादि । इतर आह—यद्यसत् कथं साध्यं खपुष्पवत् ? । उक्तासदसाध्यविकल्पानतिवृत्तेश्चेति । अत्रोच्यते—नैष दोषः, सतोऽन्यदसदित्यतोऽन्यत्र विधानप्रतिषेधपक्षाश्रयणाद् द्रव्यार्थविकल्पत्वान्नियतेरसत्त्वाभावादिति । अत आह—प्राक् तथा अवृत्तं तेन घटत्वप्रकारेणावृत्तं, सच्छब्दस्य वृत्त्यर्थत्वात् । 'अस्ति-भवति-विद्यति-पद्यति-वर्ततयः-सन्निपातषष्ठाः सत्तार्थाः' इति वचनादसदित्यवृत्तमित्यर्थः । मृत्पिण्डाद्यवस्थानकाले तत्कालेऽव्यक्त्या नियतं साध्यम् । आदिग्रहणात् पटकटादीति । एतत्कालभेदेनोपलब्ध्यनुपलब्धिभ्यां नियतमिदमन्यत् सततोपलब्धिनियतमित्यादि तद्वदिदं च सदाव्यक्तिनियतिसत्साध्यमित्यभिसम्बन्धः । किं तद् यष्टिसाधनवदृजुत्वेन, यष्टिर्हि विद्यमानैरेवावयवैः सदाव्यक्ता संस्थानविशेषेण साध्यते सती । साध्यते ऋजूक्रियते । इदमन्यत् सततोपलभ्यमेव सत्साध्यम्, मृद्द्रव्यमूर्द्धादित्वक्रमापाद्यघटत्वेन । पूर्वस्मिन्नुदाहरणे मनागाकृत्यन्तरभेदेन इह त्वत्यन्तभिन्नाकारभेदेनेति विशेषः । तद्दर्शयन्नाह—मूर्द्धादित्वं घटत्वं न भेदेनैव वा सत्साध्यमिति ।

१ तद्व्यवस्था घ ।

अथवा भेदेनैवासत्साध्यमिदं चान्यदिति वर्तते । यद्बुद्ध्यैव साध्यते न क्रियया परिस्पन्दात्मिकया विद्यमानं पुरुषावस्थापरिग्रहापनयनेन[1]। नात्र किञ्चिन्निवर्तते पुरुषादि किन्तु विद्यमानमेवानुपलब्धमुपलब्ध्या साध्यते । एषामनियतिर्ज्ञानरूपैवेति पूर्वविलक्षणा । एतासां क्रियाणां तत्साध्यानां च नियतिकृतत्वप्रतिपादनार्थमाह—**एतच्च साध्यमानमित्यादि** । ओदनविषयेयं पचिक्रिया घटादिविषयक्रियाविलक्षणा । एतच्चौदनादिसाध्यमानमप्यन्यविषयगमनादिक्रियाविलक्षणयाऽनयैव पचिक्रियया साध्यते नान्ययेति क्रियानियत्या साध्यते । एतस्याश्च पचिक्रियाया एतान्येव काष्ठादीनि कारकाणि, न मृत्पिण्डदण्डादीनीति साध्यसाधनार्थनियतिः । एवमित्यादि, एवं च कृत्वा यथार्थगतप्रतिविशिष्टसाध्यसाधननियमाभिव्यञ्ज्याया नियतेः स्थितिर्व्यवस्था । तथा तस्याः स्थितेर्हेतोः कारणगुणपूर्वकतानुमानप्रसिद्धां कार्यस्य प्रतिपद्य बुद्ध्या कारकान्तरसमवस्थितितुल्यतायामपि दण्डादिकारकान्तराणां साध्यनिवर्तनसमवस्थितेस्तुल्यतायामपि सत्यां पचिक्रियासमवस्थित्या सह नियतिप्रसिद्धेरेव बलात् पुरुषस्तथा प्रतिपद्य प्रत्यर्थं कारकाणि प्रयुङ्क्ते । यथा स्वसाध्यार्थोऽयमित्यर्थः । तानि च कारकाणि नियतानि । 'तस्या एव नियतायाः क्रियाया यथाप्रयोगनियमं पौर्वः प्रयोगनियमः' इति स्वे–स्वविषये देशकालविशिष्टे प्रयुक्तानीत्यर्थः । एकविमर्दप्रवृत्तानि एकमप्याह नान्योन्यापेक्षेण व्यापारेण प्रवृत्तानि परस्परापेक्षं नियतं परस्परानुग्रहमुद्भावयन्ति प्रवर्तन्ते । अत उच्यते । परस्परनियतानुग्रहोद्भावनवृत्तानीति स्वविषयक्रियया प्रसाध्यमर्थमभिनिवर्तयन्ति । तेषां वृत्तिर्विषयस्तानि । तत्फलं च सर्वं नियतमेव । ततो नियतिरेव सर्वस्य कारणम्, न तु तदुपायसिद्धेरन्यथा तत्सिद्धिरस्ति । काष्ठज्वलनादिसाधनपचिक्रियानिर्वर्तनस्यौदनस्य न दण्डचक्रभ्रमणादिसाधनात् तत्सिद्धिर्नो वा घटाद्यर्थस्य काष्ठज्वलनादिसाध्यतास्तीति । का सिद्धिस्तर्हीति चेत्? उच्यते—**सिद्धिर्हीत्यादि**, नियमे भोक्तृलक्षणे नानुद्भूतानामनभिव्यक्तव्यापाराणां बीजावस्थायामङ्कुरादित्वेन रूपादीनां सम्मूर्च्छितानां साङ्गत्येन समुदेत्य स्थितानां स्वनियतेरेवाभिव्यक्तिर्वर्णाकृत्यादिनियत्या जनिर्वा पूर्वमनभिव्यक्तानामभिव्यक्तिः सा सिद्धिरित्युच्यते । तत्र यस्मिन् मिथ्याभिमान इदं मया कृतमिति पुरुषस्य । आह–किं कारणम्? मिथ्याभिमानो ननु मया कृतो घट इति तत्क्रियाविनाभावात् सिद्धजन्मत्वाद् घटस्य न युक्तोऽभिमान इति । अत्रोच्यते । **तच्च स चेत्यादि** । तत्प्रवृत्त्यप्रवृत्त्योः सिद्ध्यसिद्ध्योश्च व्यभिचारदर्शनात् । तच्च कार्यं घटादि, स च कर्ता कुलालः । तानि च कारकाणि दण्डादीनि नियतेरेव प्रवर्तन्ते, तथा तस्य चिकीर्षा

---

१ °व° क । २ वीप्सा° घ ।

कदाचिद्भवति कदाचिन्न, चिकीर्षुरप्यालस्यादिभिः प्रवर्तते न वा, प्रवृत्तोऽप्यकृत्वैव घटं विनिवर्ततेऽन्यद्वा करोति। विघ्नो वास्य भवति। तथान्यकारकाण्यपि वाच्यानि। तच्च कार्यं कदाचित् सिद्ध्यति कदाचिन्न । अन्यार्थप्रवृत्तावन्यत् सिद्ध्येत् । न वा सिद्ध्येत् । तथा च दृश्यन्ते क्रियाणां विपत्तयोऽप्रवृत्तयश्चेति लोकप्रसिद्धं व्यभिचारं दर्शयति । अतस्तत् कृतमपि लोकप्रतीत्या पूर्वनियतिस्थत्वादकृतम्, पूर्वमेव नियत्या तथा स्थितत्वात् । विनष्टमप्यविनष्टं तथा नियत्योत्तरकालं कपालादित्वेनावस्थितत्वात् । कपालादित्वेनैव घटस्य विनाशात् । एवं तु विनश्येदित्यादि । यदि प्रविशीर्णो विशीर्य विशीर्यमाणो विशीर्णो वा तां नियतिं कपालादिक्रमापत्तिरूपघटविनाशां नापद्यते खरविषाणवदत्यन्ताभावी भवेन्न वा विनश्येद् घटत्वेनैव तिष्ठेत् ततो विनश्येत् [1] न त्वेवमस्ति, तस्मान्न विनाशः । लक्षणतो ह्यन्यथा नाविनाशः । स च नियतेरलङ्घ्यत्वात् कपालाद्यवस्थानरूपायाः । एवमुत्पत्तिरपि । तथा चाम्रबीजेत्यादि । दृश्यन्त इति वर्तते । त्वया नियत्या भिन्नानां मूलाङ्कुरपत्रनालकाण्डशाखाप्रशाखास्कन्धपुष्पादीनां व्यवस्थावकाशक्रमेण व्यवस्थितपूर्वरूपैव प्रवृत्तिः । रक्तश्यामादिवर्णानामाम्रफलस्य तुवराम्लमधुरादीनां च रसानां तेषां तेषामिति । अवस्थायामवस्थायां ये ये भवन्त्यन्येऽन्ये तेषां तेषां विद्यमानानामेव नियतानाम्, किमिव ? मायाकारपताकिकावत् । यथा मायाकारः पताकिका गुलिकादिरूपीकृत्य पूर्वग्रस्ताः क्रमेण स्ववदनान्निष्काशयति नानावर्णनानाकारास्तथेहाप्याम्रबीजे । यावदाम्रं नियतिप्रवृत्तिफलावस्थामनुभूय पुनर्बीजमेव तस्मादपि बीजात् पुनरपि तथैवेत्यङ्कुरादिप्रवृत्तिं प्रागभिहितां दर्शयति–सेयं व्यवस्थिता नियतिसन्ततिरनाद्यनन्ता । स्यान्मतम्–ननु दग्धे बीजेऽङ्कुराद्यत्यन्ताप्रादुर्भावान्नियतिकृतप्रादुर्भावतिरोभावव्यभिचार इति । अत्रोच्यते—दाहनियत्युदयेऽपि साम्प्रति नियतैवान्यथा च दृश्यन्त इति वर्तते । कास्तास्तथातथाप्रादुर्भावतिरोभाववृत्तयः ? केषां यवतिलभस्मादीनामन्यादृग्यवतिलभस्मेत्यत्रापि प्रादुर्भावतिरोभाववृत्तयो नियता एव । ताश्च पुरुषकारेणाप्युल्लङ्घ्यास्तत्त्वान्तरेण सिद्धाः । पुरुषकारं चान्तरेणासिद्धाः । किं कारणम् ? पाककालस्यापि नियतिदर्शनात्, षष्टिकाः षष्टिरात्रेण पच्यन्त इत्युदाहरणानि गतार्थानि । देशकालकर्तृकरणादिनियत्यैव पाकादिदर्शनात् । एवं चेत्युन्नयति । अनेनोक्तविधिना व्यवस्थित एवार्थे अव्यक्तस्यैवार्थस्य तत्र व्यक्तेः । सर्वनियतमेव । तत्तत्तस्य स्वव्यक्तेर्व्यतिरेकमतिः । पुरुषस्य सर्वकाले व्यवस्थितनियतादर्थादन्यो मृद्रव्याद् घटो मया कृत इति मिथ्याभिमान एव षष्टिकादयो वा केदारादिसंस्कारविधिना पाचिता इति । यस्मान्ननु नियतौ किञ्चिन्नास्ति । सर्वं

---

१ °मात्र° क–घ । २ °षाडषा° क–ख ।

विद्यमानमेव तिरोभूतं क्रिययाभिव्यज्यते कालादिनियत्यनुगृहीतम् ।

अत्राह—**कथमस्तीत्यादि, यावन्नियत्यभाव इति**। यदुक्तं त्वया नियतौ सर्वमस्तीति। तत्कथमस्ति? यथा भूम्यम्ब्वादेर्विना न भवति केवलाया एव बीजनियतेराम्रफलपाकादिरूपरसगन्धस्पर्शसंख्यासंस्थानानि, आदिग्रहणाद्भूमिरम्बु वायुरातपः काल इत्येतानि भूम्यम्ब्वादीनि, तद्व्याचष्टे कालातपवातादिभ्यः पाकस्तस्माद्भूम्यम्बुकालवातातपाद्यपेक्षत्वान्न बीजनियतावस्त्यङ्कुरादि। तत्फलपाकादिवत्। तथा अकालेऽपि कालनियतेर्व्यभिचारो दृश्यते। भूमिखननादिभ्यः फलादीनामप्राप्तेऽपि काले पाकदर्शनात्। आदिग्रहणात् कोद्रवपलालवेष्टनव्रणकरणादिभिः। काले वापीति। प्राप्तेऽपि पाककाले न भवति पाको द्रव्यान्तरसंयोगेन स्तंभितानां यथा शाखायां चार्द्रायां वृक्षायुर्वेदविधानेन द्रव्यान्तरसंयोगेनैव द्रावणाद्वा सहकारतैलग्रहणार्थं कोमलस्य प्राप्तगन्धावस्थस्य द्रवीभावात् तैलत्वेन, आदिग्रहणात् पक्षिखञ्जरीटादिसत्कभक्षणात् । **अन्यच्चेत्यादि**, न केवलमात्मस्वरूपापरित्यागेनैव पाकाभावः। किं तर्हि? अन्यच्च। **तथा तथा,** यथा यथा पुरुषो ज्ञाता स्वयमिच्छति तथा तथा तस्य ज्ञातुरिच्छानुविधानेन वस्तुनियतिमतीत्य पुष्पादीनां वर्णसंस्थानादिवैपरीत्यम् । यथोत्पलस्य पार्श्वे रक्तता पार्श्वे नीलता,मातुलिङ्गफलस्य रक्ततादिवर्णता तद्वासितबीजस्य, तथा कूष्माण्डफलस्य घटवर्धितस्य घटाकारता । **योनिप्राभृतादिभ्यश्चान्यथैव सर्वयोन्युत्पत्तयः** । द्विविधा योनिर्योनिप्राभृतेऽभिहिता। सचित्ता अचित्ता च । तत्र सचित्तयोनिर्द्रव्याणि संयोज्य भूमौ निखाते दन्तरहितमनुष्यसर्पादिजात्युत्पत्तिः । अचित्तयोनिद्रव्ययोगे च यथाविधि सुवर्णरजतमुक्ताप्रवालाद्युत्पत्तिरिति । इति नियमाभावः। इत्थं काले चापाकादकाले च पाकादर्थान्तरापेक्षत्वात् पुरुषेच्छायत्नानुविधानाच्च नियमाभावः । नियमाभावात् कृतकत्वं पाकादेः, कृतकत्वाच्चाऽनित्यत्वम्, अभूतस्य भावो भूतस्य चाभाव इत्यर्थः। ताभ्यां च नियत्यभावः । इतिः परिसमाप्त्यर्थः । एष पूर्वपक्षः ।

अत्रोच्यते–**न तथा नियतित्वात्**। यथोक्तं त्वया साक्षेपं नियतित्वात् कालाप्रवृत्तिनियतित्वादकालप्रवृत्तिनियतित्वाच्च नियत्यभावः । तद्दर्शयति—**बीजादिनियतिरेव हीत्यादि**। हिशब्दो यस्मादर्थे। यस्मात् सैव हि बीजादिनियतिरेकैवोदकादिषु वर्तते। काले वायावातपे पुरुषे तदिच्छाप्रयत्नयोश्च वर्तते। आदिग्रहणादुदकादिनियतिश्च बीजादिषु वर्ततेऽन्योऽन्यव्यतिहारेण। **तन्नियमानुरोधेन हि** । परस्परनियमानुरोधेन । हिशब्दो यस्मादर्थे। यस्मादेवंरूपा तेषां सर्वेषां नियतिस्तस्मात् तेषां सर्वेषामितरेतरनियत्या नियत्यप्रवृत्तिरन्योऽन्याविनाभावात् तथैव प्रवर्तत

---

१ यदा घ। २ °द्व° क-ख। °द्वा° ग। ३ ना° क-ख। ४ सापेक्षं क। ग।

इत्यर्थः । तथा ह्याहेति, लोकसिद्धं ज्ञापकं दर्शयति–सह भावेन वर्तत इति सभावकम् । निर्गतो भावोऽस्मादिति निर्भावकम् । किं तत् ? उदकं पतितमिति । तद्भावना । यदाऽद्भिर्बीजनियतिरिति, अङ्कुराद्यभिव्यक्तेर्यदाऽद्भिरुदकीभूता बीजनियतिर्भवति तदा तस्या नियतेर्देशोंऽशो भागोऽवयवः स उदकस्थ एव सन्नङ्कुरोद्भावेन प्रवर्तमानः सभावक इत्युच्यते । तद्भावांशाऽपेक्षयोदकमपि सभावकमित्युच्यते । भेदविवक्षायां बहुव्रीहिसमासाश्रयणान् मतुब्लोपाद्वा अभेदोपचाराच्च भाव एवोदकमिति । स च भावोऽङ्कुरादेर्वनस्पत्यौषध्यादेः । मतुप्प्रत्ययनिर्देशोऽपि भेदेनोपपद्यते । तद्यथा–अस्त्यस्मिन्नस्य वा भावोऽङ्कुरस्तस्मिन्नुदके तस्मात् सभावकमिति । अन्यदा तु विपर्ययः । क्षाराम्लाद्युदकेऽङ्कुरादयो न सन्तीति नियतत्वाद्विपर्ययस्तस्मादभावकमुच्यते तज्जलमिति । एवं भूमिवायुकालप्रभृतिष्वपि सभावकाऽभावकत्वे । ऊषरभूमावभावः सस्यादेः, पादसौकुमार्यादेर्भावः । सुकृष्टे केदारादौ वा सर्वबीजानामङ्कुरादिभावः । पूर्ववायावभावोऽङ्कुरादेर्भावस्तु महिषीकर्पासप्रसूत्यादेरन्यस्य पुष्पादेरन्यस्य फलादेः, मनुष्याणां च पूर्ववायावभावः । तद् यथोक्तम् 'दिवा स्वप्नमवश्यायं प्राग्वातं वा तु वर्जयेत् ।' सस्यानामुत्तरे वायौ न भावः, प्रावृष्युप्तानां भावः, वैशाखादिष्वभावः । प्रभृतिग्रहणेनातपेऽतिमृदावतितीक्ष्णे चाभावः, समे भावः । आतपाभावेऽप्यभाव एवेति । एवं तावदबुद्धिप्रवृत्तेषु कालाङ्कुरादिषु अचेतनेषु नियतिरुक्ता । बुद्धिमत्स्वपि नियतिरेव । यदुक्तं प्राक् त्वया 'पुरुषस्य ज्ञातुरिच्छानुविधानेन वस्तुनियतिवैपरीत्यम्'इति तन्नोपपद्यते । तत्रापि नियतेरेव कारणत्वात् । कुतः ? पुरुषो व्यग्रोऽव्यग्र इति नियतेरेव यतो भवति । साप्यापेक्षिकी तादृशी नियतिरेव । आदिग्रहणात् कुशलोऽकुशलः पुरुष इत्याद्यपि नियतेरेवेति । एवमप्रयुक्तेषु स्वातन्त्र्यादेव परनियोगानपेक्षप्रवृत्तिषु नियतिः, प्रयुक्तेष्वपि नियतिरेव । करणादीनां करणाधिकरणकर्तृकर्मसम्प्रदानापादानानां क्षमत्वं तत् क्रियासाधनसमर्थत्वमक्षमत्वमसमर्थत्वम् । यथोक्तम् 'एतत् परशोः सामर्थ्यं पत्रतृणेन' इत्यादि, तेषामेव सान्निध्यं कर्ता प्राप्तिः । असान्निध्यमप्राप्तिः । आदिग्रहणात् प्राप्तानामपि करणादीनामन्तरे विघ्ना इत्येवमादेः करणादङ्कुराद्युत्पत्त्यनुत्पत्त्योर्नियतिरेव कारणम् । तथानियतत्वादिति । एतेन पाकादिदोषाः प्रत्युक्ताः प्रतिषिद्धाः । यदुक्तं त्वया 'काले न पाकोऽकाले पाक' इत्यादयो दोषा इति, तदपि तथानियतित्वादित्येतेनैव न दोषाय । कालाकालयोरपाकेन पाकेन च तेषां तेषां भावानां नियतत्वात् सैव नियतिस्तथा तथा नियतं भवतीति । किं चान्यत्–सर्वज्ञोऽपि चेत्यादि । यदपि च सम्यग्दर्शनज्ञानचारित्रतपोभिर्ज्ञानावरणाद्यशे-

---

१ हि क–ग । २ °भितुररी° क–घ । ३ °भा° क–ग ।

षकर्मक्षयात् केवलज्ञानप्राप्तिः सार्वज्ञ्यं पौरुषेणेति मन्यसे तदपि मा मंस्था नियतिमन्तरेणेति । कथं तर्हि मन्तव्यम् ? । सार्वज्ञ्यं नियतेरेव भवतीति । तामेवासौ नियतिमखिलां पश्यन् सर्वज्ञो भवतीति । तथैव च नियत्या नान्यथेति । स हि भव्याभव्यसिद्धादिभेदेषु[1] पुरुषेषु गतिस्थित्यवगाहे वर्तना रूपरसादिशरीरवाङ्मनसः प्राणादिपरिणतिरूपामसङ्कीर्णा[2]मनादिमध्यान्तां कालत्रयेऽपि अनुत्पत्तिमविनाशां स्वेन रूपेणाविपरिणामां लोकस्थित्यनतिक्रमेणाप्रच्युतस्वरूपां वस्तुनियतिं बीजादिनियतिं बीजादिनियताङ्कुरादिवस्त्वात्मिकामेकां सर्वभेदेष्वभिन्नामनेकरूपां तेषु तेषु भेदेषु तद्रूपनियतित्वादनेकां बन्धमोक्षप्रक्रियानियतिसूक्ष्मां जीवकर्मणोरनाद्येन सम्बन्धेन सम्बद्धयोः कार्यकारणभूतैर्मिथ्यादर्शनादिभिर्नियतिवशात् सन्तत्यानाद्यो बन्धो भव्येषु बन्धोद्वर्तनसमर्थसम्यग्दर्शनादिभावनियतिविवर्तान्मोक्षहेतोरमूर्तस्वभावस्य ज्ञानदर्शनवीर्यसुखादिस्वात्मनः स्वात्मन्यवस्थानं मोक्ष इत्येतां बन्धबन्धकबन्धनीयबन्धविधानाद्यनेकभेदप्रभेदबन्धप्रक्रियां व्रतसमितिगुप्तिधर्मानुप्रेक्षापरीषहजयचारित्रसंवरां द्वादशविधतपोऽनुष्ठाननिर्जरां क्षेत्रकालगतिलिङ्गतीर्थप्रत्येकबुद्धबुद्धबोधितज्ञानावगाहनान्तरसङ्ख्याल्पबहुत्वाद्युपायव्याख्येयां कृत्स्नकर्मक्षयाव्याबाधात्यन्तैकान्तसुखात्मिकां च मोक्षप्रक्रियां परमसूक्ष्मां पश्यन्ननन्तकालमव्याबाधसुखं तिष्ठति । एषा च बन्धमोक्षप्रक्रिया दिग्मात्रमुपदर्शिता । अतिसूक्ष्मत्वाद्बहुवक्तव्यत्वाच्च नात्र परीक्षाकाले शक्या वक्तुम् । यथोक्तम्—

लोगम्मि[3] जीवचिंता सव्वागमकोसिया दुरोगाहा ।
तत्तोवि कोसियतरी चिंता बंधे य मुक्खे य ॥ १ ॥

इतिः परिसमाप्त्यर्थः ॥

इति नियतिवादः परिसमाप्तः ॥

---

१ °विभागेषु घ । २ समं° क-ख ।

३ लोके जीवचिन्ता सर्वागमोत्कृष्टा दुरवगाहा ।
ततोऽप्युत्कृष्टतरी चिन्ता बन्धे च मोक्षे च ॥

## अथ कालवादः।

अपरो द्रव्यार्थो विधिविधिनयविकल्प आह–नायमपि नियतिवादः परितोष-करः। एवं तर्हीत्यादि, येयमुक्तज्ञा, इत्थं स्वतन्त्रास्वतन्त्रत्वान्न ज्ञ एवं भवितुमर्हति। किं तर्हि? नियत्यैव युगपदयुगपच्चानेकधा क्रियादिकार्यकारणभावनियतमेतदिति भावनयानयैव त्वयोक्तया युगपदयुगपन्नियतरूपादिबीजाङ्कुराद्यर्थेष्टेन नियतिरेव भवति। किं तर्हि? काल एव भवतीति भावितं भवति। 'अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि' (वै.द.२।२।६)इति वचनात् युगपदयुगपन्नियतार्थानां वृत्तेर्भवनार्थत्वाद्वर्तनस्य काललक्षणत्वादिति। तद्भावनार्थमाह–इह युगपदवस्थायिनो घटरूपादयः, ते किं परस्परं प्रविभक्तितः स्वेनैव भवन्त्युत कालसामर्थ्यात्? इति वस्तुरूपेण तावच्चिन्त्यते। तत्र तावन्न केचिदपि वस्तुप्रविभक्तितो भवन्तीति वाक्यशेषः। रूपरसगन्धस्पर्शशब्देभ्यः प्रविभक्त्या प्रविभागेन तद्रूपेण प्रविभक्तितो वा कारणान्न भवति तैः सहोपलभ्यमानमपि तद्व्यतिरेकेणाभावात्। भिन्नेन्द्रियग्राह्यत्वादिति चेत् ऐक्याभावाद्यौगपद्यं नानात्वं च सिद्धम्[3]। न ह्यभिन्नस्य यौगपद्यम्। युगस्य स्कन्धयोः पतनं युगपत्। एवमन्यत्रापि। अनेकाश्रयं यौगपद्यम्। अतो रूपादयो युगपद्वर्तन्त इत्येषा वृत्तिः प्रख्यातिर्दृष्टार्थतः। शब्दतोऽपि च वर्तनं कलनं संख्यानं प्रथनं बुद्ध्या शब्देन वा निरूपणमिति वृत्तिरेव। तस्मात् कलनं काल इत्यक्षरार्थानुसारेण वर्तनं कालस्तं कालात्मानं युगपद्वृत्तिप्रत्याख्यानात्मकमन्तरेण न ते केचिद्रूपादयो युगपद्भवितुमर्हन्ति। तस्माद्रूपादयो युगपदित्येतत् कालसामर्थ्यात्। एवं सूक्ष्मा रूपादय उक्ताः, स्थूला अप्येवं घटे ग्रीवादयः। तथावृत्तेर्युगपद्वृत्तेः। कस्य? कालात्मनः। एवं वृत्तिश्च भवनमित्यत आह—**तथाभवनादिति**। मृल्लोष्टादयः मृदिति लोष्टादयः। एवं युगपद्वृत्तेः पृथिवी मृदादय एव। तथावृत्तेरेवं मृल्लोष्टताश्मसिकतादयः। एवं द्रव्यं पृथिव्यादयः पृथिव्यप्तेजोवाय्वाकाशादयो युगपद्वृत्तयो द्रव्यम्। द्रव्यादयो भावः। द्रव्यगुणकर्मणां सप्रभेदानां भाव इत्याख्या युगपद्भवनात्। एवं तावद् युगपद्वृत्तिः काल एव भवतीति भावितम्। क्रमवृत्तिनियतिरपि काल एव भवतीति भाव्यते। तत आह—**अयुगपद्भाविनोऽपि** इत्यादि, **यावदापत्तेः**। अयुगपद्भवितुं शीलमस्येत्ययुगपद्भावी। तस्यायुगपद्भाविनोऽभवितुकामस्याभवनाभिमुखस्य बीजाङ्कुरादेर्वस्तुनो यदि वृत्त्यात्मककालभावो नाभ्युपगम्यते ततो वर्तनादतिरिक्तस्य कस्यचिदप्यनुपपत्तिरापद्यते वर्तनाऽभावात् वन्ध्यासुतवत्। ततश्चानुपपत्त्यापत्तेः सति वर्तनात्मके काले तदुपपत्तेः कालात्मकता। एवं तावन्नियतार्थाभ्युपगमः कालमन्तरेण न भवतीति युगपद्-

१ °ज्ञाज्ञं ग-घ। २ स्वतन्त्रात्रतन्त्रस्वान° क-ख। ३ देव च ते क-घ। ४ वर्तते ग।

युगपद्वृत्त्यात्मकः काल एव भवतीत्युक्तम् । इदानीं नियतिवादिनो दोषोऽभिधीयते—**नियतेस्त्वित्यादि, यावत् सदा सर्वस्य,** यत्त उक्तस्त्वया स्वभाववादिनं प्रति 'बाल्यकौमारयौवनमध्यमाद्यवस्था युगपत् स्युः सर्वाकारस्वभावत्वात् देवदत्तादेरङ्कुरपत्रकाण्डाद्यवस्थाश्च युगपत् स्युर्व्रीह्यादे'रित्युपालम्भः स एव नियतेः सर्वात्मकत्वात्, कस्मात्? सर्वाकारनियतैव न भवतीति स्वभावोपालम्भवन्नियत्युपालम्भोऽपि त्वामपि प्रति नियतिवादिनं समान[1]ः । सदा सर्वकालं सर्वस्य वस्तुनस्तस्य तस्येति कालाभावेऽतीतानागतवर्तमानाविशेषात् । दृष्टा चातीतानागताकारता वर्तमानाकारता च, वृत्त्यात्मककालाभावान्नियतेश्चाविशेषादतीतानागतानाकारता वर्तमानानाकारता स्यात् । वर्तमानाकारतावदतीतानागताकारतापि स्यात् । न च दृष्टातीतानागताकारता वर्तमानानाकारता वा । स्यान्मतम्—अतीतानागताकारता वर्तमानाकारतावन्नियतौ विद्यमानैव तिरोभूतत्वान्नोपलभ्यते । वर्तमानाकारता त्वाविर्भूतत्वादुपलभ्यत इत्युक्तत्वादनुत्तरमिति ।

अत्रोच्यते—अपि च तथापि नैककालातिक्रम इति । एवमपि त्र्याकारताया युगपद्वृत्तायाः क्रमेणाविर्भावतिरोभावावतीतमनागतमिति चैतत् सर्वं कालवाचिशब्दार्थसामर्थ्यप्रतिपादितं कलनं वर्तनं भवनमन्तरेण न स्यादतः कालस्यान[2]तिक्रमणीयता इति । **स्वीक्षितमपीत्यादि** । एतेन प्रकारेण सुष्ठु परीक्षितमपि कालादृते नान्यत् कारणमवस्थानां बाल्यादीनामङ्कुरादीनां च क्रमेणावस्थापकं, रूपादीनां वा युगपदवस्थापकमालक्ष्यते । तस्मात् त्वया नियतानन्तरव्य[3]क्त्यैवाभ्युपगतः कालः । सप्ताहं कललं भवति । ततः सप्ताहमर्बुदम् । एवं पेशी घनमित्येवमादिक्रमेण गर्भादिषु पूर्वोक्तावस्थानां पूर्वस्यानन्तरावस्थाऽभिव्यज्यत इत्यनयैव नियताभिव्यक्त्या कालमभ्युपगतमपि नियतिमात्रग्राहदोषेण स्वपक्षरागाच्चाऽनिच्छता त्वयात्मा तेभ्यो गुणवत् कालपक्षपातकृतगुणेभ्योऽपनीयते । मा भूद् ग्राह इत्युक्तेऽतिनिष्ठुरत्वाच्चित्तपीडेति ग्राहवद्ग्राह इति प्राग्व्याख्यातगौणशब्देनोच्यते । अथवा ग्राहोऽभिप्रायो, ग्राहयतीति ग्राहः । तस्याभिप्रायस्य दोषेण स्ववचनाभ्युपगतमपि कालमपश्यन् कालतत्त्वादित्वे[4]नाप्ययशोधर्मादिगुणगणादात्मानमपनयसि । **यदि नियतिकृतेत्यादि, यावन्न युज्यते,** नैवमभ्युपगन्तुं शक्यं नियतिकृतैवार्थानां प्रवृत्तिरित्यनन्तराभिहितदोषसम्बन्धात् कालत्वस्योक्तत्वाच्च । अभ्युपेत्यापि नियतिकृतत्वं दोषं ब्रूमः—

इदं पूर्वमिदं पश्चादिदमिदानीमिदं युगपदिति न युज्यते, पूर्वादयः कालत्रयवाचिनः, युगपदित्यभिन्नकालवाची शब्दः । तत्तु कालमन्तरेण लोकप्रसिद्धं व्यवहारजातं न युज्यते ।

१ सम्प्राप्तः घ । २ °मतिक्रा° क–घ । ३ °स्य त्वयैवा° ग । ४ °त्वा वाथ° ग । घ ।

कारणान्तरमप्याह—सर्वेषां तेषां बीजादौ नियतेः सन्निहितत्वात् । बीजे मूलाङ्कुरपत्रनालादीनां नियतेः सन्निहितत्वात् । शुक्रशोणितावस्थायामेव कललार्बुदगर्भार्भकादीनां नियतेः सन्निहितत्वात् पूर्वादिक्रमवृत्तिता युगपद्वृत्तिता वेति न युज्यते, नियतेरेवेति चेत्, न । आनर्थक्यात् ।

स्यान्मतम्–एतदपि नियतेरेव युगपद्वर्तनं पूर्वादिक्रमवर्तनं चेत्यादि । एवकारात् कालादिनिराकरणं वेत्येतच्चायुक्तं नैरर्थक्यात् । नियतेः पूर्वादीनां वा नैरर्थक्यात् । यदि नियतिरेव कारणं पूर्वं पश्चादिदानीं युगपदित्यादिकालवाचिशब्दोपादानं तदर्थाश्रयणं चानर्थकम् । तदर्थाभावे सति नियत्यैव कृतप्रयोजनत्वात् तदुपादाने वा नियत्यानर्थक्यम् । इह तु नियत्यानर्थक्यमेवेति मन्यस्व कालं प्रत्येकार्थव्यापारार्थानां पूर्वादीनामवश्याभ्युपगम्यत्वात् तैरेव कृतप्रयोजनत्वात् किं नियत्या प्रयोजनम्? । किमिह पूर्वादिभिरित्याद्यक्षरैर्भावितार्थत्वाद्यदर्थं नियतिरुपादीयेतैतन्नास्तीत्यभिप्रायः । तत्तु पूर्वादिभिः कृतमेव । यत् पूर्वं तद्बीजादि यत् पश्चात् तदङ्कुरादीत्येतयोः पूर्वापरशब्दयोः क्रमात्मकालवाचित्वादिति । तन्निदर्शयति । एवमादिविकल्पव्यवहारेषु काल एव भवतीति भावितम् ।

किं चान्यत्–सर्वसङ्ग्रहेणैव वा यत्पूर्वं यत्कार्यं तत्पश्चात्क्रमवर्तिनां भावानां कारणकार्यत्वेन[1] सङ्ग्रहात् । पूर्वापरयोः कारणकार्यत्वात् कालत्वाच्च काल एव भवतीति । एतस्य क्रमव्यवहारस्य सिद्ध्यर्थं त्वयानुक्रमार्थं पुरुषं स्वभावमन्यद्वा कारणं तत्कार्यं चाश्रित्याप्यवश्यं पूर्वादय आश्रयणीया एव, नियत्यादिमात्रेण पूर्वाद्यनपेक्षेण व्यवहारासिद्धेः । नियतेरेवासिद्धेर्व्यवहारासिद्धिरन्यथेति, पूर्वादिभिर्विना बीजादीनामनियतत्वात् स्वभाववन्नियत्यभावो नियत्यभावाद् व्यवहारासिद्धिरिति । मम पुनः कालवादिनः पूर्वादिषु तु समाश्रितेषु नियत्या किं क्रियते? सिद्ध्यत्येव नियत्या विनापि क्रमव्यवहारः, पूर्वादिभिरेव कृतत्वादित्यर्थः ।

किं चान्यत्—नियतिवादे त्वन्न्यायेन तु त्वदीयेनैव न्यायेन विदुषां हिताहितेत्यादि । हितप्राप्त्यर्थं आचारो लौकिकः कृषिवाणिज्यासेवादिरोदनपचनभोजनादिश्च दृष्टार्थस्तदुपदेशश्चैतत् कुर्विदं ते श्रेय इति । लोकोत्तरश्चादृष्टार्थो यमनियमादिः । अहितप्रतिषेधार्थश्च लौकिकः क्षारविषकण्टकाग्निशस्त्रादिपरिहारार्थस्तदुपदेशश्च बालादीनां मा कार्षीरिति, लोकोत्तरश्चादृष्टार्थो हिंसानृतस्तेयाब्रह्मादिभ्यो विरतिः श्रेयसीति । तावेतावाचारोपदेशावनर्थकौ स्याताम् । नियत्यैव यद्यवश्यंभाव्यर्थोऽनर्थो वेति किमाचारोपदेशाभ्याम् । किमिव? चक्षूरूपग्रहणनियतिवत् । यथा चक्षुषा रूपं पश्यन्तं पुरुषं नियत्या स्वभावतोऽन्येन वा केनचित् कारणेन

१ हेतु° क–ख । २ त्वात् ग । ३ °त्स्या° क–ख । ४ °च° क-घ । ५ °न वे घ ।

चेदभिमतेन सिद्धत्वात् पुरुषाकारादृते यो ब्रूयाच्चक्षुषा रूपं पश्य मा घ्राक्षीर्जिह्वयेति । किं तेन कृतं स्यात्? । तथा नियत्या सिद्ध्यत्स्वसिद्ध्यत्सु वा किं यत्नोपदेशाभ्याम्? किं कारणम्? अयत्नत एव तथासिद्धेः, ओदनकवलाद्यास्यप्रवेशोऽपि प्रक्षेपयत्नादृते त्वन्मतेन सिध्येत् । अप्रक्षिप्ते कवले क्षुत्प्रतीकारः स्यादित्यादि योज्यम् ।

यत्नोऽपि नियतित एवेति चेत् । स्यान्मतम्—योऽप्यसौ यत्नो नियतित एव । एषोऽपि आचारोपदेशरूपस्तृप्तिप्रयोजनौदनपचनास्यप्रक्षेपादिरूपश्च तथातथानियतित्वादित्येवं चेन्मन्यसे, ततः सर्वलोकशास्त्रारम्भप्रयोजनाभिधानानर्थक्याल्लोकागमविरोधौ, यथासङ्ख्यं लोकविरोधः आगमविरोधश्च । सर्वलोकस्य सर्वशास्त्राणां चारम्भप्रयोजनयोस्तदभिधानस्य चानर्थक्यम् । बुभुक्षाप्रतिकारप्रयोजन ओदनपाकारम्भः । सह प्रयोजनेन तृप्त्यादिना तदुपदेशवचनारम्भप्रयोजनानि चानर्थकानि लोके । शास्त्रेषु च धर्मार्थकाममोक्षास्तदर्थाश्च शास्त्रारम्भास्तदुपदेशाश्चानर्थकाः प्राप्नुवन्ति । किं कारणम्? **भावस्यान्यथाभावाभावात्** । यस्मान्न तेनैव भाविनोऽभावः, अभाविनश्च न भावः । तस्माद्भावस्यान्यथाभावाभावात् सर्वलोकशास्त्रारम्भप्रयोजनाभिधानानर्थक्यम्, तस्माच्च लोकागमविरोधौ । लोके सर्वागमेषु चारम्भप्रयोजनाभिधानानां प्रसिद्धत्वात् ।

किं चान्यत्—क्रियाया एवौदनतृप्त्यादिफलप्रसूतेः प्रत्यक्षविरोधः । क्रियात एवोदनसिद्धिर्नौदासिन्येनासितुः कदाचिन्नियतेरेव केवलायाः । सिद्धस्य चौदनस्य फलं तृप्तिः, सापि मुखे कवलप्रक्षेपग्रसनादिक्रियात एव भवन्ती दृष्टा । ओदनजन्यतृप्तिर्बलवर्णारोग्यादिफलं चान्तर्गतात्मरसरुधिरादिविभागपरिणामनक्रियातः । तस्याश्च क्रियाप्रसाध्यतृप्त्यादिहेत्वोदनसिद्धौदनजन्यतृप्तिबलवर्णारोग्यादिफलप्रसूतेः प्रत्यक्षत्वान्नियतित एवेति वादे प्रत्यक्षविरोधः । एवं नियतेरेवैवमिति चेत् । एवंविधैवैषा नियतिः क्रियानियतिरित्युच्यते । अस्याः क्रियानियतेरोदनातृप्त्यादिफलप्रसूतिनियतिरित्येतच्चायुक्तम् । कालानर्थान्तरे क्रियाया एवैवं क्रियानियतिरिति संज्ञामात्रे विसंवादात् । अभ्युपगतं तावत् त्वया एवं नियतेरेवैवमिति ब्रुवता काष्ठादिसाधनसन्दर्भया लौकिक्या पचिक्रिययैवौदनसिद्धितृप्त्यादिफलप्रसूतिनियतिरिति । एवंशब्दस्य तदर्थत्वात् । सा च क्रियानियतिः कालक्रियापर्यायत्वात्[2] कालनियतिः । नियतेः क्रियायाश्चैकार्थत्वात् । तस्मादावयोः संज्ञामात्रे विप्रतिपत्तिर्नार्थे ।

अत्राह—एवमपि क्रियासिद्धौ कालासिद्धिरिति । अत्रोच्यते—तेन कालानर्थान्तरत्वात् क्रियायाः क्रियाकाल इत्यनर्थान्तरम् । कालेनैव क्रियाख्येनैव नियति-

---

१ °च° क-ख । २ °तः घ ।

रिति ब्रुवता स एव काल इत्युक्तं भवति । कालक्रिययोरनर्थान्तरत्वात् काल-नियतिः क्रियानियतिरिति संज्ञामात्रे विसंवादात् पूर्ववदिति ।

किं चान्यत्—नियतिप्रतिपादनपरिक्लेशाभ्युपगमाच्च नावश्यंभावाव्यभिचार-दर्शनविपर्ययार्थप्रवृत्तेरभ्युपगमविरोधः । पुरुषकालस्वभावादिदर्शनानां नियत्यैवा-व्यभिचारिण्या तदविनाभाविनामव्यभिचारादिव त्वयाभ्युपगतानां परवादिभिश्च स एवेत्यभ्युपगतानां त्वया पुनस्तद्विपर्ययो नियतिरेव कारणं न कालादय इति प्रतिपादनार्थं प्रवृत्तिरङ्गीकृता। यदि तानि दर्शनान्यनया त्वदीयया प्रवृत्त्याऽपनी-यन्ते । नावश्यंभावीनि तानि । अथावश्यं भावीन्येव नापनीयन्तेऽनयापि प्रवृत्त्या ततो नियत्यर्थपरदर्शनविपर्ययमापादयामीत्ययमभ्युपगमो निवर्तत इत्युभयथाभ्युप-गमविरोधः । स्ववचनपक्षधर्मत्वादीनां वृत्त्यैव निराकरणं येयं पक्षहेतुदृष्टान्ताद्यवय-वोच्चारणे प्रवृत्तिस्तया स्वबन्धनं परमतनिराकरणसमर्थमिति मतं प्रवृत्त्युपलभ्यं स्वत एव नावश्यं भवतीति क्रियते । अथावश्यं स्वत एव भवति। प्रवृत्तिरनर्थिका। प्रतिपादनासमर्थवचनिका, प्रवृत्तिवचनयोरनियतार्थत्वात्, हेतुः पक्षधर्मो हेयार्थ-प्रतिपत्तिनियतोऽवश्यंभावी प्रवृत्तिमन्तरेण चेत् प्रवृत्तिरनर्थका, नावश्यंभावी चेन्नित्यभावः । एवं दृष्टान्तोऽपीति व्याख्येयम् । इति प्रवृत्त्यैवाभ्युपगतया वचनहेतुदृष्टान्तानां निराकरणं प्रमाणान्तरमन्तरेणापीति । कथं पुनराचारो-पदेशानर्थक्यदोषाभावः? लोकागमादिविरोधाभावश्चेत्येतत् प्रतिपादनार्थमाह—अत[1] इत्यादि । अतः—प्रागभिहितकालकार्यत्वहेतोः सर्वलोकशास्त्रारम्भप्रयो-जनाभिधानानां सर्वशास्त्रार्थत्वे येयं पुनर्भावे[2]नोच्यते । धर्मार्थकाममोक्षाः कालकृताः । एवं चतुर्थवर्गसाध्यसाधनसम्बन्धार्थः । सर्वशास्त्रारम्भाः काल-सामर्थ्यादेव सफला नान्यथेति प्रतिपद्यस्व । कथम्? **उक्तभावनावत्।** उक्ता भावना रूपादिघटादियुगपद्वृत्त्यात्मककालरूपं बीजाङ्कुरादिपूर्वोत्तरक्रम-वृत्त्यात्मककालरूपं च जगदनियतपरिणतं चेति । तस्मादुक्तभावनावदनियतेर्धर्मा-द्यर्थानामाचाराणां पूर्वापरीभूतक्रियात्वात्, क्रियार्थत्वाच्चोपदेशानां कालस्य च पूर्वापरीभूतस्य क्रियात्वात् सार्वज्ञ्याः शास्त्रारम्भाः। तथा ब्राह्मणेत्यादि । एवं च कृत्वा कालकृतत्वात् क्रियाक्रियाफलानां धर्मार्थकाममोक्षार्थैः शास्त्रैरेव विहिताः क्रियास्तद्यथा यथाक्रमं धर्मादिषु ब्राह्मणस्य वसन्तेऽग्न्याधानं 'वसन्ते ब्राह्मणो यजेत । ग्रीष्मे राजन्यः । शरदि वा यजेत वैश्यः' इत्यादिवचनात् । तथा वणिजां मद्यस्यापानमिति वर्तते । ईश्वराणां क्रीडादीनाम्, उद्यानगमनम् । वासन्ति-कवस्त्रालङ्कारमाल्यगन्धभोजनादिसेवनं रमणमित्यादीनाम्, आदिग्रहणात् सन्धि-

---

१ अतः घ । इतः क-ख । २ °वे° क-ख । °वि° घ ।

विग्रहआसनयानादिगुणानुष्ठानमित्यादि । निष्क्रमणमित्यादि, यावद् यतीनां निष्क्रमणकालादारभ्य यावद्विमोक्षं, विमोक्षणस्यात्मकर्मवियोगफलस्य मोक्षस्य कालो यतीनां निष्क्रमणादेः काल इति ।

यथोक्तम्—"अप्पणो निक्खमणकालं आभोएत्ता चइत्ता रज्जं" ( कल्पसूत्रे ) इत्यादि । तथा दण्डकपाटरुचकमन्थानलोकपूरणक्रियाभिः तत्काले कर्मत्रिकस्या-ऽऽयुषा समीकरणमित्यादि । अनियतचेतनाचेतनत्वेत्यादि, यावत् कलनं कालस्वरूपतादात्मकत्वभावेनैव वर्तते । अनियतं चैतन्यमुपयोगरूपादित्वेन, रूपे चेतनाया उपयुक्तत्वात् । अचेतनत्वेनाप्यनियतं चैतन्योपयोगापत्त्योपयुक्तत्वात् । अथवा तृणादेर्गवाद्यभ्यवहृतस्य सुखदुःखादिचैतन्यापत्तेर्द्रव्यस्य प्राणाद्यापत्तेर्द्रव्य-प्राणातिपातादिभावः । कालक्रमागतपरिणतिवशात् उपशमक्षयक्षयोपशमोदयपरि-णामभावैश्च जीवपुद्गलयोरनाद्यनन्तशो वर्तनात् । न केवलं चेतनाचेतनयोः परस्पर-रूपापत्तिः, वृत्तैव वृत्तिः । किं तर्हि ? अचेतनस्यापि पृथिव्यादित्वेनापि तथा, तद्य-थैकजातित्वात् पुद्गलानां पृथिव्युदकज्वलनपवनवनस्पत्यादित्वेन विपरिवर्तमानप-रिणतीनां अनाद्यनन्तश एवं वृत्तिर्वर्तनम् । तस्यात्मा स्वं तत्त्वं येषां परमाणूनां ते परमाणवस्तेषामनाद्यनन्तवर्तनात्मस्वतत्त्वानां वृत्तेः कलनात्मकं रूपं भूयो भूयो विप-रिवर्ततेऽभ्यावर्तते । रूपरसादिभेदः परिवर्तते । तद्गुणभेदेनाप्येकद्वित्रिसंख्येयानन्त-गुणभागहीनवृद्ध्या कृष्णशुक्लत्वादिना वाभ्यावृत्तिरेकांशस्यापि परमसूक्ष्मरूपादि-भावपरमाणोरप्यनाद्यनन्तशोऽभ्यावृत्तिरतस्तदतीतानागतवर्तमानात्मकमेकं 'कूट-स्थमविचाल्यमनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्ययययोगि' ( पा. म. भा. पृ. ५९ ) इत्यादि । आदिग्रहणाद् ध्रुवादिसर्वानित्यलक्षणमेतदेव कलनात्मकषड्कारणमुपपद्यते । नाणुपुरुषनियत्यादिनित्यत्वं पूर्वापरीभूतभावात्मकविपरिवर्तकलनस्यादिमध्याव-सानादर्शनादेवं लक्षणस्य नित्यत्वस्य तस्माद्विश्वविकल्पविवर्तवर्तनायाः कलनं काल इत्यभिसम्भत्स्यते । तच्च कलनं द्विविधमस्मदाद्यसर्वज्ञं प्रत्यनुमानमात्रग-म्यमविविक्तम् । सर्ववस्तुसामान्यमात्रग्रहणममितपूर्णकोष्ठागारधान्यकलनवत् । यथा धान्यममितकोष्ठागारे पूरितं कुम्भशतसहस्राद्यन्यतमपरिमाणमित्युद्देशतो गृह्यते । तथोद्देशमात्रतोऽतीतानागतवर्तमानवर्तनाकलनमस्मदादिभिः, सर्वज्ञं प्रति परमनिरुद्धे काले समये समये वृत्ताया विविक्ताया वर्तनायाः संख्यानं कलनं तत् कालः । 'कल संख्याने' इति प्रतीतेः यथोक्तम्—

१ आत्मनो निष्क्रमणकालं ज्ञानेनावलोक्य, त्यक्त्वा राज्यम् । २ एतेषां स्वरूपजिज्ञासुभिर्विलो-कनीया आवश्यक-तत्त्वार्थाधिगम-स्थानाङ्गसूत्रसप्तमस्थान-विवाहप्रज्ञप्ति(भगवती)-प्रज्ञापनोपाङ्ग-प्रशमरतिप्रभृतयो ग्रन्थाः । ३ सातावेदनीयनामगोत्रसंज्ञस्य ।

"जं जं जे जे भावे परिणमति पयोगवीससादव्वं ।

तं तह जाणाति जिणो अपज्जवे जाणणा नत्थि ॥" (आ०नि०गा०२६६७)

इत्येतद्वर्तमानस्वतत्त्वकालनिरूपणम् । स तथेत्यादि स एव कालस्तथाभूतेन वर्तमानरूपेण कलनार्थेन सामानाधिकरण्येन तां वर्तमानामेव सामान्यमभिन्नामत्यजन्न भूतो भवति भविष्यंश्चेति विशेषव्यपदेशं लभते, नान्यः कश्चिदकलनात्मकपदार्थो नित्यादिरसत्त्वात् । स एव कलनलक्षणो भावस्त्रिधा भिद्यते । तत्समानाधिकरणत्वात् । सत्त्वात्मकत्वाद् घटवत् । न व्यधिकरणो भूतो भवति भविष्यंश्चाकाल एव व्यधिकरणोऽसद्रूप एव । किं कारणम्? अन्यथाऽन्यस्याभावात् । इह ह्यन्यथा न भवति, यथा कुसुमं खपुष्पं न भवति । खपुष्पं वा कुसुमं न भवति । घटो वा पटतया न भवति । पटो वा घटतया न भवति । किं तर्हि? तदेव तद्भवति । कुसुममेव कुसुमम्, तदेव चान्यथापि भवति, यथा कुसुममेव मुकुलितार्द्धविकसितसमस्तविकसितजरन्ताम्लादिना । एवं तावत् काल एव भाव इत्यभेदेन भवनं व्याख्यातम् । कारणभेदेनापि स एव तथा कलयन् वर्तनेन कल्पत इति । कल्पनस्य कर्तृत्वमनुभवतीति कलनं भवतीत्यर्थः । स एव कल्पते क्रियते कर्म भवतीत्यर्थः । पूर्वापरतया कार्यकारणभावात् । तेन च तस्य चेत्यादिना तस्यैव कलनस्य शक्तिभेदात् तेन क्रियत इति करणता, तस्मै क्रियत इति सम्प्रदानता । ग्रहणात् तस्मात् तस्मिन्नित्यपादानाधिकरणते वापि तस्यैव । इदानीं कालस्य त्रिधा भिन्नस्याप्यभेदोपदर्शनार्थं ज्ञानेन क्रियया चैक्यमुच्यते—एवमेव चेत्यादि, ज्ञानेन तावदेकत्वं दृश्यते । यावदेकत्र मेघादिरिति । एवमेवेति । यथैव कर्तृकर्मकरणादिशक्तिभेदेऽप्यभिन्नः कालः । तथा स वर्तमानातीतयोः कारणावस्थयोः । एवं सप्तम्यन्तोऽयं निर्देशः । कार्यस्याभिमुख्येन गृह्यते । कार्याङ्गीकरणेन तत्प्राधान्येन तदात्मनेति यावत् । वर्तमानावस्थायां कार्यस्याभिमुख्येनातीतावस्थायां चोत्तरावस्थाभिमुख्येन स एव कालो गृह्यते । किमुक्तं भवति? कल्पते ज्ञायते । यथासंख्यमेकत्र पटादिरेकत्र मेघादिः वर्तमाने पटादिरतीते मेघादिः । तद्यथा-पुरुषो हि पूर्वाह्णे पटं पश्यन्नपराह्णेऽपि पट एवायम्, श्वोऽप्यपरेद्युरुत्तरेद्युरपि वा पट एवेति, वर्तमानकालेऽपि पटमेष्यत्कालेऽपि पटमेव मन्यते । मेघे चोन्नतमात्रे वर्षति पयः । ततः प्रलही बीजमुत्पद्यते । मूलाङ्कुरादि भवति । ततः प्रलही पोण्डं, ततः कर्पासः । ततः सूत्रं । ततः पट इत्यतीतकाल एवैष्यत्कालं पटं मन्यत इत्यतः कार्याख्याभिमुख्येन स एव कालोऽतीतो

१ यद् यद् यान् यान् भावान् परिणमते प्रयोगविस्रसाद्द्रव्यम् ।
तत् तथा जानाति जिनोऽपर्यवे परिज्ञा नास्ति ॥ २ °पर्युषो ग । ३ °कुसुमं ग ।
४ कपात° ग । ५ न्यवेशः ग । ६ तादात्म्ये° घ । ७ °भ्रं ग । वर्षत्ययं घ ।

वर्तमानश्चाभेदेन गृह्यमाणो दृष्टस्तस्मादभिन्नः । एवं ज्ञानेनैक्यमापाद्य क्रिययाप्यैक्यमापादयत्यतिदेशेन—ग्रहणवच्च स एव क्रियते । किं कारणम्? तथावृत्तेः । एवं हि वर्तनं सैव हि क्रिया यथा गृह्यते तथा क्रियतेऽप्यसावेवाभेदेनेति तत्कारणं[1]-कार्ये दर्शयति—**क्रियया कल्पत इति** । एवं तावदतीतवर्तमानयोः कारणयोः कार्याख्याभिमुख्येन ग्रहणकरणाभ्यां ऐक्यम्, नामाख्या[2] शब्दः, **शब्दमात्रेणैव भेदात् तयोरप्यनागते** । तयोः कारणयोरप्यनागते कार्ये अतीतवर्तमानयोः कारणाख्याभिमुख्येन कार्याख्याभिमुख्यकारणैक्यवद्ग्रहकरणयोः समाना कल्प्यमानता दृश्यते । ततोऽप्यैक्यमेव । तद्यथा—संयोगतन्त्वाद्युदकगर्भसर्जनपाचनादिवर्तनपटत्ववत् । यथा तन्तूनां संयोगं[3] दृष्ट्वा रुत—कर्पास—प्रलहीपोण्डप्रलहीमूलाङ्कुरादिजलसर्जनपाचनधारणमेघकलनानि वृत्तानि । तथा च क्रियन्त इति तान्येव वर्तनानि पट इत्येष्यत्पट एव । तथा तन्तुवायस्य ग्रहणकरणाभ्यां प्रवृत्तत्वात् वर्तमानातीतपटता दृष्टेत्यैक्यमेव । **अत एव चेत्यादि** । एतस्मादेव कारणाद्वर्तनस्याप्रतिघाताद् व्यापित्वाच्च करणान्तरापेक्षा नास्ति । कलनमेव ह्येकमनन्यसाधनम् । स्वयमेव कार्यकारणवृत्तित्वेन विपरिवर्तितुं क्षममपुरुषकारं चेतनाचेतनेषु वृत्तेरभेदादस्वभावं जीवाजीवात्मकपरिणतिक्रमविवृत्त्यजस्रत्वात् । अनियततथान्यथाभावविपरिवर्तनात्मकत्वादेव संसाराभिरूपद्व्यणुकत्र्यणुकादिभूम्यम्बुव्रीह्याद्याहाररसरुधिरादिविपरिवर्तनस्य भावान्तरसंक्रमणलक्षणत्वात् संसारस्य । **अत एवानादि**, अनादित्वेन दूरमपक्षिप्ता नियत्यादिकारणान्तरापेक्षाऽनेनाकलनेन[4] तस्मादनादित्वात् कालवृत्तिः, अस्या एव कालवृत्तेरेव केवलायाः कारणान्तरनिरपेक्षाया हेतोः यदप्युच्यते पुरुषवादिना पुरुषक्रियात एव सर्वमिति । तदस्मादेव कालाद्भवति न तु पुरुषकारात् । अनादीनां यौगपद्यादिमतां पौर्वापर्ययुक्तवृत्तित्वात्, तयोश्च कालत्वात् किल तेनैव पुरुषवादिना कालस्य समर्थितत्वादिति । अत आह—पुरुषवाद्युक्तमुक्तिक्रमार्थतुरीयवचनादेव सुषुप्तावस्था विशुद्ध्यन्ती सुप्तावस्था भवति, सुप्तावस्था[6] च जाग्रदवस्था भवति । जाग्रदवस्था विशुद्धा सती तुरीया मुक्त्यवस्था भवतीति कालसामर्थ्यात् क्रमात्मलाभो घटते । तस्मात् सुषुप्तादेरवस्थाविशेषाव्यवस्थानस्यानादिकालप्रवृत्त्यात्मकत्वं परमात्मनो वर्तनतत्त्वं स्यात् । अस्मन्मत एवमेव घटते न पुरुषवादे क्रमाक्रमविकल्पाभावात् । अन्यथा व्यवस्थाचतुष्टयस्यैकसर्वगतनित्याक्रमकारणात्मकस्य कतमावस्था प्रथमा द्वितीया तृतीया तुरीया वेति ? ।

किं चान्यत्—वृत्तिक्रमापादितकार्यकारणावस्थयोः कार्यकारणभावोपपत्तेर्मिथ्यादर्शनादिभिः सामान्यहेतुभिस्तत्प्रदोषनिह्नवादिभिश्च विशेषहेतुभिः कर्म-

---

१ कत्त्वकार्थं घ । २ मा° क-ख । ३ °गो दृष्टो ग । ४ का° ग । ५ °ना कालाभजन° ग ।
६ सुप्तासुप्ता° ग ।

बन्धप्रक्रियोपपत्तेः संसारानादिता सन्तानाव्यवच्छेदाद् वा युज्यते पुरुषवादिनः। पुनः परमात्मनः शुद्धात् कूटस्थादिनित्यात् कार्यकारणे द्वे अपि व्यतीतान्न युज्यते संसारो बन्धाभावात्। बन्धाभावः कारणाभावात् अशरीरत्वात् अकरणत्वाच्च। चशब्दात् सर्वगतत्वादेकत्वान्नित्यत्वाच्चेत्यादयोऽपि हेतवः प्रदोषादिकारणाभावात्, प्रदोषभावात् कर्माभाव इत्यादि गतार्थम्। यावत् संसारानादिता।

अत्राह नियतिवादी–तस्य संसारस्यैव तथानियतेः संसारो भवति पुरुषपुद्गलयोः इति। अत्र ब्रूमो–नाऽपि **तस्य नियतेः संसारानादिता**। कस्माद्धेतोः? **अतत्त्वात्**। तद्भावस्तत्त्वम्, न तत्त्वमतत्त्वं तस्मादतत्त्वात् तत् नियतिर्न भवति संसारः। अतत्त्वं चास्य न भवति संसारस्य। क्वचिदुपरमाभ्युपगमात्। स्वहेतोः साध्याविनाभावित्वोपप्रदर्शनार्थमाह–यद्यत् तत्तत् न तन्नियतिर्दृष्टम्। यथा–घटः पटनियतिर्न भवति। पटोऽपि घटनियतिर्न भवति, तस्माद् घटवत् पटवदतत्त्वान्नापि तस्य नियतेरिति साधूक्तम्। किं चान्यत्—एवमेव तस्य स्वभावात्। यदि ब्रूयात् तस्य स्वभावात् संसारानादितेत्येतच्च नापि तस्य स्वभावात्। अतत्त्वात् तत्त्वमस्य पूर्ववन्मुक्त्यवस्थाभ्युपगमात् सिद्धम्। यद्यदेतत् तत् तत्स्वभावं घटपटवदिति। एवं तावदनादिसंसारता नोपपद्यते नियत्यादिवादे कालमन्तरेणेत्युक्तम्।

इदानीं कालवादे तदुपपत्तिरुपवर्ण्यते–**तस्मात् त्वनादिवर्तमानात्मकत्वादित्यादि यावन्न न युज्यत** इति। तस्मादिति प्रस्तुतात् कालात् संसारानादिता न न युज्यते इति संभंत्स्यते। तुशब्दो विशेषणे। कालवाद एवैतदुपपद्यतेऽनादिसंसारित्वयौगपद्यपर्यायत्वात्, अनादित्वस्य यौगपद्यस्य च कालप्रभाविनाभावित्वात्, कलनवृत्तिपर्यायत्वाच्च कालस्येति।

तत्प्रदर्शनार्थं हेतुमाह—**अनादिवर्तनात्मकत्वात् कालस्य**। कालो हि युगपदनादिवृत्त्यात्मकः।नन्विदं प्रागुक्तेन विरुद्धं पूर्वापरादिवृत्तेरयौगपद्यादिति चेत्, न वर्तनस्य यौगपद्यात्। तद्यथा पृथिव्यादि-व्रीह्यादि-वृत्तीत्यादिदृष्टान्तदण्डकाः। यथा पृथिव्यम्बुवाय्वाकाशपुरुषादयो युगपत् समेता लोकाख्यां लभमाना अनादयस्त एव च व्रीहियवगोधूमचूतपनसादित्वेन स्त्रीपुरुषमहिषाजगवयगवादित्वेन च वर्तते। सहैव भूम्यादिव्रीह्यादित्वेन तादृश्योर्वृत्तिविवृत्त्योरव्यवच्छेदेन स्वत एवात्मविषयोऽस्याः क्रियायाः सा तेषां व्रीह्यादिभूम्यादीनां वृत्तिविवृत्तिप्रबन्धेनात्मस्वरूपविषया क्रिया सैव च बन्धः। स्निग्धरुक्षवृत्त्या तेषां संश्लेषादन्यान्यरूपापत्तिः संसरणं तच्चानादियुगपदुभयबन्धनात् संसरणं दृष्टं, तथा जीवपुद्गलयोरभिन्नवर्तनस्वतत्त्वयोः स्वसाध्येभ्य एवं साधनात्मभ्यः हेतुकार्यभूतेभ्यः कारणेभ्यः

---

१ °वो घ। २ क्रमतोऽपि घ। ३ °न्यतेतत्व° क। °तेभ्यत° घ। ४ °त्याव्ययदेव ग।

परस्परसंश्लेषवर्तनेभ्य इव भूम्यादिव्रीह्यादीनां हेतुभ्यः स्वत एव बन्धक्रिया संसारक्रिया च वर्तनाभेदेन रूपभेदेन चेति दृष्टान्तप्रसिद्धार्थव्याख्यानम् । दार्ष्टान्तिकव्याख्यानं तु कालस्यात्मस्यात्मन्येव क्रिया अनात्मस्यात्मनि चेति । कालस्याभिन्नवर्तनस्वतत्त्वस्य भूम्यादिव्रीह्यादिवच्च संसरणवदेवात्मस्यात्मनि जीवस्वरूपे क्रिया अनात्मस्यात्मनि पुद्गलस्वरूपे वा युगपदेव बन्धसंसरणविहिता कालकृतबन्धसंसारविहिततत्कृता विधातुरन्यस्याभावात् सैषा संसारता युगपदभिन्नाऽनादिवृत्त्यात्मिका जीवपुद्गलयोः परस्परं स्वात्मपरात्मवृत्तिकृतबन्धसंसारानादिता न न युज्यते । विरोधाभावादित्यभिप्रायः । एवं तावद्यौगपद्यलिङ्गकालकृतसंसारानादिता । पूर्वापरादिलिङ्गकालकृतसंसारानादिताऽप्यस्मिन् दर्शने न, विरुद्ध्यत एवेति । अत आह—इत्यादिना **वर्तनाप्रभेदेनेत्यादि**, इतिशब्दार्थ इत्थमर्थे । इत्थमुपपादिता अनादितायाा एव वर्तनायाः प्रभेदास्ते पूर्वापरादिक्रमात् । त एव भवान्तराणि क्रमेण प्राप्तानि । कानि तानीति चेत् ? भूम्यम्ब्वादियोगः बीजोद्भेदः मूलमङ्कुरा इत्यादि गतार्थम् । यावत् **कुरुकतन्दुलोदन** इति । ओदनादप्यभ्यवहृताद्रसादि, यावत् कडेवरं, कडेवरात्, मृत्, मृदो मृत्पिण्डः । मृत्पिण्डकाच्छिवकः । पुनर्यावद्भूम्यादित्वेन परमाणुद्व्यणुकादिसङ्घाताः । जीवपुद्गलवृत्तिपरिवर्तिभेदेन वर्तनेनैवारभते प्रवर्तते नितिष्ठतीत्यारम्भप्रवृत्तिनिष्ठः । पुनर्विपरिणामोऽन्यरूपेणाविर्भावः स आरम्भः । प्रवर्तनं स्थितिर्निष्ठा तिरोधानमित्येतदनुपरतधर्मत्रयचक्रकमयुगपद्वृत्तावपि युगपद्वृत्तावपि पूर्वाभिहितबन्धसंसरणवदुत्पत्तिस्थितिभङ्गा अपि वर्तनस्यात्मैव । तदेव हि वर्तनं परिवृत्त्यपरिवृत्तिष्वित्यविरोधं कालकारणवादस्य दर्शयति—तत्प्रसिद्धिप्रदर्शनार्थमाह—ननु कृषीवलादिभिरपि पर्युपास्यत इति, किं पुनर्विद्वद्भिरित्यर्थः । **तथा तथा** यथा यथासौ कालो व्यवतिष्ठते तथा तथा पुरुषः पर्युपास्ते । आविर्भूतश्चूताङ्कुरकालो न तावदाविर्भूत इत्याविर्भूतानाविर्भूतात्मा । **तस्मादेव चेत्यादि** । तस्मादेव च वर्तनालक्षणात् कालादवगमितद्रव्यक्षेत्रभावा आत्मानोऽस्य तस्मादवगमितद्रव्यक्षेत्रभावात्मनः । अवगमितद्रव्यक्षेत्रभावात्मकादित्यर्थः । प्राग् निमित्तं द्रव्यं भूम्यादिव्रीह्यादिद्रव्यात्मा काल इति । घटो ग्रीवादय इति । क्षेत्रं भावो रूपादयः । न केचिद्युगपदात्मिकां वृत्तिप्रख्यातिं कालमन्तरेणेति । कालत्वावगमनं वर्तत एव । तस्माद्द्रव्याद्यात्मकात् कालात् सुषमसुषमादिभ्य उत्सर्पिण्यवसर्पिण्याख्यकालभेदेभ्यः परमनिरुद्धसमयत्वेनाभिन्नादपि सुषमादिभेदात्मकाद्भावभेदाः सम्भवन्ति ।

तद्यथा—सुषमसुषमायां[1] सुषमायां सुषमदुःषमायां चात्रैव भारते क्षेत्रे देवलोक-

---

१ सुषमसुषमायां त्रिक्रोशोच्चाः त्रिपल्योपमायुषः, सुषमायां द्विगव्यूत्युन्नताः पल्यद्वयायुषः, सुषमदुःषमायां गव्यूतोच्चाः पल्योपमायुषो युगलिनः ।

वद्भवन्ति । प्रतनुक्रोधमानमायालोभास्त्रिद्व्येकगव्यूतोच्छ्रितदेहास्तावत्पल्योपमजीविन्यो मिथुनधार्मिकाः प्रजा मण्यङ्गादिकल्पतरुकल्पितोपभोगविधयः[1] । स्वादुसुरभिजला चतुरङ्गुलहरिततृणा निम्नोन्नतवर्जिता सुरभिस्वादुरसा सुखस्पर्शादिगुणा भूमिरित्यादि । स एष पुनरनुभावः प्रभुविभुत्वाभ्यां काल एव हि प्रभवति विभवति च सर्वं भावैर्भेदानामुपपत्तिस्थितिप्रलयेष्वात्मप्रभेदमात्राणाम् । तथा दुष्षमसुषमायां सुखदुःखसमत्वाद्भूयिष्ठसुखत्वाद्धर्माचारभूयिष्ठत्वाच्च मनुष्यलोकवद्भावभेदाः । दुःषमायामाहारभयमिथुनपरिग्रहसंज्ञाप्राचुर्यादधर्मकर्मोन्मार्गप्रस्थानभूयिष्ठत्वाच्च तिर्यग्लोकवत् । दुःषमदुःषमायां नरकलोकवद् दुःखैकरसत्वात् । यथा कृतत्रेताद्वापरकलियुगसंज्ञाविभागेषु व्याख्याविकल्पमात्रभेदेषु युगेषु ।

किं चान्यत्—एकसमायामपि भावभेदास्तत्प्रभुविभुत्वाभ्यामेव संवत्सरवर्तनात् । सुभिक्षदुर्भिक्षादिभावभेदाः, एवमुत्तानार्था भावभेदा नेयाः । यावदेकमुहूर्तेऽपि लग्नवर्तनात् । नालिकालवादिभेदेन च भावभेदा नेयाः, यावत् परमनिरुद्धसमयवर्तनेऽन्यस्मिन्[2] यथास्मिन्निति । एकस्मिन्नपि काले उत्पातादिवर्तनाद्भावभेदव्यभिचार इति चेत् । न, कालदोषाभावात् । उत्पातोपघातस्यापि कालकृतत्वात् । कस्यचिद्भावस्य व्यक्त्युपघातात् कालेऽपि शुनो मैथुनाभाववत् । तस्य व्याधिकालमरणकालादीनां तथाभावात् । तस्मादेवावलिकादिस्वरूपवर्तनाभेदादेव मुहूर्तजातानामपि पुरुषाणां तन्मात्रभेदप्रभेदैः[3] स्वामिभृत्यादि, कश्चित् स्वामी कश्चिद्भृत्यो भवतीति जन्मकालभेदात् भावभेदा अनुमातव्या धूमादग्निवत् । आदिग्रहणात् सुरूपकुरूपसुभगदुर्भगप्राज्ञाप्राज्ञादिभावभेदाः । तस्यैव च व्यापित्वात् । चशब्दात् प्रभविष्णुत्वाच्च । एवं हि कालकारणस्य प्रभुता व्यापिता च । यत एतद्वर्तनावर्तविपरिवर्तभेदप्रभेदास्तथा तथा युगपदेव पश्यतां विश्वदृश्वनामर्हतां प्रवचने कालज्ञानमवितथं प्रमाणीभूतं तद्विषयं दृश्यतेऽद्यतनेऽपि केषुचित् पुरुषेषु । कलिबलमलीमसप्रज्ञेष्वपि ।

---

१ अरएसु वि एएसुं तीसुं जुयलाइं हुंति लोयाणं ।
दसविहकप्पदुमकयसमत्थभोगप्पसिद्धा उ ॥ १८ ॥
मत्तंगया य १ भिंगा २ तुडियंगा ३ दीव ४ जोइ ५ चित्तंगा ६ ।
चित्तरसा ७ मणियंगा ८ गेहागारा ९ अणिगिणा १० य ॥ १९ ॥
मत्तंगेसु य मज्जं १ सुहपिज्जं भायणाणि भिंगेसु ।
तुडियंगेसु य तुडियाइं हुंति बहुप्पयाराइं ३ ॥ २० ॥
दीवसिहा ४ जोइसनामगा य एए करेंति उज्जोयं ५
चित्तंगेसु य मल्लं ६ चित्तरसा भोयणट्ठाए ७ ॥ २१ ॥
मणियंगेसु य भूसणवराइं ८ भवणाइं भवणरुक्खेसु ९ ।
तह अणिइणेसु धणियं वत्थाइं बहुप्पयाराइं १० ॥ २२ ॥—विचारसारे पृ. ३३

२ °न्नन्यथा घ । ३ °प्रभवात् घ ।

स्यान्मतम्—क्वचिद्विसंवदनदर्शनात् कालज्ञानाप्रामाण्यमिति । एतच्चायुक्तम्, अतिसौक्ष्म्याच्चास्य तज्ज्ञानाभिमुखानां क्वचिद्वचनविसंवदनमपि प्रणिहितधियामपि पुंसां क्वचित् ज्ञानविसंवादात् कालसौक्ष्म्यं दुरुपलक्ष्यत्वात् । कारणं छद्मस्थानां ज्ञेयानन्त्यादज्ञानबहुत्वात् ज्ञानपरमितत्वाच्च । सर्वस्य सरागस्य ज्ञानादज्ञानं बहुलमिति ।

तथा च—'केसिं[1] णिमित्ता नियया भवंति । केसिं च णं विप्पडिएति णाणं' अत एव साशङ्कमन्वाहुरन्ये—'न विनिश्चितं प्रसह्य यथा 'कालः पचती'त्यादि' भूतानां वर्तनात्मकात् कालादन्यत्वाभ्युपगतात् अनन्यत्वेन कालवर्तनात्मकत्वेनैव न विनिश्चितम् । तथा प्रजानामन्यत्वे संहरणं सुप्तानां जातानां वा[2] । तदन्यत्वेन निर्देशादविनिश्चितत्वात् साशङ्कमेव भेददर्शनेनानुपात्तेनोक्तत्वात्[3] ये पुनर्विनिश्चितधियैस्त[4] प्रसह्यैवं वदन्ति । तद्यथा—'काल एव हि भूतानि' भूतत्वेन कालस्यैव वर्तनात् 'कालः संहारसंभवौ' । यथोक्तं प्राक् 'रूपादयो न केचित् कालमन्तरेण'इति । भूम्यादिव्रीह्यादिवदात्मन्येव संभवसंहारक्रिये इति च बन्धसंसाराविति वचनाच्च । स्वपन्नपि जागर्ति स एव स्वपिति जागर्ति च । न तु स्वपद्भ्यो जाग्रद्भ्यो वा व्यतिरिक्तः कश्चित् ते वा, ततः स्वप्नभेदक्रमसहवृत्तिमात्रत्वाज्जाग्रत्स्वपदवस्थायाः सुप्तवृत्त्यानाविर्भूतात्मनस्तस्यैव कालस्य जाग्रद्वृत्त्याऽभिव्यक्तविक्रमत्वात् । क्वचित् क्रमेण भेदवृत्तिविजृम्भितत्वात् सामान्यवर्तनस्य सुप्तविबुद्धादिस्वप्नभेदेष्वव्याघातात् ।

इति कालकारणवादो विधिविधिविकल्प एव समाप्तः ॥

---

## अथ स्वभाववादः ।

**तद्विकल्प एव स्वभावभावोऽधुना । ननु तैः सर्वैरित्यादि,** ज्ञः स्वतन्त्रश्च पुरुष एव भवतीति । स्वातन्त्र्येऽसत्यपि ज्ञानरूपा रूपक्रियाक्रियादिनियमान्नियतिरेवेति । सर्वत्र वर्तते[5] प्रभुविभुत्वाभ्यां काल एव भवतीति च । एतैर्वादैर्ननु स्वभाव एव भवतीति भाव्यते । भवन् भाव्यतेरेव प्रतिपाद्यते । किं कारणम् ? द्रव्यार्थप्रसवाद्यत्पुरुषादयो भवन्ति स तस्य भावस्तत्त्वमात्मीयो भावः स्वभाव इत्यनर्थान्तरम्, ततश्च तत्र ते भवन्तीति तदात्मनोऽभिसम्बध्यन्ते । पुरुषादीनामात्मानो भवन्ति तैर्भूयते यथास्वमिति भावेन तेषामभिसम्बन्धः । ते भवनस्य कर्तृकमनुभवन्ति ज्ञानस्वातन्त्र्यनियमवर्तनात्मकं तत्त्वादिति वदद्भिः स स स्वभाव एव परिगृहीतो भवति । एवं च स्वभावपरिग्रहे सति कारणान्तरपरिकल्पना व्यर्थेति ।

---

१ केषां निमित्ता नियता भवन्ति केषां च विप्रतिपद्यते ज्ञानम् ।

२ च घ । ३ दर्शनानु° क-ख । ४ °विषया° क-ग । ५ °नतत्वः घ ।

अत आह–**तथा च स्वभावे सर्वेत्यादि** । यावत् **के ते ?** सर्वभावानां पुरुषादीनां स्वं स्वं भवनमात्मा यस्य सोऽयं सर्वस्वभावात्मा तस्मिन् स्वभावे भवति । भवनस्यानुभवितरि कर्तरि स्वतन्त्रे भवति, भवतेर्वा कर्तरि सति सिद्धे स्वभावे सिद्धस्यासाध्यत्वात् सिद्धौदनवदर्थान्तरनिरपेक्षैतरेव वादैः प्रतिपादिते के ते पुरुषादयः ? न ते भवन्तीत्यर्थः । किं तैर्विना स्वभावस्य ? न प्रतिप्राप्तं कार्यम् । स्यान्मतम्–तेषां स्वो भाव आत्मीयः स्वभाव इति तामपेक्षत इत्येतच्चायुक्तम् । यस्मात् तेषामपि स्वत्वं स्वभावापादितमेव, ते ह्यात्मानः स्वे तद्भावः स्वत्वं तद्धि तेषां स्वत्वं पुरुषादीनां केनापादितम् ? । स्वात्मभिरेव । यद्येवं स्वः स्वो भावः स्वभावः परस्परविविक्तः स्वभाव एवेत्यापादितं स्वात्मभिरेव तत् । अन्यथा यदि तदात्मत्वं तेषामात्मभावापादितमेव न स्यात्, ततस्ते त एव न स्युरनात्मत्वाद् घटपटवत् । यथा घटः पटानात्मत्वात् पटो न भवति, पटोऽपि घटानात्मत्वाद् घटो न भवति । एवं पुरुषादयोऽप्यात्मानात्मत्वादात्मानो न स्युर्न स्युरेव वा अनात्मत्वात् खपुष्पवत् । तस्य स्वभावकारणत्वस्य व्याप्तिप्रदर्शनार्थमाह–**एवमेवेत्यादि** । इत्थमेवैतत् । अवश्यमत्रैव तत्र तत्र यथा स्वभाववादे स्वभावानतिक्रमात् स्वभाव एवेत्यभिन्नम् । स्वभावव्यतिरिक्तार्थाभावात् । तस्य चाभिन्नत्वात्, तथा तत्र तत्र पुरुषनियतिकालादिवादेऽप्युक्तविधिना पुरुषादिस्वभावानतिक्रमात् सर्वैकत्वमभिन्नं तद्भावत्वादेव वर्ण्यते । ज्ञात्मभवनस्य नियमात्मभवनस्य वर्तनात्मभवनस्यान्यस्य च तस्य तस्य स्वभावादेव वर्णनात् । इतिशब्दो हेत्वर्थे । अस्मादुक्तहेतोः स्वभावः प्रकृतिरशेषस्य योनिर्बीजं प्रभवः कारणमित्यर्थः ।

किं चान्यत्—**पुरुषादीनां च स्वत्व इत्यादि**द्रव्यार्थस्य कश्चिदपरित्यज्य वृत्तेर्नयानां पूर्वविरोधित्वादुत्तरानुवृत्तेश्च । कालस्य पुरुषाद्यपरित्यागेन वृत्तिं तावद्दर्शयति—कालवादे पुरुषादीनां स्वत्वं सत्त्वानपोहात् । कथं सत्त्वमनपोढम् ? । संसार्यनादित्वाभ्युपगमात् पुरुषत्वम् । तस्मिन्नेव काले नियतेरप्यात्मत्वं सत्त्वानपोहात् । सत्त्वानपोहश्च युगपदयुगपन्नियतार्थाभ्युपगमात् । एवं कालवादे नियतिपुरुषयोः सत्त्वाभ्युपगमः । तथा पुरुषवादे नियतेः कालस्य चात्मत्वं सत्त्वानपोहात् । कथं सत्त्वानपोहः ? । मुक्तिक्रमाभ्युपगमात् कालसत्त्वानपोहः । अवस्थानियमाभ्युपगमान्नियतिसत्त्वानपोह इत्यादि । एवं नियतिवादे कालपुरुषयोः स्वत्वमात्मत्वं सत्त्वानपोहात् । कालसत्त्वानपोहोऽनादिमध्यान्तां नियतिमिति कालसत्त्वाभ्युपगमात् तां संप्रपश्यन् सर्वज्ञ इति पुरुषसत्त्वाभ्युपगमात् । एष द्रव्यार्थस्य सर्वत्र सर्वसत्त्वात् स्वभाव इत्युद्ग्राहः कृतो भवति । तत्र

१ °दन्यो क–ग । २ य° ग ।

सत्त्वानपोहात् । सत्त्वे तुल्ये काल एव भवनात्मानः पुरुषादय इति न स्वभावादृते सिद्ध्यति । तत्स्वतत्त्वस्य सत्त्वाविनाभावात् । कालोदाहरणं तु कालवादिदूषितपुरुषादिवादानामपि तद्दूषणेन दुष्यत्वात् । तत्प्रतिपादनवत् प्रतिपाद्यत्वाच्च

यथोक्तम्–'समनन्तरानुलोमाः पूर्वविरुद्धा निवृत्तिनिरनुशया' इति । कालवाद्याह–नातुल्यत्वात् सत्त्वस्य कालसत्त्वपुरुषत्वयोरन्योन्येनातुल्यत्वात् । अथ न तुल्यत्वात् कालस्यैवैकस्य व्रीहिवत्तथात्तथाभवनात् । पुरुषादेश्च पृथक् पृथक् भिन्नभावात्मकभवनात् । यथा व्रीहिरेवैको मूलाङ्कुरादिभावेन भवति तथा काल एव तथातथावर्तनात्मा भवति । व्रीहिवन्मूलाङ्कुरादित्वेन तथा पुरुषादयः भिन्नात्मभवनात् इति ।

अत्रोच्यते–नन्वेवमपि कालस्यैव नान्यस्येति । कालस्यैव भवनं न पुरुषादेरिति वचनात् सुतरां कालस्यासौ भवनात्मेति स्वभाव एव परिगृहीतो भवति । यथा च त्वयोच्यते 'सत्त्वातुल्यता कालस्यैव व्रीह्यादिवदङ्कुरादिवच्च पुरुषादीनां भवनम्' इति । तथा च पुरुषादीनां कारणकार्यनियमादपि चैव स्वभावः कालकारणं व्रीह्यादिवत् । कार्यं पुरुषादयोऽङ्कुरादिवत् । **नियमात्मा स तस्य स्वभाव** इति । स एव स्वभावः परिगृह्यते परैः । सर्वत्र सत्त्वस्य हेतुत्वेन विवक्षितस्य सत्त्वाविनाभावित्वेन भावानाम्, इह सिद्धस्यैव स्वभेदेऽप्यभेदेन व्यवस्थितस्य सामान्यविशेषव्यवहारप्रसिद्धिभावेनेति विशेषः । **कालस्यैव तत्त्वादित्यादि, यावदभावे एवेति चेत्** । स्यान्मतं भवतः–'त्रैकाल्यैककूटस्थत्वात् कालस्यैव तत्त्वात् कालवादे कारणं कार्यम्' इति विभागाभावादसौ सामान्यविशेषव्यवहाराभाव एव मिथ्यात्वाच्चास्य व्यवहारस्यासद्विषयत्वादिति चेत् । एवमपि स एव स्वभावो भवतीति वाक्यशेषः । कालस्यैव हि स स्वभावो यदसौ भवतीति स्वभावपरिग्रहः ।

**किं चान्यत्**—व्यवहारप्रत्याख्याने प्रागभिहितकालास्तित्वानुमानप्रत्याख्यानदोषस्तद्यथा–पूर्वादिव्यवहारलब्धकालाभावश्चैवमपूर्वादित्वान्नियतिवत् । यथा पूर्वापरादिकारणकार्यव्यवहाराभावान्नियतिर्नास्तीत्युच्यते । तथा कालोऽपि तदभावान्नास्तीति प्राप्तम्, यदपि च कालानुमानयुगपदयुगपद्वृत्त्या घटरूपादीनां व्रीह्यङ्कुरादीनां चोच्यते तदपि स्वभावानुमानमेव सम्पद्यते यस्माद् युगपदयुगपदित्यादियुगपद्वर्तनात् क्रमवर्तनाच्चातिरिक्तस्य कस्यचिदभावात् काल एवेत्युद्देश्य निर्देशार्थं घटरूपादि व्रीह्यङ्कुरादि चोदाहृतं तस्योद्देश्यस्यानिर्देश्यस्य च भावस्य तेन तेनात्मना भवतो भवनादेव । तुर्विशेषणे च । स्वभावोऽभ्युपगम इति दर्शनार्थम्, अथवा नैतद्युक्तिगम्यं स्वभावकारणम् । तथा च दृश्यते तेष्वेव तुल्येषु भूम्यबादिषु हेतुषु भिन्ना-

१ °वन् योज्यते ग ।

त्मभावं प्रत्यक्षत एव कण्टकादि कण्टकस्य मूलतः क्रमहीनतनुरायत आदिग्रहणात् पत्राङ्कुरादि संस्थानवर्णादि भिन्नात्मभावं पुनस्तदेव कण्टकादि तीक्ष्णादिभूतं तीक्ष्णं तीक्ष्णतरं कुण्ठं कुण्ठतरं सविषं निर्विषमित्यादि । न पुष्पादि तादृग्गुणं सुकुमारादिस्वभावं सुरभिदुर्गन्धादिस्वभावं च । तच्च वृक्षादीनामेव तच्च कण्टकादिवृक्षवल्ली-पादपानामेव तत्रापि[1] बब्बूलादीनामेव न न्यग्रोधादीनां न चैषां मयूरचन्द्रकादीनां वृक्षादीनां नच बर्हिणपारापतादीनां कण्टकादि । तथा मयूराङ्केत्यादि । यावद्वै-चित्र्याणि । बर्हादीनामेव पञ्चवर्णता नोदकादीनां, नान्यदपि च । मयूरादिबर्हाण्येव विचित्राणि न शुकादिबर्हाणीति । अन्वाह चेति पूर्ववज्जिनवचनानुसारेणैव । 'कः कण्टकानामित्यादि । 'केनाञ्जितानि०'[3] इत्यादिगतार्थैर्वृत्तैः ।

इतर आह–यदि स्वभाव एव कारणमित्यादि, यावत् किञ्चिच्च नेति । अर्थान्तरव्यपेक्षोत्पत्तिदर्शनान्न स्वभाव एव कारणम्, आस्यकवलप्रक्षेपवत् । दृष्टा च कण्टकादेरुत्पत्तिर्भूम्यादिद्रव्यविनिर्वृत्तिव्यपेक्षैवानपह्नवनीया, सा च न स्याद्भूम्यादिद्रव्यनिर्वृत्तिव्यपेक्षोत्पत्तिः, स्वभावादेव स्वभावस्यार्थान्तरनिरपेक्षकारणत्वात् । यदि च स्वभाव एव कारणम्, किं कारणं न स्वभावमात्रादेव भूम्यादिद्रव्यविनिर्वृत्तिनिरपेक्षा कण्टकाद्युत्पत्तिर्भवेत् ? । किंच–कारणमन्यथापि न स्यात् भूम्याद्यन्तरेण निर्वृत्तिः कण्टकस्य न स्यात् । किंवा कण्टकस्य सौकुमार्यं कुसुमस्य वा तैक्ष्ण्यं च स्यात् । सोऽपि कण्टकः किमर्थं विध्यति ? । कण्टकः किमर्थं किञ्चिदेव विध्यति ? न सर्वं तमपि । किञ्चित् क्वचिदेव प्रदेशे विध्यति न सर्वत्रेत्यत्र विशेषहेतुर्वाच्यः । दृष्टस्यायं नियमोऽर्थान्तरापेक्षः । स तु स्वभावस्यार्थान्तरनिरपेक्षत्वान्नोपपद्यत इत्यत्रोच्यते । न भूम्यादिस्वभावेत्यादि यावद्दृष्टैव । यदुच्यते भूम्यादिद्रव्यविनिर्वृत्त्यपेक्षा चोत्पत्तिर्दृष्टेत्येतत्तदुपेक्षापत्तिदर्शनस्वभावव्यभिचाराच्च स्वभाव एवेति मन्तव्यम् । तद्यथोत्पातादिष्वकण्टकानां वृक्षादीनां कण्टकाः, कण्टकिनां चाकण्टकाः नित्यादिलिङ्गत्वेन दृष्टाः । यथोक्तम्—

अकण्टकाः कण्टकिनः कण्टकाश्चाप्यकण्टकाः ।
विपर्ययेण दृश्यन्ते वदन्ति निधिलक्षणम् ।। इति ।

इत्थं सत्यामपि भूम्यादिद्रव्यनिर्वृत्तौ कण्टकाभावादसत्यामपि एतद्रव्यका-

---

१ °मूलं तक्र° ग । २ विलोक्यतां १६० तमं पृष्ठम् ।
३ पूर्णं पद्यं त्वेवम्—केनाञ्जितानि नयनानि मृगाङ्गनानां ?
° को वा करोति रुचिराङ्गरुहान् मयूरान् ? ।
कश्चोत्पलेषु दलसन्निचयं करोति ?
को वा करोति विनयं कुलजेषु पुंसु ? ॥
४ °त्याग । ५ °त्यौ ग ।

लादिनिवृत्तौ कण्टकदर्शनाच्च नापेक्षास्ति स्वभावस्य, किं तूत्पातादिस्वभावनियम-वशादव्यपेक्षितद्रव्यकालादिरपि दृष्टैव कण्टकाद्युत्पत्तिर्न पुनस्तत्स्वभावमन्तरेण सोत्पत्तिरस्तीति ततः स्वभाव एवाव्यभिचाराद्व्यापित्वाच्च कारणमेषितव्यम् ।

किं चान्यत्–**अपि चेत्यादि**, अपि च त्वया 'भूम्यादिरपि[1] द्रव्यविनिर्वृत्त्यपेक्षैव । भूम्यादीन्येव वृक्षत्वे कण्टकद्रव्यत्वेन तैक्ष्ण्यादित्वेन च निर्वर्तन्ते । तत्समायोगनिर्वृत्त्यपेक्षा कण्टकनिर्वृत्तिः' इति ब्रुवता ननु [2]सैव स्वभावसिद्धिस्त्वयैव वर्ण्यते । किं कारणम्? भूम्यादिभ्य एव भूम्यम्बुक्षेत्रबीजाङ्कुरादिद्रव्यनिर्वृत्तिभ्य एव कण्टको भवतीति । तत्स्वभाववर्णनात् अन्यथास्वभावात् । किमन्यदत्र शक्यं वक्तुं कारणम्? भूम्यम्बुक्षेत्रबीजाङ्कुरादिभ्य एव कण्टको भवति, न मृत्पिण्डादिभ्य इत्येव तेषां स्वभाव इति स्वभावस्यैव समर्थनं तदपि तेषां तत्तत्स्वाभाव्यात् ।

किं चान्यत्–**यथा पृथिव्यादीत्यपि यावन्निमित्तानामपि निमित्तास्वाभाविकीति** । यथैवायं विश्वथा सर्वथानेकप्रकारं बीजाङ्कुरादिक्रमनिर्वृत्तिः कण्टकादिः पृथिव्यादिस्वभावः पुरुषप्रयत्ननिरपेक्षोऽप्रयत्नत एव भवति । अथवा पृथिव्यादीनामेव प्रागभिहितन्यायेन वृक्षघटादिस्वभावाभ्युपगमाद् यथास्वभाव एव । एवं निमित्तमपि घटपटाद्युत्पत्तौ पुरुषकारसाध्याभिमतायां मृत्पिण्डदण्डचक्रसूत्रोदककुलालादिनिमित्तानां निमित्तता सापि स्वाभाविकी, ततो न स्वभावव्यतिरिक्तं किञ्चित् । एवं च सर्वस्य स्वाभाविकत्वेन तत्र कुत उत्पत्तिरपि [3]या प्रागुक्ता त्वया भूम्यादिद्रव्यविनिवृत्त्यपेक्षैवोत्पत्तिरिति । सा कुतः? नास्त्येव कारणम् । तस्मान्नास्ति सा प्रागेवाभिव्यक्तये विचरितलीनावस्थत्वात् तस्मात् सोत्पत्तिः । **प्रतिवस्तुस्वभाव एवायम्** । वस्तु वस्तु प्रति प्रतिवस्तु, स्वो हि भावः स्वभावः इति निरुक्त्या प्रतिवस्त्वात्मीयं भावमाचष्टे वयःक्षीरादिवदिति दृष्टान्तः, यथा बाल्यकौमारादिवयोऽवस्थाः पूर्वविरचिता एवाविर्भवन्ति । यथा क्षीरदध्युदश्विन्नवनीतघृतावस्थाः । तथा घटादयो निमित्तस्वभावाऽपेक्षाभिव्यङ्ग्यविरचितस्वभावा आविर्भवन्ति । **यदि वाऽसावित्यादि यावद्वन्ध्यापुत्रवत्** । यदि वासावुत्पत्तिस्वभावाऽसदभिहिता न स्यादित्थं पूर्वावस्थायामेव । तत उत्तरत्रापि न भवेदेवाभूतत्वात् वन्ध्यासुतवत् ।

अस्यैवार्थस्य भावनार्थमाह–**एवं मृदादिष्वित्यादि** गतार्थं, **यावन्नाकाशादिषु दृष्टा घटादीनां क्रियाया उत्पत्तिरिति चेत्** ।

स्यान्मतम्–दृष्टाविरुद्धमुक्तं त्वया विद्यमानानां घटादीनां निमित्तापेक्षस्वभावैवोत्पत्तिरिति । क्रियाया एव कुलालस्य घटादेरर्थस्योत्पत्तेर्दर्शनादित्येतच्च न,

---

१ °दिति ग। २ स्वै° ग। ३ यथा ग।

**प्रागनभिव्यक्तेः** । क्रियायाः प्राक् सोत्पत्तिरनभिव्यक्ता अपवरकघटवत् प्रदीपेनेव क्रिययाभिव्यज्यते । नोत्पद्यत इत्यदोषः । **सा सत्यग्रहणनिमित्ताभावे** । किमिति चेत्, सा सत्यर्थेऽनभिव्यक्तिरग्रहणनिमित्तानामत्यासन्नविप्रकृष्टव्यवहितसमानाभिहाराऽभिभवसौक्ष्म्येन्द्रियदौर्बल्यमनोवैयग्र्यपित्तोपघातादीनामभावे सति । किमर्थं भवतीति चेन्मन्यसे । वयमत्र ब्रूमः—**स्वभावादेवेत्यादि** । **यावच्चक्षुरादिना न गृह्यते** । न त्वस्माभिरेव तद्वक्तव्यं[1] स्वभावादेव ग्रहणहेतुषु सत्स्वपि[2] सतोऽर्थस्यानभिव्यक्तौ स्वभाव एव कारणमिति । कस्मात् ? त्वयैवाभ्युपगतत्वात् 'अतिसन्निकृष्टमतिविप्रकृष्टं व्यवहितं वा चक्षुरिन्द्रियं रूपमञ्जनमन्दरादि[3] न गृह्णात्यत्यन्तम्' इत्यत्र केन त्वयैतत् कारणेन प्रतिपन्नमिति पृष्टेनावश्यं स्वभावादिति वक्तव्यम् । अयं हि चक्षुषः स्वभावो यदतिसन्निकृष्टमञ्जनादि न पश्यत्यतिविकृष्टं च मेर्वादीति, शेषेन्द्रियाणामपि स्वभावादेवातिविप्रकृष्टाद्यग्रहणं स्वविषयनियमश्चेति ।

किं चान्यत्—**यथा स स्वभावस्तथायमपि** यथा चक्षुरादीन्द्रियाणामात्मनोऽत्यन्तमतिसन्निकृष्टाद्यग्रहणं स्वभावः, तथाऽनभिव्यक्ताग्रहणं स्वभाव इति **किं न गृह्यते ?** ।

किं चान्यत्—यथैतत्तथा किञ्चिदत्यन्तानुपलब्धिस्वभावमेव भवत्यात्मादि आत्माकाशकालदिगादयः कार्यत एव नियत्यमनुमेयाः पदार्थाः सौक्ष्म्याद्बाह्येन्द्रियाविषयास्ते स्वभावास्तत्र नास्त्यात्मा नास्ति कालो धर्माधर्माकाशदिगादयो वार्था न सन्तीति वृथैव विवदन्ति शाक्यादयः स्वभावभेदमविद्वांसः । तस्माद्यदुच्यते त्वया क्रियातो घटादि निर्वर्तत इति तन्न, पुरुषकामचारप्रयत्नादिभ्यः किञ्चिदपि निर्वर्तते पुरुषात्, तदिच्छातः तत्प्रवृत्तेः । तत्प्रयत्नाद्वीर्यादित्यर्थः । आदिग्रहणात् तद्बुद्धेः । न स्वमतियोगादिभ्यः, सर्वत्र व्यभिचारदर्शनात् । किं तर्हि ? भूम्यम्ब्वादिव्रीह्यङ्कुरादिमृद्घटाद्यभिव्यक्त्यनभिव्यक्तिस्वभावो घटोऽपि पृथिव्यादिस्वभाव एव वस्तुत्वात् तदात्मत्वाद् यथा आपो द्रवाः, स्थिरा पृथिवी, चलोऽनिलो, मूर्तिहीनमाकाशमुष्णोऽग्निरित्यादिषु स्वभाव एव । **तत्र कुतः कस्यचिदर्थिनोऽप्येवं वा विपर्यय एव वारम्भक्रियानिर्वृत्तयः** । आपो द्रवा भवन्तु, स्थिरा पृथिवी, चलोऽनिलोऽग्निरुष्णो, वियदमूर्तं भवत्वित्येवमर्थिनोऽपि पुरुषस्य नारम्भो न चेष्टा न च निवृत्तिर्वा तथा विपर्ययेऽपि मा भूद्द्रवं जलं स्थिराभूश्चलोऽनिलोऽग्निरुष्णो मूर्तिमानाकाश इत्यारम्भः क्रियानिवृत्तिर्वा स्वभावस्यान्यथाकर्तुमशक्यत्वात् । एवं घटादिष्वपि योज्यं स्वाभाविकत्वम् । तथा चाहुरिति स्वाभाविकविज्ञापकमाह—

१ व्यत° ग । २ अस° ख-ग । ३ मदि° क-ख । मन्दि° घ ।

कटुकरसः कटुविपाकः उष्णवीर्यश्चित्रकः तद्वद्दन्ती कटुकरसा कटुविपाका उष्णवीर्या । विशेषस्त्वस्याश्चित्रकात् प्रभावेन विरेचयति । प्रभाव इति स्वभावपर्यायत्वाद्रसादेरपि स्वभावत्वात् स एव सामान्यविशेषाभ्यां तथा तथा वर्ण्यत इति । तस्माद्यत् त्वयोक्तं 'क्रियातो घटाद्युत्पत्ति'रिति । तत्र पृथिवीमृत्पिण्डशिवकादिक्रमापत्तव्यघटात्मनः स्थैर्यात्मवन्न स्त उत्पत्तिविनाशावुक्तहेतुत्वात् । अस्माद्धेतोः कथं घटोत्पत्त्यादि सम्भाव्यते ? आदिग्रहणाद् वक्ष्यमाणौ विनाशविपरिणामावपि कथं सम्भाव्येते ? । नैव सम्भावनीयं तत्रयमित्यर्थः । स्यान्मतम्—कुलालप्रयत्नप्रवृत्तिदण्डचक्रसूत्रोदकमृदादीनां पुरुषाभिसम्बन्ध्यनुरूपघटाद्युत्पत्तिविनाशविपरिणामफलैः, सम्बन्धदर्शनान्न स्वभाव एवेत्येतच्चायुक्तम् । यस्मात् प्रवृत्तिमृदां स स्वभाव एव । यथोक्तं प्राक् 'निमित्तानां निमित्तता स्वाभाविकी' इति । तस्मात् स्वभाव एव । किं चान्यत्—फलस्वभावानुरूपाः प्रवृत्तयो त एव व्यवस्थिताः स्वभावबलादेव मृत्पिण्डदण्डादिभिरेव घटो भवतीति ज्ञात्वा चक्रमूर्ध्नि मृत्पिण्डं संस्थाप्य दण्डग्रहणचक्रभ्रमणादिव्यापाराः घटफलयोग्याः क्रियास्तदनुरूपा व्यवस्थिताः । तथा तुरीवेमशलाकादिसाधनाः सूत्रोपादानतन्तुसन्तानपाचनवपनक्रियाः पटफलस्वभावानुरूपा व्यवस्थिताः । एवं कृषिसेवावाणिज्यपरिव्रज्यादिप्रवृत्तयः स्वभावमेव हेतुं समर्थयन्त्यो दृश्यन्ते लोके व्यवस्थिताः[3] । आसां नाप्युत्कर्षो नाप्यपकर्षः कश्चित् । फलानुरूपाः प्रवृत्तयः । प्रवृत्त्यनुरूपं फलं तत्र तत्रेति व्यवस्थितफलप्रवृत्तिता स्वभावादेवेति । स्यान्मतम्—व्यवस्थितप्रवृत्तिफले स्वभावे भावे पुरुषप्रयासस्तर्ह्यनर्थक इति चेत्, सत्यमेतदिति । प्रयासोऽनर्थकः । यथा त्वं ब्रूषे तथैव स्वभावसामर्थ्यादेव प्रवृत्तेर्निवृत्तेश्च फलसिद्ध्यसिद्ध्योरनर्थक एव प्रयास इति त्वया सदोषाभिमतोऽप्ययं पक्षो मया तत्त्वभावभ्रंशभयान्न त्यज्यते । इत्थमनर्थकोऽप्यसौ प्रयासः पुरुषस्यास्त्येव सन्नेव स्वभावादेव ।

यथोक्तम्—'स्वभावतः प्रवृत्तानां निवृत्तानां स्वभावतः ।
नहि कर्तेति भावानां यः पश्यति स पश्यति ॥' इति ।

प्रवृत्तिनिवृत्त्योर्भावानां स्वभावस्वातन्त्र्यमेव । स हि स्वो भावः आत्मा वस्तूनां निवृत्तानामित्युक्तत्वात् प्रवृत्तिनिवृत्त्योरानर्थक्ये किं कृता किंफला वा प्रवृत्तिरतः स्वभावानुरूपप्रवृत्तिप्रतिज्ञाव्याघात इति चेत् । न, व्याघातः तत्स्वाभाव्यादेव । यस्मात् प्रवर्तितव्यमिति । एवं प्रवर्तन्तेऽप्रतर्कितो वस्तुनि । प्रकृष्टस्तर्कः प्रतर्कः । अनेनोपायेनार्थस्य सिद्धिरिति य ऊहः स तर्कः, न प्रतर्कः; अप्रतर्कोऽप्रतर्कत एव वस्तुनि प्रवर्तितव्यमित्येव प्रवर्तन्ते स्वभावादेव यथाक्षिनिमेषधातुकण्ट-

---

१ द्रष्टव्यं १४७ तमं पृष्ठम् । २ °क्तो° ग । ३ °व्व° ४ त्वा° ग । ५ वि° ग ।

कादिवत् । यथाक्षिनिमेषोन्मेषावनर्थकावबुद्धिपूर्वौ च पुरुषस्य । आहृताहाररसरुधिरमांसमेदोऽस्थिमज्जशुक्रादित्वेन विभजनं, कण्टकतीक्ष्णभवनं चेत्येवमादिप्रवृत्तयः तथा घटादिफलस्वभावानुरूपाः प्रवृत्तयोऽप्रतर्कतः एवेति । एवं चेत्यादि । एवं च कृत्वा लोकप्रसिद्धिवशाद्यदि हेतुतो यद्यहेतुतो यथासंख्यं घटकण्टकादिबुद्ध्यबुद्धिपूर्वनिवृत्ताभिमतं यदस्तु तदस्तु । उभयथापि स्वभावानन्यातिवृत्तिः । एवमेतदात्मभवनमनादिप्रवृत्तं कारणं जगतः, पृथिव्यब्बीजाङ्कुरादिषु स्थिरद्रवादिस्वभावाविर्भावतिरोभावादिरूपेणैकं नित्यं च नोत्पद्यते, न विनश्यति, न चान्यथा भवतीति प्रतिपत्तव्यम् । उत्पादविनाशविपरिणामानामनादिप्रवृत्तस्वभावकारणविरोधित्वादेव च । तत्रानादिप्रवृत्तस्वभावेत्यादि यावद्विपरिणामो वेति पूर्वपक्ष उत्तानार्थः । उत्तरपक्षस्तु ततोऽनादिप्रवृत्तकारणस्वभावव्युत्यासे इति प्रत्युच्चारणमात्मभवनविपर्यये दोषः । हिताहितप्राप्तिपरिहारार्थशास्त्रव्यर्थता, धर्मार्थकाममोक्षफलप्राप्त्युपायविधानार्थानि तदपायपरिहारार्थानि च शास्त्राणि व्यर्थानि स्युः । किं कारणम् ? पुरुषस्य क्रियायाः फलस्य च तथा अस्वभावत्वात् । कर्तृकरणकर्मादिसाधनानां तदङ्गसम्पन्नायाः क्रियाया धर्मार्थकाममोक्षाणामन्यतमस्य तत्फलस्य वान्योन्यानुरूपेणानात्मत्वादित्यर्थः । परस्परानुरूपाऽनभ्युपगमेऽन्यथोत्पादोऽन्यथा विनाशोऽन्यथा विपरिणामश्चाननुरूपेणेति यावत् । ततोऽन्यथोत्पादविनाशविपरिणामेभ्य इति पुरुषादिसाधनक्रियाफलानां तथानात्मत्वं समर्थयति । घटार्थं प्रवृत्तेषु घटोत्पत्त्यर्थं प्रवृत्तेषु तत्पट उत्पद्यते । तद्विनाशार्थं प्रवृत्तेष्वविपरिणामश्चेति स्वभावानियमान्नोत्पादविनाशविपरिणामाः सन्ति, यदि स्युरयथाभिप्रेताः स्युः । स्वभावानियमादिति । स्वभावापरिग्रहे शास्त्राणां अर्थवत्ता न युज्यते । अतस्तस्मात् सिद्धशास्त्राणां अनतिशक्यत्वादनिष्टत्वाच्चानर्थक्यस्य शास्त्रार्थवत्त्वसिद्ध्यर्थं च घटादेः कारणमन्वेषणीयम् । तच्च कारणमन्विष्यमाणं शास्त्रार्थवत्तया वरमिदमेव कारणं स्वभावः, नातोऽन्यद्विमर्दरमणीयतरमस्ति, कुतोऽन्यन्नास्ति ? । यत्तत्कारणं स एवात्मीय एवात्मैव वा भावः । कतमोऽसौ संग्रहेण ? द्विधा प्रतिवस्तु । जीवाजीवद्वस्थितो योऽस्ति स भावः, य आत्मा स भावः । स भावः स्वभाव इति च परभावनिराकरणार्थमुच्यते ।

यथोक्तम्–"किमिदं[7] भंते ! अत्थि त्ति वुच्चति ? गोयमा ! जीवा चेव अजीवा चेव ।" तथा 'किमिदं[8] भंते ! समए त्ति वुच्चति ? गोयमा ! जीवा चेव अजीवा चेव ? ।' एवमावलिकोच्छ्वासनिःश्वासप्राणस्तोकलवमुहूर्ताहोरात्रकालविभागाः, रत्न-

---

१ त्पात्रे ग । २ वनस्पति ग । ३ °विन्यासे ग । ४ °लेन ग । ५ °त्वत्व° ग । ६ °दस्ति ग ।

७ किमिदं भगवन् ! अस्तीत्युच्यते ? गौतम ! जीवा एव अजीवा एव ।

८ किमसौ भगवन् ! समय इत्युच्यते ? गौतम ! जीवा एव अजीवा एव ।

प्रभादिभूमयो द्वीपाः समुद्राः पर्वताद्याश्च नेयाः । स चैकः स्वभावः पूर्ववदशेषनित्यत्वलक्षणयुक्तोऽपि कर्तृकर्मकरणादिकारकभेदं स्वशक्तिभेदादेव लभते । तद्यथा–स्वसाधनविशेषस्वभावादेव विशेषो भवति । स एवानुभवति, सोऽनुभूयते । एतद्व्याख्यार्थोदाहरणत्वेन कारकद्वयं 'कर्तृकर्मकारकभेदा एव शेषकारकाणि' इति दर्शनार्थं सोऽनुभवति कृत्वा फलमनुभवति कर्मफलं भुङ्क्ते, सोऽनुभूयते स्वभावभेदेनात्मनैव भुज्यतेऽपि स एव । कथमनुभवत्यनुभूयते चेति ? तदर्थप्रदर्शनार्थमाह–स्वद्रव्येत्यादि । स्वयमेव द्रव्याण्यात्मैव कर्मकर्मित्वस्वभावानि द्रव्याणि संयुज्यन्ते वियुज्यन्ते च, तेषामेव स्वभावभेदानां द्रव्याणां संयोगविभागौ बन्धमोक्षौ देशसर्वविकल्पौ, तद्विकल्पविचित्रसुखदुःखजन्ममरणवैषम्ये, तयोः स्वाभाव्येन स एव भवतीति संसारमोक्षौ स्वभावतः । यथा व्रीहिरेवाङ्कुरत्वाद्यनुभवनात्माऽनुभवत्यनुभूयते चान्योऽन्यसंयोगवियोगविपरिवर्तेन कर्मकर्मिस्वाभाव्येन विपरिवर्तमानोऽपि स्वभावात्माऽव्याबाधः साध्यासाध्याद्वैतरूपवत् स्वजात्यपरित्यागादद्वैतत्वात् व्यवस्थित एव सर्वत्र भव्याभव्यजीवराश्योः । को दृष्टान्तः ? । यथा कनकाश्मनि सुवर्णम् । द्विधाविर्भवन् क्रियाक्रियाभ्यां तत्स्वभावः, क्वचिन्नास्त्येव कनकमिति सोऽपि स्वभावः । तथा केषांचित् स्वयमेवापगमात्मविशुद्ध्याविर्भावः कैवल्यम्, यथा भरतमरुदेव्यादीनामिति । अत आह–तद्दृष्टान्तत्वेनान्तरेणापि धातुवादकनकाविर्भावस्तथा कर्मविवेकस्वाभाव्यादेव भव्यजीवानामात्माविर्भावः । सम्यग्दर्शनज्ञानपूर्विकया तु क्रियया प्राचुर्येण कैवल्यप्राप्तिर्धातुवादक्रिययेव कनकोत्पत्तिरिति । स्वभाववैचित्र्यादेव तथा केषांचिदनाविर्भाव एव कर्माविवेकस्वाभाव्यात् । एवं च तदित्यादि । एवं च कृत्वा स्वभावनयबलेनात्मानो जीवा द्विविधाः–भवसिद्धिकाश्चाभवसिद्धिकाश्चेति । तदुभयस्वभाववर्णनात् । अभव्यजीवकर्मणोरित्यादि । भव्यस्य तु विशुद्धीत्यादि च गतार्थं वाक्यद्वयम् । अनादेर्जीवकर्मसन्तानस्य व्यवच्छेदाव्यवच्छेदौ स्वभावादेवेति । नात्र कश्चिद्भव्यकर्मसन्तानसान्ततायामभव्यकर्मसन्तानानन्ततायां वा हेतुः शक्यो वक्तुमन्यः स्वभावात् । यदि हेतुरन्यो मृग्येत तेनानन्त्यमस्यापि स्यात् । कस्य ? भव्यकर्मसन्तानस्याप्यनन्तत्वं स्यात् । कस्मात् ? अनादित्वात् आकाशवत् । स्वभावमनिच्छद्भिरनादित्वहेतुरभ्युपगन्तव्यो जायते । सोऽनिष्टानन्तत्वसाधनाय भवति । अधुनादित्वहेतुसद्भावेऽपि तत्सान्ततेष्टौ वाकाशसान्ततेति ।

अत आह–तदन्तवत्त्वे आकाशमपि सान्तं स्यादनादित्वाद्भव्यकर्मवत् इति । स्वभाव एवान्तत्वे कारणं न हेतुरन्योऽस्ति हेतुवादेन विमृग्यमाणः । अथाप्यस्य

१ तेषां निश्चय° ग । २ नान्यत्र ग ।

भव्यसंसारस्यानादित्वे सत्यहेतुरन्तो भवति, निर्हेतुकोऽन्त इष्यते । ततो यथा चास्यानादित्वे संसारस्याहेतुरन्तो भवति तथा कस्मात् तस्य विरोधी पुनर्निर्हेतुकहेतुकान्तवत्त्ववद्भव्यकर्मसन्तानस्य निर्हेतुकहेतुकादिसिद्धकर्मसन्तानस्य कस्मान्न भवतीति वाच्यम् । अत्र विशेषकारणस्वभावहेतुवादिनामेव । पुनः स्वभाववादिनः स्वभाव एवं सर्वत्र कारणं व्यापित्वात् । इतिशब्दो हेत्वर्थे । इत्यतः कारणादित्थं स्वभाव एव शरणं कारणवादिनाम् । कथं कृत्वा? तदुपायस्वभावो मोक्ष इति सम्यग्दर्शनादिरत्नत्रयोपायसम्पन्नभव्यकर्मसन्तानान्त्यतोच्छेदस्वभावो मोक्ष इति । एवं तावद्भव्यसंसारोच्छित्तावभव्यसंसारानुच्छित्तौ च हेतुवादे चोदिते स्वभावाश्रयेण परिहार उक्तः । एवं सर्वचोद्येष्वतिदेशः । यथा भव्याभव्यसंसारोच्छित्त्योर्विशेषहेतुर्वाच्य इति चोदिते स्वभावादेवेति व्यवस्थोक्ता । तथा जीवाजीवरूप्यरूपिसक्रियाक्रियत्वाद्विशेषाः । कुत इति चोदिते स्वभावादेव व्यवस्था [1]तस्य समाश्रयणीया । स्वभावानभ्युपगमे त्वित्यादि, यावद्वादहानं ते इति । यदि स्वभावो नाभ्युपगम्यते ततः साधनदूषणाभावस्ततो वादत्यागः । तद्यथा–पक्षहेतुदृष्टान्तादयः स्वेन भावेन सम्पन्नाः साधनम्, पक्षः साध्यत्वेनेप्सितो यदि विरुद्धार्थानिराकृतः हेतुपक्षधर्मः सपक्षे सति न पक्षाद्व्यावृत्तः, दृष्टान्तः साध्यानुगतहेतुदर्शनम्, असति साध्ये हेत्वसत्त्वप्रदर्शनं च तद्विपर्यये तदाभासा इति संसाधनं स्वेन भावेन भवति । तत्साधनदोषोद्भावनं दूषणं तदन्यथोक्तिर्दूषणाभासा इति च स्वेन भावेन व्यवस्थितमभ्युपगम्य साधनं[3] न दूषणं च साभासं[4] विवदिषुरसि, संवृत्तोऽन्यथा न साधनं न दूषणं [5]च स्वभावोपेतावयवार्थवादित्वादिति वादत्यागस्ते प्राप्तः । तस्मात् स्वभाव एव प्रभुत्वविभुत्वाभ्यां कारणं जगत इति ॥

॥ एवं तावत् स्वभाववादः ॥

---

अनया च दिशा शब्दब्रह्मतत्त्वभेदसंसर्गरूपविवर्तमात्रमिदं जगदिति । यथोक्तम्–

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

इत्यादि कारणवादा भिद्यन्ते संज्ञादिभेदात् । ते पुनः सर्वेऽपि परमार्थद्रव्यार्थस्य विधिविधिनयस्य स्वरूपमस्पृशन्त एव प्रवर्तन्ते यस्मात् संक्षेपेणायं सर्वोऽपि यत्नः । सोऽन्यभिन्नः स्वरूपोपादानेनैव स्वाभिमतनिराकरणाय भवति । तद्यथा–पुरुषवादिनः पुरुषादन्यद्वस्तु अपुरुषत्वाद्वन्ध्यापुत्रवत् । तथा नियतेरन्यदनियतित्वात्, वर्तनादन्यदवर्तनात्वात् । स्वभावादन्यदस्वभावत्वात् वन्ध्यासुतवदवस्त्विति

---

१ °वत् ग । २ य° ग । °स्याऽस्य घ । ३ °नं न दूषणत्वम् ग । ४ भासां ग । ५ °त्वं ग ।

ब्रुवतां पुरुषनियतिकालस्वभाववादिनामात्मवस्तुनो द्रव्यार्थवृत्तस्य तत्परमार्थस्य तत्त्वानां सर्वैकत्वनित्यत्वकारणमात्रत्वसर्वगतत्वानां धर्माणां प्रतिपादनार्थमुद्यतानां वादिनामन्यदवस्त्विति स्वतो भिन्नान्यार्थाभ्युपगमेनैवं तत्प्रतिपादनं नान्यथेति तत्प्रतिपादनार्थो यत्नः । सोऽयमन्यभिन्नरूपोपादानमन्तरेण नास्तीति स यत्नः स्वाभिमतपुरुषाद्यर्थनिराकरणायैव भवति, अभिन्नार्थाऽभ्युपगमात् । कथमिति ? तद्दर्शयति—पुरुषवादे तावज् ज्ञानमयो न रूपादिमयः इति रूपादीनां तत्सुषुप्तावस्थामात्रत्वाभिमतानां तन्मयत्वात् ज्ञानात्मकपुरुषमयत्वात्, तानि च रूपादीनि कार्यात्मनः । कार्यात्मनां तन्मयत्वे चेतनैककारणात्मत्वे कार्यत्वानेकत्वानित्यत्वासर्वत्वानि पुरुषस्यैव प्राप्तानि, तन्मयत्वात् प्रत्येकपरिसमाप्तत्वाच्च तेषां प्रत्यक्षत उपलभ्यत्वाच्च । तस्मात् पुरुषस्यैकमित्यकारणसर्वत्वानि निराक्रियन्तेऽवस्थानां कार्यकारणात्मनां पुरुषमयत्वादिति । उक्तः पुरुषात्मकत्वप्रतिपादनयत्नस्य द्रव्यार्थवृत्तसर्वैकत्वाद्यभिमते निराकरणदोषोऽवस्थाश्रयणात् । अवस्थावच्च पूर्वादिर्नियत्यादिष्वपीत्यतिदेशेन नियतिकालस्वभावेष्वपि स्वाभिमते निराकरणम् । तेषामपि दर्शयत्यवस्थावेचेति । यथा सुप्तसुषुप्तजाग्रद्विमुक्त्यवस्थाभेदेन भिन्नान्यरूपोपादानेनैव स्वाभिमते निराकृतिः पुरुषवादेऽभिहिता, तथा बाल्यादिपूर्वोत्तरावस्थासु तथा नियतिवर्तनास्वभावादिभेदाभ्युपगमादेव स्वाभिमतनियत्यादिनिराकरणं स्वभाववादे । तुशब्दो विशेषणे । विशेषोऽस्य स्वमतनिराकरणदोषात् । अतिशयश्चायम् । किं कारणम् ? आदावेव भेदोपादानात् । इतरे सृष्टिप्रदर्शनद्वारेण दूरं गत्वा पश्चाद्भेदमुपाददते । स्वभाववादी पुनरुत्थान एव भेदमुपादत्ते । इत्ययमतिशयः । कुतो भेदोपादानमिति चेत् ? सम्भववद्व्यभिचारवृत्त्यनुमत्या भावविशेषणस्वशब्दोपादानात् । सोऽतिसम्भविव्यभिचारे च विशेषणम् । यथा नीलमुत्पलमिति । नीलत्वं चेदुत्पले सम्भवति व्यभिचरति च कदाचिदुक्तमपि तद् दृष्टमुत्पले भ्रमरादिषु च नीलत्वमतो विशेषणं भवतीति नीलं च तदुत्पलं च तदिति । एवं भेदवृत्त्यनुमत्या विना विशेषणोपादानाभावात् । तथेहापि भावशब्दो वाच्यस्यार्थस्य स्वशब्दाभिधेयविशेषणार्थं स्वशब्दोपादानं भेदाधारसम्भवद्व्यभिचारवृत्त्यनुमत्यैव सहितं यथासम्भवानुमत्या विना न विशेषणम्, तथा नान्तरेण व्यभिचारमपि विशेषणं भवति । तत्र व्यभिचारो विरुध्यते द्रव्यार्थवादस्यैक्यादित्यभिप्रायार्थः । तथैव चार्थस्य निरूपणादिति न केवलं स्वशब्दोपादानमात्रादेव भेदोऽङ्गीकृतः । किं तर्हि ? अर्थोऽपि भूम्यादिकण्टकादित्वेन तथा निरूप्यते । उत्तरेण ग्रन्थेन भेदप्राधान्येनैवाभावीकृतेनार्थोऽपि भिन्नो विशेषणत्वेन नोपादातुं योग्यस्तद्यथा—यदयं

१ °वं घ । २ °वेति क-ख । °वत्वे° ग । ३ °ति° क-घ । ४ °दा° क-ग । ५ °ब्द° घ ।
६ °देन° घ । ७ °वा° क ।

भवतीत्यादि। तत्र स्वशब्दभावशब्दयोरर्थव्युत्पत्तौ भावशब्दार्थव्युत्पत्तिस्तावत् भाववादिनः स्वभाववादिनश्चावयोः शब्दार्थव्युत्पत्तिर्भावशब्दस्य भवतीति भावो भूयतेऽनेनेति वा भाव इति तुल्यता। तस्यां च तुल्यतायां न कश्चिद्विसंवादः। स्वशब्दार्थो वा विशेषणत्वेन प्रवर्तमानश्चिन्त्यः। सोऽस्वव्यावर्तनार्थः। न स्वो भावः अस्वो भावो न भवतीत्यस्वव्यावर्तनं तस्यार्थः स्वशब्दश्च भावस्यैवात्मपर्यायस्य वाचकः। तस्माद्विशेषणत्वादस्वव्यावर्तनार्थः सम्पद्यते। तदर्थत्वाच्चेतरेतराभावमात्रविषयः। स्वः परो न भवति परोऽपि स्वो न भवतीति स्वपराभावादितरेतराभावार्थाभावः। भावाभाव इति यावत्। ततश्चार्थाभावार्थत्वादस्वभवने वर्तताऽस्वो न भवतीत्येषोऽस्य मुख्योऽर्थो जायते। न तु भावस्वरूपप्रतिपादनमिति। भावार्थासंस्पर्शान्न किञ्चिदनेन।

स्यान्मतम्–भावमपि ब्रुवत इत्येतच्चायुक्तम्। तस्मात् स तत्रोपक्षीणशक्तित्वात् स्वभवनस्य प्रयोजकः। अतिभार एष हि शब्दस्य यदेकः स्वशब्दः परभवनव्यावृत्तिस्वभवनप्रतिपादनं च युगपत् सकृदुच्चारितः कुर्यादतो निःप्रयोजको न वाचक इत्यर्थः। अर्थो वाच्यस्वशब्दस्य स्वशब्दं न प्रयोजयति। शब्दवृत्तिविरोधात् तस्मादस्वभवनव्यावर्तनमेवार्थः। एतदपि वा स्वभवनव्यावर्तनस्वशब्दस्य नैवास्ति, किन्त्वर्थाद्वतेरभ्युपेत्यैतद्विचारितम्, किमर्थं नास्तीति चेत्?, उच्यते–अस्वस्याभूतत्वात् भावस्यैव भूतत्वादित्यर्थः। स्वशब्दार्थाभावान्न स्वशब्दं प्रयोजयति वन्ध्यापुत्रवत्। तदभावाद्भावशब्दव्यतिरिक्तार्थविषयाभिमतः स्वशब्दोऽपि नास्तीत्यत आह–

न चाभूतो व्यावर्तनाय प्रभवतीति वाक्यशेषः, अभूतत्वात् वन्ध्यासुतवत्। अथ सोऽर्थोऽस्वस्तथाभूत एव। ततस्स भाव एव। भावादेव तस्य स्वशब्दवाच्यार्थस्य भावशब्दवाच्यार्थवत्। किं व्यावृत्त्यानर्थिकयेति स्वशब्दस्य व्यावर्त्याभावाद्व्यावृत्तिरनर्थिका। व्यावर्त्यार्थाभावश्च तस्य भावत्वादित्युक्तम्।

स्यान्मतम्–तस्य व्यावर्त्यस्याभावाद् व्यावर्त्यता विशेषणार्थवत्ता चेत्येतच्चायुक्तम्, तद्भावत्वप्रसङ्गात्। न ह्यसतः प्रसङ्गोऽस्ति। अप्रसक्तस्य च व्यावर्त्यता नास्त्यब्राह्मणवचने ब्राह्मणत्ववत्। न ह्यब्राह्मणवचने ब्राह्मणोऽप्रसक्तो व्यावर्तते। यथोक्तम्–'नञिवं युक्तमन्यसदृशाधिकरणे तथा ह्यर्थः' इति। भावशब्दार्थव्यावृत्त्यर्थं कर्त्रर्थोपादानात्। यदयं भवतीति भावशब्दविशिष्टस्य स्वरूपोक्तः स्वशब्दोऽप्यनर्थकः। तस्माद्यदपि व्यावर्त्यते तदपि च भवेदेव। व्यावर्त्यत्वादब्राह्मणवत् वैधर्म्येण नासत्। तत् कुतः? असतोऽप्रसक्तत्वादप्रसक्तस्य चाव्यावर्त्यत्वात्

१ °दर्श्य° ग-ङ। २ स्वपरो ग। ३ स्वभ° ग। ४ °ऽमुख्या° ग। ५ तत्र ग। ६ स्व° ग। ७ न्वि° ग।

खपुष्पवत् । व्यावर्त्यस्य सत्त्वेऽनुमानान्तरमप्याह—किञ्चित्त्वात् वस्तुत्वादर्थत्वा-
दादिग्रहणात् प्रमेयज्ञेयसत्त्वादिभ्योऽपि दृष्टान्तः खवदिति, यथा खव्यावर्त्याद्वि-
भक्तत्वात् किञ्चिद्वस्त्वर्थः प्रमेयं ज्ञेयं सच्च तथा व्यावर्त्यमपि सत् ज्ञेयम्, प्रमेय-
मर्थो वस्तु किञ्चिद्वा प्रसक्तत्वादेव तस्मात् तद् भवेदेव ।

किं चान्यत्—अयं च स्वभाव इत्यादि । अयं च त्वदिष्टः स्वशब्दवि-
शिष्टो भावः किं व्यापी प्रतिवस्तु परिसमाप्तो वा? । यदि व्यापी सर्वगत एक
एव, तस्मिन् व्यापित्वे त्यक्तस्वपरविशेषणं स्यात् एकरूपत्वात् । तस्य पररूपा-
भावात् स्वशब्दोपादानं परशब्दोपादानं च निरर्थकमेव । अथ वस्तुनि वस्तुनि
परिसमाप्तः प्रतिवस्तु, तत्प्रतिवस्तुत्वे किं तेन कल्पितेनाभिन्नफलेन? अलोक-
वादात् । लोकवादे हि घटस्य घटत्वमेव स्वभावो नान्यः, पटस्य पट एवेति
श्रूयते । घटादिपृथग्भूतो न कश्चिदेक इति । स यद्यपि तथा प्रतिवस्तु कल्प्यते
न किञ्चित् तेन लोकवादाभिन्नफलेनार्थः कल्पितेन, तस्मान्नैकः कश्चित् स्वभावो
यथा पूर्वस्वभाववाद्युपवर्णितः सिध्यति । किं तर्हि? लौकिक एव सिध्यति ।

किं चान्यत्—स्वभावाभाव एव प्रसक्तः । तद्यथा—प्रत्येकमात्रवृत्ति च वस्तु
घटाद्येवं घटादीनि घट एव घटः, पट एव पटः । पटे घटो नास्ति न घटे पट
इति, इतरेतराभावात् । परस्परमस्वभवनपरिग्रहः कुतो भवति । ततः परस्पर-
मस्वभवनपरिग्रहात् कुतः क्व चासौ स्वभावः स्यात्? । यद्युपपत्तिद्वारेणार्थ-
स्तत इदमुपपत्तिमुखमस्य भावविषयैकार्थे स्वत्वे स्वत्वादनन्यो भावः । य एव
भावः स एव स्व इत्यनयोरनर्थान्तरत्वमेवेति । सत्यम्, न किञ्चिदन्यत्वं
नामेति । इतिशब्दो हेत्वर्थे । ततः किमत्र भेदेन क्रियते? । घटादिना पटा-
दिभावविशिष्टेन द्रव्यार्थस्वरूपस्याभिन्नत्वात् । भेदेन यदुच्यते घट इति पटादिना
भावव्यावर्तनार्थभेदेन पटस्य भावो न पटस्येति स्वो भावो न परभाव इति
च पुरुषादिवादवद्भेदान्तरकल्पनेन? द्रव्यार्थस्वरूपविरोधिना भेदाधारेणेति ।
सोऽपि यदीति । सोऽपि च घटादिभेदो भावो वा घटे भावो वा? यदि भावः,
भवतीति भाव एव, भावस्वरूपादभिन्न एव । अतः कोऽयं भेदो नाम घटादि-
र्भावव्यतिरिक्तः? इति स्वयमेवोक्तो भेदाभावः । अथ न भवति भेदः भावो न
भवति, नानुभवति भवनं न वाभाव एवाभ्युपगम्यते, तदस्तित्वमेव नाभ्युपेमः,
अभवनात् खरविषाणवत् तत् ।

इतर आह—ननु घटस्य भाव इति व्यतिरेकषष्ठ्या व्यपदिश्यमानत्वात् पटा-

१ निरस्त° ग । २ निश्री° ग । ३ °न्ये° घ । ४ नवः ग । ५ °भिमत्र° ग ।
६ वृत्तनाचा° ग । ७ °भ्युपगमः ग । ८ °णात्मवत् तत् घ ।

दिव्यतिरेकेण घट एवेति । स्वतोऽपृथग्भूतेन भवनेन । ततः पटादिभेदेन भवनस्य कर्ता घट एवेति । अत्रोच्यते—न भावस्यैव तथातथाभवनात् न क्रमो घटस्य भवनं पटस्येति भेदव्यपदेशो नास्तीति । स पुनरुपचरितो घटादिभिरभिन्नस्यैकस्य भावस्यैव तथा तथा तेन प्रकारेण घटपटादिना भवनात् । अन्यथा पटादयो न भवन्त्येव । भवनव्यतिरिक्तत्वादित्युक्तम्, स एव हि भावो घटपटादिर्भवति हस्तादिभवनकारणयोः पुरुषभवनकारणवत् । घटादीनां भावाव्यतिरेकात् पुरुषाव्यतिरिक्तहस्तादिभवनवदिति । तद्दर्शयति—न हि हस्तादौ भवति कुर्वति वा देवदत्तो न भवति न करोति वा । हस्तादौ भवनकारणयोः कर्तृत्वे[1] प्रतिपद्यमाने तत्समुदायस्यावश्यं तत्प्रतिपत्तेः । समुदयसमुदायिनोश्चानन्यत्वात् । उपसंहरति—अतो भावत्वेऽभावत्वे वा नास्त्येव भेदो घटादिरिति । भवने प्रस्तुते करोतिग्रहणं किमर्थम्? । सर्वधातूनां भवनार्थत्वप्रदर्शनार्थम् । तत आह— 'यं तं भुवोऽर्थमभिदधति सर्वधातवः' इति । एतस्माद्भावान्न पटादिभिन्न इति । तच्च प्रत्यस्तमितनिरवशेषविशेषणं भवनम्, निमग्नानि विलीनानि प्रत्यस्तमितानि तत्रैव भावे निरवशेषाणि विशेषणानि स्व इति पर इति वा घटपट इत्यादि वा तत्र सर्ववस्तुभेदा[2]स्तदेव भवनम् । सर्ववस्तूनां मूलद[3]लिकसर्वबिम्ब[4]सामान्यं मुद्राप्रतिमुद्रान्यायेन भिद्यमानानां आत्मरूपाणां स्फटिकवदनेकधा दृश्यमानानां बिम्बभू[5]तानां प्रतिबिम्बभूतानां च सामान्यमभिन्नं बीजमित्यादि तत्स्वरूपवर्णनान्येवंप्रकाराणि निर्विशेषणस्याद्यंशपरिकल्पनयेति । तत्कथं भाव्यते? इति चेत्, उच्यते । तदेव हि भवनं व्रीह्यादीत्यादि, यावत् साधनमेकं[6] भवनमेव व्रीहिबीजम् । आदिग्रहणादम्बुक्षेत्रकालाद्यङ्कुरादि वा[7] । तदेव च मृदादि मृल्लोष्टवज्राश्मसिकतादि च भवनमेवेति वर्तते । साध्यं साधनं च भवति । पुरुषवादिव्याख्यानन्यायेन स्वयमेव विश्वमादि वर्तते । यथा तदभिन्नकर्तृकरणादिसाधनं साध्यं च तथा भवनमेवात्माव्यतिरिक्तं साधनं साध्यं चैकमेव तथा तथा अहेयमपरित्याज्यम् । भवनमेव व्रीह्यादिविकल्पानन्त्येऽपि तदवस्थमेवाप्रच्युतमात्मस्वरूपाद्भवनात् । सदा सर्वकालम् । को दृष्टान्तः? हस्त्यादि यावद्भवनवत् । यथा घटादेरभिन्नतया पुरुषो हस्त्यश्वपर्वतसरित्समुद्रादिप्रपञ्चानभिनयति, स्वतः सृजत्युपसंहरति च । तथातथाभवनात् चेतनहस्त्यादयोऽन्ये ततः केचिद्भेदेन भवन्ति हस्त्यादिप्रपञ्चेन तु पुरुष एव हस्त्यादिर्मृदादिश्च भवति । आदिग्रहणाच्चित्रलेप्यकाष्ठपुस्ता[10]दिर्भवति । तथा भवनमेव पृथिव्यम्बुमृदादिर्भवति । न भेदः कश्चिद्भवनादेर्घटादेः । किं कारणम्? एकत्रैवोपयुक्तार्थत्वात् । घटादिरभवनस्तस्याभवनस्य भेदस्यासत्त्वमेव । भावा[11]द्भिन्न-

१ °त्वं ग । २ °दाभाव° । ३ °कन्दली° ग । ४ °त्रिव ग । ५ °पू° ग । ६ °व ग । ७ च ग । ८ °दि° ग-ङ । ९ °भितया ग । °नय° घ । १० °स्तका° ग । ११ °वो° ग ।

त्वात् खरविषाणवत् । भावाद्भिन्नोऽपि घटो भवत्येव चेत् तस्य भवने वन्ध्यापुत्रोऽपि भवेत् । एतस्य दिग्मात्रत्वादघटत्वादात्मना अभावात् पटवत् । घटभवनं हि घटः, तद्भावो भावाभावश्चाघटः, तस्मादघटत्वाद् घटात्मनाऽभावात् । एनमेवार्थं व्याचष्टे—**आत्मना भावादिति** । साधनान्तरमेव वान्यात्मना भावादिति, यावत् पटवत् । यथा पटो घटात्मनाऽभवन् घटो न भवत्येवं घटोऽपि घटात्मनाऽभवनाद् घटो मा भूत् । घटात्मना अभवनं च भावाद्भिन्नत्वाभ्युपगमात् सिद्धम् । न चेदेवं वन्ध्यापुत्रोऽपि भवेत् । घटात्मनाऽभवनात् पटवद् घटवदेव वा तद्भावाद्भेदभावाच्च घटादिभेदभावाच्च भाव एव विकल्पोऽत्र सत्यः ।

इदानीं भेदकारणदिशमुद्भाव्य दूषयिष्यन्नाह—**विकल्पो हीत्यादि** । विकल्पो नासत्यः[1] । स तु भवन्नेभिस्त्रिभिः कारणैर्भवेद् भेदसंसर्गपरिणामैः । तत्र भेदेन घटाद्भिद्यमानात् कपालानि परस्परतो भिन्नानीति गृह्यन्ते । संसर्गेण तन्तूनां सङ्घातेन पटस्तन्तुभ्योऽन्य उत्पन्न इति । परिणामेन क्षीरं दधित्वेन परिणतं, दधि क्षीरादन्यादन्यदेतेषां चान्यतोक्तिः प्रयोजनादिनानात्वाल्लोके प्रसिद्धेति । एता भेदवाद्युपपत्तयो भवन्त्यो भवेयुस्तत्र न चास्य भेदो न संसर्गो न विपरिणाम इत्येतास्तिस्रः प्रतिज्ञा एकहेतुसाध्याः । कोऽसौ हेतुः ? उच्यते—**एकतत्त्वात्मकत्वात्** तस्य भावस्तत्त्वमेकं तत्त्वमनन्यत् स एवात्मास्य भाव इत्येकतत्त्वात्मा तद्भावादेकतत्त्वात्मकत्वात् प्रतिस्वत्ववत् । यथा स्वं स्वं प्रति प्रतिस्वम्, त्वमतेन[3] भिन्नानामसाधारणः स्वात्मा यः स तु भाव इत्येवैकतत्त्वात्मकत्वान्न भेदसंसर्गपरिणामात्मकस्तथा भावोऽपीति । नास्ति विकल्पो भावस्य । अथापि स्याद्विकल्पः सोऽस्मन्मतेनैव न भेदाभ्युपगमेनेत्यत आह—**विकल्पेन च भाव एव नाभावः** । खपुष्पादिरसत्त्वादिति भाववदेवासौ भाव एकनित्यसर्वगतत्वादिधर्मा तस्यैव घटपटादिना भवनं नास्य भेदः, कश्चिद्भेदश्चाभवनात्मकत्वादित्युक्तम् । तस्मादसत्त्वादसौ न विकल्प्येत भेदः खपुष्पवत् । अतः सम्भाव्यमानश्च स्वभाव एव विकल्पितः त्वन्मतेऽपि । तस्यापि भावस्य इति । **तत्त्वादेव**[4] । प्रागुक्तहेतुप्रकारेण तत्त्वादेकत्वादेव कुतोऽत्र भावे विकल्पः ? ।

इतर आह—**न तु भेदः प्रत्यक्षत इत्यादि**, यावदभेदश्च न गृह्यते, पूर्वोऽयमुत्तरो घट इति दिग्भेदेन, आदिग्रहणादूर्ध्वाधोदक्षिणापरभेदेन च गृह्यते घटादिस्तथोत्पन्नो विनष्ट इत्युत्पत्तिविनाशाभ्यां वस्तुतोऽपि घटपटादिरूपरसादिस्वरूपभेदेन कृष्णो रक्तोऽखण्डः[5] शकल इत्यादि । एभिः कारणैः प्रविभक्तत्वादर्थानां भेदेन गृह्यमाणानां कथं भेदाभावः ? । पूर्वोत्तरशब्दाभ्यां देशकालपरिमाणक्रमा अपि गृहीताः, एवं प्रत्यक्षतो ग्रहणं भेदश्च भेदानाम्, न गृह्यते प्रत्यक्ष एवेति वर्तते ।

---

१ सतः ग । २ °नरात्य° ग । ३ ना° घ । त्वेतेन घ । ४ °वे° ग । ५ °क्तः ख° ।

अत्रोच्यते-**अस्ति किञ्चिदित्यादि** पूर्वोत्तरादिभेदाभावं प्रतिपाद्य प्रत्यक्षत्वाभावं च प्रतिपादयिष्यन् भेदाभावप्रतिपादनार्थं तावदाह—**अस्ति किञ्चिदिति,** भावव्यतिरेकेण किञ्चित् पूर्वमुत्तरं वा नास्त्येव प्रागुक्तकारणत्वात् । ततः किं तदपूर्वं यदुत्पद्यते । पूर्वं वा विनश्यतीति ? पूर्वोत्तरयोरभावादेवेत्युत्पत्तिविनाशौ न स्तस्तत एव वस्तुप्रविभागोऽपि, तस्मात् पूर्वोत्तरादिदिकालोत्पत्तिविनाशवस्तुप्रविभागाभावात् किं तत्प्रविभक्तं प्रविभज्यते प्रविभक्षते वा ? यत्तदेवंधर्मं तदेव नास्तीति नापूर्वं भावादन्यपूर्वोत्तराद्यस्त्यतो नाभावो भेदो भवति । कथं तर्हि भेदप्रत्यक्षता ? इति चेत्, उच्यते—**स एव ह्युत्पाताद्युदकाग्निवदिति** । यावदन्यथापि वर्तत एव । यथोत्पाते ज्वलनमुदकस्य शीतद्रवादिगुणस्य सतोऽपि तद्विरोध्यग्निधर्मापत्त्या दृष्टो भेदोऽन्यथावर्तमानस्यान्यथावर्तनम् । आदिग्रहणान्निध्युपलब्धित्वेन भूम्यबादिवर्तनं भेदेन । तद्यथोक्तं **महाकालमते**-'उष्मा सहस्रसंख्ये धूमो लक्षे ज्वलनं कोटौ' इति । तेषां चित्रकर्मादिहसनरोदनस्थानसंक्रान्त्यादिभेदरूपेण स एव भावो भवतीति । तस्मान्नास्ति भेदः । भिद्यमानं हि वस्त्वेवं भिद्यते स्वरूपादविपर्ययगत्या । यद्यभावो भावो भवेद् भावः स तु न भिद्येऽहमिति कथञ्चिदभावोऽपि भवति । भावादभावो हि भिन्नः । उपचितापचितभवनो वेति । स एव भावो न भिद्यत इति । कथञ्चिदुपचितापचितभवनो वेति सम्बन्धः । यावद्भवितव्यतावदेव न न्यूनो नाधिको वा भवति स भावः । इतिशब्दो हेत्वर्थे । उपचितापचितभवनाभावे दधिघटाद्यवस्थानामादिनिधनविभागाभावदर्शनादिति हेतुस्तं दर्शयितुमाह—**इति न काचिदवस्था दधिघटादिरादिनिधनविभागवती,** आदिः प्रागभिद्यमानस्योत्पत्तिः । निधनं विद्यमानस्य विनाशः, विभागोऽन्यत्वं एते चादिनिधनविभागा दधिघटाद्यवस्थानां न सन्ति, पूर्वोत्तरोत्पत्तिविनाशवस्तुप्रविभागो भावस्य प्रतिपादितत्वात् ततस्तदभावात् । नोपचीयते नापचीयते चासौ भावः, क्षीरदध्याद्यवस्थाद्येकरूपत्वाद्भवनस्य मृत्पिण्डघटाद्यवस्थासु चेति । एतस्य हेतोरसिद्धिं परिहरन् परपक्षे निष्टापादनेन साधयति—**यदि स्यादित्यादि** । आदिनिधनविभागवती यदि स्यात् सा दधिघटाद्यवस्था खपुष्पावस्थापि तत्र तत्रयधर्मा स्यात् सर्वतो व्यावृत्तत्वाद् दधिघटवत् । सर्वतो व्यावृत्तत्वं च सिद्धं घटस्य दधिघटाद्यवस्थानां च भेदाभ्युपगमात् । तथानिच्छतस्तद्विपर्ययेण खपुष्पधर्मापादनं घटस्य । गतार्थं साधनद्वयम् । महापृथिवीवियदवस्थे सादिनिधनविभावे स्यातामितरेतरासत्त्वाद् घटवत् । घटोऽपि वा नादिरनादिरनिधनो निर्विभागश्च स्यादत एव इतरेतरासत्त्वादेवाकाशमहापृथिवीवदिति । घटभेदाभ्युपगमेनैवैतत्साधनमनिष्टापादानमिति । एवं तावदुपचि-

१ कदाचि॰ ग । २ ॰मा॰ ग । ॰ऽनाद्यादि॰ ग ।

तापचितभेदाभावः । यदप्युक्तम्–'प्रत्यक्षत एव भेदो गृह्यते' इति । तद्ग्रहणमपि नैव भेदस्य, भेदस्याभावादेव खपुष्पग्रहणवत् । अभावः कल्पनात्मकत्वात् तस्य भावैकस्यासाधितत्वाद्भेदः कल्पनात्मकः । कल्पनात्मकं वा सद्वस्तु नोऽन्यथात्वात् । सा च कल्पना देशतः कालतो वा, स्वरूपत एव वा भिन्नेष्वर्थेष्वभेदकल्पनाद्वा स्यात् । देशकालाद्यभेदे वा भेदकल्पना स्यात् । उभयथाप्यसद्रूपत्वात् कल्पनायाः । इह तु त्वन्मतेन देशकालाभ्यामभेदो नास्ति, भेद एव । घटादेः कपालादित्वेन भिद्यमानस्य वस्तुनो यावत् परमाणुशो रूपादिशोऽनभिलाप्यत्वशश्वद् भेदाद् भेदभावः । कालतश्च क्षणे क्षणेऽनन्यत्वात् । तस्मादनभिलाप्यपरमार्थस्य च वस्तुनो घट इति रूपादि इति वा ग्रहणमसदध्यारोपात्मकं देशकालाभेदाभावात् खपुष्पवत् खपुष्पे इव खपुष्पवत् । तत्प्रत्यक्षाभासमेवेत्यर्थः । यदप्युच्यते–अभेदश्च न गृह्यते प्रत्यक्षत इति तदपि न, यस्मादभेद एव तु गृह्यते प्रत्यक्षतः । किं कारणम् ? भावस्याभिन्नत्वात्, गृह्यमाणस्य च भावत्वात् नाभावो गृह्यते । यतः खपुष्पादि । यदि ब्रूयास्त्वं 'अथ समस्त एव कस्माद्भावो न गृह्यते ?' इति ।

अत्र तु समस्तग्रहणं वक्ष्यामः सकारणं त्वद्ग्राहविनिवृत्त्यर्थत्वात् । तावत् त्वां किञ्चित् पृच्छामः । नानाहतमुखो मूर्खस्तिष्ठति इति । अथ भेदपक्षे पश्यता त्वया घटं किं समस्त एव घटो न गृह्यते ? इति । परान्तरादिभागाः किं न प्रत्यक्षाः ? आराद्भागा एव किं प्रत्यक्षाः ? इत्यत्र विशेषकारणं कथयेति ।

किं चान्यत्—समानदोषत्वादचोद्यमेतत् । उभयोः समानो दोषो नासावेकतश्चोद्यतः भावस्य सर्वगतस्याप्रत्यक्षत्वदोषो मम नास्तीति स्वपक्षे भेदस्य प्रत्यक्षत्वादिति विशेषं तव पश्यत एवं युज्येत वक्तुमित्थं भवति तथा भवतीति । एतदपि सम्भावनयोच्यते न तु सर्वत्रैवादर्शनभाक् पक्षो यस्य तव तस्य न तु युज्यत एवेत्यर्थः । सर्वत्रैव न घटेत रूपादौ वा, न क्वचित् प्रत्यक्षता युज्यत इत्यर्थः । अथवा स्वपरपक्षयोः सर्वत्रैव । एतदुक्तं भवति । एवं हि स्वपक्षरागाविष्टो भवान् परमत्सरेण स्वदोषं नैव पश्यति, स्वचरणलग्नपाशादर्शी प्रयोजनावस्थितामिषदर्शीव शकुनिः । त्वत्पक्षेऽत्यन्तदर्शनासम्भवादेव घटादेः प्रत्यक्षत्वाभावः ॥

इदानीमभेदपक्ष एव दर्शनं सम्भवति नान्यत्रेति वक्ष्याम इति यदुक्तं तद्दर्शयिष्यन्नाह—तत्त्वदर्शनमिति । तत् पुनरदर्शनम् । तुर्विशेषे । विशेषेणात्रैवाहेतुपक्ष एव निवर्तते नान्यत्रेति । न भेदपक्षे यावन्निरभिलाप्यत्वशो भेदादित्युक्तम् । तददर्शनं तर्हि कथम् ? इति तत् समर्थयति–इहाभेदे भावे यदेतत् सर्वं तद्भाव एवाभिन्नत्वात् । तस्याभिन्नस्य भावस्य स एकदेशो घटः । तस्य ग्रहणे घटस्य ग्रहणे तस्यैव ग्रहणम् । भावस्यैव ग्रहणं समस्तस्य । किं कारणम् ? । ततोऽभिन्न-

१ °भावक° ग । २ °स्य ग । ३ °स्मात् भे° ग । ४ °यति ग । ५ °स्तुं ग । ६ त्व° घ ।

त्वात् ततो भावघटस्याभिन्नत्वात् । घटाद्वा भावस्याभिन्नत्वात् । तद्व्याचष्टे तद्भावत्वात् तस्यापि भावत्वात् तद्भावत्वात्, पर्यायान्तरेण । हेत्वन्तरं वा घटोऽपि भाव एव चाभिन्नत्वात् । यो यो भावः स स तद्ग्रहणेन गृह्यते । दृष्टान्तो देशस्वात्मवत् । तस्य देशस्य स्वात्मा देशस्य भावः स्वं तत्त्वं भावादभिन्नत्वात् तद्भावाद् गृह्यते भाववत् तथा देशग्रहणे समस्तो भावः तद्भावत्वाद् गृह्यते । एतद्भावनार्थमाह—तस्य ह्येकोऽपि प्रथनं[1] प्रतिदेशः । हिशब्दो यस्मादर्थे । यस्मात् तस्यैकोऽपि देशः प्रख्यान् सर्वाविभक्तभवनवृत्त्यात्मकत्वात् सर्वेण समस्तेन भावेनाविभक्तो भवनमित्येवैकां[2] वृत्तिमनुभवत्यात्मरूपामिति । सोऽपि देशः सर्वभावात्मा प्रागुक्तप्राण्याद्यवयवपुरुषात्मत्ववत् । अत आह—तस्य ह्येकोऽपि प्रथनं प्रतिदेशः सर्वाविभक्तभवनवृत्त्यात्मकत्वात् सार्वरूपमनतिक्रान्तः । ततोऽनेन न्यायेन देशग्रहणे समस्तग्रहणमित्यभेदपक्ष एव दर्शनं नान्यथेति[3] । नत्वेकदेशश्च स एव वेति विप्रतिषिद्धमिति चेत् तत्र ज्ञायमानत्वापेक्षयोक्तत्वात् । त्वन्मत्या सावयवादर्शनं नान्यचेति । नन्वेकदेशे सावयव इव निरवयवोऽपि प्रख्यातीति मया तथोक्तं परमार्थतस्तु[4] निर्विभाग एवासावुक्तो वक्ष्यते च । अथवा प्रथनं विस्तारो विस्तीर्णत्वात् तस्य भावस्य प्रथनं देशं प्रतीत्य देशः[5] तस्माच्चापि विभक्त इत्युक्तम् ।

अत आह—न चास्योर्ध्वाधस्तिर्यग्दिक्षु मूर्तिविवर्तप्रत्यङ्गान्यनेकत्वाभिमत[6]भेदवत् क्वचिदवच्छेदो विद्यते दक्षिणोत्तरयोरपि[7] । किमु घटपटयोर्भवनैकमूर्तिविवर्तानवच्छेदात् इति यथैकत्वाभिमतस्य भेदस्य घटादेः मूर्तेः शरीरस्य विवर्तानां विभागानामूर्ध्वाधस्तिर्यदिक्तयाङ्गाऽवयवतया नापरः । किन्तु प्रत्यङ्गतया च पुरुषपाण्यादिवत् कपालादित्वेनाभासमानानामेकान्ताभेदः । चक्षुरादिग्राह्याभिमत एकत्वान्निर्विभागस्तथाभावविवर्तप्रत्यङ्गानां तदेकत्वान्निर्विभागस्तस्माद्भावस्य न क्वचित्तदभिमतभेदवदेकत्वादवच्छेदो विद्यत इति । यदि घटादित्वेन यदि रूपादित्वेन त्वदिष्टभेदवदेव । इतिशब्दो हेत्वर्थे । यस्मात् विभागावच्छेदाभावाद्धेतोः स भावो ध्रुवस्त्रिष्वपि कालेषु कूटस्थो माषराशिस्थमाषवत् सर्वेणैकीभूत एव । अविचाली न स्थानात् स्थानान्तरं सङ्क्रामति । अनपायोपजनः कोष्ठागारवन्निर्गमप्रवेशानपायोपजने[8] भावस्य न स्तः । अविकार्यपि स्वस्थानस्थस्यापि नर्तकीभ्रूक्षेपादिवद्विकाराभावात् । अनुत्पत्तिः प्रागभूत्वा घटादिवदुत्पत्त्यभावात् । अवृद्धिरङ्कुरपत्रवदुपचयाभावात्, अव्ययो वृक्षादिपत्राद्यवयवखं[10]ण्डादिवद्व्ययाभावात् । एतानि हि नित्यविशेषणानि[11] भावस्यैव घटन्ते न पुरुषादी-

१ °मं घ । २ °कवृ° घ । ३ °त्रे° घ । ४ °वस्तुनि ग । ५ दोषः ग । ६ °मे° ग । ७ °मधुरयो° घ विशेषः । ८ कोक्त्या ग । ९ °नौ घ । १० °घटा° ग । ११ इश्यतां 'ध्रुवं कूटस्थमविचाल्यनपायोपजनाविकार्यनुत्पत्त्यवृद्ध्यव्ययोगि' (पा०म०भा०पृ० ५९)

नाम् अत्र भावे ध्रुवादिनित्यलक्षणयोगः परपरिकल्पितभेदासम्भविधर्मत्वेन व्याख्यातः । स्वरूपतो निदर्शनाभावात् । उक्तवदिति च पूर्वोत्तरोत्पत्तिविनाश-वस्तुप्रविभागाभावात् युक्तो नित्यैकसर्वात्मकत्वातिदेशः ।

किं चान्यत्—अस्य प्रत्यक्षप्रमाणसिद्धिरिहैवाभिन्नभावपक्षे प्रत्यक्षत्वाद्भावस्या-प्रत्यक्षं प्रमाणं सिद्ध्यति । उक्तवदिति वर्तते । यथोक्तम्—'तस्य ह्येकोऽपि प्रथनं प्रतिदेशः सर्वाविभक्तभवनवृत्त्यात्मकत्वात् सार्वरूप्यमनतिक्रान्तः । ततस्तद्भावत्वात् ततो भिन्नत्वात् तस्य य एकदेशस्तस्य ग्रहणे तस्यैव ग्रहणम् । देशस्यात्मवत्' इत्युक्तं भावप्रत्यक्षत्वम् । ततः सर्वप्रमाज्येष्ठप्रत्यक्षप्रमाणसिद्धिरिहैव यथार्थवस्तु-विषयत्वात् । **अन्यत्रानुमानतैव भावे** । वस्तुपक्षादन्यत्र भेदपक्षेऽनुमानतैव प्रत्यक्षाभिमतस्यापि । किं कारणम् ? । **सम्बन्धैकदेशप्रत्ययशेषसिद्ध्यात्म-कत्वात्** । द्वयोः सम्बन्धयोः सम्बन्धे तदेकदेशप्रत्यक्षत्वे तत्प्रत्ययाच्छेषसिद्धि-रात्मानुमानस्येति । तदात्मकं तत् । **सम्बद्धैकदेश** इति वा पाठः । यथोक्तम्— '**सम्बद्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानम्** ।' सम्बद्धानां भावानां स्वभावेन चेत्यादिसप्तविधेन कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षो भवति, तस्मा-दिदानीमिन्द्रियप्रत्यक्षाच्छेषस्याप्रत्यक्षस्यार्थस्य या सिद्धिरनुमानं तत् । यथा धूमदर्शनादग्निरिति ज्ञानम्, तथात्मेन्द्रियमनोऽर्थसन्निकर्षजपूर्वकं त्रिविधं पूर्वव-दित्यादिलक्षणमेव तत्र सम्भवति । देशग्रहणस्याऽऽरादुभागविषयस्याशेषतद्व-स्त्वसंस्पर्शात् । एकदेशग्रहणेन शेषग्रहणमनुमानमेव । तस्यानुमानत्वेऽपि मा स्थिरां बुद्धिं कार्षीरित्यत आह—कुतोऽनुमानतापि ? प्रोक्तन्यायेन प्रत्यक्षत्वा-सिद्धेः । कथमिति चेत् ? सम्बन्धयोः कदाचिदप्यग्रहणात् । प्रत्यक्षकाले हि सम्बन्धयोर्युगपद्ग्रहणादुत्तरकालमेकदेशग्रहणाद्विशेषणादवगम्यमनुमानं स्यात्, तदेव तु प्रत्यक्षदर्शनं नास्तीत्युक्तम् । प्रत्यक्षपूर्वत्वे तत्सम्भवात् प्रत्यक्षसिद्धौ तद्ब-लेनानुमानसिद्धिः सम्भाव्यते । तदभावे तदसिद्धिः । प्रत्यक्षत्वासिद्धेरनन्तरोक्त-त्वादेव कुतोऽनुमानतापि ? । इतरो निराशीभूत आह—तत्किमज्ञानमेवापद्यते ? ।

आचार्य आह—**कुतोऽज्ञानमपीति** । अज्ञानमपि तन्न भवति त्वदभिमतं प्रत्यक्षम् । कुतः ? प्रत्यक्षपूर्वकाज्ञानत्रयेऽन्तर्भावात्, संशयविपर्ययानध्यव-साया अज्ञानविकल्पाः । ते च प्रत्यक्षज्ञानपूर्वकाः । संशयस्तावत् सामान्यप्रत्य-क्षाद्विशेषाप्रत्यक्षात्, विशेषस्मृतेश्च संशयः । तथा समानानेकधर्मोपपत्तेर्विप्रतिप-त्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति । सामान्य-

---

१ °त्ति° ग । २ °नेनै° ग । ३ °स्यानुराग° ग । ४ प्राक्तन° ग । ५ °न्य° ग । ६ °द्ध° घ ।

विशेषयोः प्रत्यक्षपूर्वकत्वे समानानेकधर्मत्वादीनि विशेषणानि स्युर्नान्यथा स्थाणुपुरुषादिष्विति संशयलीयार्थाभावान्न संशयः । तत[1] एव विपर्ययेण भव्याभावान्न विपर्ययस्त्वन्मतेनैवेत्यत आह–संशयनीयविपर्यये भव्यविषयप्रत्यक्षात्यन्ताभावात् । अनध्यवसायोऽध्यवसायपूर्वः, स चाधिको वावसायोऽध्यवसायः । प्रत्यक्षज्ञानमेतद्भावस्योक्तत्वात् । नाध्यवसायोऽनध्यवसाय इत्यधिकावसायासम्भवाच्च तद्व्यावृत्तिविषयानध्यवसायासम्भवात् कुतोऽनध्यवसायः ? । तस्मात् यदुक्तम्–'पुढवीकायिकादिजीवा[2] अचामूढत्तमवि पचिट्ठइ' इत्यादि तत्सत्यम् । अन्वाह चेति तस्मिन् जिनप्रवचनप्रसिद्धाभेदभावनिर्विकल्पविधिविधिनयदर्शने भेदाभावप्रत्यक्षानुमानसंशयविपर्ययानध्यवसायासम्भवमनुवर्तमानोऽन्योऽप्याह–यथा विशुद्धमाकाशमिति । दृष्टान्तसमर्थनं तिमिरोपप्लुतदृष्टेर्विशुद्धे नभसि केशोण्डुकमशकमक्षिकामयूरचन्द्रिकालि[3]मालाभिरवयवैर्विततमिति निरवयवेऽप्यसङ्कीर्णे सङ्कीर्णदर्शनं भवति तथेदमिति दार्ष्टान्तिको भावैकपरमार्थः । अमरणादमृतमविनाशात् । बृहत्त्वाद्ब्रह्म निर्विकारं निस्तिमिरं व्योमवदवस्थितम् । नपुंसकनिर्देशः सर्वभेदाभिमतासद्विकारसाधारणत्वात् 'अव्यक्ते गुणसन्देहे नपुंसकलिङ्गप्रयोग' वचनात् । भवनापेक्षया वा नपुंसकम् । अकलुषमपि सदविद्यया ज्ञानाभासेन कलुषत्वमिवापन्नमनापन्नमप्यभेदरूपं सद्भेदरूपमाभाति । एवं तावदमलं मलरूपेणाभातीत्युक्तम् ॥

इदानीमेकं सदनेकधा प्रविभज्यत इति ब्रूमः[4] । तस्यैकमपीत्यादि । यथोद-न्वतां तोयमुत्पातेऽङ्गारराशिवत् प्रज्वलदुपलक्ष्यते, त[5]स्यानेकरूपता मिथ्यैव प्रकृतित्वमिति । प्रकर्षेण कृतिः प्रकृतिः, घटपटादिपरो भेदः । तद्भावमनापन्नमेव विकारांस्तांस्तानेव घटपटादीनात्मभावादप्रच्यवने न[6]र्तनकरहस्तभ्रूक्षेपादिकल्पान् करोति । स स्वतः स्वात्मानं भाव एवाकाररूपेण सृजति उपसंहरति च । को दृष्टान्तः ? ऋतुधर्मवत् ऋतूनां धर्मैः इन्द्र इव निर्मलमाकाशं दृष्ट्वा वक्तारो भवन्ति महावर्षस्य गर्भ इति । कुतो निर्मले नभसि वर्षसम्भवः ? । तथापि तन्नैर्मल्याविनाशनेनैव शक्रः शक्रकार्मुकशतह्रदमहाघनस्तनितवर्षितकरकाधारावर्षादीन् सृजत्युपसंहरति चेत्युच्यते । क्षणेनैव पुनस्ताद्ग्वैमल्यदर्शनान्नभसः[7] । यथेयमृतुधाम्नः सृष्टिः शुद्धगगना पृथग्भूतजलप्रकृतित्वाभिमतमेघादिरूपा तथा सर्वघटादिगवादिरूपा सृष्टिर्भावादेवोपसंहारश्चेति भावः ॥

॥ विधिविधिनयः समाप्तः ॥ २ ॥

एवं तावद्वस्त्वर्थतो विधिविधिनयविकल्पाः पुरुषनियतिकालस्वभावभावा व्याख्याताः । अनया दिशा शब्दब्रह्मविधिनयग्रहाद्येककारणवादा उन्नयनीयाः[8] ।

---

१ त एव घ । २ पृथिवीकायिकादिजीवा ................. । ३ कादिमात्राभि° । ४ क्रमः ग । घ । ५ तथास्या° ग । ६ °व° ग । ७ °भ्रासेव घ । ८ वामेन्द्र ग-घ ।

इदानीं तेषु शब्दार्थो वक्तव्यः । स च सामान्येनोच्यते, सर्वेषां तुल्यत्वात् । स च द्विविधः—पदार्थो वाक्यार्थश्च । तत्र पदार्थस्तावत् एषु विधिविधिनयेष्वविकल्पः शब्दार्थ उक्तेषु पुरुषावादिष्ववस्थाभ्युपचरितप्रक्रियाभेदकल्पितविकल्पासत्त्वात् तद्वस्तुनिर्विकल्पत्वात् । नन्वित्यादिना ज्ञानतः सर्वस्यैकत्वाद्यस्य कस्यचिज् ज्ञाने सर्वस्य ज्ञातत्वात् । एतेन वक्तृत्वाद्यसमन्वयो व्याख्यातो दृष्टान्ताभावात् । सर्वस्य सर्वज्ञत्वात्, भेदाभावात् । एतमर्थमन्योऽप्यत्राह—शास्त्रेषु प्रक्रियासांख्ययोगवैशेषिकवेदशिरःप्रभृतिषु नृप्रकृतिपुरुषद्रव्यगुणादिनित्यानित्याद्वैतद्वैतत्रैतादिपदार्थप्रक्रियाभेदैर्विकल्पात्मकपदार्थप्रणयने यथाप्रतिक्रियमविद्यैवोपवर्ण्यते विकल्पस्यावस्तुत्वात् । विद्या तु तत्त्वज्ञानं साऽऽगमविकल्परूपा न भवितुमर्हति वाग्गोचरातिक्रान्तत्वात् । तत्त्वज्ञानविषयानन्तात्मकैकपरमार्थस्य । यथोक्तम्—'पण्णवणिज्जा भावा' इत्यादि आगमाभ्यासात् तु सम्यग्दर्शनज्ञानचारित्रतपोविशेषविशेषिताविद्यस्य सर्वभावविषया विद्या स्वयमेव स्वात्मनैवोपवर्तते नाविद्यमाना कुतश्चिदानीयते । सा चानागमविकल्पतेत्यत आह—

'अनागमविकल्पा तु स्वयं विद्योपवर्तते ।' इति ।

तथा चान्यः—'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
तेषामत्यन्तसम्बन्धो नार्थान् शब्दाः स्पृशन्त्यपि ॥'

शब्दा इति शब्दागमानुमानप्रतिपत्तिहेतव इत्यत आह—ये त्वेते घटादिशब्दा मेघस्तनितवदेते शब्दा एव केवला नार्थस्वरूपस्य वाचकाः । घटादिप्रतिपादनसमर्था अभिमता न प्रतिपादका इत्यर्थः । नन्विदं प्रसिद्धप्रस्तुतव्यवहारविरुद्धं त्वयोक्तम्, अर्थस्याप्रतिपादका घटादिशब्दा मेघस्तनितवत् श्रोत्रग्राह्यत्वादिति । घटादिशब्दा इति च त्वद्वचनादेव तेषां घटाद्यर्थप्रतिपादनदर्शनादिति ।

अत्रोच्यते—न ब्रूमः प्रतिपादका इति । किं तर्हि? वाचका इति ब्रूमः । प्रतिपत्तृसङ्केतवशात् तदुपलक्षणत्वेन प्रतिपादकत्वं विकल्पात्मार्थविषयं न विरु-

१ °षु वि° ग । २ °न° ग । ३ °क्रमतत्त्वात् ग । ४ सम्पूर्णा गाथा त्वेवम्—

पण्णवणिज्जा भावा वण्णाण सपज्जया तओ थोवा ।
सेसा परपज्जाया तोऽणंतगुणा निरभिलप्पा ॥ १४१ ॥
पण्णवणिज्जा भावा अणंतभागो उ अणभिलप्पाणं ।
पण्णवणिज्जाणं पुण अणंतभागो सुअनिबद्धो ॥ —आव० नि० ४८८

छाया—प्रज्ञापनीया भावा वर्णानां स्वपर्यायास्ततः स्तोकाः ।
शेषाः परपर्यायास्ततोऽनन्तगुणा निरभिलाप्याः ॥
प्रज्ञापनीया भावा अनन्तभागस्त्वनभिलाप्यानाम् ।
प्रज्ञापनीयानां पुनरनन्तभागः श्रुतनिबद्धः ॥

५ कार्यकारणता तेषां नार्थं° स्याद्वादमञ्जर्यां पाठान्तरम् ।

ध्यते । यस्मान्मयूरविरुतं च सङ्केताद्व्यवहारानुपाति न यथा मयूरविरुतं त्रासमदहर्षस्थानगमनाद्यन्यद्भावस्थाविशेषसहचरं श्रुतचरं तथोत्तरकाले कृतसङ्गीतेः पुरुषस्य तादृग्विज्ञानमादधाति, एवं पुरुषोऽपि घटपटादिशब्दोच्चारणेन पूर्वसङ्केतवशात् पुरुषान्तराय स्वाभिप्रायमर्पयतीति न प्रसिद्धिव्यवहारविरोधौ । तथैवाचेतनशब्देष्वपि कालाकालमेघस्तनितादिषु सङ्केतादेव शुभाशुभादिपरिज्ञानं दृश्यते, अथवा किमनेन प्रसिद्धिव्यवहारविरोधपरिहारपरिक्लेशेन ? नायमेव सुश्लिष्टः परिहारो व्यापी च । तद्यथा–ते सर्व एव शब्दास्तस्यैव चैकस्य ब्रह्मणः पुरुषाद्यन्यतमविधिविधिनयविकल्पस्य यथोपपादितं त्वया रुचितस्यान्यतमस्य लक्षणार्थाः । तदेकदेशत्वात् प्रागभिहितप्रत्यक्षसिद्धिवत् । यथा गौर्विषाणी ककुद्मान् प्रान्ते वालधिः सास्नावानिति । यथैते विषाण्यादिशब्दा गोरेकदेशवाचित्वात् तदुपलक्षणार्थाः प्रसिद्धसङ्केतवशाद् गोरेव वाचकाः । तदवयवानां तस्मादभिन्नत्वात् । एवं सर्वशब्दाः तदवयवानां ततोऽपृथक्त्वात् तस्यैव ब्रह्मणो वाचका इति वाचकत्वेऽप्युपपन्नः प्रसिद्धव्यवहाराविरोधः । अभिन्नैकभवनब्रह्मोपलक्षणार्थत्वे सर्वशब्दानां शब्दलक्षणविन्मतिसंवादे ज्ञापकमाह–एवं च कृत्वाहुः शब्दलक्षणविद इति वाक्यशेषः । 'सर्वधातवो भुवोऽर्थमभिदधति' इति तेषामप्यस्मिन्नेव दर्शने करोत्यादिधातूनां सत्तार्थानतिक्रमे स्वार्थवचनमुपपद्य भुवं वदन्तीति भूवादयो वादिशब्दस्यौणादिकेर्दन्तत्वात्तथा भूवादिशब्दव्याख्यानान्नान्यथेति । उक्तः पदार्थः ।

इदानीं वाक्यार्थ उच्यते–स एकोऽनवयवः शब्दो वाक्यार्थः । वाक्यं च अर्थश्च वाक्यार्थः, वाक्येन युक्तोऽर्थो वाक्यार्थः । वाक्यसम्बन्धाद् वाक्याद्वाक्यस्यैवार्थः । यथाहुः—

'आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी ।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृति ॥
पदमाद्यं पृथक् सर्वं पदं सापेक्षमित्यपि ।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायदर्शिनाम् ॥'

—वाक्यपदीये का. २, श्लो. १–२

तत्र यैः 'एकोऽनवयवः शब्दः' इत्युक्तं तैर्विनिश्चित्योक्तं भवनस्यानवयवत्वात्, तथैव पदवाक्यशब्दः तदर्थाद्यात्मत्वादिति । न तु सर्वाण्येकस्यैव सर्वत्वादिति चरितार्थम् । एष द्रव्यार्थो विधिविधिनयः । हेतोर्वास्मात् संग्रहदेशत्वाच्चास्य द्रव्यार्थतेति सङ्ग्रहो द्रव्यार्थः । स पुनर्द्विविधः सङ्ग्रहो देशसङ्ग्रहः सर्वसङ्ग्रहश्चेत्येवमादिशतप्रस्तारोऽसौ । आर्षे शतभेदश्रुतेर्नयानाम् । यथोक्तम्—'एक्केक्को य सयविहो

१ °दर्थ° ग । २ °च्य° ग । °व्या° क–ख । ३ °त्म° ग । ४ सङ्गा° ग । ५ लुबो° ग । ६ °सन्ताना° ग । ७ स्वर्थद प्रवचनभवन° । ८ °केस° ग–°केत्स° घ ।

सत्त नयसता हवंति एमेव[1] ।' इति । (आ. भा. २२६, निर्यु० २२६४) सङ्ग्रहस्यापि द्रव्यार्थता ।

"तित्थयरवयणसंगहविसेसपत्थारमूलवागरणी[2] ।
दव्वट्ठिओ य पज्जवणओ य सेसा वियप्पा सिं ॥' इति ।
(सन्मति० का० १, गा०३)

वचनात् द्रव्यार्थसमासश्चादिनयव्याख्यातः । तस्मात् सङ्ग्रहदेशत्वात्तदवयवत्वादस्य द्रव्यार्थतेति । द्रव्यशब्दस्य कोऽर्थः ? । द्रवतीति द्रव्यम् । गुणसन्द्रावो[3] द्रव्यम् । द्रव्यं भव्यं योग्यं 'भू प्राप्तौ' इति प्राप्तियोग्यमिष्टार्थप्राप्तियोग्यम् । दारुक्रियावदादिलक्षणं द्रव्यमित्येवमादि यथासम्भवं लक्षणं वाच्यम् । इह तु भवतीति भवनं भावः प्राच्यचतुष्टये पुरुषादिस्वभावान्ते भवनं भावोऽन्त्ये पूर्वोक्तवत्, पूर्वविरुद्धत्वान्नयानाम् । द्रवति भवति गच्छति सततमिति द्रव्यम् । गत्यात्मकत्वात् 'द्रव्यं च भव्ये' (पा. ५।३।१०४) इति वचनात् । न विकारावयवौ इति विधिविधिनयाद्युक्तत्वात् । गतार्थं । किमेतत् सामर्थ्यवादिना स्वमनीषिकयोच्यते त्वया आहोस्विदार्षेऽपि निबन्धनमस्य दर्शनमस्ति यत एतन्निर्गतमिति ? अत्रास्तीत्युच्यते । निबन्धनमस्य सोमिलब्राह्मणप्रश्ने "किं भवं[4] ? एके भवमित्यादिके । व्याकरणे 'सोमिला[5] ! एगे[6] वि अहं, दुवे वि अहं, अक्खए वि अहं, अव्वए वि अहं, अवट्ठिते[7] वि अहं, अणेगभूयभावभविए वि अहं" (भग०श०१८, उ०१०, सू०६४७–पृ० ७५९) इत्यादि निबन्धनमिति ।

एवं द्वितीयो विधिविध्यरः सविकल्पो नयचक्रस्य समाप्तः ॥

---

१ एकैकश्च शतविधः सप्त नयशतानि भवन्त्येवमेव । २ तीर्थंकरवचनसङ्ग्रहविशेषप्रस्तारमूलव्याकरणी । द्रव्यार्थिकः पर्ययनयश्च शेषा विकल्पास्तयोः ॥ ३ °न्द्रा° ग । ४ किं भवान् ? एको भवान् । आ० स० द्वारा मुद्रापितावृत्तौ तु 'एगे भवं, दुवे भवं, अक्खए भवं, अव्वए भवं, अवट्ठिए भवं, अणेगभूयभावभविए भवं, सोमिला ! एगे वि अहं जाव अणेगभूयभविए वि अहं', इति पाठः । ५ छाया–हे सोमिल ! एकोऽप्यहम्, द्वावप्यहम्, अक्षयोऽप्यहम्, अव्ययोऽप्यहम्, अवस्थितोऽप्यहम्, अनेकभूतभावभविकोऽप्यहम् । ६ °के ग । ७ °स° ग । ८ °ए ग ।

## अथ विध्युभयारस्तृतीयः ।

कमलदलविपुलनयना, कमलमुखी कमलगर्भसमगौरी ।
कमले स्थिता भगवती, ददातु श्रुतदेवता सिद्धिम् ॥

इदानीं विध्युभयारावसरः । यद्ययं विधिविधिनयारोक्तो भावो निर्दोषः स्याद-रान्तरारम्भोऽनर्थकः स्यात् । स तु सदोष एवेति प्राप्तावसरं तद्दोषमुक्त्वोत्तरत्र विध्युभयारं निर्दिदिक्षुः प्राच्यदोषाभिधानार्थमेव तावदाह—

**अथ किं भवता** इत्यादि । अथेत्यधिकारोपन्यासे, अनन्तरोक्तपुरुषादिवा-ददूषणाधिकारोपन्यासार्थोऽथशब्दः । किंशब्दः प्रश्ने । सामान्येन पुरुषनियति-कालस्वभावभावेष्वनन्तरोक्तेषु प्रतिस्वमात्मनो ग्राहे तथा तथा तेन तेन प्रकारेण पुरुषसुप्तादिचतुरवस्था नियतिरेव, पूर्वपरादिक्रियाक्रियादिनियतावस्थारूपा । काल एव क्रमयौगपद्यभूतभवद्भाविव्यवस्थातत्त्वः, स्वभाव एवात्मप्रविभागमात्र-प्रतिविविक्तभवनभेदतत्त्वः, भाव एव स्वत्वास्वत्वाद्यविद्याविकल्पविनिर्मुक्तसत्तामात्र-व्याप्यनञ्जनशब्दार्थज्ञानाद्यवस्थाविशेषजगत्तत्त्व इति । या एताः प्रतिस्वं न शेषः । व्रीह्याङ्कुरादिघटपटादिवस्तुव्याप्तिवृत्तयोऽवस्थाः । तस्य तस्य पुरुषादि-दर्शनस्य व्यापित्वप्रदर्शनार्थमुक्तास्तासु किं पुरुषादितत्त्वमवस्थालक्षणं तस्या न सोऽस्ति तद्व्यतिरिक्तः । तथा रूपादय एव घट इति । उत पुरुषादिलक्षणास्ताः पुरुषाद्येव सत्यं, न ताः काश्चिदवस्थाः । यथा घट एव रूपादयो न रूपादयो नाम केचिद् घटव्यतिरेकेणेति ? द्वयोर्विकल्पयोरन्यतरोऽवधार्यः ।

किं चातः–**यद्यवस्था स्वात्मेत्यादि, यावत् समुदयमात्रवाद** एवाय-मन्यः । यदि न किञ्चिदस्त्यवस्था स्वात्मैव तल्लक्षणं ता एव सत्याः । न पुरुषाद्या-त्मावस्थाः पुरुषादिस्वरूपाः ता अवस्था न भवन्तीत्येवमभ्युपेतं भवति । ततः पुरुषो नाम न कश्चिचतुरवस्थाव्यतिरिक्त इत्येतदापन्नम्, पुरुषादीति सामान्येनोपक्रम्य पुरुषो नामेति पुरुषस्यैवाभाववचनं विधिविधिनयविकल्पानां पुरुषस्य प्रथमत्वात् तद्दूषणेनातिदेक्ष्यमाणत्वात् पुरुषवादे प्रस्तुते । कथं पुरुष एवासन्नित्यापाद्यते ? इति चेत्; उच्यते–यस्मात् समुदयिमात्रसमुदयाऽभ्युपगमाद् रूपादिसमुदायवत् समुदयमात्रवाद एवायमन्यः । स एवायं बौद्धपरिकल्पितरूपवेदनाविज्ञान-संस्कारसंज्ञास्कन्धसमुदायः पुरुषोऽङ्गुलिमुष्टिवत् । बलाकापङ्क्तिवत् । अक्षोद्धि-चक्रपञ्जरोऽणीयोऽक्षपरयुगसमिलादिरथवदिति समुदयवादः । ईषन्मषीम्रक्षितकु-क्कुटवत् । पुरुषप्रत्याख्यानफलोऽन्यवदाभाति सुप्तसुषुप्तजाग्रत्तुरीयावस्थासंज्ञा-भेदात् युगपद्भाविरूपादिगुणसमुदायवादतुल्यो युगपदवस्थादि चतुरवस्थासमुदय-

१ विवर्त्ता ततः ग । २ तल्लक्षणम्, तानि च लक्षणं इति ख्रेऽधिकः पाठः ।

वाद इति । एष देशभिन्नरूपादिसमुदयवादतुल्यः । नायं देशभिन्नरूपादिसमुदयवादतुल्य एव । किं तर्हि ? कालभेदभिन्नायुगपद्भाविसततसंवृत्तजननिधननामरूपवादतुल्यक्षणिकवादोऽपि । यस्मात् तुरीयत्वप्रतिपादनार्थाभ्युपगतमुक्तिक्रमवत्त्वयुगपदवस्थावृत्तेः क्षणिकवाद इति । सुप्तसुषुप्तजाग्रत्परमविनिद्रावस्थाविशुद्धिक्रमान्यथावृत्त्यभ्युपगमादवस्थाक्षयोऽन्यथात्वमन्ते च क्षयदर्शनादादौ क्षयानुमेयावस्थानामिति क्षणिकवादः । को दृष्टान्तः ? वासोवत् । यथा वस्त्रं क्षणे क्षणे जीर्यद् जीर्यदन्ते विशीर्यते तथावस्था अपि । न केवलं समुदयक्षणिकवादावेव । किं तर्हि ? शून्यवादोऽपि ।

तद्यथा—चतुर्णां नेत्यादि । यथा पुरुषवादिना चतस्रोऽवस्थाः पृथक् परिगृह्य तास्वपि ज्ञानमेव सुप्तत्वात् सुप्तपुरुषवत्, सुषुप्तत्वान्मदिरामत्तवदित्यादिना प्रतिपादितम् । तथा तथा रूपाद्यमूर्तमूर्त्यापत्त्या । त्वयैव रूपणाद्रूपमिति च ज्ञानात्मना चैतन्यस्वरूपादनपेता रूपरसादिघटादिसृष्टिश्चानेकधोपपादिता । सा च कल्पनाज्ञानं तन्मात्रमेव सत्यं, न रूपादि किंचित् तदाभासज्ञानबहिर्भूतं स्वप्नवत् । यथा स्वप्ने सिंहाद्याभासज्ञानमात्रं न सिंहादिः कश्चिद्बहिर्भूतस्तथा जाग्रद्विज्ञानमपि ज्ञानमात्रमेव, ग्रामारामस्त्रीपुरुषादिरूपाद्याकारज्ञानमात्रम् । तद्व्यतिरिक्तार्थशून्यस्वप्नविज्ञानवद्वेत्येतदापन्नम् । अतः कल्पनाज्ञानमात्र सत्यमिति विज्ञानव्यतिरिक्तार्थः शून्यवादः । विज्ञानमात्रं वास्यापि ग्राह्यग्राहकविकल्पानीतानिर्विकल्पत्वाश्रयस्य शून्यत्वापत्तेः ।

पुरुषवाद्याह—अचिन्त्यमेवेदं चिन्त्यत इत्यादि । मद्वचनापरिज्ञानादसम्बद्धं दूषणम्, मया हि 'पुरुष[3] एवेद'मित्यवधार्योक्तम्, नोक्तमिदमेव पुरुष इति, प्रत्यक्षाः सुप्ताद्यवस्था उद्दिश्येति । अत्र प्रयोगः—ऊर्ध्वमधस्तिर्यक् क्वचित् तत्त्वैक एक एव व्यवस्थितः पुरुष इति प्रतिज्ञा, अनतिरिक्तपरापराणीयोज्यायोरूपात्मकत्वात् वृक्षवदिति । यथोक्तम्—

'यस्मात् परं नापरमस्ति किञ्चित्, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥'
(श्वेताश्व० उ० अ० ३, श्लो० ९) इति ।

यस्मादन्यत् परं नास्त्यनन्यद्वैतमेवेत्यर्थः । अथवा यस्मात् परं प्रधानं प्रकृष्टमप्रकृष्टमन्यद्वा नास्ति । ऊर्ध्वाधस्तिर्यक्परापरविभागाभावादविभागात्मना तस्यैवावस्थानात् । नाणीयो न ज्यायोऽस्ति किञ्चिदिति सूक्ष्मस्थूलविभागाभावात् । ताद्रूप्येणाविभक्तस्यापि तस्यैवावस्थानादिति । शेषं गतार्थम् ।

---

१ तु म° ग । २ °न्यो ग । ३ ऋ०वे०मं० १० सू० ९० (पुरुषसूक्ते)

अत्रोच्यते—नन्वयमित्यादि । ननु त्वयाऽयं पुरुषोऽवस्थात्मकत्वमनिक्रामन्ननेकावस्थामात्रस्वतत्त्व एव व्यवस्थापितश्चतुरवस्थास्वरूपोपवर्णनद्वारेणैव तन्निरूपणादवस्थास्वात्मक एवासाविति । तत्रापि च विशेषणैकावस्थामात्रस्वतन्त्र[1]तुरीयावस्थातत्त्व इत्यर्थः । तत् कुतः ? इति चेत्, **चैतन्यानतिवृत्तिवर्तनात्**, सर्वत्र ज्ञानमयोऽसौ पुरुष इति प्रतिज्ञाय तद्व्याप्तिप्रदर्शनार्थं चैतन्यमेव वृक्षनृशकुड्यपुरुषादि सुप्तत्वात्, सुषुप्तत्वाज्जागरितत्वात् सुप्तादिपुरुषवदिति वर्णितं चैतन्यमेव । तच्च चैतन्यं विनिद्रावस्थातो नान्यत् । तच्चैतन्यं विनिद्रावस्थैव । यथोक्तम्—

'पुरुषस्य न केवलोदयः पशवश्चाप्यनिवृत्तकेवलाः ।
न च सत्यपि केवले प्रभुस्तव चिन्तेयमचिन्त्यपद्धतिः ॥' इति ।

इतिशब्दो हेत्वर्थे । अस्माद्धेतोर्विनिद्रावस्थालक्षण एव पुरुषः, एतदेवास्य लक्षणम् 'उपयोगो लक्षणम्' (तत्त्वार्थ० २-८) इति वचनात् । एतत्प्रतिज्ञामात्रम् ।

अत्र हेतुरुच्यते—**आत्यन्तिकनिद्राविगमरूप्यनिरूप्यत्वात्** । सर्वत्र सर्वदा वान्तमतीतोऽत्यन्तः, तत्र भव आत्यन्तिको निद्राविगमः । स एव रूपं तत्त्वम् । तेन तत्त्वेन निरूप्यत्वात् । यथा निरूपितं पुरुषवादिनैव 'सर्वं सर्वत्र सदा सर्वथा चेतनात्मकमेव' इति सिद्धो हेतुः । को दृष्टान्तः ? **विनिद्रावस्थास्वात्मवत्** । यथा विनिद्रावस्थां चतुर्थीं शुद्धचैतन्यात्मानं नातिवर्तते । प्रोक्तरूपेण निरूप्यत्वात् पुरुषस्तथा शेषावस्थास्वपि तद्धर्मतामनिवृत्त्यैवेति । एवमेषा विनिद्रावस्थैव सर्वत्रापादिता । न ह्यसावितरात्मिका यथा सुप्ताद्यवस्था तुरीयावस्थैव, न तथा सा तदात्मिका । कस्मात् ? स्ववृत्तित्यागापत्तेः, यदि सा विनिद्रावस्था सुप्ताद्यवस्थापि स्यात्, तत[2]स्तया विशुद्धा स्ववृत्तिस्त्यक्ता स्यात् । नन्वस्ति स्ववृत्तित्यागोऽवस्थासङ्करस्वरूपनिर्णयाभावादिदोषात् । अतः सा तन्मात्रैव, तस्याश्च तन्मात्रत्वे तु पुरुषस्यापि तदवस्थामात्रत्वम् । अतो विनिद्रावस्थामात्रत्वं तद्वज्जाग्रदाद्यवस्थानात्मकत्वम् । तस्माज्जाग्रदाद्यवस्थानात्मकत्वाद्विनिद्रावस्थामात्रत्वात् सुप्तादिदृष्टमेवावस्थास्ववृत्तेरसर्वगतत्वमिति वाच्यपि च दोषः पुरुषकारवादस्य । अथ **विनिद्रे**त्यादि, मा भूत् पुरुषासर्वगतत्वदोष इति विनिद्रावस्थालक्षणोऽपि सन् पुरुषश्चासर्वत्वान्न विनिद्रावस्था[4]मात्र एव । किं तर्हि ? सुप्तादिवृत्तिरपीतीष्यते । ततोऽपि निद्रावस्थापि निद्रावस्थात्मिका सती सर्वत्वादेव न विनिद्रावस्थामात्रैव स्यात् । सुप्ताद्यवस्थापि स्यादित्यर्थः । हेतुर्विनिद्रावस्थालक्षणत्वात् पुरुषस्यात्मवत्, यथा पुरुषोऽपि निद्रावस्थालक्षणत्वात् सर्वगत इष्यते तथा विनिद्रावस्थात्मस्यैव सर्वगता स्यात् । विनिद्रावस्थालक्षणा हि सापीति । ततश्चेत्यादि । एवं च सत्य-

१ °तत्त्व घ । २ °ञ्ज° ग । ३ °वद्र° ग । ४ °स्त्व° ग । ५ त्व° ग । ६ °सा ग ।

न्योऽपि दोषः। अवस्थामवस्थां प्रति प्रत्यवस्थं, विनिद्रावस्थावृत्तिः[1] सुप्तसुषुप्तजाग्रदवस्थास्वपि, तस्या एव निद्रावस्थाया एवा[2]विशेषेण सर्वगतत्वात् सुषुप्तावस्थापि तृणादि सर्वगतं स्यात् । सर्वात्मकत्वाद्विनिद्रावस्थावत्, सर्वात्मकत्वं विनिद्रावस्थालक्षणत्वात् पुरुषवदित्युक्तम् । तस्मात् तृणाद्यपि सर्वगतमिति किं पुरुषैकत्वप्रकल्पनया? कः पुरुषवादविशेषाभिमानः? 'तृणमेवेदं सर्वं यद्भूतं यच्च भाव्यं०' 'यस्मात् परं नापरमस्ति किञ्चित्'इत्यादि । 'तेनेदं पूर्णं तृणेन सर्वम्'इति च कस्मान्न पठ्यते? इति ।

किं चान्यत्—**अलक्षणत्वात्** चेत्यादि, लक्षणं विशेष्यार्थान्तरादवच्छिद्य स्वरूपे[3]ऽवस्थापकं नीलोत्पलवत् । तत् पुनः स्वात्मन्यवस्थितत्वान्नास्ति लक्षणं प्रत्यवस्थं सर्वात्मसु वृत्तत्वात्, ततोऽतल्लक्षणत्वाद्वा विनिद्रावस्थाया अभावः स्यात् । स्वात्मन्यवस्थितत्वात् खपुष्पवत्, ततश्च तत्तत्त्वे तासां तत्त्वं चतसृणामवस्था[4]नामेव तत्तत्त्वं चतुरवस्थाभावस्ता एव च सर्वं, तदभावात् सर्वाभावः । सर्वाभावात् तदात्मकस्य सर्वात्मकस्य पुरुषस्याप्यभाव इति ।

अत आह—ततश्च तत्तत्त्वचतुरवस्थसर्वात्मकपुरुषाभावः । चैतन्यमेव हि पुरुषस्यावस्थानां च लक्षणं तदभावे पुरुषस्यावस्थानां चाभावे किमवशिष्यते? **अथ विनिद्रालक्षणेत्यादि** । अथ मतं भवतो विनिद्रावस्थापुरुषाभावदोषयोः परिहारे सर्वदोषपरिहारः । स चावधारणवैपरीत्येनेति ।

तद्यथा—पुरुषस्तु पुरुष एव विनिद्रावस्थालक्षणविपरीतोऽपि । किं कारणम्?, अवधारणभेदात् । कथमवधारणभेदः?, उच्यते—विनिद्रावस्थास्वात्मन्यवधार्यमाणविनिद्रावस्थैव लक्षणम्, नान्या काचिदवस्थि[5]तिः, स्वात्मनो लक्षणत्वमवस्थायाः । नियतं सा त्वन्यथावस्थात्म[6]नोऽपि लक्षणत्वान्न नियतेर्न विनिद्रावस्थायास्तावदभावोऽस्ति, पुरुषस्याप्यभावो नास्ति, पुरुषे तु लक्षणमेवेत्यवधारणात् । विनिद्रावस्था लक्षणमेव पुरुषस्य, नालक्षणमिति । पुरुषो ल[7]क्ष्यत्वेनानियतोऽन्याभिरप्यवस्थाभिर्लक्ष्यत्वादन्यासामप्यत्यागाल्लक्षणत्वेन पुरुषस्येति भेदेनावधारणं यस्मात् स ह्यनेकरूपो मेचकवत् पुरुषः । वर्णसङ्करो हि मेचकः, स नीलोऽपि, पीतोऽपि, शेषवर्णोऽपि । तथा पुरुषो विनिद्रावस्थालक्षणोऽपि सुप्ताद्यन्यतमावस्थालक्षणोऽपीति ।

अत्रोच्यते—**नोक्तवदित्यादि**, नैतदुपपन्नमुक्तवदवधारणभेदस्यान्याय्यत्वात् । उक्तेन तुल्यमुक्तवत् । तेनैव प्रागुक्तप्रकारेण, तेनैव न्यायेनावधारणभेदस्यावसर एव नास्ति । न्यायादनपेतं न्याय्यम्, न न्याय्यमन्याय्यम् । कुतः? प्रति[8]ज्ञाव्याघातात् । यद्यवधारणं भिन्नार्थविषयमाश्रीयते चैतन्यात्मकैकपुरुषमयमिदं सर्व-

१ °त्तेः ख । २ एषा ग । ३ °पे घ । ४ °नां सै° ग–घ । ५ °स्थितेः क–ख । ६ °तो ग । ७ लक्षणत्वे° क । °पलक्षणत्वे° ख । ८ °ज्ञात° क–ख ।

मिति प्रतिज्ञा हीयते । अथैकपुरुषमयत्वप्रतिज्ञा परिपाल्यते भिन्नार्थविषयाधारा-ऽवधारणोपपत्तिर्विशीर्यते । कथम् ? घटरूपादित्ववत् । यथा घट एव रूपादय इत्येतस्मिन् पक्षे न रूपादयो नाम केचित् सन्ति घटादर्थान्तरभूतास्तत्र रूपस्वात्मनो रूपावस्थैव लक्षणं न रसाद्यवस्थापि, घटात्मनस्तु रूपावस्थालक्षणमेवेतरासामत्यागादिति । कोऽर्थः स्यात् ? रूपाद्यभावात् । तथेहापि विनिद्रैकावस्थालक्षणपुरुषव्यतिरिक्तार्थाभावादितरासां सुप्ताद्यवस्थानामभावादेव कोऽवधारणार्थावकाशः ? इत्यवधारणाभावः प्रतिज्ञाव्याघातो वेत्येदुभयं प्रदर्शयति—पुरुषत्वं प्रागुक्तमवस्थानाम्, अधुना तु पृथक् स्वात्मनस्ता उच्यन्तेऽवस्था इति, प्रागुक्तवदवधारणभेदस्यान्याय्यत्वं प्रतिज्ञाव्याघातश्चेति । इति तत्त्वमिति । अस्माद्धेतोः प्रतिज्ञाव्याघातादवधारणभेदादन्याय्यत्वाच्चोभयथापीष्टविपरीतं तत्त्वमवस्थात्वम् । पुरुषस्यावस्था एव पुरुषो, न पुरुष एवावस्था इत्येतत् प्राप्तम्, रूपादिघटत्ववत् यथा रूपादय एव घट इत्येतस्मिन् पक्षे न घटो नाम कश्चिदित्ययमर्थः । तत्र रूपमेव न रस इत्याद्यवधारणमुपपद्यते भिन्नार्थविषयत्वात् तथा यद्यवस्था एव पुरुष इत्युच्येत युज्येतावधारणम् । पुरुषाभावेऽवस्थानामेव भिन्नानामितरावस्थानिवृत्त्यर्थमेकावस्थावधारणम् । तत्तु न युज्यते । चैतन्यात्मकैकपुरुषमयत्वप्रतिज्ञाव्याघातादिति ।

किं चान्यत्—यदा च तासामेव तत्त्वमित्यादि, यावल्लोकवदेव तत्त्वापत्तिरिति, यदा च तासां भावस्तत्त्वं भाव एव तास्ताभिरेव भूयते भेदेनावधार्यमाणत्वाद्विनिद्रावस्थैव विनिद्रावस्थास्वात्मेति लक्षणं, पुरुषे तु सा लक्षणमेव, न तु सैव लक्षणं पुरुषस्यान्यासामप्यवस्थानां तल्लक्षणत्वात्यागात् । तथा तथा तासामितरेतरात्मस्वभावः, 'अवधारणभेदात् तथा तथे'ति वचनादुत्तरोत्तरभेदानामपीतरेतरात्मसु नास्ति भावस्तद्यथा—रूपावस्थास्वात्मनि रूपावस्थैव लक्षणं, घटस्वात्मनि तु रूपावस्थालक्षणमेव, रसाद्यवस्थानामपि तल्लक्षणत्वात्यागात् । तथा पृथिवीलोष्टादीनामितरेतरात्मस्वभावात् लोष्टावस्थास्वात्मावधारणे लोष्टावस्थैव । लोष्टावस्था[स्वात्मपृथ्वी]स्वात्मावधारणे तु सा लक्षणमेव । ननु सैव च ज्ञानादीनामप्यत्यागादिति सर्वत्राऽस्त्वेवावधारणभेदस्ततोऽवधारणभेदात् त्वदुक्तादेव 'तथा तथेतरेतरात्मस्वभावादवधारणभेदात्' इत्यत्यन्तभिन्नार्थत्वमतो भिन्नाभिन्नार्थत्वात् सामान्याभावः । सामान्याभावात् विविक्तानेकभेदावस्थामात्रत्वात् सर्वमसर्वगतं घटो घट एव, रूपं रूपमेव, रसो रस एव, पटः पट एवेत्यादि प्राप्तम्, ततो ननु तदेव दर्शनमेतदप्यापन्नम् ।

यदुक्तम्—'यथा लोकग्राहमेव वस्तु शास्त्रेष्वनर्थको विवेकयत्नः' । इत्यादि । स्वपरविषयसामान्यविशेषनिराकरणेन लौकिकमेव । यथा द्रव्यक्षेत्रकालभाव-

---

१ प° क-ख । २ °नः सु° क-ख । ३ °णत्वा° क-ख । ४ °ण° क-ख । ५ °स्वाव° क । °वस्थाव° ग । ६ °दप्यपेतम् ।

भवनमेव च वस्त्विति तदेव तत्त्वमिति लोकवदेव तत्त्वापत्तिरिति। अथाविकल्प-शब्दार्थत्वाल्लक्षण एव तत्त्वज्ञानतत्त्वत्वात्। तस्य निर्विकल्पस्याविभागस्यासंसर्गभेद-परिणामशून्यस्य मेघस्तनितादिकल्पशब्दगोचरातीतस्य मयूरविरुतवत् सङ्केताद् व्यवहारानुपातिभिर्वा शब्दैरनुपलक्ष्यस्य गोर्विषाणादिवत् स्वांशकल्पनामात्रभिन्न-शब्दार्थाभिमानविकल्पस्य। ननु लौकिकवदज्ञातसामान्यविशेषव्यवस्थाविचार-रूपस्य तत्त्वस्य कुतो वा लक्षणं कुतोऽवस्थाः? इत्येतच्चायुक्तम्, चतुरवस्थावर्ण-नाद् यदि ताश्चतस्रोऽप्यवस्था असत्या एव तद्वर्णनं खपुष्पसौरभवर्णनवत् कथमुपपद्यते? इति।

किं चान्यत्—सर्वगतत्वभावनाभावप्रसङ्गात्। तद्दर्शयन्नाह—अनेकात्मकसर्व-गतत्वभावकं वा कथमिति वर्तते। सर्वं गतं सर्वगतं 'सृ गतौ' सर्वमित्ययमेव सर्वशब्दो गमनार्थदेशान्तरप्राप्तिलक्षणां क्रियां भिन्नविकल्पार्थविषयामाह। यद्यन्यच्चान्यच्च तदशेषं सर्वमिति। ततश्च तत्तदशेषं गतं सर्वगतं तद्भावः सर्वगत-त्वम्, अर्थानेकात्मकत्वाविनाभावि अनेकात्मकं हि सर्वं भिन्नानेकविकल्पकृ-त्स्नार्थगतं सर्वगतमित्येषा भावना निर्विकल्पैकात्मकत्वे न युज्यत इति।

किं चान्यत्—निर्विकल्पत्वाभावप्रसङ्गात्। यद्यस्यैकैकेत्यादि, यावन्मेच-कात्मके भवतः। यद्यस्य पुरुषस्य एकैका पृथक् पृथक्, एकामेकां प्रति प्रत्येकं समाप्ता सुप्ताद्यवस्था न भवति। ततश्चैकैकस्या अभावात् ता न सन्त्येवेति कृत्वा तासामसत्त्वात् कुतोऽस्य पुरुषतत्त्वस्य तासामेव भिन्नानामेकत्वापत्त्यात्मिका? तत्पु-रुषत्वमेकमविकल्पमित्यविकल्पता स्याद्भिन्नविकल्पैकापत्त्यात्मिकत्वादविकल्प-रूपतायाः, सा चाविकल्परूपता कुतः? नास्त्येवेत्यर्थः। को दृष्टान्तः? पृथक् पृथगवृत्तसितासितादिवर्णैक्यापत्त्यात्मकमेचकवर्णाभाववत्। पृथक् सिद्धवर्णा-भावे मेचकवर्णाभावात् तद्दर्शयति। न[3] हि पृथगवृत्ते रूपे द्वे अपि सितासिते स्वेन रूपेण मेचके भवतः। भेदात्मलाभाविनाभाव्यैकापत्त्यभावात्, एवमवस्था अपि पृथक्स्वरूपेणासिद्धा निर्विकल्पैकरूपा न भवितुमर्हन्तीति। एवं तावद-वस्थानामभावे चतुरवस्थावर्णनानेकात्मकसर्वगतत्वभावननिर्विकल्परूपत्वाभाव-दोषाः। किं वा पार्श्वशरक्षेपेण भयजननानुवृत्त्या तमेव पुरुषं निराकुर्महे। तद्यथा—सन्नेव त्वसावेवमवस्थानामसत्त्वे, कुतः? अनवस्थात्वादवस्थातोऽन्यत्वादनवस्थात्म-कत्वादवस्थात्वाभावात् पुरुषो वन्ध्यापुत्रवत्।

स्यान्मतम्—अरूपाद्यवस्थानात्मकस्य घटस्यावस्थावतोऽस्तित्ववत् सुप्ताद्यवस्था-नात्मकस्य सुप्तादिचतुरवस्थावतः पुरुषस्यास्तित्वमित्येतच्चायुक्तम्। अनवस्थात्वे

१ गौर्विषाणी ककुद्मान् प्रान्ते वालधिः सास्नावान् इति गोत्वे दृष्टं लिङ्गम्। (वैशे० ३।२।८)

२ तु घ। ३ तर्हि ग। ङ। ४ °न्ध्यो° घ।

सत्यचतुरात्मकत्वात्। अवस्थाचतुष्टयाभावादेवानवस्थाऽऽत्मनस्तच्चातुरात्म्याऽभावः सिद्धस्तस्मादनेकान्तिकाशङ्कानिवृत्त्यर्थमाह—**अनवस्थात्वेऽचतुरात्मकत्वादिति**, खपुष्पवदिति दृष्टान्तो गतार्थः। अथवा किमनेन प्रयासेन? उपपत्त्यन्तरैस्तदसत्त्वप्रतिपादनेन। ननु त्वदुक्तेरेव च न स लक्ष्यस्तत्परिकल्पितः पुरुषो नासौ लक्ष्यः। अलक्षणत्वादलक्ष्यत्वमिष्टत्वादसाध्यमिति चेल्लक्ष्यत्वनिराकृतेरर्थनिराकरणार्थत्वान्नार्थ इति ब्रूमः। अर्थोऽप्यर्थत इत्वरलक्षणत्वाच्छब्दाभिधेयो ज्ञानज्ञेयो वा विनिद्रावस्थाऽविनिद्रावस्था वा स्यान्न स पुरुषस्तल्लक्षणस्तदुभयाभावात् निर्विकल्पत्वादेवार्थोऽपि नैवेति चेत्, निर्विकल्पज्ञानवत् वस्तुत्वमपि न भवतीत्येतत्प्रतिपादनार्थत्वादिदमेव गृहाण अवस्त्वेव[1] च तत्त्वदिष्टं तत्त्वमलक्षणत्वात्। खपुष्पवत्। **अथात इत्यादि, यावदस्यावाच्यतैवेति।**

अथाचक्षीथाः—अत इति पुरुष इतश्चेत्यवस्थातः अन्यतरस्य पुरुषस्यावस्थानां वा परित्यागैकान्तो न युक्तः। अवस्थात्यागे लक्षणाभावात् पुरुषाभावप्रसङ्गात्। अवस्थावतः पुरुषस्य वा त्यागेऽवस्थानामभावप्रसङ्गात्। न चैकतरस्योपादानं युक्तमुपादीयमानस्येतराभावेऽभावप्रसङ्गादेवावस्थावद्वर्णननिर्विकल्पत्वसर्वगतत्वाभावप्रसङ्गात् प्रतिज्ञाव्याघाताच्च। तस्मादन्यतरोपादानपरित्यागायुक्तत्वादस्य पुरुषस्यावस्थालक्षत्वमवस्थाऽसत्त्वं वा न शक्यं वक्तुम्। किं तर्हि? तल्लक्षणतत्त्वाभ्यामवाच्यः स पुरुष इत्येतच्चायुक्तम्। यस्मात् तत्त्वात्[2] स नैव स्यात्। एतस्यामपि कल्पनायां स पुरुषोऽसन्नेव। कस्मात्? विनिद्रावस्थया सहैकत्वान्यत्वे प्रत्यवचनीयत्वात् खपुष्पवत्। विनिद्रालक्षणः पुरुषो न विनिद्रालक्षणो वेत्येते द्वेऽन्यत्वाऽनन्यत्वे प्रतिवचनीये, अर्थादसन् पुरुषः न तदेकं नान्यद्वा वाच्यं खपुष्पं विनिद्रावस्थया सह। किं कारणम्? एकमिति, **यावदवाच्यमसत्त्वादन्यदित्यप्यवाच्यमविनिद्रावस्थया सह।** किं कारणम्? एकमिति, तावदवाच्यमसत्त्वादन्यदित्यप्यवाच्यम्। अविनिद्रावस्थात्वे सत्यप्यसत्त्वे निरुपाख्यत्वात् वाग्बुद्धिगोचरातिक्रान्तत्वादिति, खपुष्पे दृष्टान्ते हेतोः साध्येनाविनाभावित्वप्रदर्शनम्, यत्तु सत् तद्विनिद्रावस्थयेत्यादि वैधर्म्यदृष्टान्तः, साध्याभावे हेत्वभावार्थ[3]प्रदर्शनम्। मा मंस्था असदिष्टसमुदयावस्थास्वात्मनि सत्यवचनीयता[4]या दर्शनादनेकान्तिकतेति विनिद्रावस्थास्वात्मानं जाग्रदाद्यवस्थास्वात्मनश्च निदर्शयत्यन्यानन्यत्वे प्रतिवचनीयत्वात्। यथा विनिद्रावस्थास्वात्मनो विनिद्रावस्थातोऽनन्या जाग्रदवस्थादिस्वात्मभ्योऽन्या तथा ता अपि तस्या अन्याः स्वात्मभ्योऽनन्याः सत्यश्च, न तथा पुरुषस्तस्मादसन्निति।

---

१ अवस्थात्वे ग। २ तत्त्वात्मनैव घ। °सन्ने° ङ। ३ °वोऽयं ग। ४ °ता यावदने° ग।

किं चान्यत्—अत एव त्वदभिहितात् कारणादस्य[1] न त्यागोपादानयुक्तत्वादपि च.न[2] तूभययुक्तत्ववाच्यत्वाभ्युपगम एव पितृप्रपुत्रवत् । यथैकः पिता पुत्रश्चावश्यमसौ स्वपितुः पुत्रत्वमन्तरेण स्वपुत्रं प्रति पितृत्वमनुभवतीति न पुत्रत्वं त्यजति । नापि पुत्रत्वमेवोपादत्ते । नापि पितृत्वमेव ततोऽसौ पिता च पुत्रश्चेति वक्तव्यः । तद्वयधर्मयुक्तश्च दृष्टस्तथा स पुरुषो विनिद्रालक्षणालक्षणान्यतरत्यागोपादानायुक्तत्वादेव तल्लक्षणातल्लक्षणधर्मद्वययुक्तस्तद्धर्मद्वयवाच्यश्चावश्यं भवितुमर्हति, तदन्यतरत्यागोपादानायुक्तत्वस्य तदविनाभावादेव तावत् पुरुष एवा[3]वस्था इत्येतदयुक्तम्, अवस्थानामभावेऽनेकदोषप्रसङ्गात् ।

अभ्युपेत्यापि पुरुषस्यात्मत्वमवस्थानां चतसृणां पुरुषासत्त्वदोषं ब्रूमः—**यद्यपि चेत्यादि**, यद्यपि च पुरुषस्यात्मैव चतस्रोऽप्यवस्थास्तथापि न तर्हि नामेदानीं पुरुषोऽस्ति **अनवस्थत्वात्** । नास्यावस्थाः सन्तीत्यनवस्थस्तद्भावोऽनवस्थत्वम्, तस्मादनवस्थत्वादवस्थास्वरूपव्यतिरिक्तत्वात् तच्छून्यत्वात्, खपुष्पवत् । अथवा नाऽवस्थाऽनवस्था पुरुषो अ[4]नवस्था न भवति । योऽवस्था न भवति स नास्ति यथा खपुष्पम्, अवस्थाश्च त्वयाऽभ्युपगताश्चतुरवस्थावर्णनानेकात्मकसर्वगतत्वभावनैकैकावस्थाभेदाभेदापत्त्यात्मकाविकल्परूपाभ्युपगमात् । ततोऽन्यस्य खपुष्पस्थानीयत्वात् । प्रागवस्थानामेव सत्त्वमभ्युपगम्याऽनवस्थात्वेऽचतुरात्मकत्वादित्युक्तम्, अधुना तु पुरुषमेवाभ्युपगम्यानवस्थात्मकं परं परिकल्पितमेष दोष उक्त इति व्याख्ययोर्भेद इति । असन् पुरुषोऽनवस्थात्वात् खपुष्पवत्, अनवस्थस्य तस्याभ्युपगमेऽपि तु पुरुषस्यावस्थानां चतसृणामप्यैक्यं स्यात् । कुतः ? **पुरुषस्यात्मत्वात्** । त्वया ह्युक्तम् 'पुरुषस्यात्मैवावस्था नान्या' इत्यतस्तासामैक्यम् । तत्स्वात्मत्वात् पुरुषवत् । यथा हि पुरुषः स्वात्मत्वात् पुरुष एक एव तथा ता अप्यवस्थास्तत्स्वात्मत्वादेकमिति चतुष्काभावाच्चतस्रोऽवस्था इति बहुवचनानुपपत्तिस्ततश्चैकत्वात् सर्वत्वेन सर्वत्र[5] सम्भाव्यो न भवति पुरुषः । 'सृ गतौ' इति सर्वत्वस्यानेकाश्रयत्वात् पुरुष एव सर्वमिति । यदाश्रयादुच्यते तत्सर्वं किमाश्रयं यदुक्त्वा सर्वपुरुषस्य सर्वव्यापिता वर्ण्यते ? । तत आह—**सर्वत्र सम्भाव्याभावात्** । **सर्वाव्यापिता पुरुषस्य** प्राप्ता व्याचिख्यासितसर्वव्यापित्वविरोधिनी, ततः[6] पुनरेकत्वं विनिद्रावस्थास्वात्मत्वात् तासां, पुरुषस्वात्मत्वात् परस्परात्मकत्वं च सिद्धम् । तदिदानीं भाव्यते—

विनिद्रावस्थैव हि जाग्रदवस्था विनिद्रावस्थास्वात्मत्वात् विनिद्रावस्थावत् । यथा विनिद्रावस्था विनिद्रावस्थास्वात्मत्वात् विनिद्रावस्थैव, तथा जाग्रदवस्थापि

१ °दवस्था° ग । २ तत्त्वमय° ग । ३ °ता° घ । ४ °ऽनव° घ । ५ °त्रा° घ । ६ °त्° ग ।

विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थैवेतीत्थं विनिद्रावस्थया सहैक्यं जाग्रदवस्थायाः। विनिद्रावस्थास्वात्मत्वं च सर्वावस्थानां पुरुषस्वात्मत्वात् त्वयैवाभ्युपगतम्। एवमितरेऽपीति विनिद्रावस्थैव सुप्तावस्था विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थावत्, विनिद्रावस्थैव सुषुप्तावस्था विनिद्रावस्थास्वात्मत्वात् विनिद्रावस्थावत्, तथा जाग्रदवस्थैव विनिद्रावस्था जाग्रदवस्थास्वात्मत्वात् जाग्रदवस्थावत्। अस्यापि पूर्ववद्व्याख्या। एवं जाग्रदवस्थया सहैक्यं विनिद्रावस्थायां[1] व्याख्येयम्। एवमितरेऽपीत्यतिदेशः। जाग्रदवस्थैव सुप्तावस्था जाग्रदवस्थास्वात्मत्वात् जाग्रदवस्थावत्। जाग्रदवस्थैव सुषुप्तावस्था जाग्रदवस्थास्वात्मत्वात् जाग्रदवस्थावत्, तथा सुप्तावस्थैव विनिद्रावस्था सुप्तावस्थास्वात्मत्वात् सुप्तावस्थावत्। एवमितरेऽपीत्यतिदेशः। सुषुप्तावस्थैव जाग्रत्सुप्तावस्थे सुषुप्तावस्थास्वात्मत्वात् सुषुप्तावस्थावत्, एवमेवमवस्थानां प्रत्येकं विशेष्य परस्परत ऐक्यं भावितम्। सामान्येनापि सर्वोपसंहारेणोच्यते—**यैवान्यावस्था सैवान्यापि एकस्वात्मत्वात् सैवेति**। अथवाऽवस्थानामपि प्रत्येकभेदेषु परस्परात्मत्वापादनेन मनुष्यतिर्यगमरादिषु घटपटतृणादिषु चैक्यमुन्नेयमिरात्मकमितरदितरात्मत्वात्[2] तत्स्वात्मवदिति। **इति पुरुष एवेत्यादि, यावद्भेदाभाववदिति**। इति—अस्मात् कारणादेकत्वात् यत् प्रोक्तम् 'सर्वत्र सम्भाव्याभावात् सर्वाव्यापिता पुरुषस्ये'ति तदुपनयति 'पुरुष एवेदं सर्वं' (श्वेता० ३।१५) इत्यतिदेशाभावो भेदाभावादिति। अतिदेशोऽतिसर्जनं पुरुषात्मकत्वव्याख्या तद्भावनेत्यर्थः। पुरुषेण वास्याप्रत्यक्षेणेदंशब्दवाच्यस्य प्रत्यक्षस्यातिदेशः। अनेन वा तस्याऽप्रत्यक्षस्यातिदेशः। सर्वमेव तन्मयमिति।

किं चान्यत्—**उपवर्णनेत्यादि, यावद्व्यवस्थाभाव एवेति**। उप सामीप्ये। सामीप्येन वर्णनमुपवर्णनम्, विशेषधर्मेण न सामान्यधर्मेण। सामान्यधर्मस्य दूरत्वाद् यथा पुरुषोऽयं समुत्थायोपविष्टत्वात् पाण्यादिसञ्चलनाच्छिरःकण्डूयनादिति। **नार्थत्वादिति**। उपवर्णनेन भिन्नानि रूपाण्यासां विनिद्राजाग्रत्सुप्तसुषुप्तत्वादिविशेषवर्णनेन तैश्चतूरूपैर्भिन्नैर्व्यतिकरः सङ्करश्च तासां प्राप्ता[3]वितथमुक्तैकत्वात्। व्यतिकरो विनिद्रावस्थास्वात्मत्वं जाग्रदवस्थास्वात्मनः, जाग्रदवस्थास्वात्मत्वं विनिद्रावस्थास्वात्मनः। एवमितरयोरवस्थयोरपीतरेतरस्वात्मत्वप्राप्तिरेतयोश्च तत्स्वात्मप्राप्तिस्तयोरेतत्स्वात्मप्राप्तिः। स्वतश्च दानशीलतपोविशेषैर्नरकावाप्तिर्हिंसादिभिः स्वर्गावाप्तिः। स्वर्गे दुःखानुभवनं नरके सुखानुभवनं, पुरुषतत्त्वज्ञानान्मुक्तिरिति। सङ्करस्तु क्षीरोदकसंयोगवदविवेचनीयविनिद्रावस्थास्वात्मत्वमित्येतौ व्यतिकरसङ्करौ प्राप्तौ, ताभ्यां च व्यतिकर-

---

१ सहैक्यं विनिद्रावस्थया गेऽधिकः पाठः। २ °तदेतरा° ग। ३ °प्तमि° ग।

सङ्कराभ्यां हेतुभ्यामतथात्वं विनिद्रावस्थाया अविनिद्रावस्थात्वम्, एवं शेषाणामप्ययथास्वस्वरूपत्वमासामवस्थानां तत्स्वात्मत्वात् पुरुषस्वात्मत्वात् । पुरुषस्वात्माभिन्नविनिद्राद्यवस्थास्वात्मत्वादिति यावत् । तदेवैकत्वम् । कारणमाह—तत्तत्स्वात्मत्वात् तत्स्वात्मवदिति । तासामतथात्वमित्थमुक्तम् । अस्य वेति पुरुषस्याप्यतथात्वमेवापुरुषत्वमेव तत्स्वात्मत्वात् स्वात्मद्रव्यवदिति । एतमर्थमुपसंहरति—

**इति पुरुषावस्थाव्यवस्था ।** इत्थं पुरुषस्यावस्थानां च व्यवस्था विशेष्यासाधारणेन लक्षणेन चाहृत्य व्याख्याता व्यवस्था तस्या अभावः स्वरूपसिद्धेरभावात् । मा भूदेष दोषः पुरुषस्यावस्थानां च व्यवस्थाया अभाव इति । यदि पूर्वोक्तवद्व्यवस्थां पृथक्पृथक् मन्यसे । पुरुषस्यापि सर्वावस्थाव्यापिनोऽवस्थानां च चैतन्यसमवस्थानाविर्भावतिरोभावोत्कर्षापकर्षभेदभिन्नानां प्राग्व्याख्यातसृष्टिवत् । ततश्चोक्तवद्वा व्यवस्थानुपपत्तौ सत्यां पुरुषातिदेशस्त्याज्यः । 'पुरुष एवेदं सर्वं' ( श्वे० ३।१५ )मित्येकपुरुषमयत्वातिसर्गस्त्यक्तव्यो जायते । पृथक् पृथक् पुरुषस्यावस्थानां च स्वरूपव्यवस्थाभ्युपगमे पुरुषैककारणमयत्वविरोधादिति । एष दोषो मा भूदिति तदत्यागो[1]ऽमर्थमयमतिदेशोऽतिसर्गः प्राग् व्याख्यातः । 'पुरुष एवेदं सर्वं' (श्वेता० ३।१५) मिति । किमर्थमसावतिदेशः ? इति चेत् । **अद्वैतैकान्तार्थः ।** अद्वैतमेकपुरुषमयमित्येतत्प्रतिपादनार्थः तस्यैवासिद्धिः अद्वैतैकान्तस्य । किं कारणम् ? यस्मादेकपुरुषाभ्युपगमोऽयमेकपुरुषासिद्धिमेव ते करोति । तत्कथम् ? इति चेत् । योऽसावेक एव त्वया पुरुषः सम्भाव्यते तस्याप्यनेकतैवमापाद्यते । **एवमिति** त्वदभिहितेनैव पुरुषस्वात्मातिदेशाद्वैतेन । का पुनर्भावना ? । उच्यते—**यत्स्वरूपेत्यादि, यावदवस्थावदिति ।** यस्य स्वरूपं यत्स्वरूपम्, यस्य स्वरूपं पुरुषस्य । किंस्वरूपम् ? 'नित्यसर्वगतसर्वात्मकत्वकारणत्वा'दिति । तदव्यतिरिक्तं लक्षणमासां ता अवस्थास्तदव्यतिरिक्तलक्षणास्तत्स्वरूपपुरुषाव्यतिरिक्तलक्षणास्त्वया विना भेदेनोच्यन्ते । तस्मात् पुरुषादभिन्ना एवोच्यन्ते इत्यर्थः ।

तद्यथा–पुरुष एवावस्था नावस्था एव पुरुष इत्यवधारणभेदादेव भेदोपदर्शनेन च भेदोऽभ्युपगम्यते । तत एव भेदाभेदौ नानात्वं तासां च त्वद्वचनादेव सिद्ध्यति । यथोर्ध्वग्रीवादिलक्षणो घटः, घट एवोर्ध्वग्रीवादयः । न पटो न पटचातुरश्र्यादय इति तस्य तासु तासां च तस्मिन्नवधारणानवधारणाभ्यां भेद एव सिद्ध्यति । न त्वभेदेऽवधारणभेदोऽस्ति यथा पटस्वात्मैव घटो, न घट एव घटस्वात्मेति । तस्मादवस्थानां विनिद्रादीना[2]मवस्थावतश्च पुरुषस्य भेदस्त्वद्वचनादेवेति ।

---

१ °गोऽयम° ग ।　२ तस्यातस्यौ क–घ ।

**किं च—स पुरुषोऽपीत्यादि** । एवं च सत्येकपुरुषमयत्वातिदेशात्यागे सोऽपि पुरुषः पुरुषान्तरेणाभिव्याप्तः पुरुषस्वात्मत्वादवस्थावदिति प्राप्तः । यथा विनिद्राद्यवस्थाः पुरुषस्वात्मैव नावस्थान्तरात्मिका इति कृत्वा पुरुषेणाभिव्याप्ताः तथा पुरुषोऽपि पुरुषस्वात्मत्वात् तदविनाभावाभावात् पुरुषान्तरेणाभिव्याप्तः स्यात् तथा तदपि पुरुषान्तरं पुरुषस्वात्मत्वात् तद्वदेवेति पुरुषानेकत्वं स्यात् तस्यापि तथैवेत्यनवस्था च । ततश्च पुरुषेणाभिव्याप्तत्वादनवस्थितैकत्वप्रतिष्ठः पुरुषः इति प्राप्तम्, अनवस्थिता एकत्वेन एकत्वे वा प्रतिष्ठाऽस्य सोऽयमनवस्थितैकत्वप्रतिष्ठः पुरुषः स्यात् । पुरुषस्वात्मत्वादवस्थावत् । यथावस्थाः पुरुषस्वात्मत्वादनवस्थितैकत्वप्रतिष्ठास्तथा पुरुषोऽपि स्यादिति । तथानवस्थिततत्त्वप्रतिष्ठः तस्य भावस्तत्त्वमात्मस्वरूपमवस्थिता तत्त्वेन तत्त्वे वा प्रतिष्ठास्य सोऽयमनवस्थिततत्त्वप्रतिष्ठः । न स्वरूपे प्रतिष्ठितः स्यात् पुरुषः पुरुषस्वात्मत्वादवस्थावत् । यथावस्थाः पुरुषस्वात्मनोऽनवस्थितात्मस्वरूपव्यवस्थाप्रतिष्ठाः पुरुषस्वरूपव्यवस्था एवैष्यन्ते । तत्रैव तासां प्रतिष्ठा न स्वात्मसु, तथा पुरुषोऽपि स्यात् । पुरुषान्तरातिदेश्यश्च पुरुषः स्यात् पुरुषस्वात्मत्वादवस्थावत् । यथेमाः सुप्ताद्यवस्थाः पुरुषस्वात्मत्वात् 'पुरुष एवेदं सर्व'मित्यतिदिश्यन्ते तथा पुरुषः पुरुषस्वात्मत्वात् पुरुषान्तरमेवायमित्यतिदेश्यः स्यात् ।

स्यान्मतम्—एतद्दोषभयादिदंशब्दवाच्यप्रत्यक्षाऽर्थादन्यं पुरुषमभ्युपगम्यैता एवावस्थाः पुरुष इति प्रत्यक्षार्थेदंविषयतया 'पुरुष एवेदं सर्व' ( श्वे० ३।१५ )मतिदेश्यस्तस्मादतिदेश्यात् । यथायं देवदत्त एवेत्ययंशब्दवाच्यो हि देवदत्तः प्रत्यक्षत्वाप्रत्यक्षत्वयोः स एव । तथा 'पुरुष एवेदं' ( श्वे० ३।१५ ) इत्येतच्चायुक्तम् । यस्मादस्यां प्रत्यक्षार्थेदंविषयतायां सत्यामचेतनव्यक्तमूर्तानित्यादिरूपार्थपुरुषपरमार्थता प्राप्नोति । आदिग्रहणादसर्वात्मककार्यानेकत्वादिरूपार्थपुरुषपरमार्थतापि । न चेतनाव्यक्तामूर्तनित्यसर्वात्मकसर्वगतकारणैकरूपार्थपुरुषपरमार्थतापि स्यात् । इति प्रसङ्गतोऽयं दोष आपादितः । एवं तावदन्यानेकत्वः पुरुष इति पुरुषस्वात्मापरित्यागेनावस्थाभेदं तद्द्वारेणोक्त्वोक्तः ॥

इदानीमवस्थान्यत्वद्वारेणैव पुरुषानेकत्वं त्वदुक्तवद्ब्रूमः—अवस्थास्त्वन्यत्वानेकत्व एव पुरुषः इत्येतत् प्रत्यभेदोपन्यासवाक्यं तद्वचनसारणेन विचारार्थोपन्यास इत्यर्थः । अवस्थास्तु पुरुषोऽन्यत्वानेकत्वे सत्येव यतोऽवस्थास्वात्मत्वं पुरुषस्येष्यते, ततस्त्वासामन्यत्वेनानेकः । अन्योऽनेकश्चेति वा । तत् कथमिति चेत्? त्वदुक्तेरेवावश्यमन्यास्ताः पुरुषादस्माद् विनिद्राद्यवस्थास्ताभ्यश्च सोऽन्य इति परस्परावधिकमन्यत्वं साध्यते । तद्रूपापत्त्यनिष्टत्वादिति हेतुः । तयोश्चावस्थाऽवस्थाव-

१ आ० घ । २ मिति दृश्यस्पृश्याद्यतिदिश्यात् ग-घ ।

तोस्तद्रूपापत्त्यनिष्टत्वं सिद्धम् । अन्यथावस्थानां विशेषितानामन्यत्वे साध्ये पुरुषपृथक्त्वेन तदसिद्धेराश्रयासिद्धिस्तद्रूपापत्त्यनिष्टत्वं वा सिद्धमाशङ्केत[1] । अथवा पुरुषोऽवस्था इति चाविशेष्य पराभिमतवस्तूभयमपि परस्परतोऽन्यदिति सामान्येन साध्यते । इतरस्येतररूपापत्त्या अनिष्टत्वादित्यर्थः । अवधारणभेदाच्चेतररूपापत्त्यनिष्टत्वमापादितम् । किमिव ? अवस्थान्तरवत् । यथा विनिद्रावस्था सुप्तावस्थारूपापत्त्या नेष्टा तथा स्वतोऽन्यतश्चेति तद्रूपापत्त्यनिष्टत्वासिद्धिरिति मा मंस्था इति ।

अत आह–यतोऽन्यतोऽवस्थास्वात्मत्वमस्य[2] नेष्यते पुरुषस्य । एतदवस्थारूपापत्त्या पुरुषानिष्टत्वादवस्थाद्वारेण पुरुषस्य अवस्थानां[3] चान्यत्वानेकत्वं त्वदुक्तौ चैवमुपपादितं पुरुषातिदेशात् । पुनरित्यादि 'पुरुष एवेदं सर्वं'(श्वे० ३।१५)मिति पुरुषत्वेनावस्थानामतिदेशेऽन्यत्वं न सम्भवत्येव । कथम् ? **स्वपरविषयकृतभेदद्वारान्यत्वासम्भवात्** । स्वविषयकृतो घटस्य रूपादीनां प्रधानस्य सत्त्वादीनां चैकवस्तुगतानामेव धर्माणां भेदः, परविषयकृतस्तु तयोरेव वस्त्वन्तरात् पटादेः पुरुषाच्च भेदस्तदुभयभेदद्वारमन्यत्वं सम्भाव्येत । तत् त्वनभ्युपगमान्यत्वद्वारद्वयं भेदद्वयासम्भवात् । ततोऽन्यत्वानुपपत्तिः कस्यचिदिति वस्तुनः, कथञ्चिदिति रूपादिसत्त्वादिप्रकारेण तद्द्वारानभ्युपगमादेव । ततः पुरुषादन्यस्यानुपपत्तौ सत्यां ता अपि चतस्रोऽवस्थान्यथापत्तिवत् पृथक् पृथक् पुरुषः, चत्वारः सप्रभेदाः स्युः पुरुषाः । इदमपि त्वदुक्तिवदेव । तत् कथम् ? इति, तदुच्यते । यथा केनचिदुपपत्तिप्रकारेणासम्भाव्यमप्यन्यत्वमुच्यते तथा ता अप्यवस्थाः सम्भावनापादितान्यत्वाः पृथक् पृथक् स्युः, ततश्च ताः पुरुषस्यात्मत्वात् परस्परतोऽन्यत्वाच्च पुरुषाः पृथक् पृथक् विनिद्रावस्था प्रत्येकं पुरुषः । एवं शेषा अपि प्रत्येकं पुरुषाः । केन पुनरुपपत्तिप्रकारेणान्यत्वम् ? अवधारणभेदादेव । एवं पुरुषातिदेशात् पुरुषबहुत्वं विनिद्राद्यवस्थानां पुरुषस्यात्मत्वादिति । अथेत्यादि, अथ पुरुषलक्षणापि विनिद्रावस्था न पुरुषः । यदि प्रत्येकं पुरुषत्वं तद्बहुत्वं च दोषौ दृष्ट्वा पुरुषलक्षणापि विनिद्रावस्था पुरुषो नेष्यते ततः पुरुषोऽपि नहि[4] पुरुषोऽस्तु पुरुषलक्षणत्वाद्विनिद्रावस्थावदेवं शेषा अपीति, यथा विनिद्रावस्था पृथक् पुरुष इत्यापाद्य तत्परिहारार्थं पुरुषलक्षणत्वे सत्यपुरुषत्वमाशङ्क्य पुरुषस्यापुरुषत्वं तद्वदित्यापादितं, तथा प्रत्येकं सुप्ताद्यवस्था अपि पुरुष इत्यापाद्य तत्परिहारार्थं पुरुषलक्षणत्वे सत्यपुरुषत्वमाशङ्क्य सुप्ताद्यवस्थानां तद्वत् पुरुषस्यापि पुरुषात्मनोऽपुरुषत्वमित्यापादनीयम् । इति पुरुषाभाव एव । इत्थं पुरुषस्याभाव एव प्रसक्तः । कुतोऽस्य सर्वगतता ? विद्यमानस्य हि सर्वत्वमसर्वत्वं, सर्वगतत्वमसर्व-

---

१ °कृतः क-ख । २ यतोऽवस्था° क-ख । ३ °स्थाभावान्य° क-ख । ४ न तर्हि क-ख ।

गतत्वं चेति विचार्यं स्यात् । अथवा त्वदभिप्रेत[1]मेवैतदभावप्रतिपादनम्, नास्मदभिप्राय एवमित्येतेन विधिना । कुतः ? तदात्मत्वाभिमतनिरसनात् यो [2]यदात्मत्वेनाभिमतोऽर्थस्तं निरस्य त्वादानमेवार्थं निरस्यन् दृष्टो यथो[3]ष्णो न भवत्यग्निरिति । ध्रुवमौष्ण्येनाविनाभाविनमौष्ण्यात्मानमग्निमेव निरस्येत् । तथेहापि विनिद्राद्यवस्थालक्षणं पुरुषमुक्त्वा पुरुषश्चात्मैव ताः, पुरुषान्न भिन्नाः सन्तीति ता निराकुर्वंस्तदात्मानं पुरुषमेव त्वं निराकरोषीति[4] त्वदभिप्राय एवायं पुरुषाभावः । एवं तावत् प्रवृत्त्योपलक्षितस्त्वदीयोऽभिप्रायो व्याख्यातः । नाभिप्रायमात्रादेवाभावः । किं तर्हि ? स्फुटमेव त्वयोक्तं नास्ति पुरुष इति ।

तद्यथा—यस्तु यत्नेनेत्यादि सामान्येनायं न्यायोऽवतार्यते । भावना त्वस्य विशेष्य वक्तव्या । यथावस्थालक्षणः पुरुषः पुरुषलक्षणावस्था इति वातिदिश्यमानानां परस्परमेकत्वमन्यत्वमवक्तव्यत्वमसर्वत्वं चेति विकल्पाः स्युः । सविकल्पत्वेन पुनरेते सन्ति कल्पनाविषयत्वाद्विकल्पातीतनिर्विकल्पपरमार्थत्वाच्च लक्षणत्वं त्वयोक्तं प्रागतो न तूक्तवत् त्वयैव स्फुटीकृतमसत्त्वं प्रतिपादयितुमिष्टं त्वद्वचनेनैव सर्वस्यापि न केवलं पुरुषस्यैव । अवस्थानामवस्थावतः पुरुषस्य चेति वयमपि ब्रूमः । न केवलं त्वद्वचनादेवासत्त्वं पुरुषस्य त्वद्वचनसमर्थनया[5] वयमप्यसदेव सर्वं त्वदिष्टमिति ब्रूमः । कुतः ? त्वन्मते सर्वस्याभावात् । भवनं हि द्विविधं मया वक्ष्यमाणमितरेतरापेक्षद्वैतवृत्तिसन्निधिभवनमापत्तिभवनं च । सन्निधिभवनमापत्तिभवनाभावे न भवितुमर्हति । तिष्ठतु सन्निधिभवनमिदमपि । कुतोऽस्यापत्तिभवनं पुरुषस्य ? कथं नास्ति ? भेदत्वेनाभूतत्वात् परिणामित्वेनाभूतत्वाद् वन्ध्यापुत्रवत् । यथा वन्ध्यापुत्रो भेदत्वेनापरिणामित्वेन वा अभूतत्वान्नास्ति, तथा त्वदिष्टं सर्वमापत्तिं नानुभवतीत्यसत् । किमर्थमित्थं विशेष्यते ? भेदेन परिणामित्वेन वाऽभूतत्वादिति । न पुनरभेदत्वादपरिणामित्वादित्युच्यते ? उच्यते—भेदो न भवत्यभेदादन्यो वा स्यादेवमपरिणामीत्यभेदत्वादपरिणामित्वादिति । नास्य भेदोऽस्तीत्यभेदः । नास्य परिणामित्वमित्यपरिणामित्वादभेदत्वादिति । बहुव्रीहिसमासो वा स्यात् । बहुव्रीहिस्तावन्न घटत एव, अन्यपदार्थत्वादन्यस्यार्थस्याभावात् । अतः समन्वयाभावः । समन्वयाभावात् तदभावः । तत्पुरुषोऽपि प्रसज्यप्रतिषेधपक्षे न घटते । नञः क्रियापदसम्बन्धिनोऽसमर्थत्वात् तस्माद्भेदादन्य इति पर्युदासः स्यात् । स च बहुव्रीहितुल्य एवार्थत इति भेदत्वेनाभूतत्वात् परिणामित्वेनाभूतत्वादिति सुखग्रहणार्थं शङ्कापोहार्थ[6]श्चेत्युक्तम् । भिन्नानां हि

१ °भिमत° क–ख । २ यथा° क–ख । ३ °थात्मा क–ख । ४ °नीति क–ग । ५ °समर्थनयना ख–ग । ६ °श्चे° ग ।

भावानामव्यभिचरितैकत्वापत्तीनां सर्वत्वं भवति । न त्वदिष्टस्यैकस्याभिन्नस्येति । तद्व्याचष्टे–**अव्यभिचरितेत्यादि यावद्भेदभावः** । सर्वत्वमव्यभिचरितमनेकत्वं यस्य तदिदमव्यभिचरितानेकत्वमेकं तस्य गतिपरिणामस्तदापत्तिः सैकत्वापत्तिरनेकेन विना न भवतीति । यथा शुक्रशोणितादेरनेकस्यैकत्वापन्नस्याध्यात्मिकस्य ।

**यथोक्तम्**—माऊ[1] ओयं पिऊ सुक्कं तं तदुभयसंसिट्ठं कलुसं किव्विसं तप्पढमयाए आहारमाहारेत्ता जीवो गब्भत्ताए वक्कमति ।

सत्ताहं कलहं होति सत्ताहं होइ अब्बुदं ॥

अब्बुदा जायए पेसी पेसीतो जायते[2] घणम् ॥ (तं०वै०गा० ४६४) इत्यादि ।

भिन्नानां वैषम्येण परिणतानां शुक्रशोणितसंसृष्टाहारादीनामैक्यापत्त्या हि सर्वत्वं शरीरेन्द्रियादेस्तथा वाक्यमपि सर्वत्वम् । भूम्यम्ब्वादिव्रीहितोयदेशकालादिभिन्नार्थानां वैषम्येण विपरिणाममापन्नानामैक्यापत्त्या सर्वत्वं दृश्यते । **नान्यथेति**, हिशब्दो यस्मादर्थे । यस्मादित्थं भिन्नार्थाव्यभिचरितैकगतिः सर्वत्वं, स हि भेदभावः सर्वत्वम् । तस्मान्नाभिन्नस्यैकस्य सर्वत्वं कस्यचित् तस्मात् सर्वत्वाभावादयुक्तमुच्यते । 'पुरुष एवेदं सर्व'मिति ।

**किं चान्यत्**—**त्वदुक्तैकसर्वतायां त्वित्यादि**, एकमेव सर्वमित्येतस्यामेकै[3]सर्वतायाम्, सत्त्वैकतायामिति वा पाठात् । सर्वैकपुरुषमयतायां प्रत्यक्षत एव भिन्नानेकैकसर्वताया दर्शनात् प्रत्यक्षविरोधः । ग्रहणभेदादनुमानविरोधः, ग्रहणभेदे हि न्याय्यो ग्राह्यभेद इति भेदत्वपरिणामित्वादिभावाभावे सर्वत्वापत्तिभवनाभावाद्वानुमानविरोधः । त्वदुक्तासदुक्तैकार्थ्याभावे भेदाभ्युपगमात् स्ववचनाभ्युपगमविरोधः । लोके घटपटादिभेदप्रतीतेर्लोकविरोधः । **अविकल्पशब्दार्थादित्यादि** । अविकल्पः शब्दार्थ इत्यभ्युपगम्य विकल्पव्यवहाराङ्गीकरणाच्चाभ्युपगमविरोधः । सर्वमेकमिति विकल्पधर्मत्वेन धर्मित्वेन च तदुभयविशेषत्वाभ्यां चेष्टस्य तेनैवाभ्युपगमेन निराकरणादविकल्पशब्दार्थस्याभ्युपगतधर्मधर्मिस्वरूपविशेषोभयविरोधाः । असिद्धादिहेतुता च हेतोरनतिरिक्तपरापराणीयोज्यायोरूपात्मकत्वादित्यादेः प्रतिज्ञातैकपुरुषाभेदात् त्वया, अस्माभिश्चोक्तेन न्यायेन पुरुषाभावाद्धर्म्यसिद्धेराश्रयासिद्धिस्त्वन्मतेनार्थान्तराभावेऽसाधारणता, अस्मन्मतेन विपक्ष एव भावाद्विरुद्धता, साधारणानैकान्तिकता वा । सपक्षमभ्युपगच्छतो वा ते घटाद्यन-

---

१ मातुरोजः पितुः शुक्रं तत्तदुभयसंसृष्टं कलुषं किल्बिषं
तत्प्रथमतयाऽऽहारमाहार्य गर्भतया व्युत्क्रामति ।
सप्ताहं कललं भवति सप्ताहं भवत्यर्बुदम् ।
अर्बुदाज्जायते पेशी पेशीतो जायते घनम् ॥ गर्भोपनिषद्यप्येवमस्यास्ति वर्णनम् ।

२ वि घणं भवे ॥ ३ °स्याने° क-ग ।

स्थाभेदाद्वृक्षादिदृष्टान्तम्। वृक्ष इति, पुरुषव्यतिरिक्तवृक्षाद्यवस्थाभेदाभावे साध्य-साधनोभयधर्मधर्म्यसिद्धयोर्दृष्टान्तदोषाः। आदिग्रहणाद्यथासम्भवं कल्पनां कृत्वा वैधर्म्यदृष्टान्तदोषा योज्याः। एवं तावत् पुरुषमयत्वं सर्वस्यायुक्तमित्युक्तम्।

अधुनातिदेशेन नियत्यादिष्वपि दोषांस्तानेवाह—यथा च पुरुषे तथेतर-द्रव्यार्थेष्वपीति, नियतिकालस्वभावभावेष्वपि स्वं स्वं प्रति प्रतिस्वं प्रत्येकं योज्यं, तमतिदेशोपायमाचष्टे। तद्यथा–विनिद्रावस्थास्थानेऽभेदैकं विनिद्रावस्था-सामान्यलक्षणं पुरुषस्य पुरुषवादे सुप्ताद्यवस्थाव्यापित्वात्। सुप्ताद्यवस्था अपि विशेषास्तस्य तदात्मत्वादिति यथा व्याख्यातं तथा नियत्यादावभेदैकत्वं नियत्यादेः सामान्यलक्षणम्। अतीतानागतवर्तमानबाल्य[1]कौमारयौवनक्रमयौगपद्या-दयो निद्रादिवद्विशेषलक्षणमिति व्याख्याय विकल्पद्वयप्रतिषेधस्तथैव कर्तव्यः।

अथ किं या एता अवस्थास्ता एव नियत्यादिरुत नियत्यादिरेवावस्थाः? यदि ता एव नियत्यादिः समुदयवादः, क्षणिकवादः, विज्ञानमात्रतावादः, शून्यवाद इत्यादि। अथ निय[2]त्यादय एवावस्थास्तथा भेदैकत्वावस्थालक्षणत्वादिः स एव प्रपञ्चो योज्यः। इत्यतोऽस्मात् तत्त्वे तावत् संवदति। शेषं न सम्भवति सर्वं त्वदुक्तम्। कतमत् संवदतीति चेत्? यदयं भवति सोऽस्य भाव इत्येतत् संवदति, तस्य भावस्तत्त्वम्। येन भूयते यो भवति स एव भावः। कर्तृलक्षणां षष्ठीं कृत्वा तस्य भावः स्वभावः। इतीदमस्य दर्शनेन सह संवदति। किं कारणम्? सर्वग[3]त-त्वानित्यत्वदेशकालाभेदात् सर्वगतत्वेन नित्यत्वेन च यथासंख्यं देशकालाभ्याम-भेदात्। तद्धि भवनं देशे क्वचिन्न भवतीति सर्वगतत्वादभिन्नं, कालतः स तत्त्वं भवति न कदाचिन्न भवतीति नित्यत्वादभिन्नम्। तस्मादभेदादिष्वत एतदिदं पुनर्न तावदिच्छामः सम्प्रधार्यत्वात्। यस्तु भवति स कर्तैवेति सम्प्रधार्य[4]म्। न हि कर्तरि विहिततिप्प्रत्ययान्तभवति शब्द[5]श्रवणादेव कर्तृत्वमकर्तुराकाशादेरपि भवनाद-भवनव्यावृत्तिमात्रसत्तार्थत्वाद्भवनस्य। कारणपर्यायत्वात् करोतेरकारणकार्यमपि भवत्येव, भवतेः सान्निध्यापत्तिभवनद्वयार्थत्वात्, अस्ति-भवति-विद्यति-पद्यति-वर्ते-तीनां सन्निपातषष्ठानां सत्तार्थत्वादित्येतदस्वतन्त्रस्याव्यावृत्तस्यापि भवने कारणमाह—भवतेः सान्निध्यापत्तिभवनार्थत्वमस्ति-विद्यति-सन्निपातानां सन्निधिमात्रभव-नार्थत्वम्, पद्यतिवर्तत्योरापत्तिभवनार्थत्वमिति भा[6]वः सव्यापारत्वान्निर्व्यापार-त्वाच्च त्रयाणां भवतेः सामान्यभवनवाचित्वादिति। अपरिणामित्वात् परिणामि-त्वादकर्तृत्वाच्च विशेषः। असतो भवनाभावादस्त्यादिभवनं सन्निधौ मात्रवृत्ते वा सन्निधिमात्रवृत्त्येव असन्निधिमात्रवृत्त्येव। सन्निधिमात्रा वृत्तिरस्येति सन्निधिमात्र-वृत्ति तदस्ति भवनमापत्तिभवनपृथग्भूतं ततोऽन्यदीषद्भिन्नमव्यावृत्तमित्यर्थः।

१ °बाल्ये° ग। २ नित्या° ग। ३ °गतनित्य° ग। ४ °र्थं ग्रा। ५ °ब्दा° ग। ६ °गः ग।

स्यान्मतम्—सर्वतन्त्रसिद्धान्तेन व्याकरणेन विरुद्धमस्वतन्त्रभवनं भवतेः । कर्तृविहिततिप्प्रत्ययान्तत्वात् । इत्येतच्चायुक्तम् । तत्रैवानुज्ञातत्वात् । यदुपादानमेतदभिधीयते इत्यादि । इदं तु सन्निधिमात्रवृत्तिभवनमेवोपादायाभिहितम् । 'यत्राप्यन्यत् क्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीतिपरः (न्या० ६५) प्रथमपुरुषे प्रयुज्यमानोऽप्यस्ती'ति गम्यते । भवतीति वर्तमाना विभक्तिः पूर्वाचार्यसंज्ञयोक्ता लडित्यर्थः । तत्परोऽस्तिरसिरससुधीति(?) धातुः 'इक्श्तिपौ धातुनिर्देशे' ( वा०३।३।१०८ ) प्रथमपुरुषे, न मध्यमोत्तमयोः प्रयुज्यमानोऽपि गम्यतेऽर्थसद्भावादविनाभावादर्थेन तदुदाहरति वृक्ष इति । अस्तीति गम्यते । किमुक्तं भवति ? अस्ति भवति सन्निहितमित्यर्थः । निर्दिष्टं सन्निधिभवनम्, उभयोः समानलक्षणत्वादादौ । आपत्तिभवनं तु अस्तिभवनमित्यादि यावदापद्यत इति । इदमपि चेषद्भिन्नं सन्निधिभवनमेव । यथावृत्तिसन्निहितस्य तथावृत्तेरापत्तिभवनम् । अथवा तथा वृत्तिरस्य तथावृत्ति, सन्निहितं च तथावृत्ति च तदिति सन्निहिततथावृत्ति । किं तत् ? आपत्तिभवनम् । कुतः सन्निहितमेव तथा वर्तते इत्युच्यते ? । उच्यते—**कारणकार्यस्य सत्त्वात्** । कार्यं ह्यङ्कुरादि बीजादौ सन्निहितमेव तथा तथा देशकालाकारनिमित्तवशाद्व्यक्त्यव्यक्तिरूपेण वर्तत इति । तन्निदर्शयति—यथा घटो भवतीति, पूर्वमघटत्वेन मृत्त्वेन दृष्टं सन्निहितमेव मृदि घटभवनं व्यक्तमित्यर्थः । तत्पर्यायकथनं निर्वर्तत आपद्यत इत्यर्थः । सन्निधिभवनमेवापत्तीभवति । उक्तमापत्तिभवनमपि । अनयोरेव न्यूनाधिकरूपतया सिद्धिरुच्यते **सा** चेत्यादि, सामान्यत्वात् सन्निधिभवनसिद्धिस्तावत् सा च भोग्यद्वैतभूततायां सन्निधिभवनसिद्धिः । तद्धि सन्निधिभवनं द्वैतभूततायां सिद्ध्यति नाद्वैततायां दर्शितैकभोक्तृभोग्यत्वाच्चायुक्तमुक्तत्वादिदोषात् । न ततो न्यूनतायां सिद्धिरधिकतायां वा द्वैतात्, तृतीयस्याभावात् ।

न्यूनाधिकानुपपत्तौ कारणमाह—**व्यतिरेकाभावादिति**, व्यतिरेकः पृथक्त्वानेकस्यैव वृत्तिर्विनापि भावः तदभावः । तदभावान्न्यूनतायामसिद्धिर्यथा स्वामिना विना भृत्यस्य, भृत्येन विना वा स्वामिनः । अधिकेऽपि व्यतिरेको–यथा भावव्यतिरिक्तं नास्तीति तथेह भोक्तृभोग्यव्यतिरेकाभावादतो न्यूनाधिकाभावान्न द्वैते सन्निधिभवनं सिद्ध्यति । नाद्वैतत्रैतादितायामिति तत्प्रतिपादनार्थमुपपत्तिरुच्यते–**न ज्ञेयमन्तरेण ज्ञातृत्वम्**, भोग्यस्य ज्ञेयत्वाच्छब्दादिगुणपुरुषोपलब्धिद्वयपुरुषोपभोगार्थत्वात् तद् ज्ञेयमापत्तिभवनम् । तदन्तरेण न ज्ञातुर्ज्ञातृत्वम् । कुतः ? ज्ञेयासत्त्वात् ज्ञेयस्यासत्त्वादिति वैयधिकरण्यात् । ज्ञस्याधर्मत्वादसिद्धो हेतुरिति चेत् न, ज्ञातृज्ञेययोः सम्बन्धित्वेन साध्ययोस्तदसत्त्वस्य धर्मत्वात् । अथ-

१ °न्नं° ग । २ °स्ति° क–ख । ३ °योरप्र° ग । ४ त° ग–घ–ङ । ५ तद् क–ख ।
६ सम्भिन्नत्वेन क–ख ।

वानुपपन्नं ज्ञातृत्वं सद् ज्ञेयत्वादिप्रयोगकालेऽर्थव्याख्यातत्वाच्च, ज्ञेयस्यासत्त्वादगृहीतज्ञेयत्वादिति, दृष्टान्तः खपुष्पज्ञत्ववत्, यथा खपुष्पविषयं ज्ञातृत्वमसंज्ञेयत्वादनुपपन्नमेवमसंज्ञेयं ज्ञातृत्वं वैधर्म्येण इतरकुसुमज्ञत्ववत्। यथा भूतादि खपुष्पेतरकुसुमज्ञत्वं संज्ञेयत्वादुपपद्यते तथा तदभिमताद्वैतज्ञत्वं द्वैते सत्युपपद्येत। तत्रैतस्य ज्ञातृज्ञेयव्यतिरेकाभावात् तदन्तःपातित्वादसत्त्वमिति। अथवा पृथक्साधनं ज्ञातृत्वमुपपद्यते संज्ञेयत्वादितरकुसुमज्ञवद् वैधर्म्येणानुपपन्नमसंज्ञेयत्वात् खपुष्पवदिति। एवं हि ज्ञातुर्ज्ञातत्वम्, यो हि संज्ञेयं जानीते स तु मुख्यो ज्ञाता यथा सलिलं सलिलमिति विद्वान्, यः पुनरसंज्ञेयं विजानीते स तु न ज्ञाता यथा मृगतृष्णिकां सलिलमिति विद्वान्। एवं तावद् ज्ञातैव न ज्ञेयमित्येतद्दर्शनं निरस्तमद्वैतम्।

अधुना ज्ञेयमेव न ज्ञातेत्येतन्निरस्यते—न ज्ञातारमित्यादि, ज्ञातारमन्तरेण तत्पर्यायं दर्शयति—उपद्रष्टारमिति, ज्ञात्रा विना न ज्ञेयत्वं ज्ञातुरसत्त्वात्। अत्रापि पूर्ववदसंज्ञातृत्वादिति वा हेतुः। साधर्म्यदृष्टान्तो वन्ध्यासुतज्ञेयघटत्वम्।[1] वैधर्म्येणेतरसुतज्ञेयघटत्वम्। विपर्ययेण वा पूर्ववत् साधनद्वयं परस्परापेक्षज्ञातृज्ञेयत्वसाध्यतया वा वैयधिकरण्यपरिहारेण हेतुर्वाच्यः।

'एवमेव हि ज्ञेयस्य ज्ञेयता भवितुमर्हति।
यदि केनचिदनुपहतेन्द्रियज्ञानेन ज्ञायते॥'

यथाऽनुपहतेन्द्रियबुद्धिपुरुषज्ञेयघटवत् मध्यस्थेन तर्कागमकुशलेन विपश्चिता प्रमात्रा वा ज्ञेयं साधनम्। यथेति यथा न भोग्यमन्तरेण भोक्तृत्वमसद्भोग्यत्वात्। खपुष्पमकरन्दभ्रमवत्। वैधर्म्येणेतरकुसुममकरन्दभ्रमवत्। सद्भोग्यत्वाद्भोक्तृत्वमिति[2] तत्साधर्म्येण वा वैधर्म्येण खपुष्पभ्रमवत्। परस्परावधिकं वा पूर्ववद्भोक्तृभोग्यत्वसाधनमत्रापि च। एवमेव हि भोक्तुर्भोक्तृत्वमिति ग्रन्थो द्रष्टव्यः। तथा न भोक्तारमन्तरेण भोग्यमसद्भोक्तृत्वाद्वन्ध्यासुतयौवनवर्द्धितकवत्। सद्भोक्तृकं भोग्यत्वादितरसुतायौवनवर्द्धितकवत्। पूर्ववदेवात्रापि व्याख्या। यावदेवमेव हि भोग्यस्य भोग्यत्वमिति। युगपद्वा परस्परसम्बन्धसत्ताकौ भोक्तृभोग्यौ। तत्सम्बन्धित्वात् तयोः सम्बन्धित्वादित्ययमर्थप्रदर्शनहेतुः। प्रयोगहेतुस्तु सम्बन्धित्वादित्येव। यथा सम्बन्धी भ्राता सम्बन्धेनेतरेण भ्रात्रा विना न भवति कनीयान् ज्यायसा, ज्यायान् वा कनीयसा। तथा भोक्तृभोग्यौ। यथा सदलङ्कारौ दम्पतीत्येवमादिदृष्टान्तैर्भोक्तृभोग्यसम्बन्धित्वसिद्धिरन्योन्याविनाभाविनीति।[3] प्रागुक्तं सन्निधिभवनं द्वैते सति सिद्ध्यतीत्यधुनेतरद्यदि च तथा तथा वर्तनं भवनं रूपादौ तेन तेन[4] प्रकारेणान्यथा अन्यथात्वापत्तिभवनं रूपे[5]

---

१ °सुतोज्ञमघटत्वं क-ख। २ °त्वादभो° क-ख। ३ °धे त्व° क-ख। ४ °येन क-ख। ५ °त्व° क-ख।

रसे गन्धे स्पर्शे पृथिव्यादौ गवादौ घटादौ च सकलजगद्वर्तिविवर्तरूपं तदपि नैकैकस्मात् । एकमेकमेवैकैकं पुरुषादि तस्मादेकस्मान्न भवति । किं तर्हि ? यदि नैकमेकं तस्मादनेकस्माद्भवति । अपरिणामिनो वा सन्निधिमात्रभवनान्नेति वर्तते । किं तर्हि ? परिणामिन एवापत्तिभवनयोग्याद्भवति । कुतः ? आपत्तित्वात् आपत्तिभवनत्वाद् व्रीहिवत्, यथा व्रीहिरनेकैकस्य रूपरसादिपरमाणुद्व्यणुकादिसङ्घाताद्यङ्कुराद्यापत्तिः, अङ्कुरादेर्वा भूम्यम्ब्वादिदेशकालादिसङ्घाताद् व्रीह्यापत्तिः । तथैतदनेकात्मकैकमापत्तिभवनम्, नाप्यद्वैते । इत्थं तावत् स्वविषयद्वैते सत्यापत्तिभवनम्, परविषयद्वैते सत्येवापत्तिभवनमिदमुच्यते नाप्यद्वैते परविषयद्वैताभावे भवत्यापत्तिभवनमनर्थकापत्त्यभावादेवैकस्माद् द्वितीयस्य कस्यचिदर्थमकुर्वतः । किन्तु सङ्घातात्मकत्वात् परार्थत्वमिति सम्बन्धः । सङ्घातात्मकभवनात् पारार्थ्यं, संहत्य कारिणां हि पारार्थ्यं नानर्थक्यं न स्वार्थत्वं नान्योऽन्यार्थत्वं च केवलम्, दृष्टान्तः गृहघटपृथिव्यादिवत् । यथा गृहघटपृथिव्यादयः सङ्घातात्मकाः स्वतः पृथग्भूतपुरुषार्था नानर्थकाः, न स्वार्था, नान्योऽन्यार्थाः । पुरुषार्थमेव चान्योऽन्यार्थाः । स्त्रीशोभनार्थालङ्कारवत् । तथा चक्षुरादयोऽप्याध्यात्मिका इति दृष्टान्तबाहुल्यात् परार्थव्यापितां दर्शयति इति । आचक्षुरादयोऽपि चक्षुरादयोऽपि सूक्ष्माध्यात्मिकाविवेक्याद् यावत् परार्था यावच्च रूपादिद्व्यणुकादयः । किमङ्ग पुनर्गृहघटपृथिव्यादयः स्थूला ग्रामारामादयश्चेति । यत्पुनरिष्यते 'एकं कारणं पुरुषादी'ति तन्न वयमभ्युपेमः । त्वन्मतेनाप्येकं चेत् किञ्चित् पारार्थ्यकारणमिष्यते तदभ्युपगम्य भेदात्मकेन वानेन भवितव्यमिति प्रतिजानीमहे कारणत्वात् तन्त्वादिवत्, तन्तुकपालादयो हि कारणत्वात् पटघटादीनां कार्याणां रूपादित्र्युत्र्यंश्वादिसङ्घातरूपा अनेकात्मका एव कारणभावं बिभ्रतो दृष्टा नान्यथा । तथा तेनापि त्वदिष्टेन कारणेन भवितव्यमनेकात्मकेनापरार्थेन च भवितव्यमिति वर्तते, परस्मै अर्थः परार्थः । परार्थोऽर्थः कार्यं तस्य कारणस्य तेन कारणेन परार्थकार्येण भवितव्यं कारणत्वात् तन्त्वादिवत् । यथा देवदत्तशीतत्राणाद्यर्थे पटकार्याणि तन्तवस्तथा तेन कारणेन त्वदिष्टेन भवितव्यम् । स कतमोऽर्थः ? इति चेदुच्यते—

शब्दाद्युपलब्ध्यर्थत्वात्, आदिग्रहणाच्छब्दाद्युपलब्धिरादिगुणपुरुषान्तरोपलब्धिरन्त इत्याद्यन्तोपभोगद्वयं पुरुषस्यार्थः । सोऽस्यापत्तिभवनस्य परार्थार्थः । तस्माच्छब्दाद्युपलब्ध्यर्थत्वात् परार्थार्थेन तेन कारणेन भवितव्यम् । किं हि कारणम् ? रूपादि दृष्टमेकं स्वार्थश्चेति कारणस्यानेकैकत्वाविनाभावं पारार्थ्याविनाभावं

---

१ °त्रेभं° क-ख । २ °सन्तानत्वाद् क-ख । ३ °कै° क-ख । ४ °त्येकत्वे क-ख । ५ °र्थार्थं° क-ख । ६ °वदेत् क-ख ।

च स्वार्थक्रियाभावं च दर्शयति–विपक्ष एव नास्तीत्यभिप्रायः । रूपादिग्रहणं तु पक्षत्वात्, रूपादीनां सङ्घातपारार्थ्यपरिणामित्वैः सन्निधिभवनवैलक्षण्यं दर्शयति–तदित्थं द्वैते त्वित्यादि, द्विविधपुरुषोपभोगार्थमनेकात्मिकायाः प्रकृतेरित्यादिना ग्रन्थेन तदापत्तिभवनस्वरूपवर्णनम् । प्रक्रियन्ते विकारास्तत इति प्रकृतिः, प्रधीयन्तेऽस्मिन् महदादय इति प्रधानम्, बहूनां धानं बहुधानं–बहुधानकम्, मरणादविनाशादमृतमित्याद्यन्वर्थनामिकायाः प्रकृतेरनेकात्मिकायाः आत्मभिः सुखदुःखमोहैः प्रकाशप्रवृत्तिनियमात्मकैः प्रागभिहितावीर्यपवनपाषाणवत् । स्वपरेषां नर्तिकार्पणनावामात्मनश्च प्रतिपत्तिचलनधरणकरणैरिवेति । ते हि वैकारिकतैजसभूतादिविकाररूपाः सुखदुःखमोहाः प्रकाशवृत्तिनियमात्मकाः सत्त्वरजस्तमोलक्षणा गुणाः साम्यावस्थायां प्रकृतिरित्युच्यन्ते । वैषम्येण तु परिणामानुक्रममापन्नाः परस्पराविनिर्भोगवृत्तयोऽङ्गाङ्गिभावेन परिणामाद्विकारीभवन्तः शब्दादीनारभन्ते । तैर्महदादिना परिणामानुक्रमेणारब्धाः शब्दादयोऽपि तदात्मका एव । शब्दादिपरिणामानुक्रमः सोऽधुनानुषङ्गेण स्वयमेव वक्ष्यति । तदात्मकत्वं तावत् साध्यते । तदात्मका एव सुखाद्यात्मका एव शब्दादयस्तदात्मकत्वाभिव्यक्तकार्यत्वात् । ते सुखादय आत्मा तदात्मा तद्भावस्तदात्मकत्वं सुखाद्यात्मकत्वं तदात्मत्वेनाभिव्यक्तं कार्यं येषां ते तदात्मत्वाभिव्यक्तकार्याः शब्दादयस्तद्भावात् तदात्मत्वाभिव्यक्तकार्यत्वात् मृत्पिण्डकार्यशिवकादिमृत्त्ववत् । यद्यदात्मनाभिव्यक्तकार्यं वस्तु तत् तदात्मकमेव दृष्टम्, यथा मृदः कार्यं पिण्डस्तस्य कार्यं शिवकः । एवं क्रमेण स्तबककुशूलकादि यावद् घटः, कपालानि वा । मृदात्मकान्येव कार्याणि मौलस्य कारणस्यात्मना विनोत्तरोत्तरेषां कार्याणामभावात्, आदौ मध्येऽवसाने च मृदात्मकत्वं दृष्टमेवं शब्दादयः सुखानां कार्यं, शब्दादिकार्यं त्वाकाशादि, तत्कार्यश्च गवादि घटादि सर्वं सुखाद्यात्मकत्वेनाभिव्यक्तं तदात्मकमिति ग्राह्यम् । कथं सुखाद्यात्मकत्वेन शब्दादिव्यक्तम्? इति चेत्, **सुखाद्युपलब्धेः सुखात्मकानां** वेत्यादिना तद्दर्शयति यावदात्मत्वेनाभिव्यक्तं **कार्यमेषां शब्दादीनामिति** गतार्थम् । एवं तावद्भूतादिनाहङ्कारेणारब्धाः **शब्दादयः यानि तैरारब्धानीत्यादि** । यावत् सुखादिमया एव परिणामानुक्रमेण भूतानामाकाशादीनां शब्दादिभिः सुखादिमयैरारम्भं दर्शयति—**तत्र शरीरादीन्याध्यात्मिकानीति**, शरीरीभूतानि शब्दाद्यारब्धानि भूतादीनि भूतादिमयानि त्रिगुणानि वैकारिकारब्धानि श्रोत्रादीन्येकादशेन्द्रियाणि सर्वाण्येव । त्रयाणां सुख-

---

१ °णाऽविनाशाऽ° ग । २ °चा° ग । ३ °कार्पण° ग । ४ °तेना° क–ख । ५ °स्तूप° क–ख । ६ °नादिनो° क–ख । ७ नृ° क–ख ।

दुःखमोहानां सन्निवेशविशेषास्ततस्तन्मयता, बाह्यानि घटादीनि रूपादिसमूहत्वात् तेषां च सुखाद्यात्मकत्वात् तन्मयानि तदात्मकान्येव । तथा पृथिव्यादयः तन्मयकारणारब्धत्वादिति, महदादेः सकलस्य विकारस्य ब्रह्मणस्तथा तस्य च जगतः सुखादिमयकारणारब्धत्वात् । यद्यन्मयैरित्युपनयः, तन्मयं तदिति निगमनम्, दृष्टान्तः कार्पासिकपटवदिति । कार्पासविकारैस्तन्तुभिरारब्धः पटोऽपि कार्पासिक इति यथोच्यते तथा भूतानि सुखाद्यारब्धशब्दाद्यारब्धानि सुखाद्यात्मकानि । भूतैरारब्धानि पुनः शरीरादीनि घटादीनि, आदिग्रहणात् पटकुटिवत् परम्परारब्धत्वात् । यथा कार्पासिकतन्त्वारब्धपटमयी कुटिरपि कार्पासिकीत्युच्यते, तथा सुखाद्यारब्धशब्दाद्यारब्धभूताद्यारब्धपृथिव्यादि-गवादि-घटादि-सरित्समुद्रमन्दरादीन्यपि तदात्मकानि । अनेकात्मकैककपूर्वकं शरीरमिति प्रतिज्ञा, किं पुनः कारणमेवं प्रतिज्ञायते ? प्रोक्तपुरुषाद्येककारणपूर्वकत्वनिराकरणार्थं, वक्ष्यमाणेश्वरादिकारणपूर्वकत्वनिराकरणार्थं च । को हेतुः ? **अन्वितविकारत्वात्** । अन्विता विकारा यस्य तदन्वितविकारम्, हस्ताकुञ्चनप्रसारणाङ्गुल्युत्क्षेपणापक्षेपणपादप्रक्षेपाङ्गनिर्वर्तनादिविकाराः शरीरावयवाश्च सुखादिभिः शब्दादिभिश्च अन्विता विकारैस्तस्मादन्वितविकारत्वाच्चान्दनशकलवत् । यथा मृदुसुरभिशीतहरितरक्तश्वेतादिभेदस्पर्शरसरूपगन्धादिविकाराणि चन्दनशकलानि सुखाद्यन्वितानि परमाणुद्व्यणुकाद्यनेकात्मकैकचन्दनतरुपूर्वकाणि तथेदं शरीरमपि सुखाद्यनेकात्मकैककारणपूर्वकमिति नैकैकपूर्वकम्, यथा 'पुरुष एव'(ऋक्सं०मण्ड०१०,सू०९०, ऋ. २)इत्यादिना पूर्वकं न निर्हेतुकं नासत्पूर्वकं वैभासिकाद्यभिमतवदित्येतस्य साधनस्य व्यावृत्त्यार्थोद्देशार्थमन्वितत्वादिति सामान्येनास्यैवोक्तस्य निगमनार्थम् । अथवैकैकपूर्वकत्वादिनिराकरणसाधनं वा पृथगेव । अन्वाह चेति पूर्ववत् ।

अजामिति, न जायत इत्यजा नित्या, अथवा पुनः 'अज गतिक्षेपणयोः' इति क्षिप्रगमनादजा, ईर्यप्रकृतिः क्षिप्रपरिणतिगतिसाधर्म्याद्बहुप्रसवसाधर्म्याद्वा अजेवाजा ताम्, एकामद्वितीयां सर्वगताम् । मा भूदेकैकेति अनेकात्मका, एकाम् लोहितशुक्लकृष्णां सुखदुःखमोहात्मरजःसत्त्वतमोमयीम्, बह्वीः अनन्ताः प्रजाः प्रजायन्त इति प्रजाः । महदहङ्कारतन्मात्रादिक्रमेण ब्रह्मादिस्तं वाऽऽप्तां सृजमानामुत्पादयन्तीम्, सरूपाः सुखाद्यात्मिका आत्मरूपा आत्मसरूपाः । यद्वा ह्यजा बहुवर्णिकात्मस्वरूपप्रजासर्जिनी प्रधानीति गण्यते । ताम्, अजो ह्येको जुषमाणः

१ व्र° क-ख । २ वि° क-ख । ३ °नाशि° क-ख ।
४ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ( श्वेता. उ. अ. ४, श्लो. ५ )
५ °अ° घ । ६ प्रह्वात्मजा क-ख ।

सेवमानः प्रीयमाणः। स हि न जायत इत्यजो नित्यत्वात् । एकः सन्निधिभव-नस्याभिन्नस्यैकरूपत्वात् सर्वगतत्वाच्च तामेव जुषमाणः, अनुशेते अनुशयमनु-बन्धं च तस्या न मुञ्चति अनुधावतीत्यर्थः । यथा वत्सोऽजामनुधावति तथा तां प्रकृतिं पुरुषः, जहात्येनां भुक्तभोगामजोऽन्यः[1] असावेव पुरुषोऽन्य एव तस्या उपरतः संवृत्तो भुक्तभोगां दृष्टदृश्या विदितात्मा नात्मविशेषः प्रकृतिपुरुषो राज्ञो नर्तक्या इव विकारान् बाह्यान् भ्रूक्षेपक्रमकरचलनादीननुशयहेतूनन्तःकरणश-रीरादिसमुद्भूताननात्मभूतानुपलभ्य भिक्षुरिव स्वभावावचिन्तनाद्विरक्तोऽहमनया वृथा क्लेशितो बहिरन्तरशुद्ध्येति विरमति । सापि दर्शितविकारा दृष्टाहमनेनेति व्रीडितेव विनिवर्तत इति। तथैतदर्थसम्बन्धिनी व्याख्यातैव द्वितीया गाथा।

सुखं च दुःखं चाऽनुशयं च वारेणायं सेवते तत्र तत्र ।
विशन्ति योनिं व्यतिरेकिणस्त्रयः अजस्तु जायामतिसत्यशुद्धः ॥ इति ।
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥

(श्वे० अ० ४, श्लो० ६, मुण्डको० ३।१।१)

उभा उभौ सुपि डादेशात् सखायावन्योऽन्यसहितावेव विभुत्वेनित्यत्वाभ्याम्। सयुजा पूर्ववद् वादेशात्[2] समानयुजौ समानस्य सकारादेशात् । सह पर्णाभ्यां सपर्णौ सपक्षौ शुद्ध्यशुद्धिपक्षौ। सयुजौ सुपर्णाविति वा पाठः। सुष्ठु अतीव युक्तौ सर्वगतत्वादविभागेन सदा युक्तौ, शोभनपर्णौ च परस्परबन्धैक्यापत्तिजनितविचि-त्रवर्णसुखासुखपक्षौ। एकवृक्षं लोकाख्याश्वत्थं स्वत्वत्वादचलत्वाद्वृक्षोऽश्वत्थसाध-र्म्यात्, परिषस्वजाते परिष्वक्तवन्तौ। तयोरेकस्तयोः शकुन्योरेकवृक्षपरिष्वङ्गि-णोरेक एव शकुनिर्भोगसमर्थः। तस्य पिप्पलस्य पिप्पलं फलं स्वादु भोग्यवि-कारविशेषं विचित्ररसमत्ति खादति भुङ्क्ते । पुरुष एव भोक्तृत्वात् ज्ञत्वात्। अनश्नन्नन्यः प्रकृतिसंज्ञः शकुनिरभुञ्जानः अभिचाकशीति आभिमुख्येन तस्या-त्यर्थं काशते, शकुनिप्रस्तुतेः पुल्लिङ्गम्। एतदधुना परीक्ष्यते । अथ कथ-मित्यादि, यावद्विपदभ्युपगम्यत इति। यद्यनेकात्मकैककारणत्वमिष्यते। एवमेककारणत्वप्रतिषेधानन्तरं पुरुषाद्येककारणत्वप्रतिषेधाहितसंस्कारतिरोधानका-लमप्यप्रतीक्ष्य त्वया कथं शब्दैकगुणप्रवृत्तिविपदभ्युपगम्यते ?। अभ्युपगम्यतां तावद्रूपादिसृष्टौ व्यवहारानुपपातिनामेषां लोके दृष्टानां द्वित्र्याद्यनेकस्पर्शरस-गन्धगुणानामनेकैकत्वात्[3] तदात्मकवाय्वादिसृष्टिः। अस्तु नाम। त्वन्मतेन सह घटमानमिदं तु न युज्यते । शब्दैकगुणा प्रवृत्तिरित्थंभूतेनास्य तच्छब्दैक-

१ °मयोग्यः क-ख। २ °क्त° क-ख। ३ °बद्धा°-ग।

गुणप्रवृत्तिर्विपत् 'गण गुण संख्याने' शब्दैकसंख्यानप्रवृत्तिरेकस्मात् कारणाद्भवेत् त्वन्मतविरोधात् । नानेकात्मकैकस्माच्छब्दस्पर्शादिद्वित्रिचतुःपञ्चगुणा भवद्वाय्वादिवत् त्वन्मतविरोधात् । प्रयोगश्चात्र—न प्रवर्तेत एव, शब्दैकगुणाकाशं तन्न भवेदित्यर्थः । असम्भूतेः 'गुणसद्भावो द्रव्य'मिति लक्षणाभावाद् बहूनां हि गुणानामेकीभवनमैक्यभवनं सम्भूतिस्तदभावोऽसद्भूतिस्ततोऽसम्भूतेर्न प्रवर्तेत । पुरुषवद् वन्ध्यापुत्रवद्वेत्यत्र तदनिष्टापादनमिति ।

अत्राह—शब्दे त्रैगुण्यमस्त्येवेति चेत् । सर्वस्योक्तसुखदुःखमोहमयत्वाच्छब्दोऽपि तदात्मा त्रिगुण एवेति चेदित्याशङ्कायाम् । एवं चेन्मन्यसे । साधूक्तं एतदेव त्वावाचयितुमवोचतं शब्दैकगुणवियदप्रवृत्तिप्रसङ्ग इति । ततश्च यत्पुनरत्रिगुणं सुखादि, सुखमेव पृथक्प्रधानावस्थायां सत्त्वं तदत्रिगुणमेकसुखस्वात्मत्वादव्यतिरिक्तम् । तस्य भावस्तत्त्वम् । यथा तत्सुखमेकस्वात्मत्वात्,व्यतिरिक्ततत्त्वं प्रकाशादिश्च तस्य तत्त्वस्यात्मा सर्वत्राभेदभावात्, तेन प्रकाशात्मना मा प्रवृत्तीष्टमापत्तिभवनमनुभूतनिर्गुणत्वात् । गुणसद्भावानात्मकत्वात् । एकत्वादनेकात्मकैकत्वात् । वैषम्यानुपपत्तेरपरिणामित्वात् । वैषम्यापत्तितोऽहि परिणामित्वं स्यात् । साम्यावस्थायां तु गुणानां तदभावाद्वैषम्यानुपपत्तिरतो परिणामित्वं अनापत्त्यात्मकत्वात् । रूपान्तरप्राप्त्यनात्मकत्वात् । तस्यां ह्यवस्थायामेवंस्वरूपं सत्त्वम् । दृष्टान्तः पुरुषवत् । यथा पुरुषोऽपि निर्गुणत्वादिधर्मत्वान्न प्रवर्तते । तथा सुखाद्यपि प्रवृत्तीष्टनिर्गुणत्वादिधर्मत्वे सत्यपि सुखादि प्रवर्तत एव चेत् । तथातद्धर्मत्वात् पुरुषोऽपि प्रवर्ततामेभ्य एव सुखादिवत् गुणस्यान्यतमस्यैव वा श्वयथुरकस्मात् कुत उत्पन्नः ?

किं चान्यत्—शब्दादि वाप्येकात्मकाद्येव निर्गुणमेकं समानपरिणामि चैवमापद्यमानत्वात् । प्रधानावस्थानां प्रवर्तमानत्वात् सुखादिवत् । अनेकात्मकमित्यादि विपर्ययधर्मोपादानं गतार्थम् । न एवेति । आह—नैवेत्यादि सिद्धसाधनमिदम् मा प्रवर्तिष्टेति न प्रवर्तत एव सुखादि अप्रवृत्तिलक्षणत्वात् । न हि सुखं मोहो वा प्रवृत्तिलक्षणम्, किं तर्हि ? रज एव प्रवृत्तिलक्षणम् । प्रत्येकं हि सत्त्वादयः प्रकाशप्रवृत्तिनियमलक्षणास्त्रयोऽपि ततोऽप्रवृत्तिलक्षणत्वान्न प्रवर्तन्ते, सुखं पुरुषवत् । वैषम्यावस्थायां तु रजः प्रवर्तते । प्रवर्तयति च सुखं मोहं चाप्रवृत्तिलक्षणत्वात् तयोरिति ।

अत्रोच्यते—त्रयमपि न न प्रवर्तते, प्रवर्तत एव । अविभक्तस्वतत्त्वस्य तथा प्रविभक्तत्वेन व्यवस्थानात् । यदविभक्तस्वतत्त्वं तेव तेन प्रकारेण प्रविभक्तत्वेन व्यवतिष्ठते तत् प्रवर्तत एव । यथा मयूराण्डकरसगतग्रीवादिभावाः, मयूराण्डकरसावस्थायां ग्रीवाबर्हादयोऽविभक्तस्वतत्त्वा ग्रीवादित्वेन प्रवि-

१ तत्र क–ख । २-३ म्भू° ग । ३ °गमनम् क–ख ।

भक्तरूपा व्यवतिष्ठमानाः प्रवर्तमाना एव नाप्रवर्तमानाः, यन्न प्रवर्तते तद्-विभक्तस्वतत्त्वं सत् कदाचित् प्रविभक्तत्वेन न व्यवतिष्ठते । यथा पुरुषो यथा वा मयूराण्डकरसे हंसादिग्रीवादय इति । किं कारणम् ? द्रव्यार्थनयविकल्पानां सत्कारणवादिनामसदोपपत्तिप्रवृत्तेः । यतो यस्मादिहैतेषु वादेषु भाव एव यतो नियतो निशब्दलोपात् । तस्मादप्रवृत्तिलक्षणं चेन्न स्यात् सुखादिरिति ।

आह—ननु विभक्तरसग्रीवाद्यापत्तिवत् । प्रधानस्यैव च सापत्तिस्त्वदुक्त-मयूराण्डकरसगता विभक्तग्रीवादिप्रविभागापत्तिभावदृष्टान्तसामर्थ्यादेव त्रिगुण-साम्यावस्थैकप्रधानापत्तिरेव सिध्यति, न सुखाद्यापत्तिरिति ।

अत्रोच्यते—कस्य वा न मनोरथः ? कथं भावानेकमेव कारणमनेककार्यतया विप-रिवर्तमानमित्येतद्दर्शनं प्रतिपाद्येतेति । तस्य च कारणस्य प्रधानं पुरुषो नियतिः । शब्दब्रह्मेत्यादि संज्ञा त्वयेष्टा याऽस्तु साऽस्तु, किं नो विवादेन ? तदर्थ एव मे प्रयास एषः । कारणमयत्वं प्रतिपादयितव्य इति । एष प्रतिपादयामि त्वामेव तु न वेत्थेति गतार्थम् । यावत् कल्पनेति तदुपपाद्यसे अविभक्तानेकार्थका-रणमेवेदं पृथिव्यादि । अविभक्तोऽनेकार्थो यस्मिंस्तदविभक्तानेकार्थम्, किं तत् ? कारणमस्य पृथिव्यादेः, तदविभक्तानेकार्थकारणं पृथिव्यादि न विभक्त-सुखाद्यनेकार्थैककारणपूर्वकं विभक्तवृत्तिरस्य पृथिव्यादेस्तदविभक्तवृत्तिपृथि-व्यादि, सा वृत्तिः पृथिव्युदकघटादित्वापत्तिः । मयूरग्रीवादीति ग्रीवाबर्हशि-खण्डादिवृत्तेर्विभक्ता तदात्मानेकार्थाविभक्ताण्डकरसगतकारणैव, दध्यादिवृत्तिः क्षीरपूर्वा । आदिग्रहणात् पुरा शुक्ररसरुधिराङ्गोपाङ्गादि, व्रीह्यादि पूर्वोक्तमादि-ग्रहणादाम्रपनसमातुलुङ्गादिपत्रपुष्पफलादिवृत्तिस्तदात्माविभक्तपूर्वा दृष्टान्तबाहु-ल्यव्यापित्वप्रदर्शनार्थमुक्तवद् वक्ष्यमाणवत् तत्कारणं प्रत्येकमभिसम्बध्यते । उक्तवद् वक्ष्यमाणत्वात् । पुरुषनियत्याद्यभिन्नैककारणवदित्युक्तवत् । घट एव सर्वमिति विधिनियमा एव वक्ष्यमाणत्वात् । एवं तावत् कारणवादो यथा-ऽस्माभिरिष्टस्तथा घटते, न यथा त्वयेष्ट इत्युक्तम् ।

इदानीं त्वत्पक्षे दोषा वक्ष्यन्ते—प्रकाशप्रवृत्तिनियमानां तु भिन्नात्मकतया सत्त्वं न प्रकाशेतेति प्रतिज्ञा, दिङ्मात्रत्वेन अप्रवृत्तत्वात् पुरुषवत् । त्वयैव हि प्रधानावस्थायामप्रवृत्तसमा इतीष्यन्ते गुणाः सत्त्वादयः, तस्मात् सिद्धम-प्रवृत्तत्वं पूर्ववद्धेति प्रधानावस्थायामिवेत्यर्थः । यथा प्रधानावस्थायामप्रवृत्त-त्वान्न प्रकाशते सत्त्वम् । एवमुत्तरकालमपि । तथा रजस्तमसोः प्रवृत्तिनियम-निषेधः कार्यः । अनग्निप्रकाशवद्वा, यथाग्निरप्रवृत्तोऽप्रवृत्तिलब्धात्मानग्निः, अनग्निश्च प्रकाशते । तथा सत्त्वमलब्धप्रवृत्त्यप्रवृत्तत्वान्न प्रकाशेत ।

१ तत् ग । २ °शब्दा° क-ख । ३ °पादितोऽसि त्व° ग ।

आह—ननु प्रकाशात्मकत्वादेवेत्यादि अप्रवृत्तत्वमसिद्धं सत्त्वस्य रजसा प्रवर्त्यत्वात् । अग्नेरिव संधुक्षणेन । यथाग्निर्भस्मच्छन्नः सन्नपि न प्रकाशते । तुषचीवरेन्धनादिभिस्तु संधुक्षितः प्रकाशते, तदा प्रकाशमानोऽग्निर्भवतीति ।

अत्रोच्यते—यद्यप्रवृत्तोऽग्निस्त्वस्यामवस्थायामसन्नेवासावतोऽस्यदिष्टमप्रकाशत्वमेव गमयति । अग्नेर्हि एषा काचित् प्रकाशनस्य मात्रा सैवात्मा प्रकाशनात्मप्रवृत्त्यभावात् तदासौ तर्ह्यसत् तद् वन्ध्यापुत्रवत् । तथा सुखमप्यप्रवृत्तत्वादिति । एवं हीत्यादि कारणे कार्यस्य सत्त्वमेवं हि स्यात् । यदि तत् सत्त्वं प्रकाशात्मप्रवर्ततेऽनारम्भात् । इतरथान्तरसंबन्धारम्भ्यत्वादसत्कार्यवाद एवायमपि स्यात् । यथाहुरसत्कार्यवादिनः—'क्रियागुणव्यपदेशाभावादसत् समवाय्यसमवायिकारणसंबन्धे सति द्रव्याणि द्रव्यान्तरमारभन्ते । येषां चाधिकृतमारम्भसामर्थ्यं तैरारब्धे कार्यद्रव्ये तत्समवेतानियमत एव गुणाश्च गुणान्तरमारभन्त' इत्यारम्भवादः प्रसज्यते । स चानिष्टस्तस्मादनारम्भाद्वर्तते सत्त्वं प्रकाशनात्मना । यस्मादेव हि कार्यं कारणे सत् यदि तत्त्वं वर्तते प्रवर्तते । किं कारणम् ? अनारम्भादारम्भवादपरित्यागात् । कुतः ? वर्तते प्रवर्तत इति पर्यायकथनम् ? इति चेदुच्यते—वर्ततेरस्त्यर्थत्वाद्वर्ततेऽस्ति भवति प्रवर्तत इति पर्यायाः ।

इतर आह—न प्रकर्षेणाप्रवृत्तत्वात् । न हि वर्ततेः प्रवर्ततिः पर्यायः । प्रकर्षार्थेन प्रशब्देन विशिष्टाया वृत्तेरन्यार्थत्वात् । वर्तमानमात्रस्याविवक्षितत्वात् । प्रकृष्टवृत्तिविवक्षितत्वात् । सा च रजोऽनुग्रहात् । तद्रूपव्यक्तिः । प्रकर्षेण वृत्तिः । रजोऽनुगृहीतस्य सत्त्वस्य बीजस्येवाद्यनिगृहीतस्योच्छूनाङ्कुरत्वादिवृत्तिः सृष्ट्यभिमुखी सृष्टिरेव वा सात्र विवक्षितेति ।

अत्रोच्यते—न रजसोऽपि सत्त्ववदपरिसमाप्तरूपत्वात् । तस्यां ह्यवस्थायां रजःप्रवृत्तिलभ्यप्रकाशात्मरूपव्यक्तिसत्त्ववत् । रजसोऽपि हि स्वरूपव्यक्तिरसमाप्तरूपैव सत्त्वात् प्रतिलभ्यत्वात् । लब्धात्मवृत्तिर्हि स्वयं सद्रजः सत्त्वे प्रकाशनप्रवर्तनाय समर्थं स्यात्, अप्रकाशितस्य सत्त्वेन तस्य स्वरूपव्यक्तिरेव नास्ति । कुतः सत्त्वप्रकाशात्मप्रवर्तना रजसः ? तथा काशनं प्रवर्तकत्वेनाभिव्यक्तिः । कासनमेव हि स्वरूपव्यक्तिः । इति प्रकाशात्मकेत्यादि । यावत् प्रवर्ततेति गतार्थम्, अप्रतिलब्धात्मनाननुग्रहात् । एवं त्वित्यादिना तयोः सत्त्वरजसोरितरेतरानुग्राहिता, उत्थाप्यसाहायकशक्तित्वात् । सहायभावः साहायकं, तस्मिंस्तेन तदेव वा शक्तिः सा उत्थाप्य ययोस्तदानीमेव ते वस्तुनी उत्थाप्यसाहायकशक्तिनी तद्भावादुत्थाप्यसाहायकशक्तित्वात् । वाताहतनौद्वयवत् । यथा जलेऽन्योन्याबद्धे द्वे नावौ नेतरेतर-

१ न वा ग । २ °ग्निर्न° घ । ३ °सत्त्वं ग । ४ °त्मा न ग । ५ °जसा° घ ।

त्राणाय, तथा सत्त्वरजसी । शिबिकावाहकवदितरेतरानुग्राहिता किं न भवेदिति चेत् । न, उत्थाप्यविशेषणात् । अयमेव हि दृष्टान्तो ग्लानशिबिकावाहकवत् । यथा ग्लानोऽनुत्थापितो न शक्नोति वोढुमुत्थाप्यसाहायकशक्तित्वात्, तथानुत्थापिते सत्त्वरजसी न शक्नुतः परस्परं प्रवर्तयितुं स्वयमलब्धात्मके । इति प्रकर्षवृत्तेरभावः, प्रकर्षवृत्त्यभावात् असंपूर्णशक्तितेति ।

अत आह—असम्पूर्णशक्तिता वा प्रकर्ष इति । इत्थं कारणेनैव न स्यात् तस्य सत्त्वस्यासम्पूर्णशक्तित्वात् । उपहतबीजवत् । यथोपहतं बीजं असम्पूर्णाङ्कुरोत्पादनशक्तित्वान्न कारणमेव सत्त्वमपि स्यात् । अभ्युपेत्यादिकारणत्वं साऽवस्था या सत्त्वस्य असतः कारणादितश्चान्यतो न तत्स्वरूपव्यक्तिस्तस्य सत्त्वस्य प्रकाशनस्वरूपप्रकर्षोऽन्यरजस्तमसोः पुरुषतोऽन्यतोऽन्यतो वा कुतश्चिन्न भवति । असत्[1] कारणादिभ्यो हेतुभ्यः । तद्यथा–असत्करणाद्यथा मृदि सदेव कार्यं घटादि क्रियते न खपुष्पादि, सच्च मृदः स्वात्मनि, यतो घटात्मस्वरूपव्यक्तिप्रकर्षो नान्यतः पुरुषादेस्तत्त्वादेवापत्तिकारणाद्भवति । किं तर्हि ? स्वत एव भवति । तथा सत्त्वस्य रूपव्यक्तिप्रकर्षो नान्यतो भवति । किं तर्हि ? स्वत एव । एवमुपादानग्रहणात्, सर्वसम्भवाभावात् । शक्तस्य शक्यकारणात् । कारणभावाच्च सत्कार्यमित्येतेभ्यो हेतुभ्यः सत्त्वगुणाऽन्यनिरपेक्षस्वरूपव्यक्तिप्रकर्ष इति ग्राह्यम् । एवं सत्त्वस्य प्रकाशनं तमसा सह योज्यम् । रजसश्च प्रवर्तनमिति ।

किं चान्यत्–यदा च सुदूरमपीति, यावत् परिणामकत्वात् । सुदूरमपि विचारत्वेन गत्वा न प्रागवृत्तेरसत्कार्यपरिहारेण प्रकर्षः परिणामवादादृते न परिणामः प्रकर्षेण वृत्तेः कारणमेषितव्यम् । यदा चैवं तदा परिणामाभ्युपगमेन पुनरप्येतदेवापन्नम् । परिणामादात्मन्येव वर्तते युवत्ववत् । अन्यत्र वृत्तस्य परिणामस्यान्यत्वापरिणामकत्वात् । जिनदत्ते वृत्तः परिणामो न साधुदत्ते कौमारयौवनादि प्रवर्तयति कौमारं वा यौवनं वा । किं तर्हि ? जिनदत्त एव करोति । नान्यदन्यथा करोति यथा तथा न सत्त्वे प्रवृत्तिं कश्चिदन्यः कुर्यात् । स्वत एव प्रवर्तेतेति ।

एवं तावदप्रवृत्तप्रवृत्तिप्रतिषेधादनग्निप्रकाशदृष्टान्तप्रसङ्गागतवादमवतार्य पूर्ववदुदाहरणे प्रसङ्गमुत्थापयिष्यन्नाह—पूर्ववदुदाहरणादेवेत्यादि, यावन्न प्रवृत्तमिति । नन्वेतत् त्वयाभ्युपगतं पूर्वावस्थोदाहरणादेव पाश्चात्यावस्थाविशिष्टेति ।

---

१ 'असत्करणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥' साङ्ख्यकारिका. श्लो० ९

अन्यथा हि को विशेषः पूर्वपरावस्थयो रजःप्रवर्तनादृते ? । तस्मात् स विशेषो रजःप्रवर्तनादेव । को दृष्टान्तः ? क्षीरदधिपरिणामकालवत् यथा क्षीरावस्थातो दधित्वपरिणामावस्था विशिष्टा, पूर्वक्षीरकाले न दध्यासीत् पश्चाद्भूतमिति दृष्टम् । प्रकर्षवृत्त्या च विना न भवत्ययं विशेषः । तथा सोऽपीत्येतन्न, परिणामस्य तत्रैवोक्तत्वात् । नायं विशेषः परतः सिद्ध्यति । कुतः ? परिणामस्य तत्रैव सुखेऽभ्युपगम्यास्माभिरुक्तत्वात् यस्मात् प्रकाशात्मैव वृत्तिः प्रकाशस्य । यः स्वात्मा स एव वृत्तिः प्रकाशस्यैव च वृत्तिः कालः स च ततो नान्यः क्षीरदधिपरिणामावस्थयोः कालाख्यत्वात् । क्षीरदधित्वापत्तिः कालभेदात् । स च परिणामः सुखस्वात्मेति नान्यत् कारणं मृग्यम्, स्वात्मन एव परिणामात्, इतरथा स प्रकाशो न स प्रकाश एव । यदि प्रवृत्तिविशेषो न स्यादन्यात्मा स्यात्,[1] स एव प्रकाशात्मा न स्यात् तथाप्रवृत्तत्वात्, तेन प्रकाशात्मप्रकारेणाप्रवृत्तत्वात् । पर्यायेण तमर्थं स्फुटीकुर्वन्नाह—तथा भूतत्वादित्यर्थः । दृष्टान्तो घटपटवत् । यथा घटः पटो न भवति तेन प्रकारेणाभूतत्वात् पटोऽपि घटो न भवति, तथा स प्रकाशोऽप्रकाश एव स्यादिति विपर्ययेण तत्स्वरूपसाधनमुच्यते—यैव च प्रवृत्तिः स एव प्रकाशो नान्यः कश्चिदर्थः । इति प्रतिज्ञा । तथावृत्तत्वात् तथाप्रवृत्तत्वादित्यर्थः, घटपटस्वात्मवत् । यथा घटप्रकारेण घटात्मनैव वृत्तत्वाद् घट एव घटस्वात्मा, नान्यत् किञ्चित्, तथा प्रवृत्तिरेव प्रकाश इति प्रवर्त्यप्रवर्तकत्वात् । पल्लवपवनवत्, नेति चेत् ।

स्यान्मतम्—यैव[2] प्रवृत्तिः स एव प्रकाश इत्ययुक्तम् । प्रवर्त्यप्रवर्तकयोर्भेदात् । प्रवर्त्यं हि सत्त्वं प्रवर्तकं रजस्तस्मात् प्रवर्त्यप्रवर्तकत्वात् तयोर्भेदः पल्लवपवनवत् । यथा पल्लवपवनौ प्रवर्त्यप्रवर्तकौ परस्परतो भिन्नौ, तथा सत्त्वरजसी इत्येतच्च न, **तदात्मन एव प्रवृत्तत्वात्**, तस्य आत्मा तदात्मा तदात्मनः प्रकाशात्मन एव प्रवृत्तत्वात् । सत्त्वरजसोर्भेदासिद्धेः पल्लवपवनवद्भेदसाधर्म्याभावादयुक्तोऽयं दृष्टान्त इति वक्ष्यति । तद्व्याख्यानार्थमाह—**सन्निधिमात्रात् पूर्ववदप्रवर्तनात्** । इह रजः सन्निहितमपि प्राक् सन्निधिमात्रादेवाप्रवर्तकं स्वयमप्रवृत्तं सत्त्वाधीनप्रवृत्तित्वात्, किन्तु प्रवर्त्यमप्रवर्तनात् । कस्तर्हि प्रवर्तकः ? उच्यते—य एवासौ सत्त्वस्वात्मा प्रकाशः । कथम् ? इति चेदुच्यते । **तथा प्रवर्त्यव्यक्तिस्वरूपस्तेन** तेन प्रकारेण शब्दादिर्निर्वर्त्य प्रकारेण प्रवर्त्य व्यक्तिस्वरूपः प्रकाशो नर्तकाचार्य इव भ्रूक्षेपणादिप्रवर्तनाभिव्यञ्जनात्मना नर्तक्याः प्रवर्तमानः प्रवर्तकः । किं कारणम् ? **तथा व्यापारणात्** । तेन व्यक्तिरूपेण प्रवर्तमानस्य रजसो व्यापारणात् । सत्त्वेनैव हि प्रका-

---

१ अन्यथैव ग । २ नास्ति घ प्रतौ ।

शनरूपेण प्रवर्तमानेन रजः प्रवर्त्यते । तस्मात् स तस्यात्मप्रकाशस्तथा व्यापारणाद्रजसः प्रवर्तक इति त्वदभिमतप्रवर्तकत्वविपर्ययापत्तिरेव रजसः प्रवर्त्यत्वात् सत्त्वेन सत्त्वाधीनप्रवृत्तित्वात् । सत्त्वस्यैव प्रवर्तकत्वात् । पक्षधर्मविपरीतता चेति । तच्च सत्त्वस्य प्रवर्तकत्वं रजःप्रवृत्त्यात्मरूपापादनात् । रजसो हि प्रवृत्तिरात्मा तदेव रूपं रजःप्रवृत्त्यात्मरूपं तदापाद्यते सत्त्वेन, सत्त्वाप्रकाशिते प्रवृत्त्यभावात् सत्त्वापादितं प्रवृत्त्यात्मकरूपं रजस्तस्माद्रजःप्रवृत्त्यात्मरूपापादनात् सर्वं प्रवर्तकमितरथात्मरूपापादनात् । रजोवत् रजोऽपि हि इत्यादि, रजसोऽपि हि प्रवर्तकमित्थमेव युज्यते रजोऽपि हि । यस्मात् त्वन्मतेन प्रवर्तमानमितरयोः सत्त्वतमसोस्तथा स्वरूपापादनादृते किमन्यत् करोति ? प्रवृत्तिरूपमेवापादयत् प्रवर्तकमितीष्यते । नान्यथा । यद्वा यथावत् पूर्वं प्रकाशनियमात्मभ्यामप्रवृत्तयोस्तयोः प्रवर्तनादेव प्रवर्तकमेवं सत्त्वमितरथा स्वरूपापादनात् प्रवर्तकमस्तु, को दोषः ? । एवं च पल्लववद्रज एवापद्यते । एवं च कृतोक्तविधिना पल्लवस्थानीयं प्रवर्त्यं रज एव न प्रवर्तकं, सत्त्वमेव च प्रवर्तकं पवनस्थानीयं न प्रवर्त्यमित्यापन्नम् । किं कारणम् ? यथा प्रकाशस्य प्रवर्त्यत्वात् । यस्मात् तेन प्रकारेण प्रवर्त्यत्वं रजसः प्रकाशेन, तस्माद्रजसः प्रकाशेन प्रवर्त्यत्वादित्यर्थः ।

उक्तं हि—'रजसः प्रवृत्तिरात्मरूपं तदापादयति प्रकाशः, प्रकाशाप्रकाशिते रजसः प्रवृत्ते'रिति । तस्मात् प्रकाशेन तथा प्रवर्त्यत्वाद्रजसः । साधूक्तं तदात्मन एव प्रवृत्तत्वादिति । एवं तावत् सत्त्वरजसोर्भेदमुपगम्य हेतोरसिद्धिर्विपर्ययत उक्ता । नैव वा सत्त्वव्यतिरिक्तं रजोऽप्यभ्युपेम इत्यत आह—

तथा प्रकाशानतिरिक्ततत्त्वरूपत्वाद्वा प्रवृत्तेर्व्याख्यातप्रकारस्य तत्त्वमतिरिच्य नास्ति सद्वृत्तेः स्वरूपम् तत एव हेतोः कुतोऽपल्लवपवनभेदसाधर्म्यम् ?, सत्त्वरजसोरभिन्नत्वात् पल्लवपवनयोर्भिन्नत्वादिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं दर्शयति—यथेहापल्लवलक्षणः पवनो लोके भिन्न इति दृष्टः, अपवनलक्षणश्च पल्लवोऽपि । युज्यते हि पल्लवव्यतिरिक्ततत्त्वरूपः पवनः पल्लवमाघ्नन् प्रवर्तयति पल्लवम्, पल्लवश्च तेनाहतः प्रवर्त्यते तद्व्यतिरिक्ततत्त्व इति । ननु तथा प्रकाशातिरिक्ततत्त्वरूपा प्रवृत्तिरस्त्युभयोः शब्दाद्याविर्भावमात्रफलत्वादतो वैषम्यमिति न तद्रूपत्वमतद्वृत्तित्वादिति चेत् ।

स्यान्मतम्—प्रकाशनमात्रं सत्त्वस्य प्रवृत्तिः, निर्वर्तनं तु रजसस्तस्मात् सत्त्वस्याप्रवर्तकत्वादतद्वृत्तित्वान्न प्रवृत्तिरूपत्वम्, इत्येतच्च न, रजः स्वप्रवृत्तिवत् तदात्मन एव प्रवृत्तत्वात्, यथा रजसः स्वा प्रवृत्तिः प्रागवृत्तादि पश्चात् स्वत एव रजः स्वात्मनः प्रवर्तमानो रजसाविनाभूतत्वात् तदत्यागेन वृत्तेस्तदधीन-

१ °त्म त्वे° ग । २ त° ग । ३ °ख्या तत् प्रकाशस्य ग ।

त्वात् तद्रूपैव तदात्मन एव प्रवृत्तत्वात् । तथा सत्त्वप्रकाशप्रवृत्त्यनतिरिक्ततत्त्वरूपा रजःप्रवृत्तिर्नान्या प्रकाशाधीनत्वात् तदविनाभावात् तदपरित्यागेन वृत्तेस्तदात्मन एव प्रवृत्तत्वादिति। किं चान्यत्, अन्यथा हि न प्रकाशेतेत्युक्तत्वादुक्तं प्राक् सत्त्वं न प्रकाशाभावप्रवृत्तत्वात् पूर्ववत् पुरुषवदग्निप्रकाशवदप्रवृत्तस्वात्मत्वाद्वान्ये(न्ध्ये)यवदिति । तथैवान्यथा तु प्रवृत्त्यभावात् प्रकाशाप्रकाशितें रजसोऽप्रवृत्तेस्तस्माद् रजसोऽप्यन्यथावृत्त्यभावात् प्रकाश एव प्रवृत्तिरिति । स्यान्मतम्, प्रकर्षेण काशनं प्रकाशनमित्यादि, तदेव यावत् प्रवृत्तिवदिति प्रासङ्गिकम् । तत्रापि च सत्त्वस्यापि रजोवदपरिसमाप्तत्वादित्याद्यक्षरपरिवर्त्तेन यथायोगं यावदुत्थाप्यसाहायकशक्तित्वाद् वाताहतनौद्वयवत्, ग्लानशिबिकावाहकवत्, यावच्चोपहतबीजवदिति वाच्यम् । तस्मादिदं व्या[ख्या]ना(ता)र्थं प्रवर्तकाभावस्य चापर्याप्तत्वेनोक्तत्वादित्येवं चैकैकविनिद्रावस्थापुरुषत्ववत् प्रवृत्तिप्रधानमिति । तन्मात्रमेव तत् । एवं च कृत्वा विनिद्रावस्थायाः पुरुषत्ववत् प्रवृत्तेरेव प्रधानत्वमिति । तन्मात्रमेव तत्प्रधानं प्रवृत्तिमात्रमेव । किं कारणम् ? प्रवृत्त्यापत्तिरूपनिरूप्यत्वात् प्रवृत्तिस्वात्मवदित्यादि भङ्गचक्रावर्तनमिति ।

विनिद्रावस्थापुरुषत्वापादानग्रन्थमर्थसादृश्यादतिदिशति । तद्यथा— यथा विनिद्रावस्थैकलक्षण एव पुरुष आत्यन्तिकनिद्राविगमनरूपनिरूप्यत्वात् विनिद्रावस्थास्वात्मवदिति । तथा प्रवृत्त्येकलक्षणमेव प्रधानं प्रवृत्त्यापत्तिरूपनिरूप(प्य)त्वात्, प्रवृत्तिस्वात्मवत् [न ह्यसावितरात्मिका स्व[प्र]वृत्तित्यागापत्तेः, तन्मात्रत्वे तु प्रधानस्यापि तद्वत् प्रकाशाद्यनात्मकत्वादसर्वगतत्वम् । यथा प्रवृत्तिलक्षणमपि न प्रवृत्तिमात्रमेव प्रधानं सर्वत्वात्, न तु सर्वाण्येकस्यैव सर्वत्वात् । प्रवृत्तिरपि सर्वत्वात् प्रवृत्त्यात्मिका सती न प्रवृत्तिमात्रैव । प्रवृत्तिलक्षणत्वात्] प्रधानस्वात्मवत् ततश्च प्रतिगुणं तस्याः सर्वात्मकत्वात् तृणाद्यपि सर्वगतमिति किं प्रधानैकत्वमिति कल्पनया ? अतल्लक्षणत्वाप्रवृत्तिगुणाभावस्ततश्च तत्तत्त्वत्रिगुणसर्वात्मकप्रधानाभावः । अथ प्रवृत्तिलक्षणविपरीतमपि प्रधानं प्रधानमेवावधारणभेदात् । गुणस्वात्मनि गुण एव लक्षणमित्यवधारणम् । प्रधाने तु प्रवृत्तिर्लक्षणमेवेतरयोरप्यत्यागात् तद्ध्यनेकरूपं मेचकवत् नोक्तवदवधारणस्यान्याय्यत्वात्, प्रतिज्ञातव्याघातात् घटरूपादित्ववत् । प्रधानत्वं प्रागुक्तं गुणानाम् 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादि । इदानीं पृथक्स्वात्मानस्त उच्यन्ते इति तत्त्वम् । प्रधानस्य न प्रधानत्वं तेषां रूपादि घटत्वपक्षवत् । यदा च तेषामेव तत्त्वं ततस्तेषां तथेतरेतरात्मस्वभावादवधारणभिन्नभिन्नार्थत्वात् न तु तदेव सर्वासर्वगतत्वमिति लोक-

१ °त्माद्वा° प । २ °प्रकाशि° भ । ३ °स्त्वादि° भ । ४ °वचि° भ । ५ भङ्गव° भ ।
६ [ ] भ । ७ प्रवृत्तिस्वा° प । ८ °तं किं भ । ९ °त्त° प । १० °रिप्प° प, °रप्यत्या° भ ।
११ °त्वानुत° प ।

वदेव तत्त्वापत्तिः । अथ सर्वसर्वात्मकत्वादविकल्पशब्दार्थत्वाल्लक्षणमेव, कथं तर्हि [1]त्रिगुणवर्णनमनेकात्मकसर्वगतत्वभावगं च । तद्यस्यैकैकं प्रत्येकं गुणो न भवति ततोऽस्य कुतोऽसत्त्वात् तदेकत्वापत्त्यात्मिका अविकल्परूपता? न हि पृथगवृत्ते रूपे मेचकात्मके भवतः । असदेव तु तदेवमगुणत्वे अत्यात्मकत्वात् खपुष्पवत् । त्वदुक्तेरेव च तल्लक्ष्यं नार्थो न वस्तु, अलक्षणत्वात्, खपुष्पवत् । अर्थ्येत इतश्चान्यतरोपादानपरित्यागायुक्तत्वात् तल्लक्षणाभावादस्य दते(तदे)व तथा तत्रैव स्यात् प्रवृत्त्या सहैकत्वान्यत्वे प्रत्यवचनीयत्वात् । न तदेकं नान्यद् वाच्यं निरूपाख्यत्वात् । यत् तु सत् तत् प्रवृत्त्या सहैकत्वान्यत्वे प्रति वचनीयम्, यथा प्रवृत्तिस्वात्मा प्रकाशनियमात्मानो वाऽन्यतरोपग्राहपरित्यागायुक्तत्वादपि च । ननु रूपयुक्तत्व-वाच्यत्वाभ्युपगम एव पितृ-पुत्रत्ववत् प्रवृत्तिस्वात्मैव च त्रीणीति पुरुषावस्थावदिति । यथैव हि यदि पुरुषस्वात्मावस्थाः । न तर्हि ता(नाना)ता अनवस्थत्वात्, खपुष्पवदिति । तथैव यदि प्रधानस्वात्मा गुणा न तर्हि प्रधानं गुणत्वात् खपुष्पवत् । अभ्युपगमेऽपि तु प्रधानस्य गुणानां त्रयाणामप्यैक्यं प्रधानस्वात्मत्वात् प्रधानवदिति सर्वत्र सम्भाव्याभावादेव सर्वा(र्व)व्यापिता । प्रवृत्तिगुण एव हि प्रकाशगुणः प्रवृत्तिस्वात्मत्वात् प्रवृत्तिवत् । एवमितरोऽपि प्रकाश एव प्रवृत्तिः; प्रकाशस्वात्मत्वात् प्रकाशवत् । एवमितरोऽपि नियम एव च प्रवृत्तिनियमस्वात्मत्वान्नियमवत् । एवमितरोऽपि य एव चान्यो गुणः स एवेतरोऽपि एकस्वात्मत्वात् स इ(ए)व प्रकृतिरेवेदं सर्वमित्यतिदेशाभावो भेदाभावात् । उपवर्णनभिन्नरूपव्यतिकर-सङ्कराभ्यां त्वेवमतथात्वमेषामस्य च । ततः स्वात्मत्वादिति प्रधानगुणव्यवस्थाभाव एव उक्तवद् वा व्यवस्थानुमतौ प्रधानातिदेशस्त्याज्यः । तदत्यागे यदर्थमयमतिदेशो द्वौ नैकान्तार्थस्तस्यैवासिद्धिः । यत्तदेकमेव सम्भाव्यते प्रधानं तस्याप्यनेकतैवैवमापद्यते । यत्स्वरूपाव्यतिरिक्तलक्षणा गुणा विना भेदेनोच्यन्ते । तत्प्रधानमपि प्रधानेनाभिव्याप्तत्वात् अनवस्थितैकत्वतत्त्वप्रतिष्ठं प्रधानमित्यतिदेश्यं स्यात्, प्रधानस्वात्मत्वाद् गुणवत् । प्रत्यक्षार्थेदंविषयतायां वा व्यक्तमूर्तानित्यादिरूपार्थप्रधानपरमार्थतागुणस्त्वन्यत्वानेकत्व एव प्रधानवश्यमन्ये ते तस्मात् तद्रूपापरत्यनिष्टत्वाद् गुणान्तरवत् । यतो गुणस्वात्मत्वमस्य नेष्यते, प्रधानातिदेशात् तु पुनः स्वविषयकृतभेदद्वारानभ्युपगमे कस्यचित् कथंचिदप्यन्यस्यानुपपत्तौ तेऽप्यन्यत्वापत्तिवत् पृथक् पृथक् प्रधानम् । अथ प्रधानलक्षणापि प्रवृत्तिर्न प्रधानं, प्रधानमपि तर्हि न प्रधानं प्रधानलक्ष[णा]त्वात् प्रवृत्तिवत् । एवं शेषावपीति, प्रधानाभाव एव कुतोऽस्य सर्वगतता? तदभाव एव त्वया श्राय एवं प्रतिपाद्यते तदा सत्त्वाभिमत-

१ तृ° प । २ य° भ । ३ °ध्या° भ । ४ °र्थ्य° भ । ५ °स्या° भ । ६ °त्वादपि च ननुरूपयुक्तवा° भ । ७ वा भ । ८ °णत्वात्-भ । ९ °शाभेदा° भ । १० °दन° भ । ११ °व एवं° भ ।

निरसनादुष्णत्वनिरसनेनाग्न्यभावप्रतिपादनवत् । कृतं भङ्गचक्रावर्तनमापादितं चैकैकपूर्वकमिदम् ।

नानेकैकपूर्वकमित्येतदापन्नमित्याह— एवं चैकैकपूर्वकवादापत्तेरेवेत्यवधारणार्थत्वादेवकारस्य । ततश्च त्रिगुणप्रधानकारणकल्पनानर्थक्यमिति ।

अत आह—किमनेकात्मकैककल्पनया ? यदि प्रवृत्तिलक्षणप्रधानमेवैकं प्रकाशनियमप्रवृत्तिरूपेण प्रवर्तते। प्रवृत्तिरेव चैका त्रिगुणरूपा ततश्चोभयथाप्येकैककारणवाद एवेति । पृथगात्मकैत्रिगुणकारणकल्पनाव्याख्याया नाममात्रम् । तस्मादेकात्मकैकमेव व्यक्त्यन्तरसहस्रकारणायानेकाकारं भवति । यथा प्राग्वर्णितपुरुषादिकारणपूर्वकानन्तप्रभेदजगत्सृष्टिसमर्थं यत् तदेवास्त्वनेकाकारं, किं त्रिगुणमित्येतावतेति ।

किं चान्यत्, यद्यपि त्वदुक्तैर्हेतुभिः सङ्घातपारार्थ्यादिभिः प्रकृतेरन्यः पुरुषः सिध्यति। सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् पुरुषोऽस्ति भोक्तृत्वात्। कैवल्यार्थप्रवृत्तेश्चेति । तथापि च तस्य कारणस्य चेतनादन्यत्वे सत्येतानि स्वरूपाणि स्थितानि । चेतनस्य परस्यार्थे प्रवृत्तेरचेतनस्य भोक्तृत्वाद् रूपादिपरिणामिनोऽचेतनत्वाच्च । तेनैवाचेतनत्वेनैकत्वं स्थितम् । न ह्याचैतन्यस्य भेदोऽस्ति, परिणामित्वं चास्य तत एव स्थितमापत्तिभवनस्य रूपादिरूपस्य परिणामाख्यत्वात् तस्य च सन्निधिभवनाद् भिन्नत्वात् । यथोक्तम्—'तच्चेव ते पोग्गला परिणमंति ते चेव ते पोग्गला दुब्भिगंधत्ताए परिणमंति' त्ति । ततस्तस्य सङ्घातपारार्थ्यादिभिश्चेतना-[रूप]द्रव्यत्वे स्थिताचैतन्यैकत्व-परिणामित्वानिवृत्तयोऽस्य । तदिदं कारणं स्थिताचेतनत्वैकत्व-परिणामित्ववृत्ति । तच्च सुखमिति वा, [ दुःखमिति वा ] मोह इति वा। परिमाण(णामि)त्व इति वा, कारणमित्येव वा उक्तवत् उक्तेन तुल्यमुक्तवत्।

यथोक्तम्—'भिन्नात्मकतायां तु सत्त्वं न प्रकाशेताप्रवृत्तित्वात्' इत्यतः प्रवृत्तिं यावदेषोऽवधिस्तद्वदुक्तवदेव स्थापितात्मस्वतत्त्वप्रवृत्तित्वात्। आत्मस्वतत्त्वेन स्थापिताऽस्य प्रवृत्तिरित्यतः किमिति न गम्यते त्वया वक्ष्यमाणसाधनवदनन्ये सुखदुःखे ? इति। किं स्वपक्षरागान्मोहाद् वा मया वा किमिति नोच्यते ?। तत्त्वकथायां प्रस्तुतायां किमनुवृत्त्याऽऽयतिलोपायसो(शो)भयादिति वेति । किं पुनस्तत्साधनमिति चेत्, सुखादनन्यदेव दुःखमनात्मत्वे वरणाद्यात्मकत्वात् वरण-सदनापध्वंसन-बैभत्स्य-दैन्य-गौरवाणि वरणादीनि, वरणादीन्यस्यात्मा कार्यं तद् वरणाद्यात्मकं तमः, न वरणाद्यात्मकमवरणाद्यात्मकम् । किं तत् ? दुःखम्, तस्यानात्मत्वे

---

१ °कैकमि° भ । २ °त्ति° भं । ३ तृ° प ।

सत्यवरणाद्यात्मकत्वात् सुखादनन्यत्वमेव। किमर्थं पुनरनन्यदेवेत्यवधार्यते?। उच्यते–अवधारणेन च सुखादनन्यदेवेत्यनेना(न) वक्ष्यमाणसाधनान्तरापक्षिप्तान्यत्वो विपक्षाभावः सूच्यते। वक्ष्यमाणं साधनं सुखादनन्य एव मोह इति, तेनापक्षिप्तमन्यत्वं तमसोऽपीति विपक्षाभावः सोऽनेनावधारणेन सूच्यते। पुरुषस्तु स्यात् सुखादन्यत्वाद् विपक्षस्ततो व्यावर्तनार्थमनात्मत्वे सतीति विशेषणम्। सुखंस्वात्मवदिति दृष्टान्तः। यथा वरणाद्यात्मकत्वात्। सुखस्वात्मा सुखादनन्यः। एवं दुःखमप्यवरणाद्यात्मकत्वात् सुखादनन्यदिति। अन्यस्मादिति हेतोरव्यभिचारव्याख्यातम्। सुखादनन्यत्वेन दुःखे साध्येऽनात्मत्वविशेषणेनात्मनि निरस्ते साधनान्तरनिरस्ते तमसोऽन्यत्वे न किञ्चित् सुखादन्यदस्ति। तस्मादन्यस्य कस्यचिदभावाद् विपक्ष एवं नास्ति, विपक्षाभावादेवावृत्तिरसपक्षेऽस्य हेतोरित्यव्यभिचारी हेतुः। मोहेऽन्यत्वमिति चेत् तत् निवर्तयिष्यते व्याख्यातार्थस्फुटीक्रियादौ चोद्योत्तरपक्षौ गतार्थौ न विव्रियेते। अवरणाद्यात्मकत्वात् कुतोऽन्यत्वनिवृत्तिरिति चेत्।

स्यान्मतम्— वरणाद्यात्मकमोहप्रतिषेधादेवावरणाद्यात्मकाभ्यां सत्त्व-रजोभ्यां मोहस्य प्रतिषेध्यस्यान्यत्वं सिद्धं, तस्मान्न तदन्यत्वनिवृत्तिरिति। एतच्च नावरणाद्यात्मकत्वादिति। अवरणाद्यात्मकशब्दस्य विधिप्रधानपर्युदासात्मकत्वात्। नञो हि द्वयी गतिः, प्रसज्यप्रतिषेधः, पर्युदासश्च। यथा ब्राह्मणो न भवत्यब्राह्मण इति ब्राह्मणस्य निवृत्तिप्रधानः प्रसज्यप्रतिषेधः। ब्राह्मणादन्योऽब्राह्मणः क्षत्रियादिरिति क्षत्रियादिविधान[प्रधानः] पर्युदासस्तथेहाप्यवरणाद्यात्मकत्वादिति। वरणाद्यात्मकान्मोहादन्यदवरणाद्यात्मकं शोषादि-प्रसादाद्यात्मकं विधीयते। वरणाद्यात्मकत्वस्य तु विधिर्न ( विधानप्रधानः ) प्रतिषेधः, पर्युदासात्मकत्वात्, न तु प्रसज्यप्रतिषेध इति।

तदर्थसमर्थनार्थं दृष्टान्तमाह—**[अनपुंसकवचनादप्रतिषेधे]ऽनपुंसकसुटि सर्वनामस्थानत्ववत्**। "यथा नपुंसकादन्यत्र सुटि सर्वनामस्थानसंज्ञं भवतीति, स्त्री-पुंसयोः सुटः सर्वनामस्थानसंज्ञा विधीयते, नपुंसके तु शिः सर्वनामस्थानम्" इति विध्यन्तरविहिता सुटः सर्वनामस्थानता न विहिता न निषिद्धा, तथेहापि वरणाद्यात्मकत्वस्य न विधिर्न प्रतिषेधः। शोष-प्रसादाद्यात्मकत्वविधानादिति। स्यान्मतम्–वैषम्याददृष्टान्तोऽयम्। सम्बन्धिनः सुटः सर्वनामस्थानविधाने नपुंसकानपुंसकविषयत्वाविरोधाद् युज्येत। सर्वनामस्थानसंज्ञाविषयस्य तु नपुंसकानपुंसकत्वविरोधवद् वरणावरणाद्यात्मकत्वानुपपत्तिरिति। एतदपि च न वैषम्यायात्रापि न

---

१ °तेनात्म° भ। २ सुखा° भ। ३ स्वात्मदन्यः भ, °स्वा° पं। ४ °व्रि° प्र। ५ आव° प।

तुल्यत्वात् । तटस्तटं तटी स्त्रीपुंनपुंसकाः, स्त्रीपुंनपुंसकत्ववदेतत् स्यात्; एकस्मिन्नेव लिङ्गत्रयदर्शनात् । दृष्टं हि तटे लिङ्गत्रयम्, तटं तटस्तटीत्येकस्मिन्नेव । यदा च नपुंसकलिङ्गं तदा न स्त्रैणं न पौंस्नम् । पुंस्त्वे न स्त्रीता, न नपुंसकता । स्त्रीत्वे नेतरद्वयतेत्यस्त्रीपुंनपुंसकत्वं च । तथा वरणाद्यात्मकत्वमस्तु को दोषः ? सरूपैकशेषाकरणमनुकरणत्वाल्लिङ्गत्रयव्यत्त्यर्थमित्यदोषः । एवं तर्हि सुख-दुःखयोरपि वरणाद्यात्मकत्वादवरणाद्यात्मकत्वासिद्धिरेव । वरणाद्यात्मकत्वसिद्धौ चानन्यत्वासिद्धिरिति चेत् नेत्युच्यते—अवरणाद्यात्मकत्वेऽप्यनन्यत्वाद् वरणाद्यात्मकत्वस्य । अवरणाद्यात्मकत्वे अपि सुख-दुःखयोर्वरणाद्यात्मकत्वतोऽनन्ये तस्मादभिन्ने वरणाद्यात्मके एव, प्रसाद-शोषादिकार्यभेदेऽपि कारणत्वानात्मत्व-परिणामित्वादिभ्यः । किमिव ? अवरण-सदनादिमोहात्मकत्ववत् । यथा मोहात्मकानि वरणादन्यानि सदनादीनि वरणात्मक-मोहात्मकान्यप्यवरणात्मकानि । यथा वा मोहावरणविलक्षण-सदनापध्वंसन-बैभत्स्य-दैन्य-गौरवधर्मापि वर्णा(रणा)त्मक एव । [कार्य]-कारणयोरभेदाद् भेदाच्चान्यथा पौनरुक्त्यानर्थक्ये ग्रन्थदोषौ व्यपदेश्य-व्यपदेशाभावदोषश्च स्युः, नेष्यन्ते च तथा, तस्माद् वरणावरणाद्यात्मकत्वं मोहस्यासदनादीनां चैषितव्यम् । यथा चैतत् तथा सुख-दुःखे प्रसाद-शोषादयश्च वरणाद्यात्मकाः स्युः, तस्मात् सुख-दुःखयोरनन्यत्वहेतुव्यभिचारप्रदर्शनाय नासपक्षोऽस्तीति ।

किं चान्यत्, वक्ष्यमाणवच्च वरणाद्यात्मकत्वेऽप्यनन्यत्वादवरणाद्यात्मकत्वस्य प्रापितत्वात् । 'वक्ष्यति हि सुखादनन्यत् तमः, प्रकाशादनन्यो नियमः' इति च । तत्र तमसो वरणाद्यात्मकत्वे प्रसाद-शोषादिकार्यादेकस्मादेव सुखादनन्यत्वं साधयिष्यते, तमसोऽप्यतस्तस्मादनन्यत्वाद् वरणाद्यात्मकमप्यवरणाद्यात्मकं तमः सत्त्व-रजोवत् ।

किं चान्यत्, अवरणाद्यात्मकत्वस्य वर्णा(रणा)त्मके सत्येवानन्तरं प्रापितत्वात् य(त)था वक्ष्यमाणत्वादिति ।

इतर आह— असाधनमिदं, सर्वतुल्यत्वात् । प्रसिद्धिविरुद्धं सिद्ध्यति । प्रसङ्गात् प्रसिद्धिविरुद्धानामप्यर्थानां सिद्धिरेवं सति प्रसज्यतेऽर्थान्तरधर्म्य(र्म)—निवृत्त्या तयात्मत्वापादनात् । तद्यथा— शक्यते हि वक्तुं घटः कटादनन्यः, तन्त्वनात्मकत्वात् । यस्तन्त्वनात्मकः स कटादनन्यः । यथा घटः स्वात्मा । यः कटादन्यः स तन्त्वनात्मको न भवति, यथा पट इति; वैधर्म्येण पटवदित्युक्तम् ।

आचार्य आह— अथ सर्व[तुल्यता कथं दोषः ? स्वमतेन परमतेनेति प्रश्न उभयथाप्यदोष इति मन्यमानस्य यदि ते स्वस्मिन्नेव मते दोषस्ततस्तव प्रसिद्धिविरोधदोषा]शक्तिर्ममाभिमतैव त(त्व)त्प्रतिवादिनः, मम तु सर्वानन्यथापादनमभिमत-

मेव । भावपक्षवत् । यथा भावविधिविधिनयमतेऽनन्तरातीते सर्वानन्यत्वमिष्टमे-
तस्योदाहरणमात्रत्वादुक्तक्रमेण स्वभाव-काल-नियति-पुरुषपक्षवच्च । वक्ष्यमाणविधि-
नियमवच्च यथास्वमभिमता च । एवं तावत् परवाद्यभिप्रायवशात् त्वन्मते दोषा-
शक्तिरिष्टा, न केवलं पराभिमतेरे(ए)व । किं तर्हि ? अपि च स्वमतेऽपि सर्वानन्यत्वं
सुखाद्य[न्वयमात्रत्वात् सर्वस्य । न तु घ]टः कटादनन्यः, सुख-दुःख-मोहान्वितमेतद्
बाह्याध्यात्मिकभेदरूपं जगदिच्छतस्ते त्रैगुण्यजात्युच्छेदेन सर्वं सर्वात्मकमेव त्रैगु-
ण्यान्वयानतिरेकात् । को हि सत्त्वाद्यतिरिक्तः ?, यदि सत्त्व-रजस्तमोऽतिरिक्तं
किञ्चित् स्यात् सर्वसर्वात्मकवादे दोषः स्यात् । न त्वस्ति । तस्मात् तवैवादोषः ।
स्यान्मतम्—घटः कटे त्रिगुणोऽपि नास्तीति । ततश्च सत्कार्यवादत्यागो वा तत्रा-
भावात् । यदि सत्त्वादिगुणे मृदादौ कटादिर्न स्यात् त्रिगुणोऽपि तथा घटोऽपि
मा भूत् । अतोऽसन् घटः, पश्चादुत्पन्नस्तत्र प्रागभूत इत्यसत्कार्यवादः, सत्कार्य-
वादत्यागश्च प्राप्तः ।

किं चान्यत्, प्रकाशादिविविक्तस्वरूपगुणसमुदयाभ्युपगमाद् रूपादिस्कन्धसमु-
द[यवाद] एवायमपि, देशभिन्नयुगपद्भाव्यनिर्देश्यगुणसमुदयमात्रत्वात् । क्षणिक-
वादश्चायुगपद्भावि-पिण्ड-शिवकाद्यनिर्देश्यनिर्विकल्पार्थमात्रत्वादत एव च शून्यवा-
दापत्तिरनिर्देश्यस्वभावत्वात्, खपुष्पवत् । रूप-रस-गन्ध-स्पर्श[-संख्या]-संस्थाना-
दीनां घटादिषु दृष्टानामन्यत्वाद् [ वा ] विपक्षोऽस्तीत्याशङ्क्याथास्तत्रापि रूपादीनां
चाप्यनेनेत्यादि यावत् प्रत्युदाहरणाभाव एव । [न] रूपं रसादनन्यत्, अगन्धा-
द्यात्मकत्वाद्, रूपस्वरूपवदित्यादि प्रसिद्धिविरुद्धं सिद्ध्यति । प्रसङ्गोऽपि ते
त(त्व)त्प्रतिवादिनो दोषाशक्तिरभिमतैवेति । तदेव यावद् भावपक्षवदिति । पुनश्च
स्वमतेऽपि सुखाद्य[न्वयमात्र]त्वादित्यादि यावत् समुदायक्षणिकशून्यवादापत्तेरिति
समानश्चार्थः । एवं सुखादनन्यद् दुःखमित्येतद् भावितं, तमोऽनन्यदिति भाव्यम् ।
तदपि यथा च प्रकाशादभिन्ना प्रवृत्तिस्तथा नियमोऽप्यभिन्नः प्रकाशात् ।

प्रकाशानतिरिक्तताप्रदर्शनार्थं नियमलक्षणमाह— **प्रकाशस्वात्मत्वप्रति-
लम्भ एव हि तन्नियमः प्रकाशस्य स्वात्मा ।** प्रकाशनमेव तद्भावः प्रकाश-
स्वात्मत्वं तत्प्रतिलम्भ एव हि तदात्मलाभ एव हि तन्नियमः, रूपस्य रसस्य वा
प्रका[श]स्य(स्य) स्वरूपव्यक्तिर्नियमः । न हि छिन्नाभ्रनभसीव निराश्रयः कश्चि-
न्नियमोऽस्ति । तत्पर्यायः कथं नियमः प्रकाशानन्यता, प्रकाशस्वरूपमात्रमेतन्नि-
यमलक्षणं निरुध्य(द्य)ते, नान्यः प्रकाशाद् भिन्नो नियम इति, तत्र दोषदर्शनात् ।
को दोषः ? इति चेदुच्यते— भिन्नात्मकतायां प्रकाशान्नियमस्य, [ सत्त्वात्
तमसश्च सत्त्वं] सत्त्वमेव न स्यात्, प्रकाशो वा प्रकाश एव न स्यादिति वर्तते । तथा

अनियतत्वात् गुणान्तररूपापत्तिरहितस्य सत्त्वस्य प्रकाशस्य च गुणान्तरात्मनो गुणान्तरात्मापत्तिरहितत्वादित्यर्थः । शब्दो हि शब्दतया प्रकाशमानो रूपाद्यात्म-व्यावृत्तस्वरूपेण नियत एव प्रकाशतेऽन्यथा प्रकाशनाभावाद् व्यक्तभावादित्यर्थः । दृष्टान्तौ यथासंख्यं रजोवत् प्रवृत्तिवत् । यथा प्रकाशात्मना अनियतत्वाद् रजः सत्त्वं न भवति, प्रवृत्तिश्च प्रकाशो न भवति, तथा सत्त्वं सत्त्वं न स्यात्, प्रकाशः प्रकाशो न स्यादिति न केवलं गुणान्तररूपापत्तिरहित[स्य स्वात्माप्रति]लम्भ एव । किं तर्हि ? मूलत एव सत्त्वमेव तद्वा प्रकाश इति न स्यादित्यस्तित्वमेव निराक्रियते, अनियतत्वात् । यदि तत् स्वत एवानियतं ततो नास्ति तत् सत्त्वं वन्ध्यापुत्रवत् । न च तत् प्रकाशात्मकं पुरुषवदिति पूर्ववद् यथासंख्यं दृष्टान्तौ ।

इतर आह— **नन्वित्यादि, यावदनन्यथावृत्तता** । नन्वित्यनुज्ञापने । प्रकाशात्मकत्वादेव प्रदीपवत् सत्त्वस्य सर्वतो नियतानियतप्रकाशस्य महदहङ्का-रादिस्पर्शरूपादिपिण्डशिवकापूर्वोत्तरव्यक्त्यभिमुखतायां सत्यां प्रकाशनस्य सति नियामके कुड्यादावग्नेरिव कुड्यादिना वरणेन नियमत्वम्, नाव इव वा सर्वदिग्गमन-रोधिना लम्बनपाषाणेन गुरुणेव द्विधापि प्रदेशान्तरप्राप्तिरोधिना तमसा प्रकाशस्य दृष्टिनियम्यत्ववन्नियम्यत्वं तच्चानन्यथाप्रवृत्ता एवमेव ते प्रवर्तितव्यं नातोऽन्यथेति दृष्टत्वाच्चानपह्नवनीयो भेदः, नियम्य-नियामकयोस्तस्मादन्यो नियमः(मात्) प्रकाशा(शो), नियमः प्रकाशादिति ।

अत्रोच्यते— **यद्यनियतोऽसावसंस्तर्हि**, यदि स्वयमेवानियतः प्रकाशोऽसं-स्तर्ह्यसावनियतत्वाद् वान्ध्येयवत् । एवं हीत्यादि, एतस्यैव व्याख्यानमनिष्टापादन-द्वारेण कार्यकारणेऽस्तीति । एतद्दर्शनमेवमेव घटते यदि तत्तत्र नियतमिति । किमुक्तं भवति ? अनन्यथावृत्तीत्युक्तं भवति । यथा वर्तितव्यं तथैव वर्तते, नान्यथा, स्वात्मनैव च वर्तते, नान्येन केनचिद् वर्त्यते; तच्चानन्यथा वृत्तिरस्य तदिदमनन्यथा-वृत्ति कार्यं कारणे सदिति शक्यमभ्युपगन्तुम् । किं कारणम् ? तत्र सन्निधिर्वर्ततेः सत्तार्थत्वात् तत्र कारणे सन्निध्यर्थो वर्ततिः सत्तार्थः, सन्नियतो वर्तत इति । 'अस्ति-भवति-पद्यति-विद्यति-वर्ततयः सन्निपातषष्ठाः सत्तार्थाः' इत्यत्र वर्तते । सन्निधिभवनार्थवाचित्वाद् वर्तते नियतः सन्निहितोऽस्तीत्यर्थः ।

इतर आह— **नाधिक्येनायतत्वात्**, निशब्दस्याधिकार्थत्वादधिको यमो नियमः, सोऽत्र विवक्षितो, न सन्निधिमात्रवृत्तिः । कोऽसावधिको यमः ? तमोऽ-नुग्रहाद्यः, स च नान्यथा व्यक्तिरूपता तमसाऽनुगृहीतस्य [सत्त्वस्य] शब्दादिरूपेण रूपान्तरनिवृत्त्याऽनन्यथावृत्तिरूपता । शब्दोऽयं, न रसो न रूपं नाकाशादिर्वेति ।

तस्मात् सत्त्वं तमोऽनुगृहीतं तथा प्रकाशते न स्वत एव, तस्मादन्यः प्रकाशान्नियम इति । एतच्चासत् । तमसोऽपि सत्त्ववत् पृथगपरिसमाप्तरूपत्वात्, सत्त्वप्रकाशननियमना[त्] स्वयं सत्त्वप्रकाशनाकाङ्क्षित्वात् तमस्त्वन्मतेनापरिसमाप्तमेव तमो नियमनापेक्षप्रकाशात्मकसत्त्ववत् । तद्व्याख्यानम्—**तमसोऽपि ह्रीत्यादि** । तमः सत्त्वप्रकाशरूपव्यक्तिं सत्त्वप्रकाशनप्रतिलब्धतया नियतिः(तिं) कुर्यात्, नाप्रकाशिततया नियतिव्यक्तिः(म्) । किं कारणम्? तस्य तथाऽव्यक्तेः सत्त्वप्रकाशनप्रतिलभ्यत्वात् । यस्मात् तथाप्रकाशनं व्यक्तिरिति । इतिशब्दस्य हेत्वर्थत्वात् । नियमनयोग्यतया हि तमसः प्रकाशनं सत्त्वस्य व्यक्तिः । सा च प्रकाशात्मकसत्त्वानुग्रहाद् भवति, नान्यथेति । सत्त्वाप्रकाशिततमोनियमनापरिसमाप्तरूपत्वं प्रकाशाननुग्रहे सत्यनियतत्वात् । न च स्वयमनियतं नियमयितुमन्यं समर्थं वन्ध्यापुत्रवत् इत्यत आह—**अनियतं च कथमन्यनियमने प्रवर्तेतेत्यादिरत** उत्तरः प्रागतीतग्रन्थातिदेशः । **एवं तु नानयोरित्यादिपूर्वोत्तरपक्षप्रपञ्चात्मको यावन्न परिणामस्य तत्रैवोक्तत्वादिति** । तद्यथा— **एवं तु नानयोरितरेतरानुग्राहिता** उत्थाप्यसाहायकशक्तित्वाद् वाताहतनौद्वयवत्, ग्लानशिबिकावाहकवत् असम्पूर्णशक्तिता वा प्रकर्षः अनियतं[1] इत्यर्थः । इति कारणेनै(णतै)व न स्यादसम्पूर्णशक्तित्वादुपहतबीजवत् । असत्कारणादिभ्यश्चान्यतो न तत्स्वरूपप्रकर्षः । यदा च सुदूरमपि गत्वा प्रागवृत्तेरसत्कार्यत्वं मा भूदिति । प्रकर्षः परिणामादेव, तदा परिणामस्यान्यत्र वृत्तस्यापरिणामकत्वात् । युवत्ववन्मात्रवृत्तित्वमेव । नान्यत्र वृत्तोऽन्यदन्यथा करोति परिणामित्वात् । एवं तर्हि पूर्ववदुदाहरणादेवाप्रवृत्त्यात्मकत्वं सुखस्यानियतरूपेणाप्रवृत्त्यात्मकत्वमित्यर्थः । को हि विशेषः तमःप्रवर्तनाद् ऋते क्षीर-दधिपरिणामकालवत् पूर्वं न प्रवृत्तं पश्चाच्च? प्रवृत्तमिति न, परिणामस्य तत्रैवोक्तत्वादित्येष ग्रन्थः समानोऽत्रापि । अत्र(त) उत्तरस्तु ग्रन्थोऽर्थतः समानगमनिकोऽपि विशेष्य लिख्यते भावनार्थं विशेषणातुल्यत्वात् । तद्यथा— प्रकाशात्मैव तु नियम इतरथा स प्रकाशो न संस्तथाऽनियतत्वात् तथा अभूतत्वादित्यस्यैवार्थकथनं प्राक्तनव्याख्यानवत् । रूपादिस्वरूपनियतार्थप्रकाशनात् प्रकाशः स्यान्नान्यथेति त्वन्मतेन, घट-पुरुषवत् । यत्तथा अनियतं तन्न प्रकाशो यथा घटः पुरुषे न नियतो घटे च पुरुषः । यो यः प्रकाशः, स तथा नियत एव; यथा रूप-रसादि । लोकप्रतीतोदाहरणमेव घटपटवद् वेति । एवं तावत् प्रकाशस्य रूपान्तरनिवृत्तिरूपं नियममन्तरेण प्रकाशनाभावप्रदर्शनान्नियमात्मकत्वमुक्तम् । इदानीं य एव नियमः स एव प्रकाश इति तयोरनन्यत्वापादनम्—**तथानियतत्वात्** । तेन प्रकारेण नियत-

---

१ °म भ । २ °म° भ ।

त्वात् । रूप-[रस]प्रकाशनरूपेण रसाद्यात्मनिवृत्त्या प्रकाशस्य नियतत्वात्, तथा प्रवृत्तत्वादित्यस्यैवार्थकथनं वृत्ति-नियति-व्यक्तीनामैकात्म्येऽ घट-घटस्वात्मवत् । यत् तथा नियतं, यत् तथा वृत्तं, यत् तथा व्यक्तं; तदेव तत् । यथा घट एव घट-स्वात्मा । यत् पुनस्तदेव न भवति, न तत् तथा नियतं, तथा वृत्तं, तथा व्यक्तं वा । यथा पुरुषः । नियम्य-नियामकत्वान्नौलम्बनपाषाणवद् यथा नौः प्रवर्तमानान्निय-म्यते लम्बनपाषाणेन नियामकेन; तयोश्चान्यत्वमेवं सत्त्व-तमसोरिति । एतच्च न, **तदात्मन एव, तथानियतत्वात्** । तस्यैवात्मा स एव वाऽऽत्मा स तदात्मा तस्यैव प्रकाशात्मनो नियतत्वात्, तस्मादेव तेनैव वाऽऽत्मना प्रकाशात्मन एव नियतत्वात् सत्त्व-तमसोर्भेदाभावात् नौलम्बनपाषाणवद् भेदसाधर्म्याभावादयुक्तो दृष्टान्त इति वक्ष्यते । तद्व्याख्यानार्थमाह– **सन्निधिमात्रात् पूर्ववदनियम-नात्** । इह तमः सन्निहितमपि प्राक् सन्निधिमात्रादेवानियामकं, स्वयमनियत-त्वात्, सत्त्वाधीननियतित्वात्, किन्तु नियम्यमनियमात् । कस्तर्हि नियामकः ? उच्यते–य एवासौ सत्त्वस्यात्मप्रकाशः स नियामकः । कथमिति चेदुच्यते– यस्मात् तथानियम्यव्यक्तिस्वरूपस्तेन प्रकारेण शब्दादिनियति( तं ) नियम्य व्यञ्जनस्वरूपः, स एव प्रकाश एव । कुतः ? । **तथा नियमविधिः**–तेन हि प्रकारेण नियमस्य विधिः । शब्दस्वरूपेण प्रकाशमानस्य शब्दस्य रूपाद्यनात्मनो नियता प्रकाशमानता नियमविधिः । तस्मात् हेतोः प्रकाश एव नियमः । दृष्टान्त इतरकर्तृवत्, कुम्भ-कारादिवत् । यथा मृद्द्रव्यं पिण्ड-शिवकादिभावेनाभिव्यज्यमानं तथा तथा प्रकाशयता कर्त्रा कुम्भकारेण नियमकारिणा निर्वर्त्यते नियम्यते नियते रूपेऽव-स्थाप्यते; नाप्रकाशमानमप्रवर्तमानं च सत्कार्यवादाभ्युपगमात्, असदकरणादि-हेतुसामर्थ्याच्च । तस्मात् स कर्ता प्रकाशस्थानीयो नियामकः पिण्ड-शिवकादेर्निय-म(म्य)स्य तथा प्रकाशस्तमसः । कुतः ? **तमोनियमात्मरूपापादनात्** । सत्त्वेनैव हि तथा प्रकाशमानेन तमसो नियमरूपमाप(पा)द्यते, मृद इव । तथा प्रकाशयता कर्त्रा कुम्भकारेण तदात्मलाभहेतुत्वात् । ततस्त्वदभिमतनियामकत्व-विपर्ययापत्तिस्तमसो नियम्यत्वात्, सत्त्वाधीननियतित्वात्, सत्त्वस्यैव नियामक-त्वात् पक्षधर्मविपरीतता सत्त्वापाद्यनियमा[त्म]रूपता प्रसक्ता । सत्त्वाप्रका-शिते नियमाभावात् । सत्त्वापादितं हि तमसो नियमात्मरूपं, तस्मात् तमोनिय-मात्मरूपापादनात् सत्त्वं नियामकम् । इतरतथारूपापादनात् तमोवत् । तमोऽपि हि इत्यादि, तमसोऽपि हि नियामकत्वमेव युज्यते **त्वन्मते** । यदीतरयोः सत्त्व-रज-सोरात्मरूपापादनं कुर्यादन्यथा इतरस्वरूपापादनाद् ऋते तमः किमन्यत् करोति ? । तयोर्हि सत्त्व-रजसोरात्मरूपापादनमेवात्मरूपमापाद[य]न्नियामकमित्युच्यते ।

यथा तमः पूर्वं प्रकाश-प्रवृत्त्यात्मकत्वेनानियतयोः सत्त्व-रजसोस्तथा नियमनान्नियामकम् । एवं सत्त्वमपि । इतरतथानियमात्मरूपापादनान्नियामकमस्तु को दोषः ? । एवं च नौवत् तम एवापद्यते । एवं च सत्त्वस्यैवोक्तविधिना नियामकत्वान्नौस्थानीयं नियम्यं तम एव स्यान्न नियामकम् । लम्बनपाषाणस्थानीयं सत्त्वमेव नियामकं, न नियम्यं स्यात् । किं कारणम् ? **तथाप्रकाशस्य नियम्यत्वात्** । यस्मात् तेनोक्तप्रकारेण प्रकाशेन नियम्यत्वं मोहस्य, तस्मात् तमसः सत्त्वेन नियम्यत्वादित्यर्थः । तस्मात् प्रकाशाप्रकाशिते तमसो नियत्य(म्य)भावात् । तमसः प्रकाशेन तथा नियम्यत्वात् तदात्मन एव [तथा]नियतत्वादिति साधूक्तम् । एवं तावत् सत्त्व-तमसोर्भेदमभ्युपेत्य विपर्ययापत्त्या नियम्य-नियामकत्वादित्यस्य हेतोरसिद्धिरुक्ता । नैव वा सत्त्वव्यतिरिक्तं तमोऽभ्युपेम इति । अत आह– **तथा प्रकाशानतिरिक्ततत्त्वरूपत्वाद् वा नियमस्य** । शब्दप्रकारेण रूपादिप्रकारेण च यः प्रकाशस्तदनतिरिक्ततत्त्वरूपत्वान्नियमस्याभिव्यक्तेः कुतोऽनौलम्बनपाषाणभेदसाधर्म्यम् ? न नौरनौः, कः ? लम्बनपाषाणः, तस्य नावो भेदः, तत्साधर्म्यमनौलम्बनपाषाणभेदसाधर्म्यम्, तत्तु कुतः सत्त्व-तमसोर्भेदसाधर्म्यं ? भेदाभावादित्यर्थः । ततो दृष्टान्त-दार्ष्टान्तिकयोः साधर्म्याभावादयुक्तमिति वैषम्यं दर्शयति– भेदे सति लम्बनपाषाणो नौविलक्षणो नावं प्रवर्तमानां निरुणद्धीति युज्यते, न तु तथा प्रकाशातिरिक्ततत्त्वरूपो मोहो नियामकोऽस्त्येतयोः शब्दाद्याविर्भावमात्रफलत्वादतो न युज्यते । न तद्रूपत्वमतद्वृत्तित्वादिति चेत् स्यान्मतम्– प्रकाशनमात्रं सत्त्वस्य वृत्तिर्नियमनं तु तमसः, तस्मात् सत्त्वस्यानियमनादतद्वृत्तित्वाद् वृत्तिभेदाच्च न नियमनं सत्त्वस्य, तमसश्च न प्रकाशनमित्यस्ति भेद इति । एतच्च न, 'तमःस्वनियमवत् तदात्मन एव नियतत्वात्' । यथा तमसः स्वो नियमः प्रागवृत्तः, पश्चात् स्वत एव तमःस्वात्मनः प्रवर्तमानस्तमसो विना अभूतत्वात्, तदत्यागेन वृत्तेस्तदधीनत्वात् तद्रूप एव तदात्मन एव प्रवृत्तत्वात्; तथा सत्त्व-प्रकाश-प्रवृत्त्यनतिरिक्ततत्त्वरूपस्तमोनियमः सत्त्वाव्यतिरिक्तः प्रकाशाधीनत्वात् । तदविनाभावात् तदपरित्यागेन [प्रवृत्तेस्तदात्मन एव] प्रवृत्तत्वादिति ।

किं चान्यत्— **अन्यथा सत्त्वमित्यादि** । यदि स्वत एव नियमो न स्यात्, ततोऽन्यथा सत्त्वं सत्त्वमेव, प्रकाशो वा प्रकाश एव न स्यात्; तथाऽनियतत्वाद् रजोवत् प्रवृत्तिवत् । मूलत एव तद्वा प्रकाश इति न स्यादनियतत्वाद्, वन्ध्यापुत्रवत्, पुरुषवदित्युक्तत्वादिति । तथाऽन्यथा तु नियत्यभावात् प्रकाशाप्रकाशिते तमसो नियत्यभावादनियतस्य चाभावात् प्रकाश एव नियम इति ।

**स्यान्मतम्**— प्रकर्षेण काशनं प्रकाशनमित्यादि, यावत् प्रवृत्तिवदिति प्रासङ्गिकं

तदेव चोद्यं, तत्रोत्तरमपि सत्त्वस्यापि तमोवदपरिसमाप्तरूपत्वादित्याद्यक्षरविपर्यासेन यथायोगाक्षरोपन्यासं यावदुत्थाप्यसाहायकशक्तित्वाद् वाताहतनौद्रयवत्, ग्लानशिबिकावाहकवत्, यावद्धोपहतबीजवदिति वाच्यम् । तस्मादिदं व्याख्यातार्थं नियामकाभावस्य चापर्याप्तत्वेनोक्तत्वात् । एवं चैक एव विनिद्रावस्थापुरुषत्ववदित्यादि, यावद् भङ्गचक्रावर्तनमिति प्रागुक्तं भङ्गचक्रमावर्त्य व्याख्येयमिति । तदेवातिदिशति समानत्वात्– तत्र तु प्रवृत्तिरेव प्रधानं, प्रवृत्त्यापत्तिरूपनिरूप्यत्वात्, प्रवृत्तिस्वात्मवदिति प्रवृत्तिमात्रत्वे प्रधानभङ्गचक्रकमावर्तितम्, इह तु प्रवृत्तिस्थाने नियमं कृत्वा, प्रधानस्थाने प्रधानमेव च कृत्वा भङ्गचक्रावर्तनं तद्वदेव कार्यम् । पुनश्च नियमः स्वात्मैव वा त्रीण्यपीति पुरुषावस्थावद् भङ्गचक्रावर्तनं द्वितीयं लिखितं यथा तथाऽत्र प्रवृत्तित्रैगुण्यवन्नियमत्रैगुण्यं लिखितं द्रष्टव्यमिति । भङ्गग्रन्थपरिवृत्तिपरिमाणमप्याह– यावत् **सुखादनन्यद् दुःखमितीयदूरम्** । अत्र तु विशेषः । **सुखादनन्यो मोह** इति प्रतिज्ञा, हेतुरनात्मत्वेऽशोषाद्यात्मकत्वादिति । दृष्टान्तः सुखस्वात्मवदिति । इत्यादि साक्षेपपरिहारं पूर्ववदिति । अवधारणेन चोक्तसाधनान्तरापक्षिप्तान्यत्वो विपक्षाभावः सूच्यत इत्यादि सर्वातीतव्याख्यानप्रपञ्चातिदेशः तद्व्याख्यानोपायदिग्मात्रप्रदर्शनं चैतत् **प्रवृत्तिस्थाने नियमं कृत्वेति** ।

**न चापीदमेकत एव तत्त्वमित्यादी**त्युत्तरस्य विकल्पोत्थापनग्रन्थस्य सम्बन्धः । सुखात् दुःख-मोहयोर[न]न्यत्वं तत्त्वमुक्तम्, तत्त्वानेकतः सामान्य-विशेषभावात् । सामान्य-विशेषभेदभावाद् यथा वृक्ष इति सामान्यम्, कदम्ब इति विशेषः । यथाऽत्र कदम्बो नियमाद् वृक्षो वृक्षस्तु स्यात् कदम्बोऽन्यो वेत्यनेकतस्तत्त्वम् । तथा यदि सामान्य-विशेषभावः स्यात्, स्यादेकत एव तत्त्वम्, न तु तथेह सुख-दुःख-मोहानां सामान्य-विशेषभावोऽस्तीति । किन्तूभयतोऽनन्यत्वादभिन्नत्वादेकत्वादित्यादिना सत्त्व-रजस्तमसामेकत्वापादनार्थं पूर्ववत् सर्वमेव प्रक्रमभेदैः स एव तथैव ग्रन्थः प्रवृत्त्या प्रकाशविशेषितया मोहविशेषितया नेयस्तथा च भाष्य एव सुलिखितत्वान्न विव्रियते । **सन्निहितापत्तिभवन-सत्तार्थत्वमयथार्थं स्यादिति** । अत्र तु विशेषः– आपत्तिभवनं सन्निधिभवनाविनाभावे युज्यते, नान्यथा; यदि तद्रूपादि बीजे न सन्निहितं ततोऽङ्कुरस्यासत्त्वाद्यापत्तिः स्यात् । सत् कार्यं कारणे चेति द्वैविध्यं च भवनस्यैवमेव युज्येत आपत्त्यनापत्तिभेदाभेदादिति । शेषं पूर्ववत् । सत्त्वेन तमसा च सह भावनायां कृतायां पुनश्च तथैव तमसोऽपि सत्त्वेन रजसा [च] तद्वदेव **भावनाग्रन्थो निरवशेषो लिखित**

---

१ °एनिरू° भ । २ °त्वाद् प । ३ सहितं भ । ४ °रविशे° प ।

**आचार्येणैवेति न विवृण्महे।** स एवानुसर्तव्यः। **सर्वत्र च भेदचोद्येषु।** प्रवर्त्य-प्रवर्तकत्वात् पल्लव-पवनवन्नेति चेन्न तदात्मन एवेत्यादि, तदेव सत्त्व-रजः-संयोगेऽपि प्रकाशार्थ(र्थि)-प्रकाशभेदा[त्] नर्तकी-नर्त्तकाचार्यवन्नेति चेन्न। तया-(दा)त्मन एवेत्यादि। सत्त्व-रजः-संयोगे सत्त्व-तमःसंयोगे च नौलम्बनपाषाणवन्नेति चेन्न तदात्मन एवेत्यादि। सत्त्व-तमःसंयोगे रजस्तमः-संयोगे च तत्र प्रकाशन-प्रवर्तन-नियम[न]वचनानि च यथोपपत्ति योज्यानि। कुतोऽपल्लव-पवनभेदसाधर्म्यम्?, कुतोऽनर्तकी-नर्तकाचार्यभेदसाधर्म्यम्?, कुतोऽनौ-लम्बनपाषाणभेदसाधर्म्यम्? इति चोपनयेषु द्वयं द्वयं द्वयोर्द्वयोर्गुणयोः सम्भवित्वाच्चोदयित्वा परिहार्य-मिति। एवं [च] तावत् सुख-दुःख-मोहानां प्रकाश-प्रवृत्ति-नियमात्मकानामनन्य-त्वात् **'एकात्मकैककारणपूर्वकत्वम्'** इति साध्वभ्यधामेति।

एवं त्वनभ्युपगम इदं निरूप्यमित्यादि। एवमेकात्मकैककारणानभ्युपगमे **सांख्यैरिदं** निरूप्यं कतमत्? यत्तद्भिन्नात्मकत्वं परिगृह्य प्रयुक्ते कार्ये कारणम-मीत्यभिहितम्– 'अस्ति प्रधानं भेदानां कार्य-कारणभावादाध्यात्मिकानां वाक्या-(बाह्या)नां च भेदानां कार्य-कारणभावो दृष्टः। आध्यात्मिकानां कार्यात्मकानां वक्ष्यामः सत्त्व-रजस्तमांसि त्रीणि शब्दाद्यात्मभिर्व्यवतिष्ठमानानि परस्परार्थं कुर्वन्ति' इत्येवमादि। एतत् कथं निरूप्यते? वक्ष्यमाणेषु विचारविकल्पेषु यथा यथोच्यते, तथा तथाऽनुपपत्तिरि(रे)वेति। इतिशब्द[स्य] हेत्वर्थत्वान्निरूपणाभाव एवेत्यभिप्रायः। तद्विचारोद्देशार्थं साधनमाह–

**अनेकात्मकत्वकारणकल्पना असद्वाद एव सम्भाव्यविकल्पानु-पपन्नार्थत्वात्।** अनुपपन्नसम्भाव्यविकल्पार्थत्वादित्यर्थः। येऽत्र सम्भाव्यन्ते विकल्पास्तेऽनुपपन्नार्था इति वक्ष्यति; तस्मादयमसद्वाद एव। दृष्टान्तः– **तदुक्त-सत्यत्वानुपपन्नार्थ–सर्वोक्तानृतत्वपक्षवत्।** तेनैवोक्तस्तदुक्तः सर्वमनृत-मिति पक्षः, स एवोक्तस्तदुक्तो वा, असौ सत्यश्चेन्न तर्हि सर्वमुक्तमनृतम्, अस्य सत्यत्वात्, पू(स)र्वोक्तान्तःपातित्वाच्च। अथासत्यमिदम्, न तर्हि सर्वस्योक्तस्या-[नृतत्वमनेना]नृतेन प्रतिपाद्यतेऽस्यानृतस्याप्रमाणत्वादित्युभयथाऽप्यसद्वादस्तृतीय-विकल्पाभावाच्च। तथेयमपि त्रिगुणमेकं कारणमित्यनेकात्मकैककारणकल्पना-[ऽ]सद्वाद इति। तत् पुनः कतमद् वचनमिति? तत् प्रदर्शयन्नाह–

यदुच्यते– सत्त्व-रजस्तमांसीत्युद्देशवाक्यं यावत् परस्परार्थं कुर्वन्तीति निर्देश-वाक्यं च सत्त्वं शब्दकार्यमित्यादि यावत् प्रवृत्तिं प्रख्यापयतीति[1]। एतदसद्वाद-धर्मेण पक्षीकृतं वाक्यम्। अत्र च द्वयं सम्भाव्यते तृतीयाभावात्, तद्दर्शयति–

१ प्रत्याख्या° प.।

**प्रकाशात्मकेनेत्यादि**, यावत् **प्रख्याप्यते** इत्ययमेको विकल्पः, सत्त्वं प्रकाशात्मकं सत् तदात्मकयोरेव रजस्तमसोः शब्दात्मना व्यवस्थानेनेति स्वयं शब्दात्मना व्यवतिष्ठमानं तेनात्मनोपकुर्वत् तयोः शब्दात्मभावाय प्रवृत्तिः प्रख्याप्यते। का सा प्रवृत्तिः ? व्यक्तिरित्यर्थकथनं प्रवृत्तिं प्रख्यापयतीत्येतदेव स्फुटीकर्तुकामः प्रवृत्तिः प्रख्याप्यत इति विभक्तिविपर्यासेन निङ्गोत्याख्यातेनाभिहितकर्मकत्वात् । प्रथमया एष प्रथमः प्रश्नविकल्पः।

द्वितीयस्तु [प्रकाशात्मकयोः,] उताप्रकाशात्मकयोरिति रजस्तमसोरप्रकाशात्मकयोर्वा तत् सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानं शब्दात्मभावाय प्रवृत्तिं ख्यापयतीति प्रश्नः। प्रकाशात्मकयोरित्येष विकल्पो न घटत एव, सत्त्वरजस्तमसां जात्यन्तरत्वाभ्युपगमात् प्रकाश-प्रवृत्ति-नियमकार्यत्वभेदात् सुख-दुःखमोहात्मकभेदाच्च रजस्तमसी न प्रकाशात्मके इति ।

अत्रोच्यते— **यद्यप्रकाशेत्यादि**, यावद् **रजस्तमसी इवेति** । यद्यप्रकाशात्मके रजस्तमसी शब्दात्मभावाय प्रख्याप्येते ततस्तद्वत् सत्त्वं पुरुषस्यापि तर्हि शब्दात्मभावाय प्रवृत्तिं प्रख्यापयिष्यति । तदर्थविवरणम्— शब्दत्वायैनं प्रवर्तयिष्यति, शब्दत्वपरिणामेनैवं(नं) परिण[म]यिष्यतीत्यर्थः । सत्त्वेन शब्दकार्यप्रख्यातिना शब्दात्मना व्यवतिष्ठमानेन पुरुषः शब्दात्मभावाय प्रवर्त्यतेऽभिव्यज्यते व्यवस्थाप्यते च । अप्रकाशात्मकत्वात् । यद् यदप्रकाशात्मकं तत् तत् सत्त्वेन शब्दकार्यप्रख्यातिना [शब्दात्मना व्यवतिष्ठमानेन] शब्दात्मभावाय प्रवर्त्यं [व्य]ङ्ग्यं व्यवस्थाप्यं च दृष्टं यथा रजस्तमश्च विपक्षाभावाद् व्यावृत्तिवाच्यौ (च्ये)। तत्साधनव्या[ख्या]नद्वारेण साधनान्तरोपन्यासद्वारेण वा ग्रन्थः **अप्रकाशात्मकेनेत्यादिः**, यावद् **रजस्तमोभ्यामिवेति** । अपिशब्दाद् रजस्तमोभ्यामपि, तेनापि च पुरुषेणाप्रकाशात्मकेन शब्दभावाय प्रवर्तितव्यं, प्रकाशितव्यं, व्यवस्थातव्यमित्येते प्रवृत्ति-प्रकाश-नियमाः पुरुषकार्याः स्युः । स प्रवर्तते, प्रकाशते, व्यवतिष्ठते परिणमतीत्यर्थः। कुतः? प्रकाशकोपपत्तेः तस्याप्रकाशकत्वे सत्युपपन्नप्रकाशकारकत्वादित्यर्थः । यद् यदप्रकाशकत्वे सत्युपपन्नप्रकाशकारकं तेन तेन शब्दभावाय प्रकाशितव्यं, प्रवर्तितव्यं, व्यवस्थातव्यम् । यथा रजसा तमसा च । अथवा रजस्तमश्च यथा प्रवर्तत इत्यादि यथाभिव्यक्तार्थानुरूपं व्याख्यातव्यमिति ।

एतस्य साधनस्यानैकान्तिकत्वोद्भावनार्थं साधनद्वारेण परमतमाशङ्क्याह— य(अ)थोच्येत— **अप्रकाशत्वान्नैकान्त इत्यादि**, सोपसंहारहेतुकप्रकाशनाप्रकाशनसाधने यावत् **प्रकाशे इति** । अप्रकाशत्वान्नैकान्तः शक्यते कर्तुमित्ययं हेतुर्न शक्य मै(ऐ)कान्तिकः कर्तुं, यस्माच्छक्यते वक्तुमित्थमपि— पुरुषः सत्त्वान्न

प्रकाशते न व्यज्यत इति । कस्मात् ? अप्रकाशकत्वे सन्निहितप्रकाशकारकत्वात् । यदप्रकाशकत्वे सन्निहितप्रकाशकारकं तदप्रकाशमानं दृष्टम् । यथा प्रदीपेनेव वियत् । रजस्तमसी च[न]प्रकाश्य(शे)ते अप्रकाशकत्वात् प्रदीपेनेव पृथिवीत्येतत्पूर्वेण साधनेन व्याख्यातार्थं सत् सन्निहितप्रकाशकारकत्वादिति न विशेष्यते । यथा च वियत्-पृथिव्योरप्रकाशत्वसामान्ये सत्येव कारकसान्निध्येऽपि प्रकाशाप्रकाशौ दृष्टौ; एवं पुरुषस्याप्रकाशात्मकत्वेऽप्यप्रकाशतैव रजस्तमसोः, सत्त्वस्य प्रकाशतैवेति विशेषोऽस्त्विति ।

अत्रोच्यते— एवं तावद् विकल्पसमजातित्वादनुत्तरमेव प्रयत्नानन्तरीयकत्वे सत्येव मूर्तामूर्तत्वादिविशेषवद् घट-शब्दयोरनित्यो नित्यश्चेति विशेषः स्यादिति वचनवत् । किं चान्यत्– एतदपि च नैव वियतोऽप्रकाशकत्वम् । त्वन्मतेनैव शब्दात्मना प्रकाशमानत्वादस्ति । यदपि च रूपविषयाप्रकाशनं पृथिव्यादिष्वेतदपि च नैवाप्रकाशनं घटते यस्माद् रूपादीत्यादि, यावत् नाप्रकाशत्वे प्रकाशनमिति । यस्मादिति हेतुर्वक्ष्यमाणार्थो, नाप्रकाशनं घटत इति साध्यम् । रूपादिरिति– रूप-रस-गन्धास्तेजोऽम्भो-भूमिषु; तेभ्यः पृथग्भूतावाकाशानिलौ शब्द-स्पर्शात्मकौ रूपादिपृथग्भूताभ्यामेव वा ताभ्यां पृथग्भूता विपरिणतिर्येषां तेषु रूपादिपृथग्भूत-पृथग्विपरिणतिषु पृथिव्यादिषु पृथिव्यबादिषु तेजोरहितेषु विद्यमानः प्रकाशकत्वप्रकाशः स्वगतोऽतो विपरिणतस्तिरोभूतः, किन्तु प्रकाश्य-प्रकाशोऽस्त्याविर्भूतत्वादतस्तेषां प्रकाश्यतैव, क्वचिदत्यन्तमतिरोभूतत्वाद् वज्रा-(ज्ञा)दिषु प्रकाशकता च दृश्यत एव । तस्मात् खरपृथिव्यादिषु प्रकाशता स्वगत-प्रकाशविपरिणामाद् विद्यमानप्रकाशकतैव । बोध्य-बोधकमनुष्यप्रकाश्य-प्रकाश-कत्ववत् । ज्ञानस्वभाव एव हि मनुष्यः प्रकाशात्मा प्रकाश्यो बोध्यो बोधकश्च दृष्टः, न कुड्यादिरचेतनः; तथा पृथिव्यादयः । मनुष्यग्रहणमस्यैव रथ्या-पुरुषस्योदाहार्यत्वात् ।

स्यान्मतम्– बोधक-बोध्ययोर्हेतु-हेतुमद्भावान्नोभयोरुभयधर्मतेति दृष्टान्त-दार्ष्टा-न्तिकवैषम्यमिति, एतच्चायुक्तम् । यस्माद्धेतुमत्त्वेऽपि तयोः सूरि-शिष्ययोर्द्वयोरपि प्रत्येकं नाप्रकाशत्वे प्रकाशनमिति । तस्मान्न वियत्-पृथिव्योरपि प्रकाशकत्वसा-म्याद् दृष्टान्ताभावे पुरुषस्य रजस्तमसोश्च विशेषोपपादनासिद्धिः । अथापि त्वदनु-वृत्त्या वियत्-पृथिवीविशेषोपपत्तिमभ्युपेमः, पुरुषस्याप्रकाशत्वे सत्यप्रवर्तनादि, रजस्तमसोश्च प्रवर्तनादि, तथापि ते वियत्-पृथिवीविशेषोपपत्तिवच्च त एव प्रवर्तेते रजस्तमसी, न पुरुष इत्यस्तु नाम, नैवास्तीत्यभिप्रायः । किं त्वयमन्यस्ते दोषोऽनिष्ट आपद्यते– प्रकाशात्मके तर्हि रजस्तमसी सत्त्व-विलक्षणे न भवत इत्यर्थः । कुतः ?

शब्दात्मभावाय प्रवृत्तेः, सत्त्ववत्। यच्छब्दा[त्म]भावाय प्रवर्तते, तत्प्रकाशात्मकं दृष्टं, यथा सत्त्वम्। वैधर्म्येण पुरुषवदिति। यत् प्रकाशात्मकं न भवति, न हि तच्छब्दात्मभावाय प्रवर्तते, यथा तव पुरुष इति।

किं चान्यत्– असत्कार्यवादिनो(ता)ऽत्यन्तानिष्टा प्रसक्ता, एवमनभ्युपगम इति प्रवर्तते। सा चासत्कार्यवादिताऽतिस्फुटैव। कथम्? सत्त्वे प्रवृत्ति-नियमयोरभूतयोः शब्दात्मव्यवस्थानवचनादभ्युपगमात् सत्त्वस्य कार्यं प्रकाश एवेष्टो, न प्रवृत्ति-नियमौ जात्यन्तरभूतरजस्तमस्कार्यत्वात्। तौ तत्रासन्तौ पुनस्तस्य कार्यावभ्युपगतौ। कुतः? व्यवस्थानवचनात्। सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानमिति ब्रुवताऽभ्युपगमादितीति। तदा यदि तत् सत्त्वमप्रवृत्तमनियतं वा पूर्ववदप्रवृत्तत्वादनियतत्वाच्च तयोस्तथारूपां शब्दात्मिकां [प्रवृत्तिं] न प्रख्यापयन्नेव स्याद् वन्ध्यापुत्रवदित्युक्तत्वात्। व्यवस्थानस्य च प्रकाश-प्रवृत्ति-नियमात्मकस्य प्रागसतः सत्त्वविषयस्यारम्भावस्थायां साम्यावस्थाविलक्षणायामभ्युपगतत्वादसतोः प्रवृत्ति-नियमयोः सत्त्वाभ्युपगमादतिस्फुटः(टा)।

किं चान्यत्– रजस्तमसोरित्यादि, यावत् प्रकाशनस्याभ्युपगमादिति। असत्कार्यवादिताऽतिस्फुटैवेति वर्तते। तस्मिन्नेव सत्त्व-प्रकाशात्म-व्यवस्थानोपकार-वाक्ये रजस्तमसोः शब्दभावाय प्रवृत्तिं प्रख्यापयतीति वचनात् तयो रजसि तमसि च प्रागसतः प्रकाशस्य जात्यन्तरकार्यभूतस्य तदानीं प्रख्यापनादसतोऽभिव्यक्ति-रुत्पत्तिर्वाऽभ्युपगता। यदि ते रजस्तमसी तथा प्रतिपद्येते व्यवतिष्ठेते प्रवर्तेते वा, ततः सत्त्वेन प्रकाशितं न स्यादाचार्येणेव नर्तक्याः प्रागप्रतिपन्नाया अप्रवृत्ताया अव्यवतिष्ठमानायाः। तस्मात् प्रकाशोऽपि तयोः प्रागसन् पश्चाद्या(ज्ञा)त इत्य-सत्कार्यवादिता।

सेदानीं वैशेषिकासत्कार्यवादितया तुल्येति भाव्यते– पृथग्भूततत्त्वेत्यादि। पृथग्भूतं तत्त्वमात्मा कार्यं तद्भावो यस्य स पृथग्भूततत्त्वो गुणः स एवाश्रयः कारणं च तस्मिंस्तस्मिन् गुणे सत्त्वे रजसि [तमसि] च वैशेषिककल्पितपटादिकार्यस्य च तन्त्वादिषु परस्परसंयोगापेक्षेष्वसतो भवनवत् प्रकाश-प्रवृत्ति-नियमानां कार्याणां सत्त्वे प्रवृत्ति-नियमयोरसतोः प्रकाश-नियमयोश्च रजसि [प्रवृत्ति-]प्रकाशयोश्च तम-स्यसतां परस्परापेक्षप्रवृत्तिषु सत्त्वादिषूत्पत्तिर्भवनमुक्तं भवति। प्रागसन्तः प्रकाश-प्रवृत्ति-नियमाः शब्दाद्यारम्भकाल उत्पन्ना इति प्रतिपद्यस्या(स्व)पृथग्भूततत्त्वक-(का)रणाश्रयाभिव्यक्तेः वैशेषिकाभिमततन्त्वाश्रयपटवत्।

किं चान्यत्– तैर्यथास्वमित्यादि। वैशेषिकाभिमतकार्यादप्येतत् पापीयो भ्रान्तिमात्रत्वात्। उक्तन्यायेन ते सत्त्वादिषु प्रकाशादयः कारणेष्वसन्तः; यथास्वं

योज्यः(यः) स्वो यथास्वं प्रकाशः सत्त्वे नास्ति, इतरापेक्ष उत्पन्न एवमितरावपीति । तैरकारणसद्भिः प्रकाशादिभिरारब्धं परस्पराश्रयणेन व्यक्तं प्रवृत्तं नियतं च यत् कार्यं त्रिगुणं शब्दादि तदप्यलातचक्रवद् भ्रान्तिमात्रं, न परमार्थतोऽस्तीत्यापन्नम् । त्वदुक्तहेतुसामर्थ्यादेव तन्मयाऽऽरब्धत्वादसदात्मकं हि तत् त्वयैवोक्तं हि– 'यच्च यन्मयैरारब्धं, तदात्मकं तत्' इति शब्दादीनां सुखाद्यात्मकत्वं शब्दाद्यारब्धानां भूतानां, भूतारब्धानां च शरीरादि-घटादीनाम्, तस्माद् वयमपि तथैव ब्रूमः–'शब्दादि असदात्मकम्, तन्मयैरारब्धत्वात्, कार्पासिकतन्त्वारब्धपटकार्पासिकत्ववत् । यथा कार्पासिकैस्तन्तुभिरारब्धः पटः कार्पासिक इत्युच्यते; तथा शब्दाद्यसन्मयं तन्मयप्रकाशाद्यारब्धत्वादिति । तन्मयतन्मयं चेति । यदपि च भूतादि, शरीरादि, घटादि, सर्वमसदात्मकं; तन्मयं तन्मयारब्धत्वात्, कार्पासिकपटकुटेरपि कार्पासिकत्ववदिति तच्छास्त्रप्रसिद्धमेवोदाहरणं रूपादि-सुखादिमयत्ववदिति शब्दस्यासन्मयत्वे साध्ये रूपादि-सुखादिमयत्वमुदाहरणम् । रूपादीनामपि तथैवासन्मयत्वं शब्दादि-सुखादिमयत्वदृष्टान्तेनापाद्यमिति ।

अथोच्येत– एवमेव तत्कारणत्वम् । तेषां सत्त्वादीनां कारणत्व[मेव]मेव युज्यते, [तत्र च] तेषु सत्त्वादिषु कारणेषु शब्दादिकार्यसत्त्वमेवमेव युज्यते प्रतिस्वं प्रकाशादिकार्याणां शुक्ल-रक्त-कृष्णतन्त्वात्मि[काया रज्जोः] कार्यायास्तन्तुकारणत्ववद् यथा प्रत्येकं शुक्लादिगुणास्तन्तवस्त्रयोऽपि त्रिगुणामेकां [रज्जुमा]रभमाणाः कारणत्वं नातिवर्तन्ते [त]तस्तेषु सत एव त्रैगुण्यस्याविर्भावाद् रज्जोः सत्कार्यत्वं, तथा सत्त्वादिकारणत्वं शब्दादिसत्कार्यता चेति ।

अत्रोच्यते– न त्वेवमित्यादि[यावत् सत्त्वस्वात्मवदि]ति । एवमेवेति यदे[तद्वचनं] तस्य द्वयी गतिः । यद्वाऽस्मदुक्तवद् एकात्मकं कारणमनेकाकारविपरिवृत्ति पुरुषवदित्यभ्युपगमादिति । तद्दर्शयति सकारणं यथाऽस्मदुक्तवद् वैकत्वं रजसस्तमसी अपि सत्त्वमेव । प्रकाशकारणत्वं च तयोर्यथा प्राग्व्याख्यातं सिद्धम् । अत एव तस्यां गतौ दोषः स एव पुरुषाद्यन्यतमैककारणवादाभ्युपगम इति । अथ त्वन्मतेन जात्यन्तरसुखादित्रयकारणतदात्मककार्याभ्युपगमे[नैवमे]वेत्येषा गतिरिति ।

इतर आह– 'एषा गतिरस्तु, को दोषः ?' इति ।

अत्र दोषकुतूहलं चेद् ब्रूमः– सर्वव्यक्तव्यापि चेत्यादि । तदेव ह्यसत्कार्यत्वमित्थं भावनान्तरेणापाद्यते– सर्वव्यक्तं शब्दादि तन्तु-पटादि वा व्यापितुं शीलमस्य तदसत्कार्यत्वम् सर्वव्यक्तव्यापि । कस्माद्धेतोः ? प्रतिगुणं प्रकाशाद्योर्द्वयोः कार्यात्मनोः प्रागभूतत्वात् । गुणं गुणं [प्रति] प्रतिगुणं, सत्त्वे

द्वयोः [प्रवृत्ति-नियमयोः] प्रागभूतत्वादेव कार्यात्मनोः, तथा रजसि प्रकाश-नियमयोः, तमसि प्रकाश-प्रवृत्त्योः कार्यात्मनोरभूतत्वादन्यगुणकारण-कार्यात्मनामन्यत्रा[भि]व्यक्तिः प्रवृत्ति-नियति-कार्याणामसतामुत्पत्तेर्व्यवस्थानवचनात्, प्रख्यापनवचनाच्चाभ्युपगतत्वात् । तस्माद् वैशेषि[क]कार्यवदसत्कार्यत्वम् ।

न केवलं वैशेषिकवदेव, किं तर्हि ? बौद्धवद् वा असत्कार्यत्वम् । वरं हि वैशेषिकासत्कार्यतुल्य[त्वं] तदसत्कार्यत्वस्य कारणैः सह कश्चित् कालं तिष्ठत इति तैरिष्टत्वादिदं बौद्धासत्कार्यत्वतुल्यमेव ते प्राप्तम् । कुतः ? तथाभूतवस्तुनिर्मूलोत्पत्तित्वात् । तेन प्रकारेण भूतं वस्तु शब्दो रूपमित्यादिना तथाभूतवस्तुनो निर्मूला उत्पत्तिस्तद्भावात् तथाभूतवस्तुनिर्मूलोत्पत्तित्वात् । किमर्थं पुनर्निर्मूलोत्पत्तित्वादिति सिद्धे तथाभूतवस्तुग्रहणम् ? दृष्टान्तद्वयेनार्थद्वयप्रदर्शनार्थम् । तद्यथा– द्वितीयक्षणप(घ)टवत् । यथा क्षणः क्षणान्तरेऽनुत्पन्न एवोत्तरस्मिन् पूर्वो निरुध्यते, उत्तरश्च तदनन्तरमुत्पद्यते निर्मूलः । नामोन्नामौ तुलान्तरयोरिवेत्युक्तत्वात् । तत्सहचरितं च घटादिवस्तु पूर्वस्मिन् निरुद्धे पाश्चात्यस्य पाश्चात्यस्यो(स्यो)त्पादाभ्युपगमान्निर्मूलोत्पत्त्ये चेत् (वेति) पुरुषदृष्टान्तः । साध्यं चोभयं, तत्साधर्म्यादिदमपि सत्त्वादि प्रकाशादि कार्यं, शब्दादि सांख्य[मत]मिति योज्यम् । तस्मान्निर्मूलोत्पत्तिः साधर्म्याद् बौद्धासत्कार्यवादतुल्यतेति ।

एवं प्रकाशाद्यसत्कार्यत्वे [सिद्धे] सर्वव्यक्तासत्कार्यत्वसाधन[म]सत्कार्याः शब्दादयः कारणत्वात् यद् यत् कारणं तत् तदसत्कार्यं दृष्टम्, अन्यगुणात्मकसुखप्रवृत्त्यादिवत् । अन्यो गुणः सत्त्वाद् रजः, तस्यात्मा सुखं, तच्च स्वयं साम्यावस्थायामेकप्रकाशात्मकार्यमपि सञ्जात्यन्तररजस्कार्यं प्रवृत्त्यात्मकमारम्भावस्थायामिष्टम् । त्र्यात्मकशब्दाद्यात्मव्यवस्थानवचनात् । तथा नियमात्मकमपि आदिग्रहणादतः [सु]खं सत्त्वगुणं प्रागसत्प्रवृत्तिनियमकार्यं पश्चात् तत्कार्यं दृष्टं कारणं च तत्त(द्व)च्छब्दादयोऽसत्कार्याः कारणतां च बिभ्रतीति । एवमन्यगुणदुःखप्रकाशनियमवत्, अन्यगुणमोहप्रकाशप्रवृत्तिवदित्येकैकमेव दृष्टान्तं कृत्वा योज्यम् । एतस्यार्थस्य स्फुटीकरणार्थमाह— **इतरानुपकृताविद्यमानप्रकाशादित्रयसुखादिकारणवदिति** । इतरेण रजसा तमसा चानुपकृतौ प्रागसन्तौ [प्रवृत्ति-नियमौ । पश्चात् तदुपकारजनितौ सुखे कारणे दृष्टौ । आदिग्रहणादेवं दुःखे प्रकाश-नियमावितरानुपकृतौ प्रागसन्तौ] पश्चात् तदुपकारजौ । तथा मोहेऽपीति । यद्येवं नेष्यते ततः प्रत्येकमितरानुपकृतविद्यमानप्रकाशादित्रयस्वकार्या वा सुखादयः कारणत्वात् शब्दादिवत् तन्त्वादिवद् वेति । स्वशब्दादेकस्यैव सत्त्वगुणस्य त्रयोऽपि प्रकाशादय आत्मीया एव कार्यास्तथेतरयोश्चेति पुरुषादिवाद एवैष

संज्ञामात्रविप्रतिपत्तेरिति । एवं तावदप्रकाशात्मकयो रजस्तमसोः शब्दात्मना व्यवतिष्ठमानेन तत्प्रख्यातिना सत्त्वेन ते [तदात्मप्रख्यापने] दोषा उक्ताः । यदि चैवं सत्कार्यवादस्योत्खातमूलत्वप्रसङ्गभयादसत्कार्यवादस्य [प्रतिष्ठितमूलत्वप्रसङ्गभयाच्च नेष्यतेऽयं विकल्पोऽप्रकाशात्मकयोरिति । ततः प्रकाशात्मकयोरित्यस्तु, तत्रापि च दोषं वक्तुकाम इदमाह—

**अथ प्रकाशात्मकयोरित्यादि, यावन्नेष्यत** इति गतार्थम् । ततो यथैवेत्यादि, दृष्टान्तमेव तावत् प्रक्रिया-प्रसिद्धमुपवर्णयति । कारणे कार्यस्य] सत्त्वाद् घटेनैव घटः क्रियत इति । मृत्पिण्डघटेनोर्ध्वग्रीव-कुण्डलौष्ठ-पृथुकुक्षि-बुध्नादिघटः क्रियते प्रकाश्यते, करोतेः प्रकाशार्थत्वात्; यथा पृष्ठं कुरु, पादौ कुरु; तच्च करणं विमलीकरणं प्रकाशनमित्यर्थः । कारणे कार्यस्य सत एव प्रकाशनात् । सर्पस्फटा-[टो]पमुकुलत्ववत् दीर्घकुण्डलकीभाव[व]त्, तत्र यथा सर्पेणैव सर्पः क्रियते, तथेहापि घटेनैव मृदा घटः पृथुकुक्ष्याद्याकाराः(रः) क्रियन्ते(ते), अत्यन्तभिन्नेनान्येनान्यस्याकारणात् ।

किं चान्यत्, **तदात्मव्यक्तिप्रतिनियतस्वसाधनक्रमसमावेशात्** घटात्मत्वस्य व्यक्तिः प्रागनुपलभ्यस्य पश्चादुपलब्धिः सा प्रतिनियतानामात्मीयानां कुलाल-दण्डादीनां तत्क्रमस्य च कालाख्यसाधनत्वात् पिण्ड-शिवकादिभावेषु यथावस्थं व्याप्रियमाणानां क्रमेण व्यापारादित्यर्थः । तद् दर्शयति— कारणघटेन कार्यघटोऽभिव्यज्यत इति । कथं व्यज्यते ? इति चेदुच्यते— तथोक्त(तथाभूतव्यक्तिशक्ति)स्थूलतापत्त्या, पृथक्(थु)कुक्ष्यादिप्रकारेण व्यक्तिशक्तिरस्य(स्यां) मृद(द्य)-शक्तिमत्यां सूक्ष्मावस्थानादुत्तरकालं देश-कालाद्यवबन्धापगमात् स्थूलतापत्त्या इन्द्रियग्राह्यतया निर्मज्र्यदर्पणस्वरूपोपलब्धिवत् कर्मैव सद् वस्तु कर्तृ भवति, मृद एव घटत्वात् । मृदेव हि घटो भवति । घटमात्मानमात्मनोऽवस्थान्तरमात्राविशिष्टमवस्थान्तरमात्रविशिष्टेन करोति कर्तुरेव कर्तृ[र्म]त्वाभ्युपगमात् । कुलाल-दण्डादीनां तर्हि साधनत्वाभावः, स्वयमेव मृदः कर्तृ-कर्मत्वाभ्युपगमात् । घटस्यैवेति चेत्, न, अत एव तत्साधनत्वात् । वीरणादितोऽकरणात् । असदकरणादिहेतुभ्यो मृद्येव सन्तं घटं कुलाल-चक्र-दण्डादयोऽभिव्यञ्जयन्तः कर्तृ-करण-सम्प्रदानापादानाधिकरणादिभावं प्रतिलभन्ते तद्विषयमेव, न वीरणादिविषयं, न तन्त्वादिविषयं, तदात्मगतव्यक्तिशक्तिप्रतिनियतस्वसाधनक्रमसमावेशादेव । तानि च कारणानि परस्परोपजनितकार्यसाधनशक्तीन्येकप्रबद्धेन प्रवर्तमानानि कारणानी(काणी)-त्युच्यन्ते, नान्यविषयाणि । तस्मात् कुला[ला]दीनामपि तथैव कर्तृत्वादिभावोपपत्तेः । 'घटेनैव घटः क्रियते' इति साधूक्तम् ।

एवं दृष्टान्तमात्मनैवात्मानं प्रकाशयति करोतीति प्रतिपाद्य दार्ष्टान्तिकं प्रतिपादयति— **तथैव सत्त्वेनेत्यादि** । यथा कारणे कार्यस्य सत्त्वाद् घटेनैव घटः क्रियत इत्युक्तम्, तथा कारणे कार्यस्य [सत्त्वात्] सत्त्वेन सुख-प्रकाशादिकारणात्मना तदात्मकं सत्त्वमेव प्रकाश्यते मृद्घटावस्थावत्, तद्दर्शयति— शब्दादिप्रकाशेनापृथग्भूतप्रकाशादितत्त्वम् । किं तत्? आकाशादि । रूपाद्यपृथग्भूततत्त्वाया मृदो घटे तदपृथग्भूततत्त्व-घटादिप्रकाशवत् । प्रकाशापृथग्भूतेन प्रकाशापृथग्भूततत्त्वं प्रकाश्यत इत्यर्थः । प्रकाशापृथग्भूतावेव प्रवृत्ति-नियमावपीति । तद्दर्शयति— शब्दादिप्रवृत्त्या शब्दादिनियमेन तदप्याकाशादि । यथा प्रकाशापृथग्भावात् प्रकाश्यते, तथा प्रवर्त्यते, नियम्यते चेति । तद् विस्तरेण पर्यायशब्दान्वाख्यानेन भावयति—

**अपृथग्भूततत्त्वेनेत्यादि** । अपृथग्भूततत्त्वत्वादेव तेन सत्त्वेन प्रकाशेन प्रवृत्तिसत्त्वेनेते(ति) प्रकाश-प्रवृत्त्योरैक्यं दर्शयति । एवकारेणावधारणार्थेन । ततः पृथग्भूतार्थाभावं च दर्शयति । अत एव चाह—अनपेक्ष्य(क्ष)या स्वशक्त्या । यदुक्तं भवति प्रकाशेनापृथग्भूतत्वेनासत्त्वेनेत्यादिपर्याया(यै)स्तदुक्तं भवति । प्रवृत्तिसत्त्वेन प्रवृत्त्या स्वश(व्य)क्त्या व्यक्तिराविर्भावो 'जनी प्रादुर्भावे, प्रादुः प्राकाश्ये प्रकाशो जन्माभिव्यक्तिरित्यनर्थान्तरम्' । प्रकाशात्मयोरेव [रजस्तमसोरिति वचनादपृथग्भूतं तत्त्वं प्रकाशादीनामर्थान्तरं(र)निरपेक्षमिति । यथा प्रकाश एव प्रवृत्तिरिति दर्शितं, तथा प्रवृत्तिरेव] प्रकाश इति दर्शयति— आविर्भावेन प्रवृत्त्या प्रवृत्तिसत्त्वेन प्रवृत्तिसत्त्वमेवानपेक्ष्या(क्षा) स्वव्यक्तिः स्वतः पृथग्भूतप्रकाशनियमानपेक्षा स्वात्माभिव्यक्तिरित्यर्थः । तत्पर्यायकथनमाविर्भावः प्रवृत्तिरिति ।

तथा **नियमसत्त्वेनानपेक्षेणे**त्यादिना ग्रन्थेन प्रकाश-प्रवृत्त्यनर्थान्तरभूतो नियम एव सत्त्वं रजश्चेत्यत आह— **स्वशक्त्याविर्भावेन स्वनियत्या** । का च सा नियमसत्त्वमेवानपेक्षा स्वव्यक्तिः? पूर्ववत् । स्वप्रवृत्तिः स्वनियम इत्येकार्थ इति प्रागुपपादितत्वात् । प्रकाश एव प्रवृत्तिर्नियमश्च, यस्मात् प्रकाशमानः प्रवर्तते नियतश्चार्थ इति । एवं प्रवृत्तिरेवेतरद्वयं, यस्मात् प्रवर्तमानं प्रकाशते [नियतं] च । नियम एवेतरद्वयम्, नियतो ह्यर्थः प्रकाशते प्रवर्तते । तस्मादिहापि तदेव भावितमैक्यमिति ।

कथं तर्ह्येकमेव प्रकाश-प्रवृत्ति-नियमभेदप्रत्ययव्यपदेशभाग् भवतीति?

अत्रोच्यते । **अत एषामेकपुरुषप्रवृत्त-श्यामायताक्ष-प्रलम्बबाहुत्ववत्** । यथैकस्मिन् पुरुषे प्रवृत्तानि तद्व्यतिरिक्तानि श्यामत्वमायताक्षत्वं प्रलम्बबाहुत्वमित्येतानि भिन्नानीव तद्भेदप्रत्ययव्यपदेशभाञ्जि भवन्ति । **तथैकवर्त्त्व-**

त्यादिनोपसंहरति— एकस्य वस्तुनः स्वतत्त्वभूता[नां त]दभिधानप्रयोजनानां सत्त्व-रजस्तमसां तत्कार्याणां च प्रकाशन-प्रवृत्ति-नियमानाम[व्यतिरेकैक]वृत्तिता। इति परिसमाप्त्यर्थः। एवं तावदेतया भावनयाऽऽपादितैक्यानां सत्त्वादीनां सत्त्व-[स्वा]त्मत्वेनैव कर्तृ-कर्मत्ववृत्तिरुक्ता परस्वरूपापादनेन भेदमभ्युपगम्य।

इदानीं फलाभेदान्नैव भेद इति [प्रति]पादयिष्यन्नाह— [सत्त्व]सत्त्वेनैव [सत्त्व]-सत्त्वं प्रकाश्यते, त्रयाणामपि सत्त्वरूपत्वस्यापादितत्वात्। सत्त्व-सत्त्वं, रजः-सत्त्वं, तमः-सत्त्वमिति भिद्यते। तस्याभेदः फलाभेदा[दा]पाद्यतेऽधुना— यत् तत् सत्त्वं सत्त्वमेव भवति, नान्यद् भवति, रजस्तमो वा। तत् सत्त्वसत्त्वं तेन [सत्त्व]सत्त्वेनैव प्रकाश्यते व्यज्यते तदेव सत्त्वस्यैव भवनं व्यज्यते स्फुटीक्रियते, पूर्ववत् कर्तृ-कर्मभावोऽवस्थावशात्, तद् दर्शयति— [व्यक्ति]परिणामेन मृत्सत्त्वे यद् विद्यमानं सत्त्वसत्त्वं घटप्रकाशसत्त्वं तेनैव तद् व्यज्यते स्वपरिणामेन; सदेव हि सत्त्वेन परिणमति, नासत्। यथोक्तम्— 'अत्थित्तं अत्थित्ते परिणमति' इति। [भग० ] यदुक्तं भवति, व्यक्तीभवतीति तदुक्तं भवति। सत्त्वसत्त्वेन [सत्त्व]-सत्त्वं प्रकाश्यत इति। सत्त्व-सत्त्वमिति च विशेषणं रजःसत्त्व-तमःसत्त्वाभ्याम्। तयोरपि त्वन्मतप्रसिद्ध्या सत्यपि भेदेऽस्मदुक्तवदभेद एवेत्यभिन्नफलत्वादैक्यमापाद्यम्। किं कारणम्? यस्मात् 'सतो हि भावः सत्त्वं' यस्मात् त(स)देव सद् भवति, तस्मात् तदेव सत्त्व[सत्त्वं]तत्त्वं तद्भावः परिणाम इत्यनर्थान्तरं 'तद्भावः परिणामः' [तत्त्वार्थसूत्रे ५।४१] इति वचनात्। तद्धि प्रवर्तमानं न किञ्चिदपेक्षत इति प्रवृत्ति-नियमानपेक्षेण सत्त्वसत्त्वेनेति। एवं रजःसत्त्वेन [सत्त्व]सत्त्वं प्रकाश्यत [एव] इति वर्तते। पूर्ववद् व्यक्तिरिति प्रकाशैकार्थ्यम्। किमुक्तं भवति? व्यक्तिप्रवृत्तिपरिणत्या प्रकाशनप्रवर्तनपरिणामेन। तथैव प्रवृत्त्यात्मिकया व्यक्त्यैवेत्युक्तं भवतीत्यैक्यं दर्शयति— एवं तमःसत्त्वेनेत्यादि। व्यक्तिनिय[म]-परिणामेनेत्यक्षरविपर्यासमात्रेण भेदादर्थैक्यापादनं गतार्थम्, यावद् व्यक्त्यैवेत्युक्तं भवतीति। सत्त्वेनैव व्यक्त्यात्मना प्रवृत्तेन नियतेनावश्यं भवितव्यमन्यथा तत्स्वरूपादि(द्य)भावादित्युक्तत्वात्। एवमेव रजःसत्त्वेन सत्त्वसत्त्वं प्रकाश्यते, व्यक्तिः व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवति 'सतो हि भावः सत्त्वम्'। तथा रजःसत्त्वेन रजःसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणतिर्व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवतीति तथैव गमनीयम्। तथा रजःसत्त्वे[न तमःसत्त्वं] प्रकाश्यते, व्यक्तिनियतिपरिणतिः व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवतीति। तथा तमः-सत्त्वेन [सत्त्व]सत्त्वं प्रकाश्यते, व्यक्तिनियतिपरिणत्या नियमेनैवेति 'नियतो हि

१ °वृत्त्या परस्पर–प। २ सत्त्वं तमः सत्त्वमिति भ।

भावो व्यज्यते प्रवर्तते' । तथा तमःसत्त्वेन रजःसत्त्वं प्रकाश्यते, व्यक्तिप्रवृत्तिनियतिः नियतिप्रवृत्तिपरिणत्या नियत्यैवेत्युक्तं भवति । तथा [तमःसत्त्वेन] तमःसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियत्यैवेत्युक्तं भवतीति तदेव भावितम् ।

एवमेव चेत्यादि । यथा सत्त्व-रजस्तमसां नवधा विकल्पा उक्ताः, तथा सत्त्वप्रकाशेन सत्त्वप्रकाशः प्रकाश्यत इति सत्त्वप्रकाशेन रजःप्रकाशस्तमःप्रकाशश्चेति त्रयः, रजःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्चेति [त्र]यः, तमःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाश इति त्रयो विकल्पाः । 'प्रकाश्यते, प्रवर्त्यते, नियम्यते' इत्यनेनैव ग्रन्थेन त्रयोऽप्यर्था ऐक्यमापादनीयाः प्रत्येकं नवस्वपि योज्या इत्यर्थः । एष दार्ष्टान्तिकोऽप्यर्थो व्याख्यातः, स इदानीं दृष्टान्तेन साधर्म्येणोपसंह्रियते– सर्वाऽप्येषा मृद्-घटव्यक्तिव्यक्तिस्थूलतैव यथा प्रागुपवर्णिता कारणे कार्यस्य सत्त्वात् मृद्यनभिव्यक्त(क्ता)या घटव्यक्तिशक्तेः स्थूलतोर्ध्वग्रीवादिव्यक्तेन्द्रियग्राह्यता सैकैव, तथा सत्त्वप्रकाशादिप्रपञ्चा व्यक्तिरेकैव एकार्थविषया सत्त्वमिति वा, रज इति वा, तम इति वा, प्रधान इति वा. यथेच्छसि, तथाऽस्तु । सर्वथाऽप्येकस्य कारणाख्यस्य वस्तुनः सूक्ष्मस्य [स]तः स्थूलतैव व्यक्तिरिति तद्विषया व्यावर्ण्यत इति । इति विचारपरिसमाप्त्यर्थः । यत् प्रतिज्ञातं 'सत्त्वं प्रकाशात्मकयोश्चेद् रजस्तमसोः शब्दभावाय व्यवतिष्ठते । तत एकात्मकैककार[ण]त्वमिति तत् सत्त्वम(साध्व)भ्यधामेति' ।

तथा [त्वया] यदुच्यते रजः शब्दकार्यमित्यादिग्रन्थस्यापि समानदोषत्वात्प्रसादनार्थोऽतिदेशः भाष्य एव सुलिखितातिदेशोपायत्वान्न विव्रियते । विशेषणविन्यासोपायश्च सुलिखित एव प्रकाशस्थाने प्रवृत्तिं कृत्वेत्यादि सर्वमनुगन्तव्यं यावद् वायुमिति । तथा तमः शब्दकार्यमित्यादि तथैवानुगन्तव्यं यावल्लम्बनपाषाणमिति । एवम[व]सायितप्रसङ्गः ।

इदानीं साधनमाह– अतस्त्रीण्यप्येकमित्यादि तमस्त्ववदिति । सत्त्वरजस्तमांसि त्रीण्यपि प्रकाश-प्रवृत्ति-नियमात्मकानि जात्यन्तराभिमतान्येकं वस्तुतः त्रैयस्यातत्त्वत्वाद्[1] भिन्नमप्यभिन्नमिति पक्षार्थः । परमतापेक्षया त्रयाणामैक्यासिद्धेः साध्यं त्रीण्यपि च परस्परसिद्धानि धर्मित्वेनास्माकं च वस्तुशक्तित्वभेदेनेतीत्थं साध्यतेऽन्यथा त्रीणि चैकं वे( चे )ति विरुद्धं स्यात् । अपृथग्भूतसमवस्थानस्वरूपभेदात्मकत्वात् भूतं भवनं भावो भूतिरिति[2] भावे निष्ठाविधानात् । अपृथग्भवनमस्य सङ्गत्यैकीभावेनावस्थानस्य । तदिदमपृथग्भूतसमवस्थानं तदेव स्वरूपं

१ त्रित्वस्या– प । २ °निति भ ।

भेदाश्चात्मा येषां तानि सत्त्वादीन्यपृथग्भूतसमवस्थानस्वरूपभेदात्मकानि तद्भावात् । क्षीरोदकवद् देश-कालाभेदेन सह भवनेऽपि सङ्गत्यैक्यावस्थानस्वरूपत्वविशेषणात् । क्वचित् कदाचित् पृथग् भवनाभावादित्युक्तं भवति । तत्स्वरूपभेदात्मकत्वं च वादि[प्रतिवादि]प्रसिद्धम् । दृष्टान्तो वरणादितमस्त्ववद् यथा वरणसदनापध्वंसन-बैभत्स्यादिगौरवाणां परस्परतो भिन्नानां छादन-स्तम्भन-विशरणारोचन-विषादाधोगमनधर्माणां भेदात्मकत्वे सत्यपि मोहात्मकतमःस्वारूप्यानतिक्रमेणैक्यमपृथग्भवन-समवस्थानस्वरूपभेदात्मकत्वात् तथाऽस्मादेव हेतोः सत्त्वादीन्येकमिति ।

अत्राह– **अपृथग्भवन-समवस्थानेत्यादि**, जात्यन्तरत्वसाधनानि यावद् **गुरुरित्येता(त्युभा)भ्यामन्य इति** । ननूक्तमन्वयवीत एव, अत्राह– कथं पुनरेतदुपलभ्यते सुख-[दुःख]-मोहा जात्यन्तराणीति ?

अत्रोच्यते–सुखं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टम्, सुखाश्च करणप्रकाशास्तस्मात् प्रवृत्ति-नियमाभ्यामन्ये । तथा दुःखं चलमप्रकाशकं प्रवृत्तिशीलं दृष्टम्, दुःखाश्च करणप्रवृत्तयस्तस्मात् प्रकाश-नियमाभ्यामन्याः । तथा मोहो गुरुरप्रकाशको दृष्टः, मूढाश्च करणनियमास्तस्मात् प्रकाश-प्रवृत्तिभ्यामन्य इति । एतेनाध्यात्मिकानां [कार्य-कारणात्मकानां] इत्यादिनोत्तरेण ग्रन्थेन तैर्यग्योनादि-संसारगताध्यात्मिककार्य-कारणात्मकभेदानां सुख-दुःख-मोहमयत्वातिदेशः कार्य-कारणात्मकत्वात् तेषामपीति ।

अस्य ग्रन्थस्यार्थव्या[ख्या]नं साधनैरेव क्रियते– सत्त्व-रजस्तमांसि जात्यन्तराणि, लक्षणभेदात् । चेतनशरीरवत्, लक्षणभेदः–सत्त्वं लघ्वप्रवृत्तिशीलं दृष्टमित्यादि तत्साधनैर्भाष्ये सुलिखितमिति न विवृण्महे । तथा रजस्तमसोरन्यत्वापादनसाधनान्यनुगन्तव्यानि यावद् गुरुरित्येता(त्युभा)भ्यामन्य इति ।

आचार्य उत्तरमाह– **ननु लक्षणभेदहेतुत्वमित्यादि, यावत्तमस्त्ववत्** । लक्षणभेदहेतूनां लघुत्वादीनामप्यहेतुत्वमेतेनैव प्रत्युक्तत्वात् । कथम् ? लघुत्वप्रकाशाप्रवृत्तिशीलत्वान्यप्येकम्, अपृथग्भूतसमवस्थानस्वरूपलक्षणभेदात्मकत्वात्, [वरणा]दिभिन्नलक्षणमत(तम)स्त्ववत् । तथैव व्याख्येयम्, लक्षणशब्दाधिक्येन विग्रहस्त्व(स्तु तत्स्व)रूपमेव लक्षणं स एवा(व) भेदो यस्येति । **तस्मादिति** तस्मात् तादृक्स्वरूपलक्षणभेदात्मकत्वमप्यहेतुः । अतो नान्यत्वं सत्त्वादीनामिति ।

इतर आह– **नापृथग्भूतेत्यादि** हेत्वसिद्धिप्रतिपादनसाधनानि लोकप्रसिद्धदृष्टान्तानि यावत् प्रदीपादिव घट इति लोष्टदृष्टान्तो वक्ष्यते । सुख-दुःख-मोहैः पुरुषभोग्यैरन्योऽन्यतोऽन्यैरुपेत इत्यतिदेशसाधनोक्तिकाल उत्तरत्र । अपृथग्भूतसमवस्थानस्वरूप[म]सिद्धम् । तत् कथमिति चेत् ? साधनैरेवोच्यते–सुखं मोहाद्

गुरोरन्यदित्यादि सुबोधत्वान्न व्याख्येयम् । परस्परान्यत्वसाधनकदम्बकं यथाभाष्यलिखितमनुम(ग)न्तव्यम् । पुनश्चेत्यादि, एतस्मादन्यसाधनप्रपञ्चात् सुखत्वात्, दुःखत्वात्, मोहत्वादित्यादयोऽप्यन्यत्वहेतवः स्युः, आदिग्रहणात् प्रसादादयोऽपीति । तत्प्रयोगादिगुपप्रदर्शनार्थमाह– शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामन्यः कार्यभूतस्य शरीरस्य कारणभूतानां चेन्द्रियाणाम(मा)ध्यात्मिकानामेकदेशस्तदात्मभूतत्वं गतस्तदात्मभूताभ्यां रजस्तमोभ्यामन्यः सुखत्वाल्लोष्टवत् । यथा लोष्टो भोग्यो हि पुरुषस्य भोक्तुरुपयोगार्थप्रवृत्तेः कपोतोन(न? ड्)यनार्थक्षेपणादानादिषु सुखं दृष्टम् । चलन-पीडनादौ दुःखं लोष्टो नु ? कपोतो नु ? इत्यादिसंशय-विपर्ययादिषु मोहः, तस्मात् सुखं दुःख-मोहाभ्यामन्यत्, लोष्टवत्, [लोष्ट इव लोष्टवत्] । एवं दुःखं मोहादित्यतिदेशः । दुःखं शरीरेन्द्रियगतम्, तदात्मैकदेशभूताभ्यां सत्त्व-तमोभ्यामन्यत्, दुःखत्वात्, लोष्टवत् । मोहः सत्त्व-रजोभ्यामन्यो मोहत्वात्, लोष्टवत् इति ।

अत्र ब्रूमः– सर्वेऽप्येत इत्यादि । सर्वग्रहणात् लघुत्वादयो मोहत्वपर्यन्तास्त्वयोक्ता अन्यत्वहेतवः । अप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयः । एते हेतवोऽसिद्धा 'एवावधारणे' इति वक्ष्यति । सिद्धत्वेऽप्यप्रसिद्धसाध्यधर्मसमन्वयाः पृथग्भूतसुखा[द्या]त्मक-सत्त्वादि-लघ्वादि-तूल-लोष्टादिवस्त्वभावात् । सर्वस्य त्रैगुण्याव्यतिरेकाच्च । न चैषां विपक्षाद् व्यावृत्तिरस्ति तूल-लोष्टादेरेव विपक्षत्वेन व्यवस्थानात् । विविक्तैकसुखात्मकाद्धि वस्तुनोऽन्यद् विविक्तदुःखाद्यात्मकं स्याद्, विपक्षस्तु नास्ति, सर्वस्य(स्यात्) त्रिगुणैकात्मककत्वात् । न पुरुषोऽसत्त्वात्, तस्यापि सुखादन्यत्वादिति । ततश्च तूल-लोष्टादेरपि विपक्षत्वात् । ततश्च लघुत्वादिहेतूनामव्या(प्या)वृत्तेरप्रसिद्धसाध्यधर्मव्यावृत्तयस्ते हेतव इति विरुद्धत्वं हेतुदोषः । साध्य-साधनोभयानन्वयो धर्म्यसिद्धिश्च साधर्म्यदृष्टान्तः । साध्याव्यावृत्त्यादिदोषश्च वैधर्म्यदृष्टान्त इति दर्शयति ।

किं चान्यत्– स्वत एवानुमते(मान)निराकृतश्च(स्य)प्रत्यक्षीकरणार्थाश्चैते हेतव इति वर्तते । 'अस्ति प्रधानं भेदानामन्वयदर्शनात्' इति प्रक्रम्य सुख-दुःख-मोहान्विता अ(आ)ध्यात्मिका बाह्या[श्च] शब्दादयः कार्यात्मकास्त्रयाणामेककार्यभावात् । तदारब्धाश्चाकाश-वाय्वनलाम्भो-भूमयो भूताख्यास्तैर्यग्योन-मानुष-दैवानि शरीराणीन्द्रियाणि च तदा[द्या]नि त्रयाणामेककार्यभावात् सुखाद्यन्वितान्येव चन्दनशकलादिवदित्येवमाद्यनुमानसिद्धं त्रैगुण्यम् । 'अन्यत् सुखं दुःख-मोहाभ्यां लघ्वेव च' इत्येवमादिपक्षं निराकरोति, तस्य स्वपक्षस्यानुमाननिराकृतस्यान्याविदितस्य सर्वलोका[प्रत्यक्षस्य सतः] प्रत्यक्षीकरणार्था एते हेतवः संवृत्ता इतीत्थमनुमानविरुद्ध-प्रतिज्ञादोषोद्भा(द्भ)वनवक्रोक्तिरेषा ।

किं चान्यत्– 'अनवधृतेत्यादि, यावदतथातैव लघुत्वात्' इत्यादयो हेतवः किमवधारितार्था: ? उतानवधारितार्थाः ? इति सम्प्रधार्यमेतत् । लघ्वेव सुखं, न गुरु, न चलं वा; तथाऽन्येषामपि चलत्वादीनां चलमेव, गुर्वेव, प्रवृत्तिशीलमेवेति तत्त्वानवधारित-लघ्वादिधर्मतायां सत्यामितरात्मकमपीति लघु-चल-गुर्वादित्र्यात्मकत्र(त)मैव पक्षधर्मता स्यादेषाम् । तथा सतीत्यतथातैवानन्यतैवेत्यर्थः । इतिशब्द[स्य] हेत्वर्थत्वात् त्र्यात्मकै[क]त्वादित्यर्थः ।

असजातीयेत्यादि, यावदस्मान् प्रति भवन्तमिति । अथावधारितार्था एते लघ्वादयो हेतवः गुर्वाद्यसजातीयलक्षणव्यावृत्तार्थविषयास्ततस्तेषामसजातीयलक्षणव्यावृत्तार्थविषयताया विशेषहेतोः पक्षधर्मतैव मूलतस्तत्रास्मान् प्रति तावदपक्षधर्मत्वम् । तद्यथा– 'णिच्छयतो(ओ) सव्वलहुं' इति गाथा । निष्कृष्यावधार्य चयतो ज्ञानतः परमार्थनयतो वा सर्वथा लघु सर्वं वा लघु न विद्यते, तथा सर्वगुरु द्रव्यं परमाणु-द्विप्रदेशाद(द्य)संख्येयान्तानां केषाञ्चिदनन्तप्रदेशानां च स्कन्धानां शेषद्रव्याणां चागुरुलघुत्वात् । ततः परमनन्तानन्तप्रदेशानां बादराणामापेक्षिकलघु-गुरुपरिणामित्वाद् व्यवहारनयेन तु युज्यते लघुत्वं गुरुत्वं चा(वा)-ऽन्योऽन्यसात् लघुगुर्वेति । वातं रातीति वातरा, बदरप्रमाणा बादरा वा स्कन्धाः मू(स्थू)ला इत्यर्थः । 'ण इतरेसु' नेतरेषु प्रागुक्तपरमाण्वादिषु सूक्ष्मेष्वगुरुलघुत्वमेवेत्यर्थः । अत्यन्तगुरुतायामित्यादि । निरपेक्षैकान्तगुरुतायामेतदेव पतेत् पतनक्रियमेव स्यान्न तिष्ठेन्नोर्ध्वं गच्छेत्, गुरुत्वात् । दृष्टान्तो वक्ष्यमाणः ।

स्यान्मतम्– पतेदेव गुरु, यदि प्रतिबन्धी न स्यात्, अस्ति तु संयोगः प्रतिबन्धी पतनस्य, फलस्येव वृन्तमित्यतो विशेषयामः– 'संयोगभावेऽपि पतनप्रतिबन्ध्यविषह्यगुरुत्वात्' इति [पतन]प्रतिबन्धिना यद् विषह्यं न भवति गुरु, तत् पतेदेव, स चास्य नास्ति प्रतिबन्धी, त्वयैकान्तगुरुत्वाभ्युपगमात् । न तु (तन्तु)-प्रतिबन्धानिवार्यपातोपलवत् । एकेन तन्तुना प्रतिबन्धिना सत्यपि संयोगभावे तदविषह्यगुरुत्वात् पतत्येव, यथोपलस्तथैतत् पतेदेव । गुरुत्वं (सुखं) लघु[त्वशून्यगुरु]त्वादिति । योगिनोऽपि चेत्यादि । योऽपि चास्त्य(स्य) योगी प्रतिबन्धकस्तस्यापि च योगिनः प्रतिबन्धिनो गुरुत्वात् तत्पतनोपचयहेतुत्वात् सुतरां पतनमेव स्यात् । पतेदेव तेनापि हि सह शिलाबद्धशिलावदिति पातहेतुत्वं द्रढयति । एवं तावदत्यन्तगुरुत्वे पतनमेव प्रसक्तम् ।

अथ [वा] मा भूदेष दोष इत्यत्यन्तलघुत्वमिष्यते । ततोऽत्यन्तलघुतायां न कदाचिदपि पतनं स्यात्, पाताख्यो भाव एव न स्यात्; तस्योत्पत्तिकारणाभावात्, तच्च कारणं गुरुत्वं पतनस्य, तदभावात्, खपुष्पवत् ।

स्यान्मतम्– **दृष्टविरुद्धमुच्यते गुरुलघुत्वदर्शनात्, अर्कतूलो लघुर्गुरुर्लोहपिण्ड इति दृष्टत्वादिति** । एष न दोषः, यस्मात् व्यवहारतोऽनुयुज्यतीत्युक्तत्वादिति । अत आह– **'कन्याऽनुदरवत् तु व्यवहारोऽयमपेक्षाकृतो बादरस्कन्धविषयः' इति** । यथा 'अनुदरा कन्या' इत्यन्यासामुदरवतीनामुदरेण सदृशमुदरमस्या नास्तीत्युदरवत्येवानुदरेत्युच्यते व्यवहारवृः, तथा बादरस्कन्धेषु लघुगुरुत्वे । यदपि च लोहपिण्डार्कतूलोदाहरणं; तदपि तत्तुल्यापेक्षिकलघुगुरुत्वे एव साधयतीति । अत आह– **एवमेवापेक्षिकेत्यादि, यावदनवस्थितैकत्वे** अल्पबाधि(वान्धि)नि कनि लोहपिण्डकः पलमात्रप्रमाणोऽर्कतूलभाराल्लघीयान् । 'पलशतिका तुला, विंशतिस्तुला भारः' इति परिभाषितत्वादयस्पिण्डो गुरुरपि लघुरर्कतूलो लघुरपि गुरुर्दृष्टः इत्यनवस्थि[तै]कगुरुत्व-लघुत्वतत्त्वे गुरुलघुत्वे आपेक्षिकत्वादस्मान् प्रति न गुरुत्व-लघुत्वे परस्परतोऽ[न]न्ये ततो नायस्पिण्डार्कतूलदृष्टान्तोऽस्ति ।

इतर आह– **अथ ममात्र किमित्यादि, यावदेकत्वापत्तौ भवतीति** । यदि युष्मत्सिद्धान्तेनानवस्थिततत्त्वे लघु-गुरुत्वे युज्येते । ततो युक्त[मुक्त]म्, **अस्मान्** प्रत्यसिद्धं लघुरेवेति । ततो ममात्र किम्? यत् पुनरेतदुक्तम्–'भवन्तं च प्र[त्य]सिद्धम्' इति तदयुक्तमुक्तम् । यदपि च भवत्सिद्धान्तेनोक्तं, तदपि नोपपद्यते । यस्माद् द्रव्यं चैतदेवं लघुगुरुत्वापेक्षया तदेव दृष्टमिति, न गुरुलघ्वादयो गुणाः, सत्त्व-रजस्तमांसि च । लघ्वादि-प्रकाशाद्यात्मका गुणास्त्विमे तल्लक्षणा मयोच्यन्ते । तेषां गुणानां संद्रावे सङ्गमे तदर्थव्यतिरेकत्वापत्ताविति । न त्वेतस्मिन् गुणैकगमने द्रव्यता भवति, 'गुणसंद्रावो द्रव्यम्' इति लक्षणात् । ते च गुणाः परतोऽन्ये, तस्मान्नासिद्धमित्यभिप्रायः ।

आचार्य आह– **आ अद्यापीत्यादि, यावच्छब्दादि स्वात्मवदिति** । नन्वेतत्प्रतिपादनमेव वर्तते अनन्यत्वं गुणानाम्, तस्मादेकैककारणम् । यदि भवता गुणसंद्रावो द्रव्यमिष्यते, ततस्तत्राप्येतद् द्रव्यमेव, न गुणाः । पृथक् संद्रुतानामेव [अव]स्थानात् कुतोऽस्यासंद्रावः? न प्रधानावस्थायां, नापि व्यक्तावस्थायामसंद्रावो यतोऽस्यासंद्रावाद्द्रव्यत्वं स्यात्, तस्माद् द्रव्यमेव । न पृथग् लघ्वादयो गुणा इति । तत्रापि च प्रतिज्ञायते– सत्त्वादयो गुणा लघुत्वादिलक्षणास्तत्संद्रुतिलक्षणं द्रव्यमेव, शब्दादिभावेन व्यवस्थानात् । योऽर्थः शब्दादिभावेन व्यवतिष्ठते स सोऽर्थो, लघ्वादिलक्षणगुणं(ण)संद्रुति[लक्षणं] द्रव्यमेव शब्दादिस्वात्मवत्, यथा शब्दादिस्वात्मनः सत्त्वादिगुणसंद्रुति[लक्षणं] द्रव्यमेव शब्दादिभावेन व्यव-

१ वस्तु भ । २ फल प । ३ आत्म° प । ४ परस्परतो प । ५ संभूता° प । ६ ऽपश° प ।

स्थानात् तथा लघुगुरुत्वादिलक्षणाः सत्त्वादय इति **अनापन्नतद्रूपेत्यादि** यावदुच्यते इति चेदिति. शब्दादिरूपमनापन्नस्य सत्त्वस्यासंद्रुतस्य गुणान्तरासङ्गतस्य तदनात्मकस्य, स्वेनैव रूपेण स्थितस्य प्रागारम्भादारभमाणस्य च यः शब्दादिभावापत्तिकालो यावदनिष्पन्नशब्दादित्वकाल इत्यर्थः। सा ह्यवस्था सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानम् इति व्यवस्थानशब्देनोच्यते। अन्यथा व्यवस्थितमेव शब्दादिभावेन स्यात् सत्त्वमिति।

एतच्च न, पूर्वतुल्यत्वात्। [ यथा प्रा ]गुक्तं लघ्वादिलक्षणसत्त्वाऽप्यैक्यापत्तिर्द्रव्यम्। तच्च कदाचित् सत्त्वादि[पृथगवस्थानाभावात् तत् संद्रुतिलक्षणमेवोक्तम्, तथेहापि न स कश्चित् कालोऽस्ति, यः प्रवृत्ति-नियमविरहितप्रकाशमात्रावस्थानोपलक्षितः। यदि] प्रधानावस्थायां, यदि व्यक्तावस्थायामित्यत आह—**नान्तरेण प्रवृत्त्या ह्येकत्वगतिव्यवस्थापत्तेरित्यादि**ग्रहणान्नियमो [न] गृह्यते 'प्रवृत्ति-नियमावन्तरेण न व्यवस्थापत्तिरस्ति' अतो हेतोः नान्तरेण प्रवृत्त्या ह्येकत्वगतिं व्यवस्थापत्तेः पूर्वेण तुल्यत्वमिति नास्ति सत्त्वादिपृथक्त्वं **तवापीति**। अतो यथा **हेत्वैकान्तिकेत्यादि, यावद् विपर्यसनीयाः**। एतस्मादेव सत्त्वाद्येकत्वाद् यो यो हेतुर्यथा हेतुः 'सुखं मोहाद् गुरोरन्यल्लघुत्वात् इत्यादि त्वत्प्रयुक्तः स स हेतुः विशेषेणास्मत्पक्षं साधयन्नैकान्तिको भवति। तं प्रति यथैकान्तिको भवति, तथोच्यते— सुखं [ मोहाद् ] गुरोरनन्यल्लघुत्वात्। यद्यलघुत्वात्। 'यद् यल्लघु तत् तद् गुरोरन्यत्, लोहपिण्डवदर्कतूलवत्। यथा प्राग्वर्णितमापेक्षिकमर्कतूलगुरुत्वं लोहपिण्डलघुत्वं चेति। तद्द्वयं सहितं दृष्टान्तः शब्दभावव्यवतिष्ठमानसुखादिवद् वेति लौकिकार्थातिक्रमेऽपि त्वन्मतेनैव दृष्टान्तान्तरमिति। तथा दुःखात् प्रवृत्तिशीलादनन्यत् सुखमिति प्रवर्तते। कुतः? अप्रवृत्तिशीलत्वात्, वायुवदाकाशवदिति पृथक्त्वाभावाद् दर्शयति— यथा वायुराकाशं वा सुखात्मकं दुःखात् प्रवृत्तिशीलादनन्यत् तथेहापीति। आदिग्रहणाद् दुःखं सुखादनन्य[दप्रवृत्तिशीलादप्रवृत्तिशीलत्वात्। यद् यदप्रवृत्तिशीलम्, तत् तदप्रवृत्तिशीलादनन्य]द् वाय्वाकाशवत्। तथा सुखं दुःख-मोहाभ्यामप्रकाशकाभ्यामनन्यत् प्रकाशकत्वात् घटप्रदीपादिसुखवत्। तथा दुःखं मोहादनन्यदचलाच्चलत्वात्, पर्वतादिदुःखवत्। तथा सुखात् प्रका[शका]दनन्य[द]प्रकाशकत्वात्,प्रदीप-घटादिदुःखवत्।तथा मोहः सुखदुःखाभ्यामगुरुभ्यामनन्यो गुरुत्वात्, पृथिव्यग्न्यादिगुरुत्ववत्। एवं च सुखत्वाद्, दुःखत्वात्, मोहत्वात्, प्रसादादिकार्यत्वादित्यादयोऽप्यनन्यत्वहेतव एव प्रत्येकमितरगुणस्वरूपानन्यत्वं प्रतिज्ञायते तद्रूपविनिवृत्तिहेतुतो यत् किंचिद् वस्तूदाहृत्य साध्यं सर्वस्य लोष्टादेर्लघुप्रकाशेतरादिपरस्परापृथग्भूतगुणात्मकत्वात्। तद्यथा— शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामनन्यः सुखत्वात्,

लोष्टवत् सत्त्व-रजोभ्यामनन्यो मोहत्वाल्लोष्टवत् । तथा शरीरेन्द्रियगत आत्मैकदेश[ स्तदेकदेश ]भूताभ्यां रजस्तमोभ्यामनन्यः प्रसादकार्यत्वात् लोष्टवत् । एवं लाघव-प्रसवादिभ्यः । तथा सत्त्व-तमोभ्यामनन्यः शोषत्वात् लोष्टवत् । एवं तापादिभ्यस्तथा सत्त्व-तमोभ्यामनन्यो वरणत्वात्; एवं सदनादिभ्य इति । एवं तावद् 'यथाहेत्वैकान्तिकत्वं प्रति त एवान्यत्वहेतवोऽनन्यत्वहेतवः' इत्युक्तास्त्वत्प्रयुक्तलक्षणवैलक्षणा(ण्य)विशेषणपक्षविरचनया लघ्वादय एव ।

अथवा मुक्त्वाऽपि चालक्षणभेदहेतूनां सुखं मोहाद् गुरोरन्यत् लघुत्वात् महालोहपिण्डार्कतूलवदित्यादिविशेषणमन्तरेण भेदो न शक्यः साधयितुमिति तद्रचना-कुसृतिर्यथा त्वया क्रियते, तथैव मया कृता, किन्तु तां मुक्त्वाऽपि लक्षणभेदवैलक्षण्यविशेषणपक्षविरचनां सदादिभेदलक्षणाभिमतेभ्यः । एवं त्वदुक्तेभ्यो लघ्वादिहेतुभ्योऽभेदसिद्धिः शक्याऽऽपादयितुं स्फुटेनैव न्यायाध्वना भ्रान्तिजननेन विनेत्यर्थः । तद्यथा- सुखं मोहादनन्यदपुरुषत्वे चलत्वात्, मोहस्वात्मवत् । [[3]अपुरुषत्वविशेषितोऽचलादिति हेतुः, पुरुषादचलाद् व्यावर्तते, मा भूदनेकान्तिक इति । दुःखादनन्यत् सुखमिति वर्ततेऽनियमशीलत्वादत्रापि] अपुरुषत्वविशेषणं द्रष्टव्यमधिकाराद् दुःखस्वात्मवदिति । [तथा दुःखं सुखादित्यादि साधनचतुष्टयं सुखादनन्यत्वसाधनद्वयवदपुरुषविशिष्टं दुःख-मोहयोः संयोगनिष्पन्नमिति साधनषट्कं गतार्थं यावद् दुः[ख]स्वात्मवदिति ।]

इतर आह- नन्वेवं विरुद्धाव्यभिचारिवदुभयानिश्चयः । यथोक्तम्- 'यथोक्तलक्षणयोर्द्वयोर्विरुद्धयोर्नित्यानित्यसाधकयोरेकत्वसन्निपतितयोर्हेत्वोरेकस्मिन् धर्मिणि शब्दे पर[ स्पर ]निवारितव्याप्त्योः श्रावण-कृतकत्वयोः शब्दत्व-घटादिदृष्टान्तयोरुभयत्र संशयो भवति' इति । तथेहावाभ्यामुक्तैरन्यत्वानन्यत्वहेतुभिरुभयानिश्चयोऽस्तु, मा भूत् त्वत्प्रोक्तानामेवैकान्तिकत्वमिति ।

अत्रोच्यते- नोक्तत्वात्, नैष उभयानिश्चयो युज्यते; तस्मान्निर्भिन्नात्मकतायां त्वित्यादि प्रक्रम्य सुखं दुःखादनन्यदनात्मत्व-सत्त्व-वरणाद्यात्मकत्वाद् दुःखस्वात्मवदि[त्यादि]भिरैकान्तिकैर्हेतुभिरनन्यत्वस्य लिखितत्वात्, अथवा नोक्तत्वादिति । त्वत्प्रयुक्तानामन्यत्वहेतूनां लघुत्वादीनामुक्तदोषत्वात् । सर्वेऽप्येतेऽप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयः, अनुमाननिराकृतपक्षाः, अनवधारणे विपर्ययहेतवः । अवधारणे वा(चा)पक्षधर्मा एवेति तस्मादनेकान्तिकास्तेषां चैकान्तिका अस्मदुक्ता निवर्तका एवेति न तुल्यमावयोः । इतश्चातुल्यमावयोर्भावितत्वाच्च गुणेषु सदा संद्रावस्य । बहुधा भावितं हि सदा सत्त्वादयो गुणाः संद्रु(सद्भू)ता एव प्रधानमहदहङ्कारादिसर्वावस्थासु न जातु पृ[थ]ग्भूतसमवस्थाश्चेत्(ति) ।

१ °चना प । २ °चापल प° । ३ [ ]कोष्ठकान्तर्गतः पाठः भप्रतौ ।

किं चान्यत्– विरुद्धाव्यभिचारिणि चोक्ता विरुद्धाव्यभिचारिण्यपि न परस्परनिवारितव्याप्तित्वमात्रात् संशय एव । किं तर्हि ? प्रत्यक्षागमबलीयस्त्वात् तत एव निश्चयोऽन्वेष्यत इति ह्युक्तं तयोर्विरुद्धाव्यभिचारिणोः पक्षधर्मयोर्यत्प्रत्यक्षीकृतार्थेनागमेन बलीयान् प्रत्यक्षसंवादिना प्रत्यक्षेणागमेन च जनितबलाद् वा प्रत्यक्षेणैवागमेनैव वा यथाप्रसिद्धं यो बलीयांस्तत एव निश्चयोऽन्वेष्यत इत्यादिव्याख्याविकल्पेषु प्रत्यक्षागमेन घटादिषु प्रसिद्धसाध्यानित्यत्वान्वयस्य कृतकत्वहेतोः बलीयस्त्वात् ततोऽनित्य इति निश्चयः स्यात् । ननु(तु) श्रावणत्वस्य शब्दत्वे प्रत्यक्षीकर्तुं शक्योऽन्वयः शब्दत्वस्याप्रसिद्धत्वा[दि]ति तद्व(द्व्य)क्तिमिह साधर्म्यमिति चेदुच्यते– बलीयस्त्वं चास्मद्धेतूनामाद्यहेतुभावनाद् भिन्नात्मकतायास्त्वित्यादि प्रक्रम्यानात्मत्वे सत्त्वरणाद्यात्मकत्वादि[त्यादि]भिराद्यहेतुभिः प्रत्यक्षागमबलीयस्त्वमापादितम्, तस्मान्न समं नाविति ।

इतर आह- मा मंस्थास्त्वदीया हेतवो बलीयांसः । आ(अ)वरणाद्यात्मकत्वादय इति । तदबलत्वं चास्मत्पक्षसाधनत्वायेतो विपरिवर्तयितुं शक्यत्वात् । तद्यथा- पूर्वहेतवस्तावदबला यतः शक्यन्ते त [इ]तोऽपि सुतरां पुरुषनिवृत्त्यर्थमनात्मत्वविशेषणाद्धतेऽपि विपरिवर्तयितुम्; तद्यथा- सुखादन्यद् दुःखं प्रसादाद्यनात्मकत्वात् पुरुषवद[ समर्थ ]समासेनागमकेनाप्यर्थं गृहीत्वा तदीयोक्त्यनुसारेणोक्तम् । मोहश्च दुःखादन्यस्तत एव तद्वदिति । चशब्दाद् दुःखादन्यौ सुख-मोहौ, सुखा-( शोषा )द्य[ना]त्मकत्वात् पुरुषवत् । तथैव व्याख्या । द्वे साधने समस्योक्ते मोहादन्ये सुख-दुःखे वरणाद्यनात्मकत्वात् पुरुषवदिति तथैवेति ।

अत्रोच्यते– किं त्वन्मात्रादेव विपरिवर्तनं त्रैलक्षण्यादिति प्रश्नः, प्रतारणार्थभाववाचिप्रत्ययसहितपञ्चम्यन्तशब्दप्रयोगमात्रात् पक्षधर्मसादृश्यात् त्रैलक्षण्यशून्यान्न परिवर्तनमित्यभिप्रायः। स्यान्मतम्, न त्वन्मात्रा[त्], किं तर्हि वै( त्रै )लक्षण्यं चेदेवं चेन्मन्यसे, तदयुक्तम्, यस्मादादिलक्षणमेव नास्तीह पक्षधर्मत्वमेव तावन्नास्ति, यदाधारेण शेषद्वयम् । कथं पक्षधर्मो नास्तीति चेद्, यस्मान्न ह्यनात्मकं नाम धर्मः कश्चिदस्ति । यदि प्रसादाद्यात्मा न भवतीत्यनात्मकं दुःखमुच्यते । अथात्मैव नास्तीत्यनात्मकमित्युच्यते । द्विधाऽप्यसिद्धं दुःखस्यानात्मकत्वं धर्म्यसिद्धापत्तेः । कथमिति चेदुच्यते– न दुःखं, [न सुखं,] नान्यन्मोहः पुरुषो वा, त्वत्परिकल्पितं दुःखम्, प्रसादाद्यनात्मकत्वात्, खपुष्पवत् स्यादिति धर्म्यभावादपक्षधर्मत्वम् ।

इतर आह– नन्वन्यपा(प)दार्थेत्यादि यावत् सद्धर्मवान् । ननु बहुव्रीहेरन्यपदार्थविषयत्वात् तत्सूचनसमासान्तकप्प्रत्ययान्तत्वादनात्मकश्रुते नास्ति [वरणाद्यात्मा] प्रसादाद्यात्मा वा चित्रगुदेवदत्तवत् । स कोऽपि वरणादिभ्यः प्रसादादिभ्यश्चान्यः [सन्नेव ना]सद्धर्मवान् धर्मी पक्षो भवितुमर्हतीति ।

अत्रोच्यते– नैतदुपपद्यते, बहुव्रीहेरप्यन(न्या)र्थविषयत्वानैकान्त्यात् । एवमपान्त्या(पीत्यादि), यावद् धर्म-धर्मिस्वरूपवि[रोधादि]ति । स्थूलं शिरोऽस्य स्थूलशिरा राहुः कपो[ऽ]तन्त्रत्वाद् बहुव्रीहेरेव तन्त्रत्वात् तस्य चान्यपदार्थत्वाद् व्यभिचारं दर्शयति– 'तद्गुणसंविज्ञानपक्षाश्रयणेन भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि' इति वचनात् । न हि स्थूलशिरोलक्षितस्तद्व्यतिरिक्तो राहुरस्ति, चित्रगवविशिष्टदेवदत्तवत् । तदेव हि स्थूलशिरो राहुः, तद्वदसद् आख्या राहोः शिरोव्यतिरिक्तस्य आख्या व्यपदेशः । स्थूलेन शिरसा व्यपदेशेन चित्राभिरिवाव्यपदेशिनो देवदत्तस्य व्यतिरिक्तस्य, तद्वद्व्यतिरिक्तस्यापि राहोस्तयाऽऽख्यया व्यपदेशिवद्भावं कृत्वा व्यवहारो दृष्टोऽसतोऽपि; तथेदमपि स्यात् । तस्य व्यपदेशिवद्भावव्यवहारस्यानभ्युपगमे उक्तोपपत्त्या दृष्टमिममसदाख्यया व्यपदेशिवद्भावव्यवहारमनभ्युपगच्छतस्ते धर्म-धर्मिस्वरूपविरोधौ दोषौ भवतः । धर्मिस्वरूपविरोधस्तावदात्मनोऽनन्यदेव दुःखं पुरुषादित्यर्थः, प्रसादाद्यनात्मकत्वात् । बहुव्रीहिसामर्थ्यात् प्रसादाद्यात्मनोऽन्यत्वादित्यर्थः, आत्मस्वतत्त्ववत्, पुरुषस्यात्मवदित्यर्थः । पुरुषत्वापत्तिश्च सुखस्य धर्मिस्वरूपवैपरीत्यमतो धर्मिस्वरूपविरोधः । किं कारणम्?, अन्यथा सुखान्यत्व-प्रसादाद्यनात्मकत्वानुपपत्तेः पुरुषत्वापत्तिमन्तरेण सुखस्य दुःखादन्यत्वं वरणाद्यनात्मकत्वम्; दुःखस्य वा सुखादन्यत्वं, प्रसादाद्यनात्मकत्वम्, मोहस्य ताभ्यामन्यत्वं प्रसादादि-शोषाद्यनात्मक[त्वं] च नोपपद्यते भावितन्यायत्वात्, सुख-दुःख-मो[हाना]मैक्यवृत्तित्वस्य । तस्मात् पुरुषस्वरूपापत्तेः प्रसादादि-शोषादि-[वरणादि]कार्याणां सुख-दुःख-मोहानां धर्मिस्वरूपविपरीततेति ।

किं चान्यत्– योऽपि धर्मिस्वरूपविरोधः, सोऽपीत्थमुच्यते । तद्यथा– धर्मस्वरूपविरोधोऽपि चैवमेव यथा पुरुषत्वापत्तौ सुखादीनां सुखाद्यात्मपरित्यागेन धर्मिस्वरूपविरोधः । तथा पौंस्त्वापत्तौ त्रयाणामैक्यापत्तौ चान्यधर्मस्वरूपविरोधश्च । ततश्च प्रकृति-पुरुषयोरप्येकतैव । तस्माद्धेतोः पुरुषत्वापत्तेरनन्यत्वापत्तेश्च प्रकृतिः पुरुषादन्या पुमान् वा प्रकृतेरन्य इति नोपपद्यते । ततोऽस्तु दृष्टैकत्वैव कारणमित्येतद्दर्शनं साधीयः । एवं दुःख-मोहयोरपि; यथा सुखं दुःखादन्यदित्येतत् किं त्वन्मात्रात् वै( त्रै )लक्षण्यादित्यतः प्रभृति यावत् प्रकृति-पुरुषयोरप्येकतैवेत्युक्तम्; तथा दुःखं सुख-मोहाभ्यामन्यत्, मोहः सुख-दुःखाभ्यामन्य इत्येतेष्वपि चतुर्षु सुखं मोहादन्यदिति च साधने स एव ग्रन्थो योज्य इति ।

अथ मा भूदेष दोष इत्यनात्मविशेषणत्वात् त्वद्वत् एतद्दोषपरिहारार्थं यथा त्वयाऽनात्मकत्वे सवरणाद्यात्मकत्वात् सुखं दुःखादनन्यन्मोहवदित्याद्यभिहि-

तम्, तथाऽहमप्यनात्मत्वे सति लघुत्वात् सुखं दुःखादन्यत्, मोहवदित्यादि ब्रवीमि । अतो [धर्म]-धर्मिस्वरूपविरोधौ प्रकृति-पुरुषदोषश्च नेति ।

अत्रोच्यते– तथा सति यथा किमिति । एवं सति यथा किं सुखादन्यदात्मानं मुक्त्वेति दृष्टान्तः । इदं तदिति निदर्शयितुं न शक्यते । इदं तत् सुखात् पुरुषाच्चान्यद् वस्त्वस्ति समन्वयस्याभावः । [यद्यनात्मत्वे सति लघुत्वादिधर्मवत् सुखात् पुरुषाद् वाऽन्यत् इति । वस्त्वन्तराभावात् तद्दर्शयन्नाह–न हि सुखादन्यदस्ति किञ्चित् उक्तवदपुरुषम् । पुरुषव्यतिरिक्तं हि सर्वं परस्पराविविक्तसुखादित्य(त्व)तत्त्वमेवेत्युक्तं तस्मादन्यत् सुखमेव सर्वमिति समन्वयाभावः । अत एव चान्यत्वेन पक्षीकृते सुखादौ पुरुषव्यतिरिक्तसपक्षाभावात् सुखादेरपि सुखादन्यस्य विपक्षत्वात् विपक्षाद्धेतोर्व्यावृत्त्यर्थं यदुच्यते– 'यच्च सुखाद[न]न्यत् तदनात्मत्वेन प्रसादाद्यनात्मकम्, न लघ्वाद्यनात्मकत्वं च' इति निदर्शयितुं न शक्यते । न च मोहादि सुखादन्यन्न भवतीत्यशक्यं दर्शयितुमिति विपक्षाव्यावृत्तिरप्यतो विपक्ष एव सत्त्वाद् विरुद्धाश्च [ते] हेतव इत्यभिप्रायः ।

अथ त्वित्यादि यावत् सुखमिति । अथ मतं तव यद् विभक्तस्वत(स)त्त्वं दुःखमोहाभ्यां तत् सुखं सुखादन्यन्न भवति । तत् प्रसादाद्यनात्मकमपि न भवतीति विविक्तस्वरूपस्य सुखस्य दुःखादन्यत्वात्, प्रसादाद्यात्मकत्वाच्च तदेव शक्यते वैधर्म्येण निदर्शयितुमत एव च तमः सुखादन्यद् विविक्त[स्व]रूपमप्रसादात्मकपुरुषं चेति साधर्म्यदृष्टान्तश्च स्यादिति । एवमितरसाधनेष्वप्युभयदोषपरिहार इति ।

अत्रोच्यते– तथा सतीत्यादि, यावत् को वादार्थ उभयोरपीति । एवं सति तेन प्रकारेण नियमोऽयं 'यत् सुखादन्यन्न भवति, तत् प्रसादाद्यनात्मकमपि न भवत्येव' इति । एतेन प्रकारेण नियमवत् सुखमेवानन्यत् प्रसादाद्यात्मकं भवति चेति । तथा तस्य वस्तुनः प्रवर्तनात्, तथाव्यक्तेश्च नियम-प्रवृत्ति-प्रकाशात्मकं सुखमेवेति त्वदभ्युपगमेनैवैक्यं मो[हा]दीनामापन्नमस्मिन् साधने एतदभ्युपगमवच्च शेषसाधनेष्वपि दुःखादन्यत् सुखं मोहश्चेत्येवमादिषु 'यद् यदनात्म[क]त्वे दुःखादन्यन्न भवति, तच्छोषादि-वरणाद्यनात्मकमपि न भवतीत्येवं नियमाद् व्यक्तेः प्रवृत्तेश्चैक्यं मोहादीनामभ्युपगतं त्वयैवेतरेतरैकत्वाभ्युपगमः । 'इतिशब्दो हेत्वर्थे' इत्यतः को वादार्थः वादप्रयोजनम् उभयोरावयोः ? त्वयैवैक्याभ्युपगमान्न वादार्थस्तव ममापि, प्रतिपन्नार्थप्रतिपादनवैफल्यादिति । एवं तावदवरणाद्यात्मकत्वादिहेतवः प्रथमोक्तानन्यत्वपक्षस्यैव साधकाः, अनात्मत्वविशेषणा अपि नान्यत्वपक्षस्येति प्रतिपादिताः । तत्रैवानन्यत्वपक्ष [एवं त्वपक्ष] एव त्ववरणाद्यात्मकत्वादिवद्धि दोषाः, लघ्वादिहेतवोऽपि नान्यत्वपक्षे तत्र

सदोषा एवेत्यभिप्रायः । ननु लघ्वादयोऽनन्यत्वहेतव उक्ता एवेत्यभिप्रायः । ननु लघ्वादयोऽनन्यत्वहेतव उक्ता एव, किं पुनरनुशयेन ? इति ।

अत्रोच्यते– सुखा[दा]वपि च न सत्त्वादिष्वेव । तत्रापि च [वि]परिहारपक्षीकृतेऽपि च न यथा त्वया सुखं मोहाद् गुरोरन्यदिति परिहारपक्षीकृता चेव परधर्मेणापि 'दुःखं सुखादनन्यत्, लघुत्वात्' इत्येतेनापि न केवलमनात्मत्वे. चलत्वादेवेतीत्थं विशिष्टेन प्रतिपादनविधिनाऽनन्यत्वहेतव इति । अपिशब्दात् स्वधर्मेण 'सुखं, दुःखादनन्यत्, लघुत्वात्' इ[त्यादि]भिः सुकरप्रतिपादनमेवेत्यर्थः परधर्मेण तावत् सुखं दुःखादनन्यत् चलाप्रकाशत्वात्, 'चलम[प्रकाशकम]प्रवृत्तिशीलं दुःखम्' इति वचनात् । दुःखधर्मेण सुखं ततोऽनन्यदिति साध्यते । अविभक्ताशेषगुणात्मकलोष्टवदिति दृष्टान्तः प्रागुपवर्णितः । अविभक्तः सुख-दुःख-मोहात्मक-सत्त्व-रजस्तमोगुणात्मको लोष्ट इति द्वि(त्रि)त्वैक्यानतिक्रमाच्च त एवाशेषगुणास्तदात्मको लोष्टः । चलाप्रकाशात्मकत्वाद् दुःखादनन्यदिति स एव लोष्टो दृष्टान्तो भावितसुखाद्येकात्मकत्वात् । एवं तावत् परधर्मेण । एवं च स्थिते स्वधर्मेणापि लोष्टाद्यर्थानां सुखाद्येकात्मकत्वे स्थितेऽनन्यत्वे लघुत्वादिहेतवोऽपि साधका इति तद्दर्शयति– सुखं दुःखादनन्यत्, लघुत्वात्, लोष्टा[दि]वदिति वर्तते । एवमप्रवृत्तिशीलत्वात् प्रकाशकत्वादेतानि च चत्वारि साधनानि प्रत्येकं त्रीणि तान्येव समुदितान्येकमिति । अत्र द्विकसंयोगेनापि त्रीणि लघ्वप्रवृत्तिशीलत्वात्, लघुप्रकाशात्मकत्वात्, अप्रवृत्तिप्रकाशात्मकत्वादिति । एवं मोहा[द]पीति । 'मोहात् सुखमनन्यत्' इत्यत्रापि त [एव] हेतवस्तावन्तः परधर्मेण सुख-दुःखधर्माभ्यां प्रत्येकं द्वे समुदायेनैकमिति त्रीणि चलत्वादप्रकाशकत्वाच्चला-प्रकाशकत्वादिति, प्रवृत्तिशीलत्वादित्यपि, तत्संयोगेनेतराभ्यामपि सप्त साधनानि । एवं मोहादपीति । मोहादनन्यच्चलत्वादिभ्यस्तेभ्यः । एवं सुखं दुःखादनन्यत्, गुरुत्वादप्रकाशकत्वात् तत्संयोगाच्चेति मोहधर्मेभ्यस्त्रयः( स्त्रिभ्यः ) । एवं मोहादपीति तेभ्य एव मोहधर्मेभ्यस्त्रिभ्यो मोहादप्यनन्यत् सुखमिति, द्वाभ्यामप्यनन्यत् सहिताभ्यामिति दुःख-मोहाभ्यामनन्यत् सुखं, लघुत्वादित्यादिभ्यस्तेभ्य एव हेतुभ्यो द्वि-त्रि-चतुरादिसंयोगेन [तत्] प्रत्येकं चानुगन्तव्यमिति । अत [आह-एते] एव सर्व इत्यनया दिशाऽभ्यूह्याः । न केवलमेत एव, लघुत्वादयः स्थूलत्वादयो गुरुत्वादयो वा स्वपरधर्मा हेतवः । किं तर्हि ? स्वपरधर्माः प्रसा[दा]दयश्च प्रसाद-लाघवादयः, शोष-ताप-भेदादयः, वरण-सदनापध्वंसनादयश्च इतरे[तरे]त्यादि द्वि-त्रि-चतुरादिसंयोगेन [च भङ्गविकल्पाः सङ्कलनीयाः । एवमेव चैत एव दुःख-मोहयोरपीति' सुखात् परस्परतश्चानन्यत्वं योज्यम् । प्रतिज्ञानां च

प्रत्येकं द्वि-त्रिसंयोगेन] चेति सुखस्य दुःखात् मोहाद् द्वाभ्यां चानन्यतया तिस्रः। एवं दुःखस्य तिस्रः, मोहस्य तिस्रः, त्रयाणां परस्परतोऽनन्यतयैकैवेति दश प्रतिज्ञाः। एतासु सुखधर्मा लघ्वादयः, दुःखधर्माश्चलादयः, मोहधर्मौ गुर्वप्रकाशौ । प्रत्येकं द्विकादिसंयोगेन च सप्तत्यधिकं शतं साधनानाम् । लाघव-गौरवे त्वपनीय प्रसादादि-शोषादि-वरणादीनां च हेत्वग्रं पञ्चषष्टिसहस्राणि पञ्चशतानि च षट्त्रिंशानि।

किञ्चान्यत्– न केवलम् एत एव हेतवोऽन्येऽप्यचेतनत्वेत्यादिसमासदण्डकमध्ये यावच्छरीराद्यापत्तित्वादिप्रकृतिधर्मैः सामान्यभूतैरविशेषितैश्चापुरुषत्वे सति सत्त्वात्, प्रमेयत्वात्, सर्वगतत्वादकृतकत्वादित्यादि वा यावत् किञ्चिदिहास्ति सर्वं तद[ न ]न्यत्वे त्रिलक्षणतां प्रतिपद्यते धर्मजातमित्यतः कुतः सङ्कलना ? न शक्यमेव सङ्कलयितुं प्रत्येक-द्वि-त्रि-चतुरादिसंयोगधर्मानन्त्यादिति स्वपक्षसाधनहेतुसौलभ्यं दर्शयति । भावितत्रैगुण्यैकात्मक-लोष्टादिवस्तुन्यायव्यापित्वादिति।

इतर आह- नन्वेवं स्ववचनविरोधादिति सुखं दुःखादनन्यदिति । प्रत्यक्षं सुख-दुःखयोः प्रतिपुरुषं स्वानुभवेन पृथक्त्वसिद्धेः शरीरविकारादिभिरनुमेयत्वाच्च, लोकप्रसिद्धेरभ्युपगतत्वाच्च त्वयाऽपि स्ववचनेन च सुखं दुःखमिति पृथगुच्चारणात् स्ववचनाभ्युपगम-लोकप्रसिद्धि-प्रत्यक्षानुमानविरोधदोषा अनन्यत्वप्रतिज्ञाया इति।

एतच्चायुक्तम्, तदात्मन एवोपलम्भात्, यस्मादेव पुनः स्वसिद्धान्त एव स्ववचनादि-विरोध उन्नीयते त्वयाऽऽत्मन एव न मम, मामुद्दिश्यात्मनोऽपरिहारेण वचनवक्रतयोच्यते । कुत इति चेत्, उच्यते– प्रधानेत्यादि यावदभ्युपगमात्। प्रधानमेकं सुख-दुःख-मोहात्मकत्वादभिन्नगुणात्मकं साम्येन चावस्थितमिति । कस्यायं स्ववचनविरोधः? तथा 'परस्परमुपकुर्वन्ति सत्त्वादयः, शब्दादिभावेन च व्यवतिष्ठन्ते प्रत्येकं सुखाद्यात्मनेति । सुखादित्र्यात्मकत्वं न घटादावेकस्मिन्नेव च' इति त्वयैवाभ्युपगतत्वादैक्यं नान्यत्वोक्तेश्चेति कस्य स्ववचनादिविरोधादिदोषाः? इति स्वस्थेन चेतसा चिन्त्यताम् । मम तु त्वद्दोषोद्भावनपरप्रयासत्वाददोषः। एवमस्मद्दोषोत्कीर्तनद्वारेण स्वदोषोत्कीर्तनमेवैतद् भवत इति।

किं चान्यत्– हेतुविरुद्धतोक्तावप्येवमेव । यथोक्तम्–'एते हेतवः सप्रपञ्चाः सविशेषण-निर्विशेषणाः प्रतिज्ञादोषोद्भावनद्वारेण विरुद्धा व्यभिचार्युद्भावनद्वारेण चैतेऽस्मत्पक्षस्यानन्यत्वस्य साधका इति । तथा हेतुविरुद्धताऽप्यन्य[त्व]पक्षे प्राग्व्याख्यातसमन्वय-व्यतिरेकाभावविधिनाऽनन्यत्वपक्ष एव दर्शनादिति।

तदुपसंहारार्थमाह– इति स्फुटमेवेत्यादि, यावद् वियदादिवदिति । इति शब्दोपसंहारार्थत्वात् । 'यद्यभिलष्यते त्वया प्रधानं नाम गुणसाम्यावस्थानं किञ्चिदस्ति' इति, तन्नाभिलषणीयम् । सुखं सदाव्यक्त-शब्द-स्पर्श-रूप-रस-गन्धं चेत्य-

भ्युपगम्यतां स्फुटमेव किमन्यापदेशेन? परदोषाभिधानेन वा? तत्त्ववादिनैव भवितव्यमृजुना । तेभ्य एव लघ्वादिभ्यो हेतुभ्यो वियदादिवत् । यथाऽऽकाश-वाय्वग्न्यब्-भुवः पञ्च महाभूतानि व्यक्तशब्दादि-भावादि(नि), तथा सुखमिति लघ्वादिभ्य एव हेतुभ्यः पृथिव्यामिव शब्दादयः पञ्चापि शेषेष्वपि चतुर्षु भूतेषु व्यक्ता इत्यभ्युपगम्यताम् । परिणतिविशेषास्तु हिङ्गुगन्धवत् सूपे, लवणरसवच्चाप्सु-कस्यचिदेव प्रत्यक्षता शब्दादेर्न शेषस्याभिभवादिभिरिति परमतेनैवैतदुक्तं; स्वम-तेन तु व्यक्तशब्द-रूप-रस-गन्ध-स्पर्शवत्–प्रतिज्ञायां वियद्वर्जान्युदाहरणानीति । 'स्पर्श-रस-गन्ध-वर्णवन्तः पुद्गलाः' (तत्त्वार्थ० ५।२३) इति सामान्येन, 'अणवः स्कन्धाश्च' (तत्त्वार्थ० ५।२५) मूर्तत्वात्, [पृथिवी]वत् । वाय्वाद-योऽपि शब्द-बन्ध-सौक्ष्म्य–स्थौल्यादयस्तु स्कन्धेष्वेव पुद्गलेष्विति । आकाश-स्यावगाहोपकारस्य नैते धर्माः सन्तीति वादपरमेश्वरमतम्, अतो वियद्वर्जान्युदा-हरणानीत्युक्तम् । इत्थं सुख-दुःख-मोहानां जात्यन्तरत्वासिद्धिरापादिता; तस्मादेव च वीतावीतानां सुखादित्रैगुण्यकारणपूर्वकत्वानुमानस्यानुमानाभासतेत्यत आह–

**त्रयविषयसमन्वयेत्यादि**, यावद् **वीतानां व्यवहारसम्प्रसिद्धे-**त्यादि । यावच्च हेतुत्वाहेतुत्वावधारणार्थानां च वीतानामतथार्थत्वादिति । तेषां [वीता]वीतानां लक्षणम् । तद्यथा– प्रागनुमानं सप्रभेदं व्याख्याय तेषां यदेतत् सामान्यतो दृष्टम् । शेषवदेष हेतुरतीन्द्रियाणां भावानां समधिगमे तस्य प्रयोगो-पचारविशेषाद् द्वैविध्यम् । वीत इति सामान्येन, विशेषेण तु स्वरूपाद् वीत-सिद्धिः । यदा हेतुः [पर]पक्षमव्यपेक्ष्यैव रूपेण कार्यसिद्धावपदिश्यते, तदा वीताख्यो भवति, परिशेषा[दा]वीतसिद्धिः । यदा नेदमतोऽन्यथा सम्भवत्यस्ति चेदं, तस्मात् परिशेषतो हेतुरेवायमित्यवधार्य कार्यसिद्धौ व्यपदिश्यते तदा आवी-ताख्यो भवतीति । प्रयोगलक्षणं त्वस्य परपक्षप्रतिषेधेन पर(स्व)पक्षपरिग्रहक्रिया आवीत इति वीतस्य वा भावः पञ्चप्रदेशः प्रतिज्ञा, हेतुः, दृष्टान्तः, उपसंहारः, निगमनमिति । तत्र साध्यावधारणं प्रतिज्ञा । साधनसमासवचनं हेतुः । तन्नि-दर्शनं [दृष्टान्तः । साध्य-]दृष्टान्तयोरेकक्रियोपसंहारः । प्रतिज्ञाभ्यासो निगमन-मिति पुरस्ताद् वीतस्य प्रयोगं न्याय्यं मन्यन्ते, पश्चादावीतस्येति ।

प्रयोगश्च– **अस्ति प्रधानं, भेदानामन्वयदर्शनाद्** । आध्यात्मिकानां भेदानां कार्य-कारणात्मकानामेकजातिसमन्वयो दृष्ट इति चन्दनशकलादिदृष्टान्तं वक्ष्यति । सामान्यपूर्वकाणां च भेदानामित्यादि । एकजातिसमन्वयप्रदर्शनार्थं सुखादित्रिगुणैकजातिसमन्वयं कार्यात्मकानां तत्सन्निवेशविशेषत्वं पक्षीकृत्य एक-कार्यत्वादिति हेतुमाह, तथोत्तरत्रोपसंहारात् । पञ्चानां पञ्चानामित्यादि वीप्सया व्याप्तिं दर्शयति । तथा क(का)रणात्मकानां नेयं प्रसादादि-शोषादि-वरणादि-

१ °पादनेन प । 

का[र्या]त्मकं दृष्टं गुणत्रयैकजातिसमन्वितम् । तैरारब्धान्याकाशादीनि भूतानि एकोत्तरगुणवृद्ध्या तत्कार्यत्वात् तत्समन्वयाच्च तत्पूर्वकाणि । तथा बाह्यानामपि तिर्यग्योनि(न)-मानुष-दैवानां तत्पूर्वकतेति । तस्मात् त्रैगुण्यसमन्वितत्वाद् भेदास्तु तृ(त्रि)गुणपूर्वकाश्चन्दनशकलादिवत् । शकलं कपालम्, अत्र भूषणप्रभृतीनामिति व्याप्तिदर्शनार्थं साधनस्य दृष्टान्तबाहुल्यम् ।

इतश्च– **अस्ति प्रधानम्, भेदानां परिमाणात्** । आध्यात्मिकानां कार्य-कारणात्मकानां परिमाणं दृष्टम् । सामान्यतस्त्रयः सुख-दुःख-मोहाः कार्य-कारण-विशेषतः षोडश भावाः पञ्च भूतान्येकादशेन्द्रियाणि चेत्यादिरूपपरिमाणम् । प्रवृत्तिपरिमाणं द्विधा हिताहित-प्राप्ति-परिहारार्थत्वात् । धर्मादिप्रयोजनत्वाच्चतुर्धा । धृति-सदाचार-कामसुख-कुतूहल-विनिवृत्तिप्रयोजनं पञ्चधा प्राणादिलक्षणा[त्] चेति प्रवृत्तिपरिमाणम् । फलपरिमाणं द्विविधं दृष्टमदृष्टं च । अदृष्टं कार्यकारणसामर्थ्यं प्रभुशक्तिः साधनसान्निध्यं विभुशक्तिश्चेति द्विधा, एवमशक्तिस्तद्विपरीता । द्विधैव शक्तिर्देव-गन्धर्व-यक्ष-रक्षः-पितृ-पिशाचाः, अशक्तिर्मानुष-पशु-मृग-पक्षि-सरीसृप-स्थावराणि । शक्तेः प्रकृतिः शरीरनिमित्तमशक्तेर्जराय्वण्डोद्भित्-संशो(स्वे)काः । मातृपितृभ्यां जराय्वण्डं च तत् षट्कोशिकम्, पृथिव्या उद्भिद्यम् । पृथिव्युदकसंसेकजमित्यदृष्टफलपरिमाणम् । दृष्टफलपरिणामं, करणानि प्रवर्तमानानि क्रियान्ते सामान्यतश्चतुर्णां शक्त्यादीनामन्यतमं प्रत्ययं कुर्वन्ति शक्तिरुक्ता । सिद्धिरूहेन साधनं तारकं, शब्देन सुतारम्, अध्ययनेन तारयन्तं वा [1]तारादीन्याध्यात्मिकान्यभ्यतीत्य क्रियया तारक-सुतार-[तारयन्ता]-नामन्यतमेन, प्रमोदं मानुषाद्याधिभौतिकात्ययेन तत्रयान्यतमेनैव प्रमुदितं शीताद्याधिभौतिकात्ययेन । तत्रयान्यतमेनैव मोदमानम्, यदकुशलसंसृष्टव्यपाश्रयात् सन्देहातिक्रमात् तदन्यतमेन रम्यकम्, दौर्भाग्यातिक्रमेण सदा प्रमुदितमित्यष्टौ सिद्धयः सन्निहितविषयसन्तोषाच्चिकीर्षितादर्थादूनस्य निवृत्तिरेकैव (रेवैक) तुष्टिरूपा या नवत्वान्नवविधा तुष्टिः प्रकृत्युपादान-काल-भाग्यकारणपूर्वकपुरुषान्यत्वापरिज्ञानात् माध्यस्थ्यलाभोऽम्भः-सलिलौघवृष्ट्याख्याः शरीर-शरीरि-विशेषणोपायाश्चतस्र आध्यात्मिकास्तुष्टयः, बाह्याश्च विषयनिर्वेदजाः पञ्च विषयेष्वर्जना-रक्षण[-क्षणक्षण]-क्षयासङ्गहिंसादोषदर्शनात् सुतार-सुपार-सुनेत्र-मारीचोत्तमा रूपाख्या इति नव तुष्टयः । एकादशेन्द्रियवधा बधिरान्धाघ्रा मूक-जडोन्माद-[कुणि]-कुष्ठि-क्लीबोदावर्त-पङ्गु[लाः], पूर्वोक्तेभ्यः सिद्ध्युपायेभ्यो विपरीतनामानोऽष्टावसिद्धयः, तथा तुष्टिविपरीतनामानोऽनाम्भसिक्यादयो नवातुष्टय इत्यशक्तिरष्टाविंशतिविधा । आश्रयाः

१ तादीत्या° भ प । २ °लाश्च° भ ।

प्रवृत्त्यहङ्कार-ममकार-क्रोध-मरण-विषादास्तमो-मोह-महामोह-तामिश्रा(स्रा)न्धता-मिस्राः पञ्च विपर्ययाः इत्येतद् दृष्टफलपरिमाणम् । इत्थं रूपप्रवृत्तिफलपरिमाणमाध्यात्मिकानां कार्य-कारणात्मकानां भेदानां निर्दिष्टमनेन तैर्यग्योन-मानुष-देवेष्वपि सप्रपञ्चेषु ज्ञेयम् । तस्मात् परिमितत्वात् संसर्गपूर्वका भेदा व्रीहाविव संसृष्टा मूलाङ्कुर-पर्ण-नाल-काण्ड-प्रसव-तुष-शूक-पुष्प-क्षीर-तन्दुलकणभावाः । यथा वा शुक्र-शोणितसंसृष्टाः कललार्बुद-मांसपेशि-शरीरव्यूह-बाल्य-कौमार्य(र)-यौवन-स्थाविरा भावा इति ।

इतश्च– अस्ति प्रधानम्, भेदानां कार्य-कारणभावात् । शब्दाद्यात्मना व्यवतिष्ठमानानि सत्त्व-रजस्तमांसि प्रकाश-प्रवृत्ति-नियमैः परस्परार्थं कुर्वन्ति । सत्त्वं सत्त्वा[त्म]ना व्यवतिष्ठमानं तद्भावायेतरयोः प्रवृत्तिं ख्यापयति । एवं रजः प्रवर्तयति, तमो नियमयति, शब्दाद्यारब्धानि पृथिव्यादीनि आर[म्भो]त्क्रमेण वृत्ति-(धृति)-संग्रह-पक्ति-व्यूहावकाशदानैः परस्परार्थं कुर्वन्ति । इन्द्रियाण्यप्यन्योन्य-विषयग्रहणसाहायकेनोपकुर्वन्ति । यच्च यस्य विषयं प्रख्यापयत्यर्जयति, पाति, संस्करोत्युपधत्ते वा तत् कारणम्, इतरत् कार्यम् । स्थान-साधनात्मप्रख्यात्युप-भोगैः करणार्थं करोति कार्यम्, करणं वृद्धि-क्षत-भग्न-संरोहण-संशो(से)क-परि-पालनैः कार्यार्थं करोति । एवं बाह्या[ध्या]त्मिकानां देव-मानुष-तैर्यग्योनानां सप्रपञ्चानामन्येनो(न्योन्यो)पकार-रक्षा-संग्रह-सेचन-पूजन-पोषण-स्थिति-शुश्रूषा-ऽऽदिविकल्पा वर्णाश्रयादीनां योज्याः । एककर्तृका भेदाः, परस्परोपकारकोप-कार्यत्वात्, शयना[सना]दिवत्, तस्मादस्ति प्रधानमिति ।

इतश्च– अस्ति [प्रधानम्,] शक्तिमदवस्थामात्रत्वात् । [शक्तीनां कार्य-कारणानामधिष्ठितानाम्, अनधिष्ठितानां च स्वकार्यसमर्थास्विषु कालेषु शक्तयोऽवतिष्ठन्ते । तद्यथा– 'प्राक् प्रवृत्तेः शक्त्यवस्थानमनुमीयते' । प्रवृत्त्युपल-[ब्धेः प्रवृत्तिकालेऽ]वस्थानमपवर्गदर्शनात् । प्रवृत्त्युत्तरकालावस्थानं प्रवृत्तिव्यति-रेकेणावस्थानदर्शनात् एवमाद्यन्तवद् व्यक्तमुपलभ्य व्यक्तशक्त्यावस्थाऽस्त्यनव-स्थितशक्तेराद्यवसानाभावात् खपुष्पवत् । अवस्थितशक्तेरेव तद्भावाद्, मृदः पिण्डादिभाववत् । तस्माद् व्यक्तशक्तिप्रवृत्त्युपलब्धेरस्ति प्रधानमिति ।

इतश्च– अस्ति प्रधानम्, वैश्वरूप्यस्याविभागप्राप्तेर्देश-काल-प्रमाण-बल-रूपप्रत्यासत्तेरवश्यम्भाव्युच्छेदाभ्यां च निवृत्तेः । जल-भूम्योः पारिणामिकं रसा[दि]वैश्वरूप्यं स्थावरेषु दृष्टम् । तथा(या) स्थावराणां जङ्गमेषु, जङ्गमानां स्थावरेषु, स्थावराणां स्थावरेषु, जङ्गमानां जङ्गमेषु । जात्यनुच्छेदेन सर्वं सर्वात्मकं देशकालाकार-निमित्तावबन्धी तु न समानकालमात्माभिव्यक्तिस्ते मन्यामहे जल-

१ °मग्न° भ । २ °शरवाह° भ । ३ °कोर° भ ।

भूम्योरप्येतत्पारिणामिकं रसादिवैश्वरूप्यम्, अन्येषां च भूतानामन्यपरिणाम इत्येवं तदप्यन्यस्येत्यवश्यम्भाव्यविभागः । यत्र चाविभागस्तत् प्रधानं वैश्वरूप्यस्याविभागकारणपूर्वकत्वात् मयूरबर्हवैचित्र्यस्यैव तदण्डकरसपूर्वकत्वम् । तस्मादस्ति प्रधानमित्येभिः पञ्चभिर्वीतैः समन्वय-परिमाणोपकार-शक्ति-प्रवृत्ति-वैश्वरूप्यगत्याख्यैः सामान्यसंसर्गैककर्तृ-शक्तिमच्छक्तिविभागसंज्ञं प्रधानं सिद्धम् । अत एवैकत्वमर्थवत्त्वं परार्थत्वसंहत्यकारिणां पाराार्थ्याच्छयनादिवत् । अतः पुरुषास्तित्वमन्यत्वं तद्बहुत्वं च पुरुषाणाम् । प्रधानस्याद्यन्तपुरुषार्थोपलब्ध्यनन्तरं निवृत्ति[ः]र्व्रीह्युदकगत्या रङ्गनर्तकीवद् वेति । प्रधान-पुरुष-संयोग-विभागावित्थमियत्परिज्ञानफलं च शास्त्रम् ।[1]

तथा **संव्यवहारप्रसिद्धेरित्यादि**, यावदावीतानामिति व्याख्यातं द्रष्टव्यम् । एतेषामेव पञ्चानां वीतानां परिशुद्ध्यर्थाः पञ्चैवावीताः । एवमेभिः पञ्चभिर्वीतैः प्रधानस्य परिग्रहं कृत्वा पुनरावीतैः करिष्यामः 'परपक्षप्रतिषेधेन स्वपक्षपरिग्रहक्रिया सा [ऽऽ]वीतः' इत्यपदिष्टं पुरस्तात् । तस्यास्य प्रतिपक्षाः सर्वैकान्तिनः पुरुषेश्वराणु-प्रवादा विकारपुरुषा वैनाशिकाश्च । तेषां वि(वै)नाशिकप्रतिषेधमग्रे वक्ष्यामः । कस्मात्? किञ्चिद् वि(वै)नाशिका हीतर इत्यतः प्रभृत्युपक्रम्यानुपलब्धेर्नास्तीति द्वितीयस्य शिरसो[न]भ्युपगतस्यासत उत्पत्त्यभावाद् व्यभिचारप्रसङ्गः गते यावदनागतेऽपि काले न भविष्यतीति । किञ्चान्यत् यदि व्यक्तस्यासत उत्पत्तिर्भवत्यर्थार्थिभिस्तृण-पांशु-वालुका मुक्तामणि-रजत-सुवर्णानि क्रियेरन् । कस्मात्? अभावक्रिया [गुरुकार्या] भावक्रिया लघ्विति । न त्वेवं क्रियते, **तस्मादयुक्तमित्यादि**, यावदुक्तोत्तरत्वादसम्यग् विधिः ।

किं चान्यत्– यदि व्यक्तस्यासत उत्प[त्तिर्योन्य]भावादेकत्वप्रसङ्गः । प्रधानाभावात् सामान्यमात्रमिदं व्यक्तं निर्विशेषमित्ये[तत् प्र]सज्येत । कस्मात्? सामान्यपूर्वकत्वाद् विशेषाणाम्, सामान्यपूर्वका हि लोके विशेषा दृष्टास्तद्यथा– क्षीरपूर्वका दधि-मस्तु-द्रप्स-नवनीत-घृतारिष्ट-किलाट-कूचिकाभावाः, न त्वसति भावः कश्चिदस्ति, यत्पूर्वका व्यक्तविशेषाः स्युस्तस्मात् सामान्यमात्रमिदं व्यक्तं निर्विशेषमित्येतत् । न त्वि(न्वि)दं तादृक्, तस्मान्नेदं व्यक्तमसत उत्पद्यते, न चेदं सत उत्पद्यते; पारिशेष्यात् प्रधानादेवेदं व्यक्तमुत्पद्यत इत्येतद् व्यक्तम्, तस्मादस्ति प्रधानमिति । एषोऽन्वयवीतस्यावीतः ।[3]

किं चान्यदित्यादि ।[2] तदेव योन्यभावादनवस्थाप्रसङ्गः परिमाणस्य संसर्गपूर्वकत्वाविनाभावादित्यर्थः । प्रधानाभावान्निःप(ष्प)रिमाणमि[दं व्यक्तमव्यवस्थितमि]त्येतत् प्रसज्येत । कस्मात्? सतां ह्यर्थानां लोके परिमाणं दृष्टं तुलामान-हस्त-

१ °माणफलं प । २ °दिष्ट प । ३ °वोन्वयी त° प ।

व्याम-रज्ज्वात्मोपचयैर्न त्वसति भावः कश्चिदस्ति, यः प्रतिपद्यमानः परिमाणेऽवतिष्ठेत । तस्मान्निःप(ष्प)रिमाणमिदमव्यवस्थितमित्येतत् प्रसज्येत । न त्विदं तादृक्, तस्मान्नेदं व्यक्तमसत उत्पद्यते?, [न चेदं सत उत्पद्यते] परिशेषतः प्रधानादेवेदम् । तस्मादस्ति तत् ।

किं चान्यत्– एकजातिसमन्वयाभावाप्रसङ्गादिति । तदेव स्थाली-घटेत्यादि दृष्टान्तविशेषः सामान्य-विशेषोत्थापनार्थमुच्यते। अत्र परो ब्रूयाद्- 'विशेषमात्रस्य दर्शनादसत उत्पत्तिस्तद्यथा– आकारो गौरवमित्यादि धर्मभेदादिति'।

तत्रोत्तरम्– ताद्रूप्येणोपकारादयोष इति । धर्मभेदपरिणत्या लोकवृत्तान्तनयनादित्युपकारभेदप्रदर्शनात् कार्यकारणभाव–वीतस्य वीतत्वलेशं च स्पृशतीति तस्मादेव ग्रन्थादवगन्तव्यम्। यावत् पुरस्ताद् व्याख्यातम्। त(य)था तैर्यग्योन-मानुष-दैवानि परस्परार्थं न कुर्वीरन्निति । तत्र यदुक्तं 'भूतानां तत्समूहानां च व्यावृत्तेर्विशेषमात्रमिदं व्यक्तम्, तस्मादसत उत्पद्यते' इत्येतदयुक्तमिति। पुनरसत्समन्वयाशङ्कां निरस्य प्रपञ्चेन यावत् तस्माद् युक्तमेतद् योन्यभावाद् भेदप्रसङ्ग इति । एषोऽन्वयवीतस्यावीतः [स]प्रसङ्गो [व्या]ख्यातः । आचार्येणापि तथैव 'व्यवस्था तुल्यजाति-स[म]न्वयादि' इत्युक्तम्। तेनैव क्रमेण आदिग्रहणान्व(त् त्र)यः शेषा अप्यावीताः सूचिताः ।

तत्र कार्य-कारण[वीतस्या]वीतस्तावत् । किं चान्यत्– कार्य-कारणयोश्च व्यक्तमिदं द्विधा कृत्वा कार्यराशिं कारणराशिं च । किं च 'नासत उत्पत्तिः सम्भवति' इति वाक्यशेषः । क्रम-यौगपद्य-प्रवृत्त्यसम्भवात् । परस्परार्थात्मलाभत्वात् कार्य-कारणयोरन्योन्यानुरूपात्मलाभाभावः । अतः क्रमेण प्रवृत्त्यभावश्चक्राक्षवत् । असत्त्वादसद्वादिनः । तथा युगपदप्यभूतविनष्टयोरनपेक्षत्वात्, खरविषाणवत् । क्रियाऽऽदि-मध्यावसानेष्वसत्त्वादेव प्रवृत्त्यसम्भवः । यदारभ्यते तत् क्रियते, निष्ठां च गच्छतीति लोके दृष्टम्। तत् परस्परापेक्षामन्तरेण न सम्भवति। चक्राक्षवदित्युक्तम्। तस्मात् क्रम-यौगपद्य–प्रवृत्त्यसम्भवादकार्यकारणत्वप्रसङ्गः। कार्यकारणभूतं चैतद् व्यक्तम् । तस्मान्नेदम[स]त उत्पद्यते, परिशेषतः प्रधानादेवेदमिति कार्यकारणवीतस्यावीतः ।

किं चान्यत्– निर्बीजमकस्मादुत्पद्यमानं व्यक्तमनेकदेशत्वात् भेदानामसम्बद्धमुत्पद्यते, सम्बन्ध(द्धं) चोत्पद्यते; तस्मान्नेदमसत इति शक्तिवीतस्यावीतः । शेषस्तु प्रश(स)क्तानुप्रश(स)क्तविचारेण । संस्थानमादिसद्धर्ममात्रं शब्दादीनां विनाश्य-विनाशिनाम् । एवं लिङ्गमादिम[स]द्धर्ममात्रम् । सत्त्वादीनां विनाश्य-विनाशिनाम्, तस्मिन् विकारसंज्ञा । तत्र यदुक्तं 'विकारस्य विनाशित्वात् प्रधानस्य

---

१ °तः दृक्त° भ ।

विनाशित्वम्' इत्येतदयुक्तम् । गुणव्यतिरिक्तगुणप्रवृत्तिकारणाभावादाकस्मिक्याः प्रवृत्तेरभावाच्च इत्यादि प्रत्यभिज्ञानार्थक्रिया-हेतु-कार्य-नियमादिभिश्च हेतुभिरत्यन्तासदुत्पत्तिविनाशप्रतिषेधार्थः सर्वो ग्रन्थो वैश्वरूप्याविभागगतिव(वी)तस्यावीतो द्रष्टव्य इति । एवमेषां प्रधानास्तित्वैक्यादिसाधनार्थं वीतानां तत्सङ्घावस्यान्यथा व्यक्तासम्भवस्य वा(चा)दर्शनेन त्र्यात्मकयोनिहेतुत्वमवश्यमित्येतदवधारणार्थानां चावीतानामतथार्थत्वमुक्तविधिना प्रतिपादितमेकत्वं पुरुषवदपरिणामित्वं [ च सुखादीनाम् । तत एकत्वात् पुरुषवदपरिणामित्वादतथार्थत्वं चेति । तस्मादतथार्थत्वादनुमानानां सत्त्वादेतेऽर्था नोपपन्नाः । तद्यथा– भिन्नगुणत्वं ] वैषम्यात्मकत्वं विपरिणामः । पुनः साम्यापत्तिश्चेति । तदनुपपत्तेर्जगत्सर्ग-संहारकल्पना निर्मूला प्रधानाभावात् । तन्निर्मूलत्वात् पुरुषार्थेन हेतुना प्रयुक्ता प्रवृत्तिरित्येतदपि वितथम्, तद्वितथत्वात् तद्विषयः प्रत्ययोऽप्यज्ञानमेव, तदज्ञानत्वात् ज्ञानप्राप्यपुरुषार्थाभावोऽपीति समस्ततन्त्रार्थविघटनमेवेति किमवशिष्यते ? । वार्षगणे तन्त्रे शु(सु)भाषिताभिमतस्त्याज्योऽयमनुपपन्नपरोक्षार्थवादः । यद्युपपद्येत परोक्षार्थमपि तं गृह्णीयाम । न तूपपन्नः, तस्मात् सर्वसर्वात्मकत्वपरिग्रह एव न्याय्यः ।

**अन्यः पुनरित्यादि** । न सर्वासर्वात्मकत्वपरिग्रहो न्याय्यः, अन्यथा भवनद्वैतपरिग्रहाद् विध्युभयनयैकान्तोपपत्तेः । तत्र भवति भावद्वैतम् । भवतो भावस्य भाव्य–भवितृत्वाभ्यां भेदाभ्यां भावोपपत्तिः इत्येतत् प्रतिपादयिष्यते । नन्वेवं यथाऽनन्तरदूषितं सन्निध्यापत्तिभवनद्वैतम् । तत्र तावद् 'यः सन्निधिर्न हि, स सन्निधिमात्रवृत्तिरस्ति' । कुतः ? अनापन्नत्वात् । आपत्तिरनाविर्भूतस्याविर्भावः । तत आह–**अनाविर्भूतत्वात्** । अनाविर्भवनमप्रवर्तनम्, अप्रवर्तनं चानियमः । अथवाऽऽपत्तेर्विपरिणामः भावान्तरेणोपलब्धिराविर्भावो व्यक्तिः [प्रवृत्तिः] सन्ततः परिणामप्रबन्धः नियतस्वरूपत्वमधिगतद्रव्यार्थभा(ताऽ)वस्थितिरेभ्यो(रन्यो) विपर्ययः । **अनापन्नत्वादि**रेभ्यो हेतुभ्योऽनापन्नत्वादिस्वरूपेभ्यो नास्ति, वन्ध्यापुत्रवत् सन्निधिः । आदिग्रहणादप्रवृत्तेरव्यक्तेरनियतेरित्यादिरर्थः । अतः सन्निधेरसत्पर्यायत्वात् सन्निधिभवनाभावः । ननूक्तम्– अस्ति-भवत्यादिषु अस्ति-वर्तती सन्निधिवाचिनौ, भवति-विद्यती सामान्यभवनवाचिनौ, पद्यतिरापत्ति[भव]-नवाची' इति । सत्यमुक्तमयुक्तं तूक्तम्, अस्त्यादीनां सञ्ज्ञातपष्ठानां सत्ताऽर्थवाचित्वात् सर्वेऽप्यमी सत्ताऽर्थमेवाविशेषेण ब्रुवते । सा च सत्ता 'पद्यति-वर्त्य-(र्त्ति)त्येकार्थैव' इत्यत आह– पद्यति वर्त्तत्यर्थप्रवृत्तत्वादेव सत्तायाः । स्यान्मतम्,

---

१ °नोद्वैत° भ । २ नत्वैवं भ । °त्राप° भ । °भक्तम° भ ।

सद् विशेषद्रव्य-गुण-कर्मवद् वर्तति-पद्यत्योरुपादानं सत्त्वा(त्ता)विशेषत्वेनेति । एतच्चायुक्तम्, यस्मात् 'न हि द्रव्यादि सद्भेदेत्यादि यावदुपादानम्' इति गतार्थम् । किं तर्ह्युपादानम् ? । उच्यते– अस्त्यादि तुल्यार्थत्वेन कुतो ज्ञायते ? इति चेत् सत्तार्था इत्यविशेषेण वचनात् 'अस्ति-भवति-विद्यति-पद्यति-वर्ततयः सन्निपातषष्ठाः सत्तार्थाः' इत्यविशेषेणोक्तत्वात् सिद्धसेनसूरिणा ।

एवं तावत् सन्निधिभवनं नास्त्येव निरूपणानुपपत्तेः[1] । आपत्तिभवनमपि नास्ति । कथमिति[2] चेत् ? यदपि चापत्तिभवननिरूपणं सांख्यैः क्रियत इति वाक्यशेषः । प्रधानमेव भवति महदादिविकारापत्त्या यस्मात् तेन किल भूयत इति । इतिशब्द[स्य] हेत्वर्थत्वात् । महदादिभावना पद्यत इत्यस्मात् कारणात् प्रधानमेव भवति, तेनैव भूयते सत्त्वादिमयत्वात् विश्वस्येति किलशब्दः क्षेपे । एवं किल तेषां मतमिति । स च क्षेपोऽनुपपद्यमानत्वात् । कथमिति चेत् ? उच्यते– तदपि [न तस्यापि] भाव्यमानत्वाद् भावयितारमन्तरेण[3] भाव्यत्वानुपपत्तेः स्वत एव [न] भवतीत्यर्थः । भाव्यमानत्वं च वक्ष्यमाणोपपत्तिकत्वात् सिद्धम् । तच्चेद् व्यावृ(पृ)तं द्वितीयेन व्यावृ(पृ)ततरेण विना न प्रवर्तितुमर्हति, अनापन्नत्वाद्, अनापन्नस्य च सन्निधिमात्रस्य(स्या)पादितासत्त्वात् । तस्मादनापन्नस्य च स्वत एवापत्त्यभावात् तदुक्तापत्तिभवनं नोपपद्यत इति । किं कारणमनुपपन्नम् ? इति चेत्, अस्वतन्त्रत्वादन्यतन्त्रं हि तत् प्रधानाख्यमचेतनत्वात् । को दृष्टान्तः ? शब्दादिवत्, तथा शब्दादयः सत्त्व-रजस्तमोमयत्वा[द]स्वतन्त्रास्तदात्मकेन प्रधानेन भाव्यन्तेऽन्येन व्यापृता अपि व्यापारयित्रा, तथा प्रधानमपि, तस्मात् ततोऽन्यो भवति मुख्यः । कोऽसौ ? यः कर्ता । कः कर्ता ? अत आह– यः स्वतन्त्रः । कस्मात् ? प्रवर्तनवृत्तत्वात् प्रवर्तयतः क्रियाप्रवर्तनम्, तेन प्रवर्तनेन वृत्तत्वात्– प्रवर्तयितृत्वेन वृत्तत्वादित्यर्थः । प्रवर्तयद्धि कारणं तद्भावमापद्यते शब्दादि, यथा प्रवर्तयत् सत्त्व-रजस्तमोलक्षणं कारणं शब्दादिभावमापद्यते त्वन्मतेन तथा भवनवृत्तत्वात् तेन प्रवृत्त्य(वर्त्य)मानरूपेण भवनम्, तेन प्रवृत्तत्वात् प्रवर्तयितारमन्तरेणाभवनादवृत्तत्वात् तन्तुपटवत् । यथा तन्तवः पटं प्रवर्तयन्तः पटस्य कारणमित्युच्यन्ते, पटश्च तन्तुकार्यम्, तैः प्रवर्त्यत्वात्[4] ।

नन्वेते प्रधानशब्दादिदृष्टान्ता अद्वैतवादं समर्थयन्तीति उच्यते– प्रवर्तयितृत्वमात्रसाधर्म्यात् तदभ्युपगम्यं भेदेन निदर्श्यतेऽन्यथा पुरुषादिवदद्वैताभ्युपगमे विध्युभयैकान्ततोऽथानाभावाद्, भाव्य-भावकभेदप्रसिद्धेश्च । अभावितस्यासत्त्वाद् वन्ध्यापुत्रवद्, अणुधर्मादयोऽपि भाव्यमाना एव स्युः, इत्येतत्साधर्म्य-

१ विरू° भ । २ °मपि य । ३ भादपि° भ । ४ °ते भ ।

दृष्टान्ताः शब्दादयः । यद्येवं प्रस्तुतं धर्माधर्मावणवो वा कारणमस्त्येवेति सिद्ध-त्वात्, किमनुमितेन कारणेनेति चेत् ? नेत्युच्यते– **धर्माधर्मा(ण्वा)दीनामपि च तन्त्वंश्वादिवदित्यादि**, यावत् **प्रतिविशिष्टबुद्धिः यथा पटस्तन्तुपूर्वकस्त-न्तवोंऽशुपूर्वकाः** । अंशवस्तुटिपूर्वकास्तुटीनामपि प्रवर्तने शक्तास्ततः पूर्वे पूर्वे याव-च्छताणुकस्ततोऽपि पूर्वे पूर्वे यावद् द्व्यणुकः परमाणुरित्यनुमीयते शब्दादितो यावत् प्रधानम्, तथाऽण्वादीनामप्यचेतनानां प्रवर्तकौ धर्माधर्मौ । आदिग्रहणात् काल-स्वभाव-नियत्यादिवाद्यन्तरपरिकल्पिताः । एवं पूर्व-पूर्वशक्त-तारतम्येनेश्वरः सन्निहिततद्विधशक्तिः । धर्माधर्माण्वादिः(देः) प्रधानशब्दादेस्तथा तथा विनिवेशने सन्निहिता यस्य शक्तिः सोऽस्ति । का श(सा) तद्विधविनिवेशनशक्तिर्मुख्या तस्येति चेदुच्यते– प्रतिविशिष्टा बुद्धिरतोऽसौ प्रतिविशिष्टबुद्धि[ः प्रतिविशिष्टबुद्धि]भ्योऽपि स्थपति-कुलालादिभ्यः प्रतिकर्तृविनिवेशनप्रवृत्ति-निवृत्ति-विनियोजनेषु ज्ञात्वा (ज्ञत्वात्) स्वातन्त्र्याच्च तेषां भावानामीष्टे, न ते तस्येशते, नाप्यात्मनो, न च पर-स्परमज्ञास्वतन्त्रत्वाभ्याम् । स तु प्रतिविशिष्टबुद्धित्वात् स्वतन्त्रः, तस्याभिप्राये-णैव प्रवृत्तिमापद्यन्ते धर्माण्वा(धर्मा)दयः । सोऽपि चाभिप्रायप्रवृत्त्यापत्तेर्न सन्निधि-मात्रवृत्तिः, अतस्तेषां प्रवर्तयिता प्रवर्त्तयितृत्वात् कारणशक्तिमत् । स एव तेषां शक्तिमतामपि भाव्यत्वेनास्वातन्त्र्यात् तस्यैव तत्प्रवृत्ति-निवृत्ति-विनियोगेषु स्वात-न्त्र्यात् । जगत्सर्ग-स्थित्यन्तराल-प्रलय-महाप्रलयेषु प्रवर्तनं, प्रागौदासीन्येन स्थितानां धर्मादीनां सृष्टेः प्रवर्तनम्, प्रवृत्तानां पुनरुपसंहारान्निवर्तनम्, विनियोगो दैव-मानुष-ति(तै)र्यग्योनात् सरित्–समुद्रादि-तनुकरणाद्यवयवविभागविन्ना(न्या)सः । विष्णु-मन्वादीनामधिकृतपुरुषाणामपीहत्यपरमेश्वराभिप्रायानुरोधेन प्रवर्तमाना-धिकृतराजस्थानीयादिपुरुषा[णा]मिव तस्यैव प्रवर्तयितृत्वात् ।

इतस्तत्साधर्म्यप्रदर्शनार्थमाह– **अधिकृतपक्तृवत्** । तद्व्याख्यानार्थं **सम्भवन–धारणेत्यादि**, यावत् **प्रयोजनमात्रत्वात् क्रियाया इति** । यथा हि राज्ञा नियुक्तः सूपकारः स्थाली-काष्ठ-तन्दुलादीनां सम्भवन-धारण-ज्वालन-विक्ले-द[न]व्यापारेषु प्रवृत्ति-विनियोगेषु स्वातन्त्र्यात् तत्तदात्मा भवति, य(त)थेश्वर इति । अथवा कर्तृ-कर्म-करणाधिकरण-सम्प्रदानापादानानि प्रतिकारकं पचादीनां क्रियाभेदाद् यथा स्वशक्तिस्वातन्त्र्यात् कर्तॄणि । यथाऽधिकरणं स्थाली निदर्शन-मात्रं सम्भवन-धारणे कुर्वती पचतीत्युच्यते, ज्वलनं कुर्वन्ति काष्ठानि पचन्तीत्यु-च्यन्ते, अधिश्रयणोदकासेच[न]-तन्दुलावपनैधोऽपकर्षणादिक्रियाः कुर्वन् देवदत्तः पचतीत्युच्यते; इत्यादि प्रतिकारकं स्वातन्त्र्ये सत्यपि उपक्रमप्रवृत्त्य(भृत्य)पवर्गपर्य-वसानासु क्रियासु तस्यैव स्वातन्त्र्यात् सम्भवनादिप्रत्यक्षतायामपि पचनशक्तिमता-मप्यधिकरणादीनां देवदत्तस्य प्रवर्तयितृत्वादेवोच्यते–'देवदत्त एव पचति' इति

नान्यमी(ई)श्वरत्वात् । तां मुख्यां कर्तृशक्तिं दर्शयति- तेन पच्यते तृतीयया कर्तरि विहितया, स पचतीति वा प्रथमया, तत्र विहिततिप्रत्ययसमानाधिकरणतया । पुनरपि स्फुटीकरणार्थ[माह- तेन पचनं क्रियत इति यावदुक्तं भवति । तेन पच्यते, स पचतीति कुतः ? प्रयोजनमात्रार्थत्वात् । क्रियायाः प्रयोजनं परव्यापारणं, विक्लेदव्यापारणार्थाः सम्भवन-ज्वलनादिक्रियास्तासां च सर्वासां देवदत्तायत्तत्वात् । स पचति, तेन पच्यते इत्युक्तम् ।'

दृष्टान्तान्तरमाह-स्फुटीकरणार्थं] व्यापित्वप्रदर्शनार्थं च साक्षाद् वा भवितृवत् । तद्वर्णनं यथा च-सम्भवनेत्यादि, यावद् भवति च । भवति, न केवलं पचत्यादिबाह्यक्रियाविषयमेव प्रयोज्यत्वम् । किं तर्हि ? व्रीह्यादि-भवनाद्यन्तःक्रियाविषयमपि प्रयोजनम् । तथा भवत् पृथिव्युदकादि बाह्यं व्रीहिर्जायते भवतीत्यन्तर्भवनम् । सम्भवन-धारण-समर्था पृथिवी, रोहणसमर्थमुदकम्, आदिग्रहणाद् वर्धनसमर्था वायु-कालादयः, तैः कारितस्य व्रीहिभव[न]स्य प्रत्यक्षतायामपि सत्यां व्रीहिर्जायते भवत्यन्तःसन्निविष्टस्यातव्यात् तस्यैवेश्वरस्य प्रयोजकत्वादुच्यते-भवतीति । भवनमपि भवदेव भवतीति स्वरूपमात्रलाभोऽपि तद्वशादित्यर्थः ।

अथवा प्रस्तुतप्रधानकारणवादिसिद्धमेवेदं निदर्शनम्-सत्त्व-तमः-प्रकाशेत्यादि, यावद् रजोभवन[व]द् वा । यथासंख्यं सत्त्वस्य प्रकाशप्रवृत्तिस्तमसो नियमप्रवृत्तिश्चावरेत्युक्तम् । सत्त्वं शब्दात्मना प्रवर्तमानमित्यादि परस्परोपकारवीते प्रकाशादिलक्षणस्य सत्त्व[स्य] प्रवृत्तिः । गुरुचरणलक्षणस्य तमसश्च प्रवृत्तिर्यथासंख्यमितरयोः ख्यापयति व्यवस्थापयतीति वचनात् । रजस्तु प्रवृत्तिलक्षणमेव प्रवृत्त्ये(त्ते)कमिष्टं विशेषतः सत्यपि प्रवृत्तिसामान्ये करोति प्रवर्तयतीति वचनात् । तथाऽदृष्टा एवादिभूतकालादिप्रवर्तमानसामान्येऽपीश्वर एव प्रवर्तयितृत्वात् कारणमिति दृष्टान्तबाहुल्यमप्रदर्शनं प्रतिसिद्धान्तपरिदृष्टादृष्टादेः प्रवर्तयितृत्वख्यापनार्थं सिद्धान्तं सिद्धान्तं प्रति प्रतिसिद्धान्तम् । तेषु[तेषु वैशेषिकादिसिद्धान्तेषु] कल्पितानां परितोऽनुमानैर्दृष्टानामप्यदृष्टाणुप्रधान-विष्णवा(ण्वा)दीनां प्रवर्तयितेश्वर इति दार्ष्टान्तिकोपनयनात् । इति स एव [भव]तीत्थमीश्वर एव भवति, परमार्थतः 'सर्वव्यक्तिप्रवृत्त्यात्मकत्वात्' सर्वासां व्यक्तीनां प्रवृत्तय आत्माऽस्य सर्वव्यक्तिप्रवृत्त्यात्मकस्तद्धि[शिष्टबुद्धि]शक्त्याध्यासरूपत्वात तासामेव चास्याष्टमूर्तितोच्यते क्षिति-जल-पवन-हुताशन-यजमानाकाश-सोम-सूर्याख्याऽष्टमूर्तिताऽस्य स्वशक्त्याध्यासरूपत्वात् तासु स एव भवति । सा.सा च ।

१ °तीव प्र° प । २ वर्त्तन° प । ३ राजभवनाद् प । ४ सत्वश्च प । ५ वृत्तीनां प । ६ °वृत्तिप्र° प । ७ °तं° भ ।

किं चान्यत्– प्रवृत्तिफलप्रकर्षा[पकर्षा]भावप्रसङ्गादीश्वर एव कारणं, नादृष्टादि, न प्रधानादीति । अत आह– इतरथेत्यादि, यावद् दृष्टौ च तौ । यद्यदृष्टत्वादेः, प्रधानादेर्वा प्रवृत्तयः फलानि वा स्युः, क्रियाणां पूर्वकृतकर्मफलप्रेरितानां तदनुरूपत्वात् फलानां च फलप्रेरितकर्मानुरूपत्वान्मनुष्यनिर्वर्तनीया एव स्वभावमार्दवादिक्रियाः कृत्वा मनुष्य एव पुनरपि स्यात्; मा भूत् सरागसंयमादिदेवगतिनिर्वर्तनीयक्रियासम्बन्धी तदनुरूपवैक्रियशरीरादिलब्ध्युत्कर्षभावः । तथा बह्वारम्भ-परिग्रहादि-निरयायुःसंवर्तनीयकर्मभाक् तदनुरूपदुःखैकरसनारकत्वनिकृष्टफलानुभावी वा मा भूत् परस्परानुरूपशालिबीजाङ्कुरादिहेतुकार्यभावप्रबन्धवत् । विशिष्टविशिष्टबुद्धिस्वतन्त्रकारणप्रेरणाभावात्, स्वानुरूपकार्य-कारणानुबन्धसामर्थ्याभ्युपगमाच्च नादृष्टात्, न प्रधानादेर्वैषम्यं स्यात् । दृष्टं च (दृष्टान्त)वैषम्यमध्ययनविद्यागमानधिगमाद्युत्कर्षापकर्षयोरन्यदतो विमर्दक्षमं कारणमस्तीश्वर[कामचारप्रे]रणाद् ऋते, तदभिप्रायस्याप्रतिघातस्य प्रवृत्तिः कामचारस्तेन प्रेरणं भावानां प्रवर्तनं स्वाचाराणामप्यनिष्टफलसम्बन्धो, दुराचाराणामिष्टफलसम्बन्धः । तस्मात् सर्वमीश्वरप्रवर्तितं प्रवर्तते, नान्यथा । प्रयोगश्च– **तनुकरण-भुवनसाधनायेत्यादि**, यावत् **तक्षाधिष्ठितरथदारुगणवदिति** । यथाप्रक्रियं शरीराणीन्द्रियाणि भुवनं च साधयितुमधितिष्ठद्भिरदृष्टैः प्रेरिताः परमाणवो **वैशेषिकाणां** प्रवृत्तानि सत्त्वादीनि, प्रधानेन **सांख्यानामन्येषां** वा भूतानि काल-स्वभाव-नियत्याद्यधिष्ठितानीत्यभिमतानि प्रवर्त्यानि सप्रवर्तकानि विशिष्टचेतनाधिष्ठितान्येव प्रवर्तत(न्त)इति [प्रति]ज्ञा, सम्भूयैकार्थकारित्वादिति हेतुः । सम्भूयकारित्वं पूर्वपूर्वशक्ततारतम्यकारणानुमानोक्तेः परमाणु-सत्त्वादयः सम्भूय तन्वादित्वेनावस्थिताः परस्परेण सम्भूय गमनाभ्यवहरण-सुख-दुःखानुभव-रूपाद्युपलब्धि-सत्त्वगुणाधारतादिकार्यं कुर्वन्तो दृश्यन्ते । तत् सिद्धमेषां सम्भूयैकार्थकारित्वम्, तक्षाधिष्ठितरथदारुगणवत् । रथार्थो दारुसङ्घातो रथ-दारुगणः, स तक्ष्णा विशिष्टचेतनेनाधिष्ठितस्तथैतानि तथा चेतनत्वात् तथेति तस्यामेव प्रतिज्ञायाम्, 'अचेतनत्वात्' इत्युपचयहेतुः । स एव रथदारुगणो [दृष्टान्तः वक्ष्यमाणः] वा तुर्यादिवदिति, तनुकरण-भुव[ना]नामचेतनत्वं च सिद्धम् । अथवा स्थित्वा प्रवृत्तेस्तुर्यादिवद् यथा तुरि-वेमशलाकानलिका-रज्ज्वञ्चनिका-सूत्रादीनि प्रागप्रवृत्तानि, किञ्चित्कालं स्थित्वा [प्र]वर्तमानानि विशिष्टकुविन्दबुद्ध्यधिष्ठितानि पटनिष्पत्त्यै प्रवर्तन्ते, तनुकरण-भुवनानि तथेति ।

चेतनानधिष्ठितक्षीर-दधि-मेघादिवदनेकान्त इति चेत् । स्यान्मतम्– प्रतिविशिष्टबुद्धिना केनचिदनधिष्ठितेषु क्षीर-दधि-मेघादिषु सम्भूयैकार्थकारित्वाचेतनत्वस्थित्वाप्रवृत्तिधर्माणां दर्शनादनैकान्तिकता संशयहेतुतेति ।

एतच्च न, अदृष्टकर्तृकविषयप्रतिज्ञाऽर्थाव्यतिरेकात्। अदृष्टोऽस्याः कर्ता विषयः सेयमदृष्टकर्तृकविषया प्रतिज्ञा, तस्याः प्रतिज्ञायास्तनुकरण-भुवनधर्मिकायाः प्रतिविशिष्टबुद्ध्यधिष्ठितत्वसाध्यधर्मणः क्षीर-दधि-मेघादिधर्मिणामपृथक्त्वात्, प्रतिज्ञाऽन्तःपातित्वाद् विपक्षाभावे हेतुव्यभिचाराभावात् नानेकान्तः। शब्दानित्यत्वसाधने प्रतिज्ञा तु(नु)नीतजलवि(धि)ध्वन्यनित्य[त्ववद् यथा अ]नित्यः शब्द इति प्रतिज्ञाते कृतकत्वं देश-कालाभ्यामनवरते जलधिध्वनौ पुरुषादिभेदेन चानवरते सामादिशब्दे च दृष्टत्वादनेकान्त इति वचनम्। तदाभासंचोदनम्, उदन्वत्-सादिशब्दानामप्युपादानभेदभिन्नानां शब्द इति श्रोत्रग्राह्यत्वाभेदेन प्रतिज्ञातानां शब्दत्वानतिक्रमात् पक्षान्त[र्नीत]त्वात् तदनित्यत्वम्। कृतकत्वाविनाभाविशब्दादन्यस्य नित्यस्य कृतकस्यादर्शनाच्च जायते, देश-कालोपादानभेदभिन्नस्याभेदेऽपि सत्युपलभ्यधर्मणोऽनुपलभ्यत्वाच्छब्दव्यक्तिधर्मित्वाच्च जात्युत्तरं च तस्मादनुत्तरमिति।

स्थित्वा प्रवृत्तचेतनानधिष्ठितेश्वरवदनेकान्त इति चेत् स्यान्मतम्– यथेश्वरः स्वयं प्रागप्रवृत्तान् स्थित्वा प्रवर्तयन्नपि चेतनान्तरेणानधिष्ठितः प्रवृत्तश्च; तथा तन्वादीनि स्थित्वा प्रवृत्तानि स्युरित्यनेकान्तः। ईश्वरस्य वा चेतनाधिष्ठि[त]तेत्यादि। एवमनैकान्तिकत्वानिच्छाया वा चेतनाधिष्ठितोऽसावीश्वरः प्राप्तः, स्थित्वा प्रवृत्तेरदृष्टाणुप्रधानादिवत् अतोऽन्येश्वरता ग्रहाधिष्ठितस्त्री-पुरुषादिवत्, तस्यापि चाधिष्ठातुरन्याधिष्ठिततेत्य[नवस्था स्यादिति। ] एतच्च न, चेतनाधिष्ठितप्रवृत्तित्वसाध्यधर्मत्वात् नैष दोषः। चेतनाधिष्ठितप्रवृत्तित्वं हि साध्यते धर्मः, स चाचेतनमेव तद्धर्मिविषयत्वाचेतनानां सिद्धत्वात्, प्रयोजनाभावाच्च। तनुकरण-भुवनसाधनप्रवृत्तादृष्टाणु-प्रधानादीनि ह्यचेतनानि धर्मिणि चेतनाधिष्ठितत्वधर्मेण विशिष्टानि साध्यन्त इति प्रतिज्ञाविषयाज्ञानाददोष इति देवदत्ता[द]यस्तर्हि चेतनेश्वरा[नधिष्ठिताः प्रवर्तन्ते सामर्थ्यादचेतनधर्मिविषयं चेतनाधिष्ठानं साध्यते प्रतिज्ञाविषयव्यवस्थायां चेत[ना]नां देवदत्तादीनां चेतनेश्वरेणा]धिष्ठानं न प्राप्नोति। ततो देवदत्तादिवच्चेतनानधिष्ठि[तानि तन्वादिसाधनार्थादृष्टाणुप्रधानादीनामनेकान्तः। सोऽपि चेश्वरस्तद्वच्चेतनान्तराधिष्ठित इति प्राप्तमुच्यते च त्वया दूष्यत] एव त्वया चेतनानामपीश्वराधिष्ठानम्। यथा–

'अन्यो[1] जन्तुरनीशोऽयमात्मनः सुख-दुःखयोः।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥"
.(भा० व० अ. ३०, श्लो० २८)

---

१ अज्ञो भ।

पुरुषवादनिरसनायेति श्लोकवचनप्रयोजनमाह– मा भूत् पुरुषकारणवाद-प्रसङ्गः, तदवस्थामात्रम्, नन्वदृष्टप्रधानाण्वादीति । अत उक्तं भवता–

'अन्यो जन्तुरनीशोऽयम्' इति ।

अत्रोच्यते– न, प्राग् विशिष्टबुद्धिचेतनप्रतिज्ञानात् प्रागस्माभिर्विशेषितं विशिष्टबुद्ध्यधिष्ठितानि तन्वादीनि विशिष्टबुद्धित्वं चापराधीनं स्वातन्त्र्यम् । तत कुतः सिद्धम्? इति चेदुच्यते– विशिष्टबुद्धित्वमपि चास्यार्थानामर्थक्रियायोग्य-त्वेन सन्निवेशकत्वात्, तन्वादीनि विशिष्टबुद्धिपूर्वकाणि अर्थक्रियायोग्यत्वेन सन्निविष्टावयवत्वात् स्थान-गमन-शयनासनाहारादिप्रयोजनानि हि तन्वादिषु क्रियन्ते । तत्क्रियायोग्यावयवसन्निवेशात् स्थपतिबुद्धिपूर्वकप्रासादवत् तस्मादर्थ-क्रियायोग्यत्वेनार्थानां सन्निवेशकः स स्थपतिवत् तस्माच्च विशिष्टबुद्धिरिति । अनैकान्तिकतोद्भावनार्थमाह– **तन्वादीनीत्यादि**, यावत् **[नीलोत्पल]नाल-कण्टक-मयूरचन्द्रकादिवदिति** । न हि प्रशस्तशुभवर्ण-गन्ध-रस-स्पर्शस्य लक्ष्मीनिलयस्य जलाशयालङ्करणस्य [कमलस्य] ग्रहण-धारणोपभोगादिसाधनभूते नाले केनचिदसू[य]या 'मा ग्रहीत् कश्चिद्' इति कण्टका[ः] कृता नीलोत्पल-नालादिष्वप्यतिप्रसङ्गात् । न च मयूरचन्द्रकाणामिन्द्रचापवर्णप्रतिस्पर्द्धिविचित्र-वर्णता कृता । कुड्यादिषु चित्रकरेणेव केनचित् विशिष्टबुद्धिना चित्रकरचेतनदा-नाद्यभावप्रसङ्गादिति ।

अत्रोच्यते– न दधि-मेघादिवदुक्तोत्तरत्वात्, क्षीर-दधि-मेघादिवत्; पद्मना-लकण्टक-मयूरचन्द्रकादीनां तन्वादिवच्चादृष्टकर्तृकविषयप्रतिज्ञार्थाव्यतिरेकादनै-कान्तिकत्वाभाव इत्युक्तोत्तरमेतत् ।

एवं तावत् सामान्येन विशिष्टबुद्धिपूर्वकतोक्ता । प्रस्तुतकापिलमतापेक्षया चैवं प्रतिज्ञायते– **लघुप्रकाशेत्यादि**, यावत् **पाचकाधिष्ठितानलोदकौदन-साधनवदिति** । यथा परस्परप्रत्यनीकयोरग्न्युदकयोः प्रत्यनीकत्वविधायिना विशिष्टबुद्धिना पाचकेनाधिष्ठितयोः सत्यपि मिथः प्रत्यनीकत्वे तद्बुद्धिवशवर्तिनोः संहत्यकारित्वादो[द]नसाधनं दृष्टम्, तथा लघु-गुरुणोः प्रकाश-वरणयोः प्रवृत्ति-नियमयोश्च मिथो विरुद्धयोरपि संहत्य महदादिभावेनैकार्थकारित्वाद् विशिष्ट-बुद्धिपूर्वकतेति ।

अन्योन्याभिभवन-मिथुनवृत्तित्व-विपरिणामादि चेत् स्यान्मतम्– सत्त्व-रज-तमसामेवाङ्गाङ्गिभावः । पुरुषार्थमुद्दिश्य प्रवृत्तानां वैषम्यविपरिणामात् महदा-दिसाधनं ताभ्यः (नान्यः) प्रयोक्तेति । एतच्च न, परिणामस्यापि कार्यत्वात्,

१ अज्ञो भ । २ °दुत्तरो° प ।

तद् व्याचष्टे- धर्मान्तरैक्यादिपरिणामो हि धर्मान्तरनिषेधान्न धर्मान्तराविर्भवनं च तद्द्वयभूतं कार्यम्, स तु परिणामः कार्यत्वात्, पूर्ववत् प्रतिज्ञार्थाव्यतिरेकाद् रथादिवत सोऽपि विशिष्टबुद्धिमद्विहितः, तस्मादयुक्तं 'स्वत एव परिणमन्ते सत्त्वादयः' इति।

अन्वाह चेति, जिनमतानुसारेण- एकोऽद्वितीयः प्रधानो वा वशी ज्ञत्व-स्वातन्त्र्याभ्यां निःक्रि(ष्क्रि)याणामज्ञास्वतन्त्राणां [परतन्त्राणां] परतन्त्रा ज्ञा अपि हि निष्क्रिया एव बहूनामनन्तानां प्रधानाण्वादीनां कर्म-करण-सम्प्रदानापादानाधिकरण-प्रधानशक्तीनामनन्तानामपि प्रवर्तयितृत्वात्, स्ववशीकर्तुं शक्तत्वाद् वशीति। एकं बीजं प्रधानं महदादिविपरिणत्या बहुधा वृंह्या(व्रीह्या)दि-स्तम्बान्ता(न्ना)नन्तरभेदभिन्नजगत्तया यः करोति सृजति अधितिष्ठत्यात्माभिप्रायानुरूपेण तथा तथा व्यवस्थापयति। तमीश्वरी(रं) स्वतो भिन्नस्य भाव्यभवनस्य प्रधानादिसंज्ञस्य भावयितारमात्मस्थमात्मनि स्थितं क्षित्याद्यष्टमूर्तिं सर्वगतं सर्वत्र तासां सद्भावात् येऽनुपश्यन्ति, तत्प्रसादादेव तज्ज्ञानानुसारेण योगाभ्यासप्रसादक्रमेण। केऽनुपश्यन्ति? धीरा अविचलितयोगसमाधयः। को योगः?

"प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।
तर्कः समाधिरित्येष षडङ्गो योग उच्यते॥"

[अमृतनादोपनिषत्, अत्रिस्मृति]

तत्रेन्द्रियाणां विषयेभ्यो मनसश्च प्रत्याहरणं प्रत्याहारः। प्राणायामस्त्रिविधः- रेचकः, कुम्भकः, धारक इति। तत्र रेचक आन्तरं वायुं वहिर्निष्काशयति नासिकाद्वारेण। पूरको बाह्यमन्तः प्रवेश्य पूरयति। कुम्भकः पूर्णकुम्भवदस्पन्दं वायुं सामीप्येनावस्थापयति। ध्यानमिष्टदेवताचिन्तनं वा। धारणा यथाऽभ्यासं हृदयादिषु प्रदेशेषु मनसोऽवस्थापनं यथा पूर्वं नाभौ, ततो हृदये, कण्ठे, नासिकाग्रे, भ्रुवो मध्ये ललाटे मूर्धनीति। तर्कः शून्यागार-गिरिकन्दराऽऽद्येकान्ते शुचौ देशे शरीरमृज्वायस्य दन्ताग्राणि जिह्वाग्रेण सन्धाय पल्यं(र्यं)क-स्वस्तिक-वीरासनाद्यासनं समपादादि[स्थानं वाऽऽ]स्थाय ध्यायतो मे समाधिर्भवतीति तर्कयेत्, अनेनेत्थं कृते [न] क्रियाविशेषेणाहार-विहार-स्वाध्यायादिना ध्यानसमाधिर्भवतीति तदुपायविचार ऊहस्तर्कः। ध्यानयोगाभिरतिः समाधिरित्येष षडङ्गो योगः। अनेन योगेन सर्वत्र क्षित्यादिमूर्तिमीश्वरं दृष्ट्वा पश्चाद् भावितात्मा तमात्मस्थमेव पश्यति- "यदत्र[3] मम शरीरे कठिनं सा पृथिवी परमेश्वरमूर्तिः। यद् द्रवं तज्ज-

१ "एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥" श्वेताश्व० ६।१२.
२ व्रह्मा भ। ३ गलोपनि० पृ० २६१.

लमूष्मा तेजश्चलं वायुः, शुषिरमाकाशं, यच्चैतन्यं स यजमानः, चक्षुः सूर्यो, जिह्वा सोमे मनो वेत्यन्येष्वप्यवयवेषु यथासम्भवं येऽनुपश्यन्ति, ते धीराः शाश्वतीं शान्तिमाप्नुवन्ति । तेनैवेश्वरेण सायोज्यं निर्वाणं मोक्षमित्यर्थः । 'नेतरे प्रधान-पुरुष-नि[यत्यादि]कारणिन इति" ।

नयस्वरूपाख्यानार्थमाह– **अयं विधिरुभयभाक्** । उभयं विधिं नियमं च भजत इत्युभयभाक् विधिर्व्याख्यातो लोकवदिति पूर्वमिति [स्मारयति । ] पुनः संक्षेपेण व्याचष्टे– अनयवादप्रवृत्तिः । न किञ्चिदर्थमयम[प]हरति । किं न एतेन ? यदि सामान्यं यदि विशेष इत्यादि तस्य विधेरुत्सर्गाद् विधानात् स विधिर्विधी-यते । कस्मात् ? सर्वसर्वात्मकत्वात् निरपवादः प्रवर्तत एव । प्रवर्तते न क्वचिद् व्याहन्यते । अयं हि नयः 'सर्वं सर्वात्मकम्' इतीच्छति । यथा कः (प्राक्)सूचितं सन्निध्यापत्तिर्व्या[ख्या]ने, तदेवात्रापि वक्ष्यते । नियमः सन्निधिप्रयोज्यसतोर-प्रवृत्तेः यावेतावनन्तरोक्तौ सन्निधिर्भवत्यापत्तिभवनसहायमीश्वरप्रवर्त्यो वा प्रयोज्यः प्रधानाद्दृष्टाण्वादिर्भावस्तयोर्द्वयोरप्यप्रवृत्तेरसत्त्वम् । किं कारणम् ? तयोरसत् सत्त्वात् तदुभयं ह्यसदेव सदित्युच्यते । स्वतन्त्रस्य कर्तुर्ज्ञस्यैव भवनात्, तद्विलक्षणस्याभव-नापन्नस्याप्रवृत्तस्यासत्त्वात्, खपुष्पवत् । तस्मात् नियमश्चेति विधिर्विधीयते नियम्यते चेति । ततोऽयं विधिरुभयभागिति शब्दार्थः ।

अधुना सादृश्य-सामान्यं च शब्दार्थः । वाक्यार्थस्य वक्ष्यमाणत्वात् पदार्थ इति गम्यते । सदृशसन्निवेशमानैर्मीयत इति समानम् । समानं दृक्त्वं यत्र द्रष्टॄणां तत् सदृशम् । सदृशं समानं समानभावः सामान्यं जाति-लिङ्ग-प्रत्ययाभिधाने-ष्विति । नान्यापोहेन समानवस्त्वतिरिक्ततत्त्वादि वा तदनुपपत्तेरेतत् सामान्यं शब्दार्थः । ननु सामान्यमविकल्पात्मकं पुरुष-नियत्यादिसर्वसर्वात्मकत्वादिति पूर्ववादप्रसङ्ग इति चेत्, नेत्युच्यते, 'सर्वसर्वात्मकत्वेऽपि च सृष्ट्यर्थवत्त्वात् जग-त्सृष्टिलक्षणोत्सर्गव्यापित्वात् तदर्थवत्त्वादस्य नयस्य नाविकल्प इति संभंत्स्यते प्रकृतशब्दार्थः । अभिहितन्यायेन सत्त्वादि-शब्दादि-तन्वादिविकल्पप्रत्ययस्य सत्यार्थत्वादद्वैतप्रत्ययस्यासत्यार्थत्वादिति पदार्थ उक्तः ।

वाक्यार्थोऽधुना– **वाक्यमपि च पृथक् सर्वपदमिति** वाक्येऽवधारिते तदर्थावधारणसौकर्यात् ।

'आख्यातः शब्दसङ्घातो जातिः सङ्घातवर्तिनी' ।
(**वाक्यपदीये** का० २, का० १–२ )

इत्यादिषु वाक्यलक्षणविकल्पेष्वस्य नयस्य मतेन पृथक् सर्वं पदं वाक्यम्, वाक्यार्थः पृथक् पृथक् सर्वपदार्थ इति । यथा– 'देवदत्त ! गामभ्याज शुक्लाम्'

इत्यत्रैकैकं पदं वाक्यम् । किं कारणम् ? तस्मात् सर्वसर्वात्मकत्वादेव यस्माद् देवदत्तोऽपि गवात्मकोऽभ्याज्यात्मकश्च । तथा प्रवर्तनात् तत्तदापत्तेस्तान्यपि तथेति तस्मात् सर्वसर्वात्मकत्वात् पृथक् पृथक् सर्वं पदं वाक्यमिति ।

एतस्य विध्युभयनयस्य द्रव्यार्थभेदोऽर्थः पूर्वविरुद्धात् नयानामविकल्पार्थाद् विधिविधिनया[द्] विकल्पार्थद्रव्यार्थतया भिद्यते ।

अथोक्तानां नयानां कस्मिन्नन्तर्भावः ? इत्यत आह– सङ्ग्रहदेशत्वाद् द्रव्यार्थः । सङ्ग्रहनयस्यापि शतधा भेदात् । तद्देशस्तदेकदेशः द्रव्यशब्दार्थः । कतमस्मिन् विग्रहे ? इति चेदुच्यते– द्रव्यमपि गुणसंद्रावः । तद्व्याख्या– समेकीभावे, 'द्रु गतौ' तस्माद् गुणानामेकीभावेन द्रवणम्– 'कारणे कार्यस्य सत्त्वात्' । सतामेव सुखादीनां रूपादीनां पृथक् पृथक् सन्निहितानामैक्यगमनाज्जीव-पुद्गलपरिणामः संगमनमाह– विध्युभय[नय]त्वात् सन्निहिततद्विधशक्तीश्वरपृथक्त्वादण्वादीनां तदेकैक-सर्वात्मकत्वाच्च तेषां भवत्वेकीभावः, मा भूदीश्वरस्येति नेत्युच्यते– तेनापि तद्वशित्वात् स[न्नि]हिततच्छक्तिनापि सहेश्वरेणैकीभावे तच्छक्तिव्यक्तेर्नान्यथेति । अत एव चास्य नयस्याद्वैतवादात् भेदः ।

आह– किं स्वमनीषिकयैतदुच्यते ? आहोस्विदस्त्यस्य किञ्चिदुपनिवन्धनमार्षमपि ? इति । अस्तीत्युच्यते उपनिबन्धनमस्य– "[1]**दुविहा पण्णवणा पन्नत्ता–'जीवपण्णवणा, अजीवपण्णवणा च'** इति । अथवा– '[2]**किमिदं भंते ! लोए त्ति पवुचइ ? । गोअमा ! जीवा चेव अजीवा चेव । एवं रयणप्पहा(भा) जाव ईसिपब्भारा समयावलियादि**" ॥

[ भगवती सूत्र ४८० ]

इति विध्युभयारस्तृतीयो नयचक्रस्य ॥

---

१ द्विविधा प्रज्ञापना प्रज्ञप्ता । जीवप्रज्ञापना अजीवप्रज्ञापना च । २ किमिदं भदन्त ! लोक इति प्रोच्यते ? । गौतम ! जीवाश्चैवाजीवाश्चैव । एवं रत्नप्रभा, यावत् ईषत्प्राग्भारा समयावलिकादि ।

## अथ विधिनियमाख्यश्चतुर्थोऽरः ।

नन्वेवमित्यादि ।'पूर्ववदस्मिन् दर्शने न परितुष्यत उत्थानमित्यभिसम्बन्धः । नन्वित्यनुज्ञापने। नन्वेवं त्वदुक्ता एवोपपत्तयः प्रत्येकं सर्वप्राणीश्वरत्वं साधयन्ति । बाह्याध्यात्मिक–सुख–दुःख–मोहमात्रत्वाज्जगतः सदसद्वेद्य–मोहान्तरायभेदानां सुखादित्रयविपाकफलत्वानतिवृत्तेस्तदात्मसंवेद्यलक्षणत्वात् कर्मणः। सुखादिसंवेदनेनैव हि तत्कारणभूतं कर्म स्वकार्येण फलेन लक्ष्यतेऽनुमीयते सामान्यतो दृष्टानुमानेन देशान्तरप्राप्त्येवादित्यादिगतिरतः कारणे कार्यस्य सत्त्वात्, कार्ये कारणोपचारात् सुखादयः कर्म, अन्न–प्राणत्ववददृष्टं धर्माधर्माख्यं परैरिष्टमेव कर्मेति। आत्माऽपि कर्म कत्वं(थम् ?) तच्चादृष्टमात्मनो रागादिकर्मविपाकपरिणत्यवस्थस्य प्रयोगपरिणामात् कर्मतामापन्नं पुनरपि सुखाद् रागादिफलं, ततः पुनः कर्म, ततः सुखादिफलम् । तच्च जीवपरिणामात्मसात्कृतकार्मणयोग्यपरिमाण(णाम)परमाणुसमूह एवात्मस्थमेकीभूतं वा(चा)त्मना । यथोक्तम्–

"योगैः सकृत्स्वयोगान्मूर्तः स त्वाद्यमर्थमादत्ते ।
आत्तस्य वा(चा)नुभवनं बन्धं प्रति स च ततोऽनन्यः ॥"

तच्च संवेद्यं कर्तुः संवेदनात् । ततः संवेद्यलक्षणत्वात् कर्मणः सर्वेश्वरतेति सम्भन्त्स्यते । कर्म हि प्रतिप्राणि नियतकर्तृकांश्च(कं स्व)विपाकसुखादित्वेन संवेद्यते, नाणूनामेवं कर्मत्वपरिणामापन्नानामात्मैकीभावेन वेदनं संवेदनम्। तेन च पुरुषेण तेषां तथा प्रयोजनात् कर्तृकत्वमतः सुखाद्यदृष्टाणूनामपि च कर्मत्वादित्याह–प्राक् प्रतिपादितं हि द्व्यणुक-त्र्यणुकादिसंयोगैः पृथिव्युदक–व्रीह्यङ्कुरादिपरिवृत्तिरूपेणात्मनस्तेषां चैकत्वं सर्वसर्वात्मकत्वं च। तस्मात् कर्मकारणां जगत्प्रवृत्तिं साधयन्ति त्वदुक्ता एवोपपत्तयः ।

इतश्च– कर्मपूर्वकं जगत्, कर्मप्रवर्तनाभ्युपगमात् सर्वप्राणिनाम्, कर्मवशादेव हि प्राणिनः शुभाशुभजाति–कुल–रूपाद्युत्कर्षापकर्षाः । यथोक्तम्–

"स्वकर्मयुक्त एवायं सर्वोऽप्युत्पद्यते नरः ।
स तथा क्रियते तेन न यथा स्वयमिच्छति ॥"

"यथाऽऽहारः काले परिणतिविशेषक्रमवशात्
सुखं पथ्योऽपथ्योऽसुखमिह विधत्ते तनुभृताम् ।
तथा धर्माधर्माविति विगतशङ्कामपि कथां
कथं श्रोतुं नेमा(या) विषयविषवेगक्षतधियः ? ॥"

किं चान्यत्– कर्तृत्वात् प्राणिनामिति वर्तते । मा भूवन्नकृत्य(ता)भ्यागम–कृतप्रणाशर–कर्तुस्त(न्त्रन्त) फलसंक्रान्त्यादयो दोषा इति सदसदाचाराः प्राणिन

एव कर्तारो भोक्तारश्चाभ्युपगन्तव्याः । अन्यथा हिताहित-प्राप्ति-परिहारार्थानां शास्त्राणामानर्थक्यप्रसङ्गात् । ततः कर्तुरेव भवितृत्वाभ्युपगमात् । कः कर्ता ? यः स्वतन्त्रः । कः स्वतन्त्रः ? भविताऽपि स एव । स्यान्मतम्– नन्वीश्वरः प्रयोक्तृत्वात् कर्तृ(र्ते)त्युक्तम्, नेत्युच्यते, तस्यैव भवितुश्च प्रयोजनात् । सर्वः प्राणी प्रत्येकं भविता प्रयोजयत्यात्मनाऽऽत्मानं स्वकृतकर्मविपाकात्मकराग-द्वेष-भय-गौरवादि-धर्मचोदितः । यथोक्तम्–

"प्रयत्न एवापरजन्मजोऽयं, सूर्यादयः श्राद्धजनप्रवादाः ।
उत्पश्यतामेव हि दैवसिद्धिमुत्साहिनं श्रीर्भजते मनुष्यम् ॥" इति ।

तस्मात् तन्त्रादिप्रधानोऽण्वादिषु सत्स्वपि प्रवर्त्येषु तेषामेव कर्मसाद्भूतानां प्राणिनां भवितृत्वात् तत्तदापत्तेः, सर्वप्राणिनां स्वातन्त्र्यात् कर्मवशप्रेरितकार्य-कारणभावेन सततभवनात् तथा प्रवर्तकस्यैकैकस्य सर्वात्मकत्वात् सर्वेश्वरतेति साधूक्तम् ।

इदानीं त्वदिष्टेश्वरकारणत्वे तु दोषा उच्यन्ते– ईश्वरात् त्वित्यादि । इदं चिन्त्यमीश्वरात् कर्मणः प्रवर्तनं किं सतोऽसतः ? । किं चातः ? तद् यद्यभूतस्य कर्मण ईश्वरः प्रवर्तकः, ततश्चाद्वैतं पुरुषादिवादवत् प्राप्तं, तस्यापि तदात्मकत्वात् कर्मणोऽपीश्वरात्मकत्वात्, ईश्वरस्यैव कर्मत्वेनोपपत्तेः । भूतस्य चेत्, अथ भूतस्य कर्मण ईश्वरात् प्रवृत्तिस्तत एतत् प्राप्तम्– प्रागपि तत् कर्मास्ति, कारणे कार्यस्य सत्त्वात् । तच्चेश्वरात्मैव तनुकरणादि भाव्यवत् तथा भूतेस्तथा प्रवृत्तेस्तत्तदापत्तेरित्यादिभिर्युक्तिभिस्तथापि सुतरामद्वैतं तदात्मकत्वादेव पुरुषावस्थावदीश्वरभाव्यस्त-दात्मकाण्वादिभवनवद् वा । अथ यस्मै प्रवर्त्यते यथा । अथाचक्षीथा न तत् कर्मेश्वरात्मकम्, किं तर्हि ? यस्मै प्राणिने शुभमशुभं वा नरक-तिर्यगमर-विचित्रभेदरूपेण येन येन प्रकारेण प्रवर्त्यते, तेनेश्वरेण तत् तत् प्राण्यात्मकं तदिति । अत्रोच्यते– तस्मात् [तर्हि तत्] तथाभूतं प्रत्येकं प्राणिनः कारणात् तस्मात् तस्मात् तथा तथा भूतमित्यर्थः । तद्वशात् तथेश्वरप्रवृत्तेः ततस्तस्य प्रवर्तने स एवेश्वरः क्ष(कृ)तं त्वदिष्टमीश्वराख्येमात्मावशेन तथा प्रवर्तयतस्तस्य तस्य प्राणिन ईश्वरत्वं, नेश्वरस्य, तथा प्रवर्त्यत्वात् कर्मकरवत् । अथ तत्कृतमपि पुरुषकार-राजप्रसादादीश्वरापेक्षं प्रवर्तते । अथ मतम्– प्राणिभिः कृतमपि कर्मेश्वरकृतमेवेश्वरवशात् प्रवर्तमानत्वात् । तद्यथा– द्वयोः पुरुषयोस्तुल्यपुरुषकारयोरपि राजा एकस्मैव प्रसीदति, नेतरस्येति फलं राजवशेन दृष्टं, न पुरुषकर्मवशेन; तथेश्वरवशात् तत्कर्मप्रवृत्तिरिति । अत्रोच्यते– कृततां प्रति तावत् स्वातन्त्र्यं सिद्धम्, तस्यैव प्राणिनोऽपि (वि)नेश्वरेण प्राण्यनुष्ठेय-कर्मप्रत्ययप्रसादोत्पत्तेः । तत्र च राज्ञो निमित्तमात्रत्वात् । पुरुषकृत-

कर्मजन्य-प्रसादराजवदेव ईश्वरस्याप्यन्यतरपुरुषकृतकर्मप्रत्ययप्रसादोत्पादनात् कर्म-स्वातन्त्र्यं, तत्कृतं हि कर्मैवेश्वरप्रसादमुत्पादयत्यन्यतरेण कृतं, नेतरेणेत्यर्थः। अन्यतरपुरुषकृतकर्मप्रत्ययस्येश्वरप्रसादस्य तेनोत्पाद्यत्वात् । तस्मात् पुरुषकर्मापेक्ष-त्वादीश्वरप्रवृत्तेः कर्मप्राधान्यं प्रवृत्तौ फले चेति । स्यान्मतम्– राजवदेव कर्मणः प्रवृत्तौ तत्फलदाने चेश्वरापेक्षत्वात् प्रधानं कारणमित्येतच्च न, यस्माद् द्रव्या-दिपञ्चकेत्यादि, यावत् प्रत्यक्षवत् । द्रव्यं क्षेत्रं कालं भावं भवं चापेक्ष्य हि कर्मणां प्रवृत्तिः, कृतानां च फलं प्रत्यक्षत उपलभ्यते । स एव पुरुषः कर्ता । द्रव्यं दाता, देयं वा द्रव्यं वस्तु सुवर्णादि । क्षेत्रं ग्राम-नगरारण्य-रणभूम्यादि, यत्र तत् प्राप्यते फलम् । कालः कस्मिंश्चित् काले दिवा, रात्रौ, पूर्वाह्णेऽपराह्णे, सद्यश्चिराद् वेति । भावः प्रसन्नः, कुपित इत्यादिः । भवो हस्ति-महामात्रयोः । शरीरानुरूपाहाराभरणादि दानमिति । अत्र प्रयोगः– परत्रापि प्राणिकृतफलं प्रति-नियतद्रव्याद्यपेक्षं सुखादि क्रियायाः फलत्वात् । द्रव्यादिपञ्चकापेक्षसेवादिफल-वत् । तस्माद् द्रव्यादिपञ्चकापेक्षमपि कर्म फलदाने स्वतन्त्रं प्राणिनियतेः प्रधानं नेश्वरं च कर्मापेक्षते, परतन्त्रत्वात् तस्येति । **त्वदभिमतेश्वरस्त्वित्यादि** । अस्तु तावदी-श्वरस्य स्वातन्त्र्यं कर्मानपेक्षा च, तस्य जगदुत्पादनार्थं प्रधानादि वर्तयतः प्राणिनां कर्माकारणत्वे तदनपेक्षायां च दोष उच्यते । तद्यथा– ततः प्रतिपुरुषेत्यादि । पुरुषं पुरुषं प्रति द्रव्यादिपञ्चकत्वेन नियामकं नियतम् । यदि कर्म न स्यात्, ईश्वर एवाविशिष्टो हेतुः स्यात् । ईश्वराख्यस्य कारणस्याविशिष्टत्वादविशेषः स्यात् । कस्य ? देव-मानुष-तैर्यग्योन्या(ना)ख्यप्राणिगणस्य । कीदृग् विशेषः ? इति चेदुच्यते– स्थान-विग्रहेन्द्रियोपभोगलक्षणो विशेषो न स्यात् । कस्मात् ? तद्विशे-षहेतोरीश्वरस्य समानत्वात् । स तु विशेषो द्रव्य-क्षेत्र-काल-भाव-भवापेक्षनियतेः प्रतिपुरुषं च नियामकानि कर्माणि तत्पञ्चकापेक्षविपाके सति विशिष्टे स्यात् । दृष्टश्च सोऽस्मदभीष्टप्रतिनियतद्रव्यादिविपाककर्मप्राणिगणेश्वरत्वे सति युज्यते केषाञ्चिदभ्युदयः, केषाञ्चित् प्रत्यवायः, केषाञ्चिदपवर्ग इति । अत्र प्रयोगः– अनु[प]पन्नस्थान-विग्रहेन्द्रियोपभोगाभ्युदय-प्रत्यवायापवर्गादिविशेषमिदं जगत् स्यात्, तुल्यकारणत्वात्, पटतान्तवत्ववत् । यथा पटस्तन्तुकारणत्वाविशेषात् तान्तवः, न मार्तिकः, सौवर्णो वेति जात्याकृति-वर्णाद्यविशिष्टस्तथेदं जगत् स्यात्; न तु भवति, तस्मादयुक्तम् । अथवा प्रतिनियतद्रव्याद्यपेक्षविपाकेऽनेकेश्वरकारणपूर्वक-मेवेदं जगत्, प्रतिविशिष्टजात्याकृति-वर्णादिस(म)त्त्वात् घट-पट-रथादिवत् । तस्मात् कर्मापेक्षमीश्वरत्वं सर्वप्राणिनामिति । अभ्युपेत्यापि कर्मानपेक्षां तत्र दोषान् ब्रूमः ।

**अनपेक्षा चेत्यादि** । किमियमीश्वरस्य धर्माधर्मलक्षणस्य कर्मणोऽनपेक्षा सतोऽसतः ? किं वाऽतः ? यद्यसत एव धर्माधर्मयोरसतोरेवानपेक्षा, किमिति प्रश्नः । ततः किमिति चेत् ? उच्यते– क्रियाविलोपः । असतोर्हि तयोः खपुष्प-खरविषाणयोरिव काऽपेक्षा ? । ततश्च हिताहित-प्राप्ति-परिहारार्थाः सर्वाः क्रिया विलुप्येरन्, इष्यन्ते च ताः । यस्मादुक्तं च वः शास्त्रे– 'योगं साधयिष्यन्' इत्यादि गतार्थम्, यावन्निद्रा-तन्द्रा-प्रमादालस्यरहितश्च' स्याद्' इत्यादिरित्याचारविधायिग्रन्थसारणम् । किञ्चान्यत् **कर्माभावे** चेत्यादि, यावन्निर्मूलता । अकर्मत्वात् प्राणिनः सदा मुक्ताः स्युस्ततश्च तन्विन्द्रियविषयसम्बन्धिनो न भवन्ति । ततश्च तन्वादिसृष्टिरीश्वरस्यानर्थिका । ततश्च भाव्य-भावकभेदाभावः । तस्माद् भाव्य-भावकभेदाभावादीश्वरकर्म-प्रधानाण्वादिद्वैतकल्पनानिर्मूलता । एवं तावदसतः कर्मणोऽनपेक्षा न युक्ता ।

अथ तु विद्यमानावेव धर्माधर्मावभ्युदय-प्रत्यवाय-निःश्रेयसक्रियायां नापेक्षते स ईश्वरः स्वतन्त्रत्वात्, प्रयोजनाभावाच्च । तयोर्विद्वद्व्याख्यानादिक्रियासु बलीवर्दानपेक्षणवदिति मन्यसे, ततोऽकृताभ्यागम-कृतप्रणाशौ दोषौ स्याताम् । कथम् ? यथासङ्ख्यमाक्षीणोदितकर्माशयबन्ध-मोक्षाभ्याम् । यावत् क्षीणकर्मणोऽपि बन्धाभ्युदय-प्रत्यवाय-सम्बन्ध्यकृताभ्यागमः स्यात् । कुतः ? धर्माधर्मनिरपेक्षत्वात्, स्वभाव-पुरुषादिवादिमतवदुदितात्यन्ताशुभकर्माशयस्य नारकादेरपि मुक्त्यभ्युदयसम्बन्धी कृतप्रणाशः स्यात्, धर्माधर्मनिरपेक्षत्वात् । पुरुष-स्वभावादि-वादिमतवदेव, अनिष्टं चैतत् । एवं तावदीश्वरस्य कर्मानपेक्षाऽनिष्टापत्तेरयुक्ता ।

अथैवंविधानिष्टापत्तिव्यावृत्त्यर्थं कर्मापेक्षः प्रवर्तत इति मन्यसे, ततस्तान्येव कर्माणि कर्तृणि स्वतन्त्राणि भवितृणि ईश्वराणि । कस्माद्धेतोः ? तेषां तस्यापि तथा भावयितृत्वात् । यस्मात् तमपीश्वरं तेन तेन प्रकारेण भवन्तं भावयन्ति तान्येव कर्माणि, न स तानि कर्माणि तथा भावयति । कुतः ? तथा भाव्यमानत्वात् । प्रधानेन शब्दादिवदिति वक्ष्यमाणदृष्टान्तत्वात् । तथा च पृथिव्युदकादीन् व्रीहिरेव तथा भावयति पृथिव्याद्यपेक्षोऽपि तथाऽऽपत्तेः, न पृथिव्यादयस्तथाऽनापत्तेः । एवं कर्माण्येवेश्वराणि तथा भावयितृत्वात्, न त्वदिष्टेश्वरस्तथा भाव्यमानत्वादिति । स्यान्मतम्– पृथिव्युदकादीन्यपि भावयन्त्येव व्रीहित्वेन अनापन्नान्यपीति । एतच्चायुक्तम्, तेषामसत्त्वात् । असत्त्वं चानापन्नस्यासत्त्वात्, खरविषाणवदिति । सन्निधिभवनदूषणे प्रक्रान्तमेव न्यायं दर्शयति– **अस्वतन्त्रत्वाच्छब्दादिवदिति** । एष दृष्टान्तः सर्वत्र प्रधानकारणत्वसाधर्म्येणोपात्तः कापिलान् प्रति यथा प्रधानस्यात-

न्त्र्यात् तत्कारणत्वं गमयति, शब्दाद्यारातीयकारणत्वाभावं चास्वातन्त्र्यात् तेषामिति नाव्यक्तमित्यव्यक्तस्येव वाऽप्रधानता भवतीति। यथा त्वयैवोक्तं तथैवेश्वरोऽस्वतन्त्रत्वात् कर्मापेक्षत्वादकारणम्। तान्येव कारणानीति गमयति ताभिरेव त्वदुक्ताभिरुपपत्तिभिरतो यदुक्तं त्वदुक्ता एवोपपत्तयः सर्वप्राणीश्वरतां साधयन्तीति तत् साधु। तद् भावयन्नाह–

**भवति कर्त्रे**त्यादि। प्राग्व्याख्यां[ता]र्थान्येव भवत्येकाद्येकार्थपदानि यावत् तन्तुपटवदिति। यथा तन्तव एव पटनिष्पादनेन भवन्तस्तथा प्रवर्तनवृत्तत्वात् पटकारणानि, तथा पुरुषा एव कर्तार इति। **ईश्वरस्यापि चे**त्यादि। तासामेवोपपत्तीनामितोमुखतां भावयत्यनेनापि ग्रन्थेन। यथा त्वया प्रागुपपादितं ब्रुवता पूर्व-पूर्वशक्त(क्ति)तारतम्येन सन्निहित-तद्विध-शक्तिर्विशिष्टबुद्धिरिति, तथेहापि ताभिरेवोपपत्तिभिस्तैरेव तन्त्वंश्वादिभिर्दृष्टान्तैः कर्मणि वृत्तेः कर्मनिष्ठत्वात् सृष्ट्यतिशयप्रकर्षस्य कर्मणां पुरुषत्वात्। सर्व एव पुरुषः सन्निहित-तद्विधशक्तिः प्रतिविशिष्टबुद्धिप्रमाणीकृतक्रियः प्रतिविशिष्टबुद्धिना तेनैवेश्वरेणान्यैश्च शास्त्रकारैर्विश्वदृश्वभिरपि प्रमाणीकृतास्तत्क्रियाः फलपरिज्ञानार्थत्वाच्छास्त्रकारप्रभृतीनां सिद्धशास्त्राणामनतिशङ्क्यत्वाच्च। स च स्वतन्त्रस्तथा प्रवृत्त्यापत्तेस्तेन प्रकारेण कर्मिप्राणिप्रवृत्तिवदीश्वरस्यापि प्रवृत्त्यापत्तेः एश्वरात् प्रवर्तयितृत्वादिति। **आ ईश्वरात्**। यावदीश्वरस्तावत् प्रवर्तयितृत्वादीश्वरस्य प्रवर्त्यत्वात् कारणानि सर्वपुरुषाः। शक्तिमत्प्रवृत्तीत्यादि, ईश्वरस्यापि तेषामेव शक्तिमतां पुरुषाणां शक्तिसाकल्य[सन्निध्य]-सन्निध्योः प्रवृत्त्यप्रवृत्तिदर्शनादिति। तदेवोपपत्तिजातं स्मारयति। यावत् पक्रादिवदिति। आदिग्रहणाद् रजोवत् प्रवृत्तिवदित्यादि। पूर्ववदेव ग्रन्थं चा[ति]दिशति– यावदेवास्य सर्वत्वात् सर्वमूर्तिता एवमेव चास्य क्षित्याद्यष्टमूर्तितोच्यते इत्येतस्मादवधेरारातीयो ग्रन्थः सर्वो द्रष्टव्यः ताभिरेवोपपत्तिभिः सर्वप्राणीश्वरत्वे तद्वदेवेति। पुनरपि चोत्कर्षापकर्षदर्शनादित्यादिरीश्वरसर्गसाधनार्थो ग्रन्थः, प्रवृत्त्यनुभवफलेत्यादिस्तद्वदेव यावत् पुरुषाद्[तेऽ]प्रवृत्तेरेवोत्कर्षापकर्षौ न निर्बीजेश्वरकामचारेरणादिति कर्मकारणत्वार्थो गतार्थः। तस्मात् कर्मापेक्षत्वात् सर्वसर्वात्मकत्वात् सर्वेश्वरतेति।

**कर्मापेक्षत्वे** इत्यादि यावद् **रथकारस्त्ववदिति चेत्** स्यान्मतम्– कर्मापेक्षत्वेऽपि न व्यर्थमीश्वरकारणत्वम्, तदभावे प्रवृत्त्यभावात्। यत्र यदभावे प्रवृत्त्यभावः प्रवर्तकस्य तत्रेश्वरस्याप्यवैषम्यं(यर्थ्यं) दृष्टम्। यथा रथकारप्रवृत्तौ रथार्थं दार्वाद्यपेक्षणमिति चेन्मन्यसे। तत्र(न्न), इतरत्रापि तुल्यत्वात्। कथमिति चेत्? प्रयोगत एव दर्श्यते विपर्ययसिद्धिः। तद्यथा– ईश्वरापेक्षत्वेऽपि न कर्म-

वैयर्थ्यम् । तत एव हेतोः, रथकारापेक्षरथदारुवदिति विरुद्धैकान्तिकः । तदुपसंहृत्याह- **प्रवर्तयितृत्वाच्चेश्वरस्येत्यादि**, यावत् **पुरुष एवेश्वर** इति । प्रवर्तयिता हीश्वरो दासस्य स्वामिवत् । तच्च प्रवर्तयितृत्वं कर्मणः सिद्धमुक्तविधिना प्रवर्त्यत्वं चेश्वरस्य, तथा प्रवर्तकं कर्म, कर्मणः पुरुषः प्रवर्तत इति प्रकृतत्वाद् गम्यते । इतिशब्दो हेत्वर्थे । तस्मात् पुरुष एवेश्वरः सर्व इति । एवं कर्मेश्वरताऽपि तु यथैवं तथोत्तरत्र भावयिष्यते । पुरुषस्य तावत् सर्वस्येश्वरत्वमुक्तमिति । एवं प्रतिघातप्रसङ्गोऽपीत्यादि ।

किञ्चान्यत्- **प्रतिहन्यते च त्वदभिमतेश्वरः सापेक्षप्रवृत्तित्वात् रथकारवत् ।**

अस्य साधनस्य व्याख्या- **यथा रथकार** इत्यादि । उपादानं दारु, उपकरणानि वास्यादीनि, तेषामसामर्थ्यं वैगुण्यं सतामेव वि(वै)कल्यं॰ त्वन्यतमाभाव एव । तत्र प्रतिघातो दृष्ट इति वाक्यविशेषः । तथेत्यादि दार्ष्टान्तिकं सापेक्षप्रवृत्तित्वसाधर्म्यानुगमेनोपनयनं रथकारे कार्यं, वैधर्म्येण तु दर्शयति- **अपचितकुशलमनुजिघृक्षत** इत्यादिना । पुरुषमपचितशुभकर्माणमनुगृहीतुमिच्छतस्तद्विपरीतं चोपहन्तुमिच्छतस्तथे(स्ये)श्वरस्य यद्यप्रतिघातः स्यात् ,स्वातन्त्र्यं न तु भवति। अपेक्ष्यस्य कर्मणः स्वकृतकर्मवशस्य प्रत्ययेन तद्वशेनेश्वरस्य प्रवृत्ति[प्रति]घातदर्शनात् । न चेदेवमिष्यते । शुभकर्माणं दुःखेनेतरं च सुखेन योजयेत् । तथा चाकृताभ्यागम-कृतप्रणाशौ स्यातामित्युक्तम्, तच्च नेष्टम् । तस्मात् पुरुषकर्मप्रत्ययेनेश्वरप्रवृत्तिप्रतिघातोऽस्ति । प्रवृत्तिप्रतिघाताच्च नैश्वर्यं तस्य प्रतिघात्यत्वात्, पृथग्जनवदित्यनीश्वरः स इति । **यत्तूच्यत** इत्यादि यावत् **प्रलयक्षपायां शाययति** इति । कालभेदेन सापेक्ष-निरपेक्षप्रवृत्तिपक्षयोरभ्युपगमादुभयथापि सिद्धेः प्रवृत्तिप्रतिघातासम्भवाददोषः ।

तद्यथा- सर्गादौ धर्माधर्मविकलानां शरीरेन्द्रिय-विषयोत्पादने निरपेक्षोऽप्रतिहतस्वशक्तिवशादेव शरीरादीन्युत्पादयति । तांश्चोत्पाद्य वृद्धानां सुप्तोत्थितानां धर्माधर्ममर्यादामुपदिशति- 'तपो-दान-यज्ञादि कुरुत, मा कार्ष्ट हिंसाऽनृतस्तेया-[गम्य-]गमनादीनि' इति । तयोश्च धर्माधर्मयोः सीमाच्छेदेन व्यवस्थां मर्यादामुपदेशेन व्यवस्थापयति । मध्यकाले च तेषां प्राणिनां यथास्वं धर्माधर्ममर्यादामनुतिष्ठतामनुष्ठानानुरूपेण फलेनेष्टेनानिष्टेन वा विषयोपयो(भो)गलक्षणेनानुग्रहं करोति, यदा तदा सापेक्षोऽप्रतिहतस्वशक्तिवशादेव ।

स्यान्मतम्- धर्मानुष्ठानफलोपभोगेनेष्टेनानुग्रहो युज्यते । कथमधर्मानुष्ठानफलोपभोगेनानिष्टेन युक्तः ? इति ।

अत्रोच्यते– अयमनुग्रह एव तेषां तद्गणमोक्षणादिति । ये पुनस्तदुपदिष्टमोक्षमार्गप्रस्थितास्तांश्च मोक्षमार्गोपसेविनः सायोज्यं गमयति । कोऽसौ मोक्षमार्गः ? **माहेश्वरो योगविधिः**। तानात्मना सह युङ्क्ते इति सयुक्, तद्भावः सायोज्यम्, तेषामीश्वरसाद्भावस्तं गमयति नयति । एतन्मध्ये सापेक्षमैश्वर्यं पुनरप्यन्तकाले च्च शरीरेन्द्रियभूतवत् । यथा शरीरेन्द्रियाणि भूताख्यांश्च विषयानुपसंहरति, तथा कुशलाकुशले तेषां धर्माधर्मावपि(वुप)संहृत्य तान् पुरुषान् सर्गाहनि संसृतवतः तेन धर्माधर्मफलेनेष्टानिष्टोपभोगात्मकेन दिवसव्यायामपरिश्रमाभिभूतान् बालकान् पुत्रकानिव पिता सर्वपुरुषान् संसारहेतुभूतधर्माधर्मानु(वु)पसंहृत्य प्रलयक्षपायां स्वापयतीत्यन्तेऽपि निरपेक्षोऽप्रतिहतस्वातन्त्र्यः स एवेष्टः । तस्मादुभयथाऽप्यपेक्ष्य[ा-नपेक्ष्य] च तदैश्वर्यसिद्धेरदोष एव दोषाभिमत्या त्वयोद्भावित इति **परपक्षः** ।

अत्र वयं ब्रूमः– तत्कारित्वात् तज्ज्ञत्वमिति । यत् सर्वज्ञत्वमाकाङ्क्ष्यते, तदपि नैव । कर्मणामेव तन्निरपेक्ष्य(क्ष)प्रवृत्तौ तस्य प्रतिघातादनैश्वर्यं सृष्टप्राणिसंसारकाले सर्गाद्यन्तयोश्च अकृताभ्यागम-कृतप्रणाशादिदोषाः तदवस्था एवेत्यपरिह(हृ) तदोषत्वान्न किञ्चिदेतत् । अन्योऽपि च दोषः । यदपि चाकाङ्क्ष्यते तस्य सर्वज्ञत्वं सर्वकारित्वात् करणस्य ज्ञानाभावात्, सर्वं चेत् करोत्येवावश्यं सर्वमसौ वेत्तीति सर्वकारित्वात् सर्वज्ञ इति । तदपि नैवोपपद्यते । अस्यानर्थकार्थप्रवृत्तबालादिप्रवृत्तिवदज्ञक्रियासाधर्म्यादज्ञोऽसौ बालवदसमीक्षितप्रवृत्तित्वादित्येतदनया [कल्पनया]ऽस्माकं त्वया प्रत्यक्षीक्रियते । किं कारणम् ? **धर्माधर्मोपदेशप्रवृत्तेरनर्थकार्थविषयत्वात्** । अनर्थकौ धर्माधर्मावर्थौ ह्यस्य धर्माधर्ममर्यादोपदेशस्य न च तयोः [शरीराद्यभावाद्]धर्माधर्मयोः शरीरादिकारणत्वं विनाऽपि धर्माधर्ममर्यादया सर्गादौ प्रभुसृष्टेः, शरीरादिनिर्वृत्त्यभ्युपगमात् । धर्माधर्ममर्यादायां सत्यामेव च प्रलयकाले शरीराद्यभावाभ्युपगमाच्चेश्वरसामर्थ्यादेव । तस्मात् तयोर्नास्ति कारणता, कारणलक्षणायोगात् । किं तत् कारणलक्षणम् ? इति चेदुच्यते– **यस्याभावे** इत्यादि गतार्थम्, यावदितरत् **कार्यमिति** । कथं तदयोगः ? इति चेदुच्यते– **न च धर्माद्यभाव** इत्यादिना ग्रन्थेन तयोः कारणाभिमतयोरभावेऽपि शरीरादेः कार्यस्य भावं भावेऽपि चाभावानु(दु)पदेशसाफल्यानभिज्ञत्वं च दर्शयति । यावद्दत्तफलकुशलाकुशलसंहारादन्तकाल इति गतार्थत्वान्न विव्रियन्तेऽक्षराणि । किं चान्यत्– **यथा चोपदेश** इत्यादि, यावत् **क्रियाया अप्यनभिज्ञत्वमिति** वर्तते । न केवलमुपदेशानभिज्ञत्वमेव तस्य, किं तर्हि ? प्राणिनामनुग्रहक्रियाऽनभिज्ञताऽपि इति । तदतिदिशति । तत् कथं

भाव्यते ? इति चेत्, उच्यते । यदा तदेवं **व्यामुह्यैवेत्यादि**र्भावनाग्रन्थः । यावदुपभोगविभाजनानुग्रहक्रिययाऽतिगरीयस्या किमिति वर्तते ? तस्मिन् हि काले प्राणिनामत्व(न्ध)लकवत् प्रवृत्तेरीश्वरस्यैव "तेषां शरीराद्युत्पादयामि, धर्माधर्ममर्यादां प्रणयामि, तत्र प्रवर्तयामि, तत्फलैरनुबध्नामि, तान् प्राणिनः फलानुरूपमिष्टमनिष्टं चोपभोगं विभज्यानुगृह्णामि" इत्येवमादिकयाऽनुग्रहक्रियया क्लिश्यमानस्यानेकपुरुष-स्त्री-नपुंसक-जनसाधारणस्येव भृतकस्यातिक्लेशः । इति हेत्वर्थे । तस्मादतिक्लेशत्वादत्यन्तपरवशत्वमेवैश्वर्यं शीतलिकापर्यायशब्दाभिधेयलूतावदुच्यत इति । किं चान्यत्– अनुग्रहोऽपि विपर्ययेणोच्यते अननुग्रह एव सन्ननुग्रह इति । किं कारणम् ? दुःखहेतु-दुःखात्मकाभ्यां दुःखहेतुत्वाद् इष्टोपभोगस्य हिंसाऽऽद्यात्मनोऽर्जन-रक्षण-क्षय-सङ्गदोषे दुःखात्मकत्वाच्च, अनिष्टोपभोगस्य दुःखात्म[क]त्वाच्चाननुग्रह एवासौ । दृष्टान्तः **विषकृतभोजनक्लेशनवत्** । यथा कश्चित् क्रूरमूर्खनृपतिः स्ववशान् भृत्यान् विषमिश्रमाहारं भोजयन् 'अनुगृह्णामि वः' इति ब्रूयात्, तथा त्वदभिमतेश्वरोऽपीति । यच्चोक्तम्- "दुःखमपि तदृणमोक्षणवदनुग्रह एव' इत्यतदप्ययुक्तम् । संसारमोचक-व्याध-चाण्डालादिमारितसत्त्वानुग्रहप्रसङ्गात् । सत्त्वनिकायकलिकलुषकृतात्मोपनिपातनेनाज्ञेऽवोधे सत्त्वानुग्रहवदज्ञानप्रसङ्गाच्च । तत्सायोज्यगमनेऽप्येवम् । ईश्वरेण किल सायोज्यं मोक्षः, स्वात्मना सायोज्यं गमयन्नप्यसौ प्राणिगणमतिक्लेशभाजनमेव करोति कृ(सृ)ष्टसंसारक्लिष्टेश्वरत्वस्योक्तलक्षणस्यामोक्षशब्दाभिधेयत्वात्; अलमैश्वर्येण, मोक्षेण च तादृशा सदा सर्वपुरुषव्यापारोद्वहनायासात्मना । तस्माद् वरमात्माधीनं यथेष्टचेष्टं दौर्गत्यमपीति" एवं चेत् यत् त्वाशङ्क्यते त्वया **आद्यन्तवदि**त्यादिना ग्रन्थेन 'विनेश्वरेण किलैते दोषा इतीष्टास्ते सहापीश्वरेण तथैवेव भवन्तीति । तद्दर्शयन्नाह– **साध्वेवेत्यादि** गतार्थम् । हेतु-हेतुमद्भावप्रतिपादनक्रमेण यावत् तत्प्रसक्तौ क्रियाविलोपः । कुतः ? ईश्वरप्राधान्यादुक्तानन्तरदोषाच्चेति धर्माधर्मक्रियाः प्राणिनां न स्युः, फलाभावादीश्वरवशादेवाद्यन्त-मध्येषु फलसङ्करात् । ततश्च सर्वप्राणिनां निर्मोक्षः, निःशेषमोक्षस्तद्वशादेव सर्वानिर्मोक्षो वा प्रो(प्रस)क्त इति । यत् तु **सर्वशास्त्रेत्यादि** । एतद्दोषपरिहारार्थं कर्माद्युपसर्जनतयेश्वरप्राधान्यकारणे प्रोक्ते । कथमिति ? तद् भावयत्युत्तरेण ग्रन्थेन– **आदौ स एव स्वशक्तित** इत्यादिना, यावच्छरीरादिवत् [कुशला]कुशलाशयकलङ्कशुद्धं स्वा(स्था)पयतीति गतार्थः पूर्वपक्षः ।

धर्माधर्ममर्यादायाः परिपालकान् ब्रह्मादीनाधिकारिकान् विनियुङ्क्ते इति शेषः ।

अत्रोत्तरमाहाचार्यः– **इदमन्यथैवोद्ग्राह्यत इत्यादि** । अन्यथा तावत् प्रतिज्ञायते ईश्वर-कर्मणोः प्रधानोपसर्जनभावाभ्युपगमाद् द्वैतम् । भाव्यते तु साध्यहेतु, व्याख्यानं क्रियते अन्यथा । कथमिति चेत् ? स एव स्वशक्तित एवान्य-निरपेक्ष इत्यवधारणादद्वैतार्थभावनाददृष्टादीनां तच्छक्तीनां च स्वतो व्यतिरिक्तानां निरासेन साक्षादि(दे)वाप्रयोजनेन कस्यचित् कश्चिदप्यन्यमप्रयोजयन् स्यात् स्वशक्तित एवेत्यवधारयता चाद्वैतमेव भाव्यते भवता । पुनरप्याह– **एवं नियमनायेत्य**द्वैतनियमनायेयमपि भावना । कतमा सा भावनेति चेत् ? तदनुध्यानात् पुण्यमुत्पाद्येत्येषाऽप्यद्वैतभावे(व)नैवेति । एवं तावत् प्रतिज्ञातं द्वैतमद्वैतं भावितमिति उक्तं प्रत्युपसंह्रियते **तु द्वैताद्वैते द्वे अपि त्यक्त्वेति**, प्रतिज्ञात-भाविते द्वैताद्वैते अपि त्यक्त्वा । तत्राद्वैतस्य त्यागस्तावद् धर्माधर्ममर्यादास्थापन-वचनेन कृत इति वाक्यशेषः । का मर्यादा ? उच्यते । मर्यादा नामानतिक्रम-स्थानमिति मर्यादालक्षणमाह, विषयतस्तु सुख-दुःख-प्रवृत्तिसीमा– इयति विषये सुखमियति दुःखमिति धर्माधर्मयोः सीमनि स्वके स्वके व्यवस्थापनम् । धर्मस्य सुख-प्रवृत्तिच्छेदेनाधर्मस्य दुःखप्रवृत्तिच्छेदेन 'अयमस्मादन्योऽयमितरस्मादन्यः' इति सीमा–विभागः । ततः किमिति चेत् ? । **ततश्च सर्गादौ स्थानादीत्यादीति** । स्थान-विग्रहेन्द्रिय-विषयाः स्थानादयः, तदात्मके सुख-दुःखे अपि न स्याताम् । कस्मात्? **अनियतविषयत्वात्** । अनियतौ हि विषयौ तदा सुख-दुःखयोः अविद्यमानस्थानादित्वादविद्यमानधर्माधर्मत्वाच्च । दृष्टान्तः प्रलयवत् । यथा प्रलये [धर्मा]धर्माभावादेवानियतविषये सुख-दुःखे ततश्चासती, तद्वत् सर्गादावपि स्यातामिति ।

किं चान्यत्– अन्ते च स्यातां सुख-दुःखे इति वर्तते । कुतः ? अनियतविषयत्वात् । विषयानियमोऽपि यद्रू(च रू)पादिपञ्चकत्वाद्यभावाद् उपसंहरणकाले मध्यकालवत् । अथवा नियतविषयत्वात् व्यवस्थापितधर्माधर्ममर्यादत्वात् सुख-दुःखे तदा नियतविषये, तस्मात् तदाऽपि स्यातां मध्यमकालवत् सृष्ट्युत्तरकालवदित्यर्थः । तद्विपर्ययेण वा साधनम्–'मध्ये वा न स्यातां सुख-दुःखे नियतविषयत्वाद्' इति वर्तते अन्तवदिति । **अथोच्येतेत्यादि**, यावद् **धर्मोऽय-[मधर्मोऽय]मिति स्यान्मतम्**– अत एवेश्वरस्यैव कारणत्वात् न सुखादिप्रवर्तनात्मिका धर्माधर्ममर्यादा तत्समर्थनासमर्थेत्यर्थः । ईश्वरस्यैव सुख-दुःखयोः प्रवर्तकत्वात् । यदि सा न प्रवर्तयति सुख-दुःखे धर्माधर्ममर्यादा किमर्थमसौ तां व्यवस्थापयतीति चेदुच्यते– स्वरूपसंज्ञाव्यवस्थापनमसौ तयोर्लोकव्यवहारार्थं करोतीत्यत आह– किं तर्हि अयं धर्मोऽयमधर्म इत्येतावदुपदेशेन ? इति ।

अत्राचार्य उत्तरमाह– **एतदपि तुल्यं पूर्वेण**, असत्त्वात् सर्गादावन्तवन्न

स्यातामनियतविषयत्वादन्ते च स्यातां नियतविषयत्वाद् वा मध्यवत्, मध्ये वा न स्यातामन्तवदिति । इदमेव दोषजालं प्राप्तम् । किं कारणम्? धारणाद् धानाद् वा धर्म इति निरुक्तेः । यदि मर्यादां धारयति प्राणिनां, सुखे चैतान् धत्ते; ततो धर्म इत्येतस्यार्थस्याभावे कथमसौ धर्म उच्यते?, तद्विपर्ययो वा कथमधर्मः? इति तद्विपरीतार्थाभावे । तस्मात् सुखस्थानादिधारणाद् धर्मः सुखकारणं ह्यव्यभिचारि तदिष्यते । यस्याभावे यस्याभावो, यस्य च भावे यस्य ध्रुवो भावस्तत् कारणमितरत् कार्यमिति कारणस्य धर्मस्य, कार्यस्य च सुखस्याव्यभिचारात् । एवमधर्मेऽपि व्याख्या विपरीतार्था कार्या । तस्मादयुक्तं संज्ञाकरणमात्रेण मर्यादेति ।

**अथ त्वित्यादि** । स्यान्मतम्– तस्यैवेश्वरस्य रुचेरेवेच्छातः सुखं दुःखं वा न धारण–धानप्रवृत्त्यात्मकत्वाद् धर्मस्या(र्मा)धर्माभ्यां तस्य वा क्य(क)स्यच(चि)दिति । अत्रोच्यते– धर्माधर्ममर्यादावचनमनर्थकम्, यदुक्तं 'प्रतिबुद्धानां प्राणिनां धर्माधर्ममर्यादाम(मु)पदिश्योत्तरकालं स्वमर्यादाऽनुष्ठानानुरूप्येण' इत्यादि, तत् सर्वमनर्थकं संवृत्तम् । तत्साधनार्थं हेतुमाह सदृष्टान्तम्- **सदैवेत्यादि**, यावद् **यस्य कस्यचित् सिद्धेराद्यन्तवदिति** । सर्गस्यादौ मध्येऽवसाने च सर्वकालमीश्वरशक्तिमात्रवशादेवान्यस्य कारणस्याभावेऽपि यथा तथा येन वा तेन प्रकारेण सुखस्य दुःखस्य वेष्टानिष्टशरीरादेरनियमेन यस्य कस्यचिन्मारकस्याहिंसकस्य वा सिद्धेर्द्धर्माधर्माकारणत्वं तदकारणत्वादाद्यन्तवत् प्रथमावसानकालयोरिव तन्मर्यादावचनमनर्थकमिति । एवं तावदद्वैतत्यागः । न केवलमद्वैतत्याग एव, किं तर्हि? तथा द्वैतमपि त्यक्तम् । कुतः? **साक्षाद् व्यापारवचनादित्यादि**, यावत् **किमाधिकारिकैरिति** । साक्षाद् व्यापारो ह्यैश्वर्यं तद् व्याचष्टे तस्मात् तद्व्यावृत्तेस्तस्य सर्वैः प्रकारैः सर्वकालं सर्वदेशे वा(चा)व्याहता वृत्तिरस्य । अतस्तदव्याहतवृत्तित्वात् किं धर्मादिना? । आदिग्रहणादधर्मेण किम्? स्थान-विग्रहेन्द्रिय-विषयैर्वा प्राणिनां सुख-दुःखाश्रयैः? प्राणिभिर्वा किं क्रियते? न किञ्चिदित्यभिप्रायः । किमाधिकारिकैर्ब्रह्म-मनु-विष्ण्वादिभिर्धर्माधर्ममर्यादापालनार्थं विनियुज्यमानैर्वेति? । अथ मन्यसे तैर्विना शक्तिर्व्याहन्यते तस्येश्वरस्य ततस्तर्ह्यस्य व्याहतशक्तित्वात् त्वेवमनीश्वरता कार्यान्तराशक्तेः श्रमाद् वा, इतरवदिति पृथग्जनवदित्यर्थः । **ननु प्रधानोपसर्जनेत्यादि**, यावत् **तथाऽदृष्टाद्यभावेऽपीश्वरस्येति** ।

आह– द्वैतमेवोद्ग्राहितं भावितं प्रत्युपसंहृतं च । नान्यथोद्ग्राहभावनोपसंहाराः । कथं प्रधान उपसर्जनं च द्वैतं प्रतिज्ञातम् । तस्यैवार्थस्य संवादेनेश्वरः प्रधानम्,

---

१ सर्व-प । २ शदिवा-प । ३ तदाका-प ।

न कर्मेत्येतद्भावनार्थं सर्गस्यादौ स्वशक्तितः स एव साक्षाद् व्याप्रियत इत्युच्यते । कस्मात्? उपसर्जनेन विनाऽपि प्रधानस्य प्रवृत्तिसद्भावात् । चित्राचार्यस्येव शिष्येण विनाऽपीति[1] । यथा शिष्यमप्रधानं ग्राहयित्वा चित्रकर्म ग्राहयित्वा वा प्रणेयं[2] तेन विना सह वा चित्रकर्मणि चित्रकराचार्यः प्रवर्तितः । एवं स्वप्राधान्यात् सन्निध्यसन्निध्योरपि शिष्यस्य प्रवर्तकत्वात् । एवमीश्वरोऽप्यदृष्टादिसन्निध्य-सन्निध्योः प्रवर्तते प्रधानत्वादिति । भाव्यत्वादिति । भाव्यत्वादुद्ग्राहितद्वैतानु-रूपभावनोपसंहारात्मकत्वात् न कश्चिद् दोष इत्येतच्च न, आदिकरस्य कर्तृत्वात् । आदिं करोत्यादिकरः । स एव च कर्ता, तस्यैव कर्तृत्वात् । कोऽसावादिरिति चेदुच्यते-अव्यज्यमानप्रकारव्यक्तिरादिः । स्व(स)त एवार्थस्याव्यक्तस्य केनचित् प्रकारेण व्यक्तिरादिः । कुतः? आदानादिति । आदानमादिरित्यक्षरार्थनिरुक्तिमाह- हेतुं दृष्टान्तं चादित्योदयादित्ववदिति । यथाऽऽदित्यस्योदय-मध्याह्नास्तमयत्व-प्रकारेण दिवसविभागानां विद्यमानानां व्यक्तिरेवं तत्र प्रयोजनपरमार्थत्वाद् भवितृत्वस्य, यः प्रयोजयति परमार्थतः स कर्ता भविता । भू-कृञोः सर्वधात्वर्थत्वात् न प्रयोज्य इत्यस्मात् कारणाद् य आदिकरः, स कर्ता । यश्च कर्ता स भवति भू-कृञोः सार्वधात्वर्थव्यापित्वात् । एतदुक्तं भवति । यतः प्रकारान्तरेणाभिव्यञ्जयन्नवान्तर-स्यादिकरत्वाद् भवति वस्तु, तत एकैकस्य सर्वत्वम्, न सर्वस्यैकत्वम् । परस्परा-पेक्षाभिव्यञ्जनेनादिकरत्वादिति । अस्मिंश्चार्थे व्यापकं दृष्टान्तमाह स्फुटीकरणार्थम्-

आदिकरत्वं च यथा व्रीहौ सम्भाव्यत इति । तद्व्याख्या- अव्रीहेर्मृदादेर्व्रीहि-त्वेनादिकरत्वादिति मृत्-सलिल-वाताकाशानामव्रीहीणां व्रीहिप्रकारेणाभिव्यक्तिं कुर्वन् व्रीहिरादिकरः । एतमर्थं हेतुत्वेन व्यापारयति । सिद्धं कृत्वा पञ्चम्या व्रीहित्वेनादि[करत्वादि]ति । तथा प्रागित्यादि । एवं च कृत्वा व्रीहित्वात् प्रागपि पृथिव्यप्-वाय्वाकाशानामप्यादिकरत्वम् । पश्चादपि तेन प्रकारेण तथा व्रीहि-वदेव । तदादित्वाद् व्रीहेस्ते आदिः पृथिव्यादयो व्रीहेः प्राक् पश्चाच्चेति तेषामा-दिकरत्वं, तेन प्रकारेणाभिव्यक्तेः ।

किं चान्यत्- तत्प्रयुक्तत्वाद् व्रीहेः, ते ह्यस्य प्रयोक्तारः । यो यस्य प्रयोक्ता, स तस्य कर्ता, यथाऽऽदित्योदयादित्वमित्युक्त आह- तत्प्रयुक्तो व्रीहिः । कस्मात् पृथिव्येव न भूतो व्रीहिः?, पृथिव्येवोदकमेव, वायुरेव वा, आकाशमेव वा तत्प्रयुक्त-त्वादादिकरत्वादादित्योदयादित्ववदिति । अत्रोच्यते- को वा ब्रवीति पृथिवी न भूत उदकादिश्च व्रीहिरिति, तत्प्रयुक्तत्वाद्, व्रीह्यादि वा पृथिव्यादि न भूत-मिति । तत्प्रयुक्तत्वाद् व्रीहिरपि पृथिव्यप्-वाय्वाकाशादि भवति । पृथिव्युदक-

1 विनाशीति प । 2 प्राणे° प ।

वाय्वाकाशाद्यपि च व्रीहि-माषाम्लजम्ब्वादि भवति । तत्कृताहारोऽपि पृथिव्यादि व्रीह्यादि, पृथिव्याद्यपि तत्कृताहारः । तत्कृताहार-शरीरेन्द्रिय-बुद्ध्यादि । तत्कृत-मनुष्य-तिर्यङ्-नारक-देवादि च तत्कृताहार-व्रीहि-पृथिव्यादि च तत्कृताहार-शरीरेन्द्रिय-बुद्धि-मनुष्यादि सर्वं परस्परतः सर्वात्मकं भवति । तत्प्रयुक्तत्वात्, तथाऽभिव्यक्तेस्तदादिकरत्वादि[त्यादि]हेतुभिः कियद् वोदाह्रियते? न्यायस्यास्य व्यापित्वात् सर्वं तदुदाहरणमेव ।

दिग्मात्रप्रदर्शनार्थं चाह— इतश्चेतश्चेति । यदि व्रीहितो व्रीहेरादिकरत्वमथ पृथिव्यादितः पृथिव्यादेरादिकरत्वमिति तान्येवोदाहरणानि । एवं तत्कृताहार-शरीरेन्द्रियादिष्वपि द्रष्टव्यम् । सर्वस्यैकैकस्य सर्वात्मकत्वात् । तत आह— तदात्मकत्वात् तदव्यतिरिक्तत्वात् तत् तदेवेति तस्य तस्य प्रकारस्य हेतुत्वं दृष्टान्तत्वं चेति ।

एवं दृष्टान्तभूतं प्रस्तुतन्यायप्रसाधितं सर्वसर्वात्मकवादं प्रथयित्वा दार्ष्टान्तिकं पुरुष-कर्मवादमीश्वरकारणनिराकरणायाह—

**पुरुषकर्मस्वप्येवमेवेत्यादि** । पुरुषः कर्ता कर्मयोग्यानां पुद्गलानां कर्मत्वेनादिकरः । [के] कर्मयोग्याः पुद्गलाः? उच्यते— परमाणुवर्गणा अग्रहणवर्गणा अग्रहणवर्गणा द्विप्रदेशवर्गणा एवं दशप्रदेशादिसङ्ख्येयप्रदेशवर्गणाः । समानजातीयानामेकशो बुद्ध्याऽवस्थापितानां पिण्डो वर्गणा । कुचिकर्णकाभीर-सवर्ण-गोपिण्डवत् । अनन्तप्रदेशवर्गणा अपि काश्चिद् ग्रहणयोग्याः, काश्चिदग्रहणयोग्याः । ग्रहणयोग्यायोग्यत्वं चातिस्थूल-सूक्ष्मायोग्यत्वात् स्वेदोरेव(?) परमाणुशर्कराणां योग्यत्वाच्च मध्यमपरिमाणानाम् । तत्र या ग्रहणयोग्याः पुद्गलतो वर्गणाः तत्प्रमाणेन सिद्धानामनन्ततमभागः । अभव्यसिद्धीनामनन्तगुणाः । एष तावदौदारिकयोग्यस्य ज[घ]न्यस्य विधिः । तदुपर्येकपरमाणौ प्रक्षिप्ते द्वितीयाऽप्यौदारिकयोग्या । एवमेकैकवृद्ध्या [ता]न्यनन्तानन्तानि स्थानान्यौदारिककार[ण]त्वेन ग्रहणयोग्यानि । जघन्यादुत्कर्षस्थानमसङ्ख्येयगुणम् । यस्मात् परम्परोपनिधया प्रथमस्थानादारभ्यानन्तस्थानेषु तेषु द्विगुणता भवति । तस्मादसङ्ख्येयगुणं सङ्ख्येयगुणं वा । अनन्तरोपनिधया तु रूपादि(धि)कमेव तस्मिन्नुत्कृष्टौदारिकयोग्यद्रव्ये रूपे प्रक्षिप्ते जघन्यं वैक्रियशरीरस्याग्रहणयोग्यम् । एवं रूपाधिकवृद्ध्या तान्यप्यनन्तानन्तानि स्थानानि पूर्ववत् । जघन्यादुत्कृष्टमसङ्ख्येयगुणम् । को गुणकारः? श्रेण्यसङ्ख्येयतमभागः । तेषामग्रहणानामुपरि वैक्रियस्य जघन्यं ग्रहणयोग्यम् । तान्यपि स्थानानि पूर्ववदनन्ता[नन्ता]नि । पुनराहारकाग्रहणानि तथा तदुपरि तद्ग्रहणयोग्यानि । तथैवौदारिकशरीरयोग्येभ्यो वैक्रियशरीरयोग्यान्यसङ्ख्येयगुणानि,

१–माने–प ।

ततोऽसङ्ख्येयगुणान्याहारकयोग्यानि तावदसङ्ख्येयगुणानि ग्रहणाग्रहणानि पूर्वस्मात् पूर्वस्मात् । तदुपर्याहारकोत्कृष्टे रूपे प्रक्षिप्ते जघन्यमग्रहणं तैजसस्य जघन्यादुत्कृष्टमनन्तगुणम् । को गुणकारः? अभव्येभ्योऽनन्तगुणः, सिद्धानामनन्ततमभागः । तदुपरि रूपाधिके तैजसशरीरयोग्यं जघन्यादुत्कृष्टमनन्तगुणम् । को गुणकारः? सिद्धानामनन्ततमभागः, अभव्येभ्योऽनन्तगुणः । अनेन विधिनोत्तरेषां भाषा-प्राणापान-मनः-कर्मयोग्यानामग्रहणान्तरितानां ग्राह्याणामुत्तरोत्तरानन्तगुणमानेया । अन्तरं तु ग्राह्याणां जघन्यादुत्कृष्टो विशेषाधिकः सर्वत्र, को विशेषः? तस्यैवानन्तभागः । अग्राह्याणां तु जघन्यादुत्कृष्टोऽनन्तगुणः, को गुणकारः? सिद्धानामनन्ततमभागः अभव्येभ्योऽनन्तगुणः । एवंविधैः पुद्गलैः सर्वत्र लोकेऽवगाढगाढनिचिते कर्मतया परिणमय्य तद्योग्यान् काय-वाङ्-मनः-कर्मलक्षणानां त्रयाणां योगानां काययोगेन गृह्णाति । तेनैव कर्मणा(कार्मण)शरीरतया परिणमयति पुरुषः स्ववीर्येण योग्यास्ये(गाख्ये)न वाङ्-मनः-प्राणापानतया परिणमय्य काययोगेनैव वाङ्-मनसा(नः)-प्राणापानतयाऽऽलम्ब्य विसृजति । यथोक्तम्–

"जोगेहि तदणुरूवं, परिणमयति(इ) गेण्हितू(ऊ)ण पंचतणू[1] ।
पाउग्गे वाऽऽलंबति, भासाऽऽण-मणत्तणे खंधे ॥"

[कम्मपयडी गा. १७]

तथा–"मनसा वाचा कायेन चापि युक्तस्य वीर्यपरिणामः ।
जीवस्यात्मनि यः खलु, स योगसंज्ञो जिनैर्दृष्टः ॥"

"तेजोयोगाद् यद्वदु(द्, र)क्तत्वादिर्घटस्य परिणामः ।
जीवकरणप्रयोगे[।], वीर्यमपि तथाऽऽत्मपरिणामः ॥" इति ।

किं कारणम्? तथाविधोपयोगगतेः बन्धनयोग्यपरिणामापन्नपुद्गलद्रव्यग्रहणपरिणतकृतप्रयोगपरिणामापत्तेः पुरुषस्येत्यर्थः । यथोक्तम्–

"ऊष्म(उष्ण)गुणः सं(सन्) दीपः, स्नेहं वर्त्या यथा समादत्ते ।
आदाय शरीरतया, परिणमयति चापि तं स्नेहम् ॥
तद्वद् रागादिगुणः, स योगवर्त्याऽऽत्मदीप आदत्ते ।
स्कन्धानादाय तथा, परिणमयति तांश्च कर्मतया ॥
स्नेहाभ्यक्तस्याङ्गे लगेदेव रजो मलीभवत्यपि वा ।
राग-द्वेष-स्नेहाभ्यक्तस्य तथा भवति कर्म ॥
रूक्षयति रुष्यते(तो) ननु वक्त्रं स्निह्यति च रज्यतः पुंसः ।
औदारिकोऽपि तनुभावशात् परिणम[य]ति देहोऽयम् ॥"

---

१ योगैस्तदनुरूपं, परिणमयति गृहीत्वा पञ्चतनूः ।
प्रायोग्यान् वाऽऽलम्बते, भाषा-ऽऽण-मनस्त्वे स्कन्धान् ॥

तस्मादात्मा कर्ता करणयुक्तः कर्मत्वेनादिकरः, पूर्ववत् प्रयोजनपरमार्थत्वाद् भवितृत्वस्य । किमात्मैवादिकरः? नेत्युच्यते । तदपि च कर्मादिकरम् । तदपि च ज्ञानावरणादिकर्म ग्रहणयोग्यमौदारिकादिशरीरभेदादिविपाकं पुद्गलम् । किं भवति नर-नरक-देव-तिर्यग्गति-सङ्गह-भवनवास्यादिनैकप्रभेदं सर्वात्मशरीराणां तत्सम्बद्धात्मनां चादिकरं भवति । तथोक्तम्—

[1]"जीवपरिणामहेतू, कम्मतया पोंग्गलं परिणमंति ।
पोग्गलकम्मणिमित्तं, जीवो वि तवे(हे)व परिणमति ॥" इति ।

न केवलमाध्यात्मिकमेवादिकरम्, किं तर्हि? बाह्यमपि घटादिकरं सर्वादिकरम् । विपर्ययेणापि भावयितुकाम आह— **यथा चात्मन्यकर्मणामित्यादि** पूर्ववत् सचोद्यपरिहारं गतार्थम् । यावत् को वा ब्रवीति न कर्मभूतोऽसौ, कर्माणि वाऽऽत्मभूतानि नेति? तथाविधोपभो(यो)गगतेस्तत्प्रयुक्तत्वादित्यादिभिर्हेतुभिः । तस्मात् सर्वसर्वात्मकत्वात् कोऽन्य ईश्वरः?, का वाऽन्या प्रकृतिः? इति । इतश्चान्योन्यकारिताऽऽदिकरताऽऽदिकरत्वात् कर्म-कर्मिणोः सर्वसर्वात्मकतेति कारणमाह— **अचेतनज्ञानावरणेत्यादि** । अचेतनानि ज्ञान-दर्शनावरण-वेद्य-मोहायुर्नाम-गोत्रान्तरायाख्यानि सप्रभेदानि कर्माणि पुद्गलात्मकान्युदीर्णान्यप्यात्मनोऽक्षरानन्ततमभागमुपयोगस्वाभाव्यात् नावृण्वन्ति, शेषं केषांचिदावृण्वन्त्येकेन्द्रिय-निगोद-सूक्ष्मापर्याप्तकादीनां कर्मणां क्षयोपशमवि(वै)चित्र्यात् ॥

[2]"सव्वजीवाणं पि य णं अक्खरस्स अणंततमो भागो णिच्चुग्घाडितओ ।
तं पि जवि(जइ) या(आ)वरिज्जिज्ज, तेण जीवा(वो) अजीवत्तं पावे ।
सुट्ठु वि मेह-समुदए, होइ पभा चंद-सूराणं ॥"
[नंदीसूत्रे पृ. १९५-२]

तथा— "स्वल्पं रजो हि कलुषं च नभः करोति,
राहुर्गृणोति शशिनं बलवांश्च सोमः ।
पङ्को विनाशयति वारिगुणाव(णप्र)कृष्टिं
दोषा मुहूर्तरभसा बलवान् स्वभावः ॥"

---

जीवपरिणामहेतवः, कर्मतया पुद्गलाः परिणमन्ति ।
पुद्गलकर्मनिमित्तं, जीवोऽपि तथैव परिणमति ॥
सर्वजीवानामपि च ननु अक्षरस्य अनन्ततमो भागो नित्योद्घाटितकः ।
सोऽपि यदि आव्रियते, तेन जीवोऽजीवत्वं प्राप्नुयात् ।
सुष्ठु अपि मेघ-समुदये, भवति प्रभा चन्द्र-सूरयोः ॥

तस्मात् कर्म-कर्मिणोरन्योन्यादिकरत्वम् । केवलिनस्तु विगतसर्वावरण-विघ्न-मोहत्वाद् यद्यप्युपयोगप्रवरणाभावात् तथाविधोपयोगगतिरसिद्धा । तथापि वेद्यायु-र्नाम-गोत्र-कर्मचतुष्कतत्प्रयुक्तत्वादिहेतुसद्भावादन्योन्यादिकरत्वं सिद्धम् । सिद्धानां तु कर्मनिर्मुक्ताव्याबाध-पारिणामिक-परमसुख-क्षायिकसम्यक्त्व-ज्ञान-दर्शन-वीर्य-लब्ध्यादीनां चादिकरत्वम् । नन्वात्म-पुद्गलैक्यापत्तिवचनादेव वा भेदप्रतीतेः स्ववचनविरोध इति । एतन्न, कस्मात्? पालन-पूरण-पुरुषत्वात् । 'पृ पालन-पूरणयोः' । पालयति सुख-दुःखादिविपाकांस्तांस्तान् पुद्गलानात्मभावेनेति । पाल्यते तैस्तथाविधोपभो(यो)गगत्येति वा पुरुषः । पूरयति तांस्तैः पूर्यत इति वा पुरुषः । पुमांसं गिलति, पुंसा वा गिल्यते इति पुद्गलः, पूरणाद् गलनाद् वा पुद्गल इति निरुक्तिभेदेऽप्यर्थैक्यात् । पुद्गल-[पुरुष]शब्दयोरिन्द्र-शक्रवदेका-र्थत्वाददोषः । अथैवं नेष्यते यथा मयोक्तम्– कर्म-कर्मिणोरन्योन्यादिकरत्वं यदि न स्यात्, ईश्वरवशात् स्वभावादेः प्रकृत्यादेर्वा कुतश्चित् संसारवैचित्र्यं स्यादिती-ष्यते । ततो नैवात्मा बध्येत कर्मणा संसारबीजभूतेन शुभाशुभेन । ततश्च तत्फल-भूतैः शरीरेन्द्रिय-स्थान-विषयैः शुभाशुभैर्न युज्येत, विकर्मत्वात्, मुक्तवत् । मुक्तो वा बध्येत तत एव तद्वत् । स्यान्मतम्– मुक्तामुक्तविकल्पसम्भव एव परमार्थतः सृष्टिवशव्यवस्थानादिति, तदपि नोपपद्यते । प्रकृतीश्वरादिसृष्टिवशादेव न बध्येत, तनुकरणादिभिर्न युज्येत भुवनेन चामूर्तत्वादाकाशवत् । आकाशं वा बध्येत युज्येत च तन्वादिभिस्तत एव त्वदमि(भिम)तपुरुष इव अनिष्टं चैवमादि भव[त] इति ।

किं चान्यत्– यदि त्वदृष्टाभावेऽपीत्यादि । मया तावदित्थमदृष्टाख्यकर्म-त्वापन्नसर्वपुरुषेश्वरत्वमुक्तं तस्य तस्य तन्वाद्यादिकरत्वात् । तन्नि(न्न) चेदित्थमा-दिकरत्वमिच्छसि, ततोऽपि त्वदनुवृत्त्याऽभ्युपगतेऽप्यदृष्टाख्यकर्माभावेऽपि मया दोष उच्यते– असावीश्वरस्ततस्ते मुक्तानामपि अभूततथाविधहेतुना कर्मणा तनु-करणानि भुवनानि चासौ कुर्यात्, ईश्वरत्वात्, सर्गादिवत् । तथा प्रलयकालेऽपि सर्वेषां कुर्यात् । तत ए[व] तद्वत् । मध्ये वा न कुर्यादीश्वरत्वात् प्रलयकालवत् । अनिष्टं चैत[त् । अ]साच्चानिष्टात् कर्मात्मैक्यात्, सर्वसर्वात्मकत्वात् सर्वेश्वरता । अत एव चेत्यादि । कर्मात्मैक्य-सर्वेश्वरत्वाभ्यामणव एव कर्म, त एव सुखादयः । तस्माददृष्टात् सृष्टिः, प्रधानात् सृष्टिः, पृथगणुभ्योऽदृष्टचोदितेभ्यो वा सृष्टिरिति वादान्तरपरिकल्पं त्यक्त्वा अस्मदुक्त[कर्मा]त्मैक्य-सर्वसर्वात्मक-सर्वेश्वरत्वाभ्युपग-मोऽवश्यं भावी । तस्मात् त्वयोक्त-सम्भूयकारित्वाचेतनत्व-स्थित्वाप्रवृत्तीनामपक्ष-धर्मता । एकत्वात् कस्य द्वितीयस्य ?, केन सह सम्भूयैकार्थकारिता ?, किं तदचे-तनम् ? चेतनात् पृथग्भूतं सततसंवृत्त-पूरण-पालन-गलन-पुंगरणादिधर्मत्वाच्च, का

स्थित्वा प्रवृत्तिरित्यसिद्धार्थत्वाद् विशिष्टचेतनाधिष्ठितत्वं तन्वादीनां न साधयितुमलमिति । यदपि विशेष्योक्तं मिथः प्रत्यनीकसम्भूयैकार्थकारित्वादिति, तदसत्त्वं तु पूर्वोक्तमेव "णिच्छयतो सव्वलहुं" इत्यादिगाथायाः । तस्मान्नेश्वरपूर्विका सृष्टिः, किन्त्वनेकैकेश्वरपूर्विकेति विज्ञेया । एवं च कृत्वेत्यादि । अनेनैकान्तेश्वरपूर्वकवाददोषप्रकाशनेन कर्मैकान्तवाददोषप्रकाशनमपि कृतं वेदितव्यम्, असम्बद्धत्वात् तस्य कर्मैकान्तवादस्य । कथं पुनस्ते कर्मैकान्तवादिन आहुः ?, कथं वा तदसम्बन्धः ? इत्यतस्तत् प्रदर्शयन्तः, तावत् पुरुषा(ष)कारं निराकुर्वन्तः, कर्म समर्थयन्तः त इत्थमाहुरिति तदुपपत्तीर्दर्शयति यथा- यदि प्रवर्तयितृत्वात् पुरुष[ः] कारणं स्यादिति पुरुषकार एव कारणं, न कर्मापीति चेन्मन्यसे इत्येकान्तं सूचयति । तत इदमनिष्टं पुरुषकारकारणैकान्तिनस्ते प्राप्तम् । कतमदनिष्टम्? उच्यते- प्रधानमध्यमाधमभिन्नाः सिद्धयोऽसिद्धयो वा नाना न स्युः, ताश्च दृष्टाः, 'न हि दृष्टाद् गरिष्ठमन्यत् प्रमाणमस्ति' । कस्मान्नाना न स्युरिति चेदुच्यते- उत्कर्षार्थिकारणैकत्वात् आत्मोत्कर्षार्थी पुरुष एककारणं न, कर्मापि कारणमिति पुरुषकारकारणैकान्तवादमाशङ्कते । पुरुषकारस्यैकत्वमुत्कर्षार्थिपुरुषकारैकत्वम् । उत्कर्षार्थिनः पुरुषस्य क्रियाकारः तस्यैकत्वात् । प्रधान-मध्यमाधमभेदभिन्नाः स्वाचार-दुराचार-विकल्पद्वयकृता लोकप्रसिद्धाः पुरुषकारा न सिद्ध्यन्ति, एक एवोत्कृष्टः प्राप्नोति । ततश्च तत्साध्यानामपि फलभूतानां प्रधान-मध्यमाधमानां शुभाशुभानां भेदा न प्राप्नुवन्ति । एकैवोत्कृष्टा सिद्धिः प्राप्नोति, न मध्यमाधमे सभेदे सिद्धी स्याताम् । नापि च पुरुषकाराणामसिद्धयः स्युस्ताश्च दृष्टा इति तदुपसंहृत्य साधनमाह— सप्रभेदास्ताः सिद्धयोऽसिद्धयश्च नानाजातीया न स्युरव्यतिरिक्तकारणत्वात् । तुल्यं तन्तुपटवदिति । पुरुषकारस्यैव कारणत्वात्, तद्व्यतिरिक्तकारणाभावाद् भवतः पुरुषकारैकान्तवादिनः कर्मानपेक्षत्वादिति ।

इत्थं परपक्षे दोषमुक्त्वा स्वपक्षसाधनमाह— कार्यातिरेकात् तु कारणातिरेक इति कर्मैव प्रवर्तयितृ । इति-शब्दो हेत्वर्थे । कार्याणामनेकभेदानां सिद्धीनामसिद्धीनां च परस्परतोऽतिरिक्तत्वात् कारणातिरेकेणावश्यं भवितव्यम् । तच्च कारणं कर्मैव पुरुषस्य त्वदभिमतस्य प्रवर्तयितुः प्रवर्त्यमनेकभेदमिति ग्रहीतव्यम् । तस्य कार्यनानात्वानुमितस्य कारणसामान्यस्य कर्मेति संज्ञा क्रियते, पुरुषकारस्य पुरुषादीनां

१ सम्पूर्णा गाथा त्वेवम्-"निच्छयओ सव्वगुरुं, सव्वलहुं वा न विज्जए दव्वं ।
ववहारओ उ जुज्जइ, बायरखंधेसु नण्णेसु ॥"
[ निश्चयतः सर्वगुरु, सर्वलघु वा न विद्यते द्रव्यम् ।
व्यवहारतस्तु युज्यते, बादरस्कन्धेषु नान्येषु ॥ ]

च कारणानां निराकृतत्वात् । तस्य सिद्ध्यसिद्धिभेदकार्यलिङ्गादनुमानं देशान्तरप्राप्त्य-नुमेयादित्यगतेरिव द्विविधा चेत्यादिना तल्लिङ्गासिद्धिपरिहारार्थं यावदितरस्येति गतार्थं प्रसिद्धं लिङ्गमित्यर्थः । तत्रेत्यादि । तत्रैतस्मिन् कारणवैचित्र्यानुमानलिङ्गे कार्ये त्वदिष्टपुरुषव्यापारस्यावतार एव नास्तीत्यावयोर्लोकस्येव प्रसिद्धे कार्यलिङ्गे त्वदभिमत-कारणासम्भवोऽस्मन्मतकारणसम्भव एवेति च दर्शयति ।

कस्मात्? स्वशक्त्याधानासमर्थत्वात् । कस्य स्वशक्तिः? इति चेत्, चेतनस्य पुरुषस्य । चेतनामात्रसारो हि पुरुषकारः शक्तिः । हिशब्दो यस्मादर्थे । यतोऽस्यैषा शक्तिरेषां(तां) चाधातुमशक्तोऽसाविष्टे मनुष्यत्वे पशुत्वे वर्तमान इति स्वशक्त्या-धानासामर्थ्यं दर्शयति ।

न च स इत्यादि । सत्यपि चैतन्ये तां स्वां चैतन्यशक्तिं कर्मबलाकृष्ट-निकृष्ट-पश्वज्ञानकुशक्तौ वर्तमानो न विशिष्टेष्टमनुष्यचैतन्ये स्थापयितुं शक्त इति विपर्य-येण मनुष्यः सन्न तत् ज्ञानं पशावाधातुं समर्थ इति वर्तते । तस्यात्मनो यत् स्वत-न्त्रमिति त्वया प्रतर्कितं तन्न शक्नोति कर्मवशीकृतो योनिजात्यन्तरस्थो योनिजा-त्यन्तरेऽन्यत्राधातुम् । कुतः? तस्यापि कर्मलभ्यत्वात्, पशोर्मनुष्यस्य वा चैत-न्यस्य कर्मवशादेव तथा भावात्, मनुष्यः पशुर्वा स्वजातिनामकर्मोदयादेव [तथा] भवतीत्यर्थः । तदुदयस्य कारणान्तरदुर्निवारत्वात् । तत्र दृष्टान्तमाह–

अपि तर्हि गङ्गाया इत्यादि । सम्भावनया त्वेतदुच्यते । अपि चैतत् सम्भाव्यं देवक्रिययोत्पातादिना गङ्गास्रोतस्यान्यथा प्रवृत्तस्य कर्मणोऽन्यथा प्रवर्तनमिति । एवं तावदभ्युपगम्य स्वतन्त्रं चेतनं पुरुषकारं च तस्योक्तम्, नैव वाऽभ्युपगच्छाम एतत् सर्वं किञ्चित् कर्म-व्यतिरिक्तम् । कुतः? तत्त्वचिन्तायां कर्म-व्यतिरिक्तकारणानवस्थानादित्येतद् दर्शयति– यापि चेत्यादि, यावद् वेताला-विष्टशवशरीरवदिति । कर्म-वेतालाविष्टो हि पुरुषोऽस्वतन्त्र इष्टानिष्टतुल्यप्रवृत्तिः परवशत्वात् पुरुषस्य ।

उपक्रमप्रभृति इत्यादि, यावत् जह्यादिति । तत्स्वातन्त्र्याभावप्रतिपादनार्थो निमेषोपक्रमादारभ्य मरणापवर्गावसान इति गतार्थः । पुनरप्यतो यथाऽऽहार-विशेषेत्यादि, यावदिहैवामृतत्वप्रसङ्गः । मातुरोजः, पितुः शुक्रं च प्रथमा-हारस्ततः सप्ताहं कललं भवतीत्यादिना क्रमेण शरीरेन्द्रियादिकारणाहारः प्राणनादि-यात्रासमर्थस्तस्य च खल-रसादिभावेन विभजनमित्याद्यसंचेतिताव्यक्तक्रियास्व-स्वतन्त्र एव गर्ता(र्भा)दिषु सुप्तश्च । तास्तु क्रियाः कर्मकृताः, पुरुषो मत्कृता इत्यभिम-न्यते, तथा भासमानत्वात् । तत्कार्यतायां हि पुरुषकारकार्यतायां हि तासां क्रियाणां कदाचिदकरणाभावात् प्राणस्थितिहेत्वनुपरिमा(रम)णात् मरणाभावस्तस्मादिहैवा-

मृतत्वाय कल्पेतेति दृष्टेष्टविरोधदोषप्रसङ्गः । तथा कार्ये(ये)न्द्रियनिर्वर्तनेऽप्यनिष्ट-शरीरेन्द्रियादि न स्यात् काणं कुण्टं बधिरादि, सम्पन्नेन्द्रिय-जाति-संस्थान-संहन-नादियुक्त एव स्यात् । पुरुषकारकार्यनिर्वर्तनेव(च) धर्माद्यनुष्ठान-विषयोपभोगादा-विष्टस्यैव करणं स्वातन्त्र्यात् स्यात् । तस्मात् तत् सर्वमेव तत्कर्मण एव हेतोर्नात्मनः । कर्मण इति पञ्चम्या हेत्वर्थे विहितत्वात् । तदतिरेकेण क आत्मनि प्रतिपद्येत ? । तस्मादेवंविधात् क आत्मन्येतदनुपपद्यमानं कर्मव्यतिरेकेणाभ्युपगच्छेत् ? नाभ्युप-गच्छत्येव विद्वानित्यभिप्रायः । तस्मादहेतुः पुरुषस्तत्कारश्च । स्यान्मतम्-**अकारणमपि कर्मसहायापेक्षत्वात्**। पुरुषकारमकारणमपि कर्मसहायमपेक्षते, कवलास्यप्रक्षेपादिवत् । यथोक्तम्-

"आलस्याद् यो निरुत्साहः, स किञ्चिन्नाश्नुते फलम् ।
स्तनक्षीरादिपानं च, पौरुषान्न विशिष्यते ॥"

अतो भारोत्पाटवत् । यथा भारं समुद्वहन् पुरुषः सहायमुत्क्षेप्तारं निक्षेपकं चान्तरेण स्वयमेव न शक्नोति वोढुमिति कारण[म]कारणं च दृष्टः । तथा 'कर्म पुरुषकारमन्तरेणेति [कारणम]कारणं च' इत्येतदपि च न मन्तव्य[म]कारणम-पीत्यादिना तमेव पूर्वपक्षं व्याचष्टे ।

भारोत्पाटापेक्षभारोद्वाहवदत्र किं सहायं कर्मणोऽपेक्ष्यमिति चेत्, उच्यते-**फलोपहारायेत्यादि** । फलमुपहरिष्यतः कर्मणस्तत्स्वामिनः कर्तुर्नयोद्योगा-वान्तरावपेक्षौ बाह्या स्वामात्यादिप्रकृतिः । किं पुनः कारणमेवं न मन्तव्यम् ? उच्यते-यतस्तान्यपि हि स्वामिधर्म[ा]धर्मरज्जूयति निबद्ध्यामी(द्धानी)त्यादि; यावत् तन्तुपटवत् सहेतुकदृष्टान्तेन पटवाक्येनामात्यादीनां धर्माधर्मकार्यत्वमापाद्य कर्म-कारणावधारणात् पुरुषकारं निराकरोति, तदायत्तत्वात् तद्भोग्यत्वादि[त्यादि]ना हेतुसौलभ्यं च दर्शयति- **तन्तुपटवदिति** तन्त्वायत्तपटवत् । पटत्वेन तन्तूनामेव भोग्यत्ववत् । यदि तानीत्यादि । एवमनभ्युपगमे सर्वाशेषप्रसङ्ग इत्यनिष्टापादनम् ।

योऽपीत्यादि । **यदपि चोक्तं स्वामिनयोद्योगावपेक्ष्याविति** । स्वामि-पुरुषकारः । सोऽप्यधर्मफलत्वात् कर्मैव, न पुरुषकारो नाम कर्मातिरिक्तोऽस्तीत्य-वधारणार्थं प्राक् प्रतिज्ञातं समर्थयति-**क्लेशत्वात्**। क्लेशो हि चिन्ता-व्यायामरूपो मनः-शरीरायासात्मकत्वात्, ज्वरवत् ।

अथेत्यादि । अथैनं पुरुषकारसंक्लेश[म]धर्मफलं नेच्छसि, प्रज्ञोत्साहयुक्तस्य प्रशस्तत्वेनेष्टत्वाल्लोके ततो न तर्हि दुःखमधर्मफलमिति प्राप्तं शिरोरोगादिक्लेश-त्वान्नयोद्योग-पुरुषकारवत् । यथोक्तम्-

"अनर्थपाण्डित्यमधीत्य यन्त्रितः, सुतेषु दारेषु च नित्यशङ्कितः ।
[1]निशासु जागर्ति हिनस्ति बान्धवान्, नमोऽस्तु राज्याय वरं दरिद्रता ॥" इति ।

अथ प्रसिद्धिविरोधदोषभयाद् दुःखमधर्मफलमिति त्वयाऽनुज्ञायते । तत्साचिव्यक्रियायाश्च हिंसादेर्दुःखसाधनतां गतत्वात् तत्कर्मणो हेतोः प्राणातिपातादेर्धर्मफलप्राप्तिः । का[2]ऽसाविष्टशरीरेन्द्रिय[विषय]सुख-सम्यग्ज्ञानारोग्यादिप्राप्तिरित्येतत् प्राप्तं शुभाशुभयोरि[ष्टानि]ष्टविपर्ययफलाभ्युपगमाद् 'धर्मान्नयोद्योगौ दुःखं वा' इत्युक्तत्वादत एव प्राप्तमधर्मफलाद् दुःखात् सुखं धर्मफलमिति प्राप्तम् । किं तत्? इति दिग्(ङ्)मात्रं प्रदर्शयति– इष्टप्राप्तिरिति । इष्टशरीरेन्द्रियादिप्राप्तिरित्येतत् प्राप्तम् । किं कारणम्? धर्माधर्मफलविपर्य[या]त् इत्यतः पुरुषकारनैरर्थक्यं च, यादृच्छिकत्वाविशेषात् । अतो यदुक्तं 'कर्मैव कारणम्, पुरुषकारस्यापि कर्मफलत्वात्' इति श्रेयान् पक्षः । यथोक्तम्–

"यथा यथा पूर्वकृतस्य कर्मणः, फलं निधानस्थमिवोपतिष्ठते ।
तथा तथा पूर्वविध्यनुसारिणी, प्रदीपहस्तेव मतिः प्रवर्तते ॥"

अभ्युपगम्यापि पुरुषकारं दोषं ब्रूमः– स निर्हेतुकः, सहेतुको वा स्यात् । किं चातः? स च पुरुषकारो यद्यहेतुको मुक्तानामपि स्यात् नयोद्योगलक्षणः, न चेष्टस्तेषाम् । अथ मा भूदेष दोष इति सहेतुरिति ब्रूयात्, ततः सहेतुश्चेत् कर्मण एव चेतनाच्छुभादपि पुरुषकाराच्छे(त् से)वादिकादनर्थावाप्तेश्च शुभादपि प्राणातिपातादेरर्थावाप्तेः, धर्माधर्मफलस[3]ङ्करोक्तेरनुमानं(तुं) शक्यत एतदबुद्धिपूर्वकादचेतनकर्मवशादेवैतच्छुभाशुभवैचित्र्यम् । किं कारणम्? युक्तिक्षमहेत्वन्तराभावात् । विचारितनिषिद्धत्वात् पुरुष-नियति-काल-स्वभावादिहेत्वन्तराणां नात्रान्यद् विमर्दक्षमं कारणमस्त्यन्यदतो दैवाख्यात् कर्मणः ।

**यदा चे**त्यादि । यस्मिन् काले एवं च कृत्वा पुरुषस्य प्रवृत्तौ साध्यायां नास्ति कर्तृत्वमिति सिद्धे कर्मण एवेति च सिद्धे तदा तस्मिन् काले द्रवतीति द्रव्यं कर्तृसाधनं न भवति, स्वतन्त्रस्य कर्तुरनुपपत्तेः । कर्मपरिग्रहाविशेषस्तु । तुशब्दो विशेषावधारणार्थः । कर्मसाधनमुपपन्नार्थं द्रव्यम्, द्रूयत इत्ययं विशेषोऽवधार्यते । तद्विग्रहं दर्शयति– द्रूयते गम्यते इत्यादि । तदिदानीं निरूप्यते– भोग्येन कर्मपुरुषेण तेन द्रव्यं क्रियते । किमुक्तं भवति? कर्मपुरुषेणैव कर्मपुरुषः क्रियत इत्युक्तं भवति । तत्र दृष्टान्तो यथा– व्रीहिणैव व्रीहिः क्रियत इति कार्येणैव बीजव्रीहिणाऽङ्कुरव्रीहिरिति तद्व्याख्या । एवं तावदवधारणेन कर्त्रर्थो निराकृतः, कर्मैकान्तवाद उपपादितः । चेतनाचेतनैक्यात् सर्वसर्वात्मकत्वाच्चायुक्त ईश्वरोऽन्यो हेतुरिति चेति ।

---

१ विशा° प । २ काशा° प । ३ संस्कारो° प ।

**यच्चापीत्यादि** । न केवलं कर्तृसाधन एव दोषः । किं तर्हि ? कर्मैकान्तवादोऽप्ययुक्तः । तत्प्रदर्शनार्थमाह– एवं वादिनस्ते पुनः कार्यलक्षणत्वात् कर्मणः, कार्यं कर्म, यत् क्रियते तत् कर्म, 'कर्तुरीप्सिततमं कर्म' (पा. १।४।४९) इति लक्षणादक्षरार्थाच्चानुमेयः कर्ता । तस्मात् कर्मणोऽन्यं कर्तारं कर्मव्यतिरिक्तमन्तरेण कर्माभावात्, घटस्येव कुलालो वाऽस्यैष्यः कर्ता । प्रयोगश्च– स्वतो व्यतिरिक्तं चेतनकर्तृत्वं(कं) त्वदिष्टं कर्म कार्यत्वात् क्रियमाणत्वाद् घटवदिति । अत्रोत्तरम्– परः । ननु कर्मणैव करिष्यत इति स्वत एव कर्मणा कर्म क्रियते । न तद्व्यतिरिक्तेन कर्त्रेत्युक्तम् । व्रीहिणैव व्रीहिः, कार्येण बीजव्रीहिणा कार्योऽङ्कुरव्रीहिः क्रियत इत्युक्तं मयेति ।

इतर आह– ननु सुदूरमपि गत्वेत्यादि, विचार्याप्यात्मव्यतिरिक्त-पुरुषाविनाभावित्वात् कर्मणस्त्वयाऽप्येतदभ्युपगन्तव्यं कर्मवादिना कर्मव्यतिरिक्तः कर्ता पुरुषोऽस्तीति । कस्मात् ? व्रीहेरप्यावर्तकत्वात् । अस्यापि व्रीहिदृष्टान्तस्य क्षित्युदकाकाश-वाताङ्कुराद्यावृत्तिरूपत्वात् तेषां च स्वरूपभेदात् स्वतः पृथग्भूतकर्तृ(र्त्र)विनाभूतं कर्म सिद्ध्यत्यतो विपर्ययसाधनत्वमिति । किं चान्यत्, अक्षरार्थाच्च 'क्रियत इति कर्म' 'कर्तुरीप्सिततमं कर्म' (पा. १।४।४९) इति कर्मशब्दाक्षरार्थः । ततस्तस्य कृतकत्वं निर्विवादम्, तस्माच्च निर्विवादकत्वात् कर्मणः कर्तुरेव भावः स्वतन्त्रस्य पुरुष एव भवति, कर्तुरेव भावः सर्वस्येति पञ्चमीनिर्देशात् वा पुरुषादेव सर्वं भवति कारणात् । एवं च त्वदुक्तहेतोरेव कर्मव्यतिरिक्तपुरुषसिद्धेः, कर्मणश्च तद्व्यतिरिक्तस्य सिद्धेः । आवर्तकवैधर्म्येण कर्मणः कृतकत्वं कर्त्रर्थान्तरभूतस्यावधारणं च युक्तम् । कुतः ? तच्छक्तेः, तस्मादेव हि कर्तुः पुरुषात् कर्मणः कृतकत्वशक्तिः, कर्तुर्वा पुरुषस्य करणशक्तिर्न व्रीहिणैव व्रीहिवदावर्तकत्वेनेति ।

**न हि स क्रियमाण** इत्यादि, यावद् **आभूतदेवदत्तवदिति** । तदेव भावयति– तस्याः कर्मशक्तेः [अ]स्वतन्त्रत्वमलब्धात्मवृत्तित्वादस्वातन्त्र्याच्च कुतो भवनम् ? दृष्टान्तः आभूतदेवदत्तः । गर्भोपक्रमावस्थायां[1] कार्यायामलब्धात्मकवृत्तित्वादस्वतन्त्रः, अस्वतन्त्रत्वाद्–कर्ता, अकर्तृकत्वाच्च न भवति कार्यावस्थाव्यतिरेकेण । अथ(यथा) देवदत्तः, तथा कार्यावस्थायां कर्मापि क्रियमाणं न भवेदनिष्टं चैतत् त्वयाऽपि । तस्मात् कर्म भवति । तच्च पृथग्भूतपुरुषभवनाद् ऋते न भवतीत्यस्ति पुरुषः ।

किं चान्यत्, पुरुषकारप्रत्याख्याने सर्वशास्त्रवैयर्थ्यप्रसङ्गः । कथम् ? यथाक्रमं हितप्राप्त्यहितपरिहारावर्थौ सर्वशास्त्राणां, ताभ्यां च हिताहितप्राप्ति-परिहारार्थाभ्यां निरुक्तीकृतसत्यत्वानि प्रमाणान्तरसंवादेन चिकित्सितादीनि शास्त्राणि । यथा–

---

१ गर्भेपि क्र° प ।

"कटुकः कटुक[ः] पाके, वीर्योष्णश्चित्रको मतः ।
तद्वद् दन्ती-प्रभावात् तु, विरेचयति सा नरम् ॥"
'नागरातिविषा मुस्ता, क्वाथः स्यादामपाचनः ॥' [चरकसंहिता ? ]

इत्यादीनि पुरुष- तत्क्रिययोरभावे कर्मकारणैकान्ते निराकृतानि स्युरित्थं; न चेष्यते तन्निराकरणं कस्यचित् प्रमाणान्तरसंवादिनः शास्त्रस्य प्रामाण्यदर्शनात् । त्वदुपदेशादिक्रियाणां च दृष्टार्थानां निराकरणमेवमिति वर्तते । कर्मकारणैकान्ते पुनः पुरुषस्य स्वतन्त्रस्य, तत्क्रियायाश्चाभावे परप्रतिपादनार्थं तच्छक्तियुक्तशब्दोच्चारणक्रिया न स्यात्, कर्मत एव प्रवृत्तेः । आदिग्रहणादोदनस्य मुखसंयोजनादिक्रियाश्च न स्युः, कर्मप्रवृत्तिमात्रत्वात् । तत्प्रतिपत्त्यपत्त्योः त्वदुपदेशार्थप्रतिपत्तिः कर्मत एव परस्य स प्रतिपद्य[ते] विनाऽप्युपदेशेन, न प्रतिपद्यते वा सत्यप्युपदेशे । कर्मप्रवृत्तिमात्रत्वादित्यादि यावत् कर्मण एवेति चेत् स्यान्मतम्, यदुच्यते शास्त्रनिराकरणमेवं त्वदुपदेशादिनिराकरणं च कर्मणोऽस्वतन्त्रत्वे सत्यलब्धात्मवृत्तित्वादाभूतदेवदत्तवदभवनं निर्विवादकृतकत्वात् कर्तुरेव भावस्तच्छक्तेः, व्रीहेरप्यावर्तका-(कत्वा)त् स्वरूपभेदात् पुरुष एव भवतीत्यादि सर्वं नोपपद्यते, कर्मत एव भवतीत्युपपद्यते, कर्मप्रवृत्तिमात्रत्वात् । तथा शास्त्रार्थस्यास्मदुपदेशादिक्रियाणां च प्रतिपत्त्यप्रतिपत्त्योः कर्मप्रवृत्तिमात्रत्वात् । प्राज्ञपुरुषप्रतिपत्तिवत्, बलीवर्दाद्यप्रतिपत्तिवच्च । तस्मात् सर्वाण्येतानि कर्मण एव हेतोर्भवन्ति, पूर्वोक्तन्यायवच्चिन्ता-व्यायामादिशारीर-मानसक्लेशफलत्वात् तस्येति चेदाशङ्कायाम्, एवं चेन्मन्यसे, ततस्त्वमिदमसि तावत् प्रष्टव्यः । अथ तदादिकर्म कुतः ? इति । मम तावदभिप्रायः कृतकत्वात् कर्मणः पुरुषादेव तदिति । तन्नेच्छता त्वया वक्तव्यम्- कुतस्तदादिकर्म ? यत एतत् सर्वं प्रतिपत्त्यप्रतिपत्तिक्लेशादीति त्वदभिप्रायाकर्षणार्थः प्रश्नः । किं तदपि कर्मण एवोत पुरुषात् ? इति ब्रूयास्त्वम् 'ओम्, पुरुषादेवेति' । एवं नामास्तु, को दोषः ? गत्यन्तराभावात् कर्मत एवेत्यभिप्रायः स्यादिति । अत्र ब्रूमः[1]- न व्रीहिवैधर्म्येणाकर्तृकत्वात् । व्रीहेरस्या(प्या)वर्तकत्वात् कर्तृत्वमुपयाति । तमो वाऽतो व्रीहिरकृतकोऽकर्तृकत्वात् । ततश्चाक्रियमाणत्वान्नोपपद्यते कर्मणः कर्मत्वम्, तस्यादिकर्मणः । किमिव ? आत्मादिवत् । यथाऽऽत्माऽऽकाश-काल-दिगादीनि न केनचित् क्रियन्त इत्यकर्माणि, तथाऽऽदिकर्मापि स्यात्, नोत्क्षेपणवदिति वैधर्म्यदर्शनम् । यथोत्क्षेपणं कर्म तद्व्यतिरिक्तेनोत्क्षेप्त्रा विना न भवति, तथेदमिति ।

एवं पुरुषकारवादिना कर्मवादी दूषितः, कर्मवादिना च प्राक् पुरुषकारवादी । तस्माद् यदुक्तमेवं च कृत्वा तदपि सर्वमसम्बद्धं यत् कर्मकारणैकान्तिन आहुः, यच्च

---

१ क्रमः प ।

पुरुषकारकारणैकान्तिन आहुस्तदपि सर्वमसम्बद्धं परस्प[र]दूषितत्वादिति । तदुभयमिदानीं नैकत्वेनाप्यसम्बद्धमिति प्रतिपादि(दयि)तुकामः प्रश्नयति– कथमसम्बद्धमितिं परवचनेन स्ववचनेन वा एकत्वात् त(द्व)योः पृथक् कर्म-पुरुषकाराभावादेवासम्बद्धमिति । तत् प्रतिपादयिष्यन्नाह– **यस्मान्न शुभमशुभं** **वेत्यादि, यावत् काय** इति । अयं तावद् दृश्यमानः ऽकाय[ः], पुरुषो वाऽस्तु, यत् तेऽभिरुचितं, न मे कश्चिदत्र पक्षपातः । तच्च यस्मान्न किञ्चिदत्र शुभमेवाशुभमेव वा । बाह्यमपि कायाद् भिन्नमभिमतं रूपादीष्टस्य सुखस्य कारणं चित्र-मयूर-स्रक्-चन्दन-भ्रमररुतादि, अनिष्टस्य वा दुःखस्यातिविवर्ण-हुण्डसंस्थानाकार-कण्टक-शिवारुतादि । सर्वमप्येतदिष्टकारणमप्यनिष्टकारणमपि शुभमप्यशुभमपीति गृहाण द्रव्य-क्षेत्र-काल-भाव-पुरुषान्तरसंयोगविशेषाश्रय-परिणामविशेषापत्तेः । सुरभि-मधुर-सुखस्पर्श-सुरूप-सुशब्देतरभावमुपलभ्यते । अभक्षित-भक्षित-मोदकवत्, पक्वापक्वाम्रफलवत्, पद्मकेसर-नालवत्, जाताजात-विपन्नाविपन्न-सुराऽऽदिवत्, स्वस्थास्वस्थ-स्त्री-पुरुष-गीत-रुतादिवत् । यथोक्तमार्षे–

"[1]ते चेव पोग्गला सुब्भिगंधत्ताए परिणमंति, ते चेव ते पोग्गला दुब्भिगंधत्ताए परिणमंति" इत्यादि ।

तस्मान्न शुभमशुभं वैकान्तेन किञ्चिदस्ति भिन्नजाति । किं तर्हि ? तदेवाशुभं [शुभं], तत एव चेष्टकारणमनिष्टकारणं वा(च) यथा त्रिदोषघ्नमोदकादिप्रमाणाप्रमाण-कालाकाल[ा]हारितमिति स्वस्थ-सर्पदष्टाहारितविषवद् वा । तथैक एव ह्ययं पुद्गलकायः पुद्गलनिरुक्तिकः कायः शरीरं चितत्वात्, रोगादि-दुःखनिवासत्वाद् वा सर्वोऽपि बाह्याभ्यन्तरो मूर्तद्रव्यसङ्घातः कायो रूपादिसङ्घातत्वात् परमाणोरपि । पुद्गलस्य, पुद्गलस्येव वा काय इति विग्रह-समासौ । अथवा पृथक्परिकल्पनयाऽनया किमिन्द्रियप्रत्यक्षम(क्षा)भिमतः शरीराख्यः पुद्गलकायः स्वसंवेद्यज्ञानात्मकः क्रियाऽऽदि-लिङ्गानुमति(मित) आत्म[कायो] वा सोऽयमेक एव । न ह्यत्र काचिद् भेदबुद्धिः कार्या, बन्धपरिणामैक्यापत्तेरेतन्नयदर्शनादेक एव शुभाशुभाति(दि)धर्मेति साध्यस्य कायस्य वक्ष्यमाणाहारदृष्टान्तसाम्यमापाद्य हेतुत्वेन तत्साधर्म्यमाह– **भोक्तृ-भोग्यात्मकविपरिणामवृत्तित्वादिति** । यदि पुरुषकारवादिमतेन भोक्ता, अथापि कर्मवादिमतेन भोग्यस्तस्मात् कायो भोक्तृ-भोग्यात्मकस्तस्य विपरिणामो वृत्तिरस्येति कायः सम्बद्ध्यते । भोग्यस्य भोक्तुर्वा विपरिणाम इति । शुक्र-शोणितं जनन्याहृतान्नरसादि चाद्युत्तरकारणमस्य शरीरस्य

---

१ त एव पुद्गलाः सुरभिगन्धतया परिणमन्ति । त एव ते पुद्गला दुरभिगन्धतया परिणमन्ति ॥

तदुभयं भोक्तृ-भोग्यं चान्योन्यभावापत्तेः । तदा(था) चतुर्विधोऽप्याहारोऽशनादि-राहर्त्राहार्यभावाद् भोक्तृ-भोग्यं च । तच्च शुभाशुभेष्टानिष्टकारणमेवेति । काय-चैतन्ययोर्वैक्यपरिणामापन्नस्यैव भोक्तृ-भोग्यपरिणामवृत्तित्वं सिद्धम् । अत **आहारवच्छुभाशुभादिधर्मताऽस्येति** । यथाऽऽहारः शुभश्चाशुभश्च दृश्यते, संस्कृतासंस्कृतः, संस्कृतोऽप्यशुभ एव संस्क्रियमाणान्नाद्यशुभत्वात्, संस्कारा-भिमतकर्पूरादेरपि कालान्तरे दौर्गन्ध्यादिदर्शनात् । सर्वपुद्गलानां प्रागुक्तविधिना शुभाशुभत्ववत् पुद्गलत्वादाहारः शुभोऽशुभश्चेति, तथा काय इति । अथवा चेतनाचेतनयोरात्म-शरीरयोरैक्यपरिमाणा(णामा)त् तदेव भोक्तृ भोग्यं चेत्यने-नैवाहारदृष्टान्तेन सम्बद्धं प्रत्येकमपि साधयत्येतद्धर्मद्वयमित्यत आह– भोक्तृत्वाद्, भोग्यत्वादिति । एवं कर्तृत्वात्, कर्मत्वादाहारवच्छुभोऽशुभश्च काय इति । अथवा सुखोऽपि दुःखोऽपि स एव कायः सुखस्तावद् दुःखत्वादाहारवत् । दुःख सुखत्वा-दाहारवत् । यत् परं प्रत्यसिद्धं तदितरेण सिद्धेन धर्मान्तरेण साध्यम् । एवमिष्टो-ऽप्यनिष्टत्वादनिष्टोऽपीष्टत्वादाहारवदेव ।

इतर आह– तच्च न, उ(नन्वब्नो)दकशुभाशुभते प्रतिविशिष्टापशदयोगकृते प्रतिविशिष्टकर्पूराद्येकान्तशुभद्रव्ययोगे सति जलाद्यशुभगन्धमपि सत् सुरभीक्रियते । अधिकगुणाभिभवभावनया, एवमशुच्यपशदद्रव्ययोगे सति तदुत्कृष्टगन्धाभि-भवात् तद्भावनया कर्पूराद्यपि तद्गन्धीभवदुपलभ्यते । अथवा तदेव विनष्टं शुभ-तडा(टा)कादिगतमल्पं शुष्यच्छुष्यत् कर्पूरगन्धं भवदुपलभ्यते । नालिकेरफलानि सुरभीणि सन्ति पूतीभवन्ति दृश्यन्ते, तस्मादुभयधर्मता सर्वद्रव्याणाम् । तथा कायोऽपीत्येतच्च न, एकैकस्य सर्वरूपद्रव्यभवनपरमार्थत्वात् । वीप्सया व्याप्तिं सर्वरूपद्रव्यभवनस्य भावकस्य भाव्यस्य च दर्शयत्येकैकस्येति । सर्वशुभाशुभेष्टानिष्ट-कारणत्वादिरूपो हि द्रव्यभवनपरमार्थः । एवं हि भवदेव भव[द्]द्रव्यं परमार्थतो भवति, नान्यथा । यथोक्तम्–

"[1]एगमेगस्स णं भंते ! जीवस्स एगमेगे जीवे मातित्ताए" इत्यादि प्रश्नः । यावद् आजातपुव्वे । व्याकरणम्– [2]गोतम ! असई अदुवा अणंतखुत्तो' एवं सव्वजीवाण वि एगजीवो, एगजीवस्स वि सव्वजीवा, तथा सव्वपोग्गला एग-जीवस्स सव्वजीवाणं च आहारत्ताए, ज(ऊ)सासत्ताए, भासत्ताए, सरीरत्ताए,

---

१ एकैकस्य ननु भदन्त ! जीवस्य एकैको जीवो मातृतया ? आजातपूर्वः ? ।

२ गौतम ! असकृत्, अथवा अनन्तकृत्वः । एवं सर्वजीवानामपि एकजीवः, एकजीवस्यापि सर्वजीवाः, तथा सर्वपुद्गला एकजीवस्य सर्वजीवानां च आहारतया, उच्छ्वासतया, भाषातया, शरीरतया, इन्द्रियतया, मनस्तया, आण-प्राणतया ।

इंदियत्ताए, मणत्ताए, आणा(ण)-पाणत्ताए ॥" – [भगवतीसूत्रे श. १२, उ. ७] इत्याद्यर्थे(द्यार्षे) ऐक्यापत्तौ ज्ञापकं सर्वज्ञोक्तत्वात् ।

अत्रानुमानम्– तदेव तदिति प्रतिज्ञा । मातृत्वादिभावेन यद् भवति, शरीरादिभावेन च(वा) तदेकैकं सर्वरूपमित्यर्थः । तत्परमार्थत्वात् तद्वत् । एतदुक्तं भवति– तत्तत्स्वरूपत्वे (पापत्ते)भवनपरमार्थत्वात् तत्तत्स्वरूपवत् । एवमितरमपि पक्षीकृत्य साध्यम् । यत्स्वरूपमिदं भवति कर्पूरं शरीरमन्ना(न्ना)दि वा तत्तदेवेत्यर्थः । यच्च यदेव न भवति, तत् परमार्थ[तो न भवति], यथा खपुष्पं, खरविषाणं वा । भवन्मत्याऽन्यत् तत् तदन्यस्वरूपापत्तेः स्यात् । आह– 'यस्यान्तरङ्गस्य तत्त्वं स्याद् बहिरङ्गस्य चान्यत्वम्' इति । तदेव ह्यन्यत्वा[भि]मतमस्माभिस्तस्यैव [तद्]रूपमिति साध्यते, तस्मान्नास्त्यन्यथात्वं न चासिद्धं तत्परमार्थतत्त्वमिति । अभ्युपेत्याप्यन्यथात्वेऽपि तदनतिरेकात्मकत्वात् तदेव तदिति वर्तते । तस्मात् तस्य वाऽनतिरेकः, स आत्माऽस्येति **तदनतिरेकात्मकं** यद् य[द]नतिरेकात्मकमन्यथात्वेऽपि तदेव तद् दृश्यते । किमिव? तन्तु– यज्ञोपवीतवत् । तन्त्वनतिरेकात्मकत्वाद् यज्ञोपवीतस्य चलितस्यान्यथात्वेऽपि तन्त्वात्मकत्वमेव । तथा सुखादिषु भावनीयम् । तदनतिरेकात्मकत्वं च भावितार्थमेव 'ते[1] चेव ते पुग्गला सुब्भिगंधत्ताए' इत्यादिना ।

**यथा** चात्रेत्यादि । एवं च तदेव तदिति सर्वं सर्वस्य बाह्यस्य परिणम्यस्य परिणमयितुश्च तत्त्वम् । योऽधिगुणस्य ताद्गुण्यं प्रतिपद्यते स परिणामी, योऽधिगुणो न्यूनगुणत्वमापादयति, स परिणामक इत्युच्यते व्यवहारतः, निश्चयतश्च (तस्तु) परिणामि-परिणामकयोराविर्भाव-तिरोभावमात्रभेदौ स्वत एवेत्यस्य नयस्य दर्शनम् । परिणामश्च द्र[व्य]मात्रम् । 'द्रव्यं च भव्ये'(पा०) यद् यद् भवति स परमार्थोऽस्येति तदप्येवं(तथेदं) भावितं क्षीरादेर्यावच्च घटादेस्तावद् बोद्धव्यम् । तथाऽधिकृतस्याध्यात्मिकस्य कर्म-कर्मिसंज्ञस्य शरीर-शरीरिसंज्ञस्य वा भावनार्थमुपनयति– **तथाऽऽत्म-कर्मणोरपीति** । तद् व्याचष्टे– आत्मा परिणामयतीत्यादिना, यावद् **अनादित्वमेकत्वमिति** । परिणम्य-परिणमकयोरनियतदेश-काल-भावादिरूपतां दर्शयति । तथाभवनसामर्थ्याद् गति-जात्यादिना पुद्गलानिति उपयोगलक्षण आत्मा, गति-जाति-शरीराङ्गोपाङ्गाद्यनुभवनोपयोगात्मतया तान् पुद्गलान् परिणमयतीति आत्मनः परिणमकत्वम्, तेषां परिणम्यत्वम् । पुद्गलाश्चात्मानं मिथ्यादर्शनादित्वेनेति मिथ्यादर्शनाविरति-प्रमाद-कषाय-योग-सुख-दुःखोदय(य-)क्षयोपशमादिभावेन परिणमयन्ति, तद्भावेनात्मा परिणम्यते । स च मिथ्यादर्शनोदयादिभावो भवभ्रान्तिहेतुः, तद्वशस्य संसरणात् । एतस्य कर्म-कर्मिद्वयस्यान्योन्यपरिणा-

---

१ त एव ते पुद्गलाः सुरभिगन्धतया ।

मकत्वादनादित्वमेकत्वमेव । एकत्वशब्देन पर्यायभूतेन तत्त्वं व्याचष्टे । संसारस्य कर्म-कर्मिसम्बन्धजत्वात्, तस्य च सम्बन्धस्यानादित्वात् । यथोक्तम्–

"[1]पुव्विं भंते! अंडए, पच्छा कुकुडी ?" इत्यादिप्रश्न-व्याकरणम्– "[2]रोहा! पुव्विं एते पच्छा वि एते, दो वि एते सासता भावा, अणाणुपुव्वी एसा रोहा !" इत्यादि (भगवती श. १, उ. ६, सू. ५३, पृ. ८०) मिथ्यादर्शनग्रहणं सर्वकर्म-बन्धाधारभूतत्वाच्छेषस्यापि सर्वस्य सूचनम् ।

आह– यदुक्तं त्वया कर्पूरोदकाद्यचेतनानां परिणाम्य-परिणामकभावादेकत्वं चेतनाचेतनयोश्च जीव-कर्मणोरिति तद् युक्तम्, किन्तु रूपाद्युपयोगीभवदात्मा भवत्यात्माऽपि रूपादीभवति, तत्परि[णा]मादित्येतन्नोपपद्यते स्वभावाविनाशादिति ।

अत्रोच्यते– यदपि चेत्यादि, यावन्मत्यादिवदिति । यदपि च बहिर्भिन्नं विषयजातमुपयोगनिमित्तभूतं रूपादि तदस्या(प्या)त्मन एव तत्त्वं रूपादितत्त्वमात्मानं च वक्ष्यामः । कुतो रूपाद्यप्यात्मन एव तत्त्वम् ? इति चेत्, उच्यते– **उपयोगात्मकत्वात्** । मत्यादि-चक्षुर्दर्शनादिभेदप्रभेद उपयोग आत्माऽस्य रूपादेर्वि[षय]कल्पस्य सोऽयं तदात्मकः । कथं रूपादेर्विषयस्योपयोगात्मकत्वमिति चेत्, उच्यते– **तदव्यतिरेकलभ्यरूपत्वात्** । रूपं रसो गन्ध इत्यादि विषयस्वरूपाकारेणोपयोगेनाव्यतिरिक्त एकीभूत एवोपलभ्यते रूपादिर्विषयो, नान्यथा विषयस्वरूपानवधारणात्, तस्मात्, तदनतिरेकलभ्यरूपत्वात्, रूपादिर्विषय उपयोगात्मकः । यद् यदुपयोगात्मकं तत् तदात्म[न] एव तत्त्वम् । यथा मत्यादि-चक्षुर्दर्शनादिभेद उपयोग इति ।

स्यान्मतम्– रूपादीनां देशभेदेन युगपदवस्थायिनां रूपं रसो गन्ध इत्यादयः परस्परतो देशभिन्ना इति गृह्यन्ते । तस्य देशस्य परमाणुशो भेदे न रूपं रसो गन्धश्चोपलभ्यते । देशसम्बन्धेन रू(तू)पलभ्यमाना भवन्ति । देशतोऽत्यन्तभेदग्रहे तेषामभवनम् । तथा क्षणभेदे प्रथमक्षणेऽन्यद् रूपं, द्वितीयक्षणेऽन्यदिति गृह्यते चेन्न रूपं नाम किञ्चित् स्यात्, तन्निष्ठस्य कालस्य रूपग्रहणाश्रयसम्बन्धाभावादित्यभवनात्मका रूपादयः स्युः । आदिग्रहणाद् भावभेदेनैकगुण-द्विगुण-त्रिगुण-कृष्णादिभेदेनागृह्यमाणत्वाद् विशिष्टस्य सामान्यस्यैव ग्रहणात् । ततः किम् ? अभवनात्मकत्वान्निर्वस्तुत्वापत्तिर्वन्ध्यापुत्रवत् । ततश्च निर्वस्तुत्वापत्तेरेतत् प्रतिपत्तव्यम्– द्रव्यमेव तथातथाभवनलक्षणं सत्यं न रूपादयो नाम केचित् इति । तथा तथेति रूप-रस(सादि)प्रकारेण भवति श्याम-रक्तताऽऽदितद्भेदप्रकारेण चेति

---

१ पूर्वं भदन्त ! अण्डकम् ?, पश्चात् कुक्कुटी ? । २ रोह ! पूर्वमेते, पश्चादपि एते । द्वावप्येतौ शाश्वतौ भावौ । अनानुपूर्वी एषा रोह ! ।

सत्यम् 'द्रव्यं च भव्ये' (पा. ५ । ३।१०४) द्रवति भवतीति । कथं पुनस्तद् द्रव्यमभिन्नं सद् रूपादिभेदेन भवतीति चेत्, चक्षुरादिप्रत्ययोपयोगापदेशेन भवति, चक्षुरादिप्रत्यया इत्यधिपत्यालम्बनहेतुसमनन्तरप्रत्ययास्ते निमित्तमस्योपयोगस्य ज्ञान-दर्शनाख्यस्य स चक्षुरादिप्रत्ययोपयोगस्तदपदेशेन रूपादि भवति । ज्ञानापदेशेन चक्षूरूपादिप्रत्ययेनेत्यर्थः । यथोक्तम्–

"रूपालोक-मनस्कार-चक्षुर्भ्यः संप्रवर्तते ।
विज्ञानं मणि-सूर्यांशु-गोशकृद्भ्य इवानलः ॥" इति ।

दृष्टान्तो भागिनेयाद्यपदेशविशिष्टैकत्वसत्यपुरुषवत् । यथैक एव पुरुषोऽनेकसम्बन्धे(न्धि)स्त्री-पुरुषापेक्षापदेशविशिष्टो भागिनेयो मातुलो भ्राता पतिः पिता देवरः श्वशुरः पुत्रो भ्रातृव्य इत्यादिर्भवति । देवदत्त एक इत्येव च सत्यस्तथा द्रव्यमेकमेव रूपादि भवति, चक्षुराद्यपदेशादिति साधूक्तम्– एकमेव सर्वात्मकमिति ।

एवमुपयोगात्मकत्वं पुद्गलस्य रूपादिप्रभेदस्योक्तम् । इदानीमुपयोगस्यापि पौद्गलात्म्यमुच्यते– यच्चोपयोगस्वतत्त्वं मत्यादि । तदपि पुद्गलात्मतत्त्वमिति पक्षः । कस्मात्? रूपाद्यात्मकत्वात् अन्धा(ण्वा)दिवत् । स ह्युपयोगलक्षण आत्मा परमाणु-द्व्यणुक-त्र्यणुकादिषु रूपाद्यात्मकेषु पुद्गलेषूपयुज्यते, कृत्स्नो व्याप्रियते । सार्वात्म्येन व्याप्त उपयुक्तः समाप्त इत्यर्थः । रूपाद्यात्मक एवाप्रदेश-सङ्ख्येयासङ्ख्येयानन्तप्रदेशपुद्गलवत् तदुपयोगात् तत्परिणामात् तदेव तदिति पूर्वोक्तन्यायाच्च । यद्येवं रूपाद्यात्मकत्वमात्मनो नाभ्युपगम्यतेऽसङ्ख्यातप्रदेशस्यापि रूपादिमदेकद्रव्योपयोगे तादात्म्यं ग्राह्योपातीनि( ह्ये यातीति ) । ततोऽसङ्ख्यातप्रदेशोऽपि सर्वात्मना सार्वात्म्येन सर्वैः प्रदेशैः ग्राह्ये द्रव्ये उपयोगमयान्–उपयोगमगच्छन्ननुपयुज्यमानोऽचेतन एव, पटानुपयुज्यमानघटादिवत् स्यादिति सम्भन्त्स्यते । कथं पुनरुपयोगं यायात् मृत्पिण्डः? शिवकादितामिव यथा मृत्पिण्डः कृत्स्नः शिवकादिभावे सार्वात्म्येन व्यापारं गच्छति, तथा यदि न गच्छेदात्मग्राह्ये ततस्तादात्म्यमप्रतिपा(प)द्यमानः सोऽचेतन एव स्यात् पटेऽनुपयुज्यमानघटादिवदिति यथाक्रमं वैधर्म्येण साधर्म्येण च दृष्टान्तौ, चेतनो ह्युपयोगलक्षणस्तदभावादचेतनः स्यादिति । एष दोषो रूपाद्यात्मकत्वाभावे स्यादात्मन उपयोगलक्षणस्य । तस्मात् सिद्धं रूपाद्यात्मकत्वमात्मन उपयोगात्मकत्वात् । अतः पुद्गलस्वतत्त्वमेव मत्यादीति साधूक्तम् ।

इतश्च– आत्मा पुद्गलस्वतत्त्व एव आत्मस्वतत्त्वेत्यादि, यावद् भाव्या(वा)व्यतिरिक्तरूपत्वाच्च आत्मनः स्वतत्त्वमौदयिको भावः । उदये भव औदयिकः, कस्य?

कर्मणो ज्ञानावरणीयादेरष्टविधस्यापि । स च तदुभ(द)यप्रवृत्तितोऽप्रवृत्तितोऽपृथग्भूतोऽव्यतिरिक्तो भवः स्वतत्त्वमात्मनः तदव्यतिरिक्तरूपश्चात्मा, तस्मादात्मस्वतत्त्वज्ञानावरणाद्युदयप्रवृत्त्यव्यतिरिक्तरूपत्वाच्चात्मा पुद्गलात्मतत्त्व एव तादात्म्यप्रतिपत्तेः, रूपाद्यात्मकपरमाण्वादि[वदि]त्यर्थः ।

अत्राह– नन्वेवमित्यादि, यावत् कुतोऽस्य रूपाद्यात्म[क]तेति । ननु भोस्त्वदुक्तेन विधिना एतेनैव पुद्गल एवात्मा प्राप्तः । तस्योपयोगात्मनः पुद्गलत्वात् । योऽयं पुद्गलोपयोगो रूपं रस इत्यादि, ज्ञानात्मनः स चात्मोपयोग एव उपयोगव्यतिरिक्त[स्य] रूपादेरभावात्, उपयोगस्य रूपाद्यात्मकत्वादुपयोगरूपत्वाच्च रूपादीनाम् । तस्मात् कुतोऽस्यात्मनो रूपाद्यात्मकतेति प्रस्तुतस्योपयोगस्य मत्यादेः पुद्गलात्मत्वमुपरुणद्ध्येष विचार इति । अत्रोच्यते– एतन्नोपयोगात्मकत्वादेव रूपादीनामप्युक्तवत् । नै[ष दो]षो रूपाद्यात्मकताऽऽत्मनः,रूपादीनां चोपयोगात्मकता । यस्मादुपयोगात्मकत्वं रूपादीनामप्यनन्तरमेवोक्तम् । तस्माद् रूपादीनामप्युपयोगात्मकत्वादुक्तवत् पुद्गलोऽप्यात्मा, आत्माऽपि पुद्गल एवेति रूपाद्यात्मकत्वमात्मनो न दोषाय ।

**अनेन सर्वमपीत्यादि, यावदितरेतरात्मकत्वात्** । एवं च कृत्वा पुरुषस्य रूपादिमत्पुद्गलात्मकत्वात् पुद्गलस्याप्युपयोगात्मकपुरुषात्मकत्वात् तदुच्यते– कर्मैव कारणं, पुरुषकार एव कारणमित्यवधारितमुभयमप्येकान्तमसम्बद्धं बोद्धव्यमिति उभयोरपि पक्षयोः सह दोषोक्तिरेषा ।

इदानीं प्रत्येकप्रत्युक्तिभावनादिक् । तुशब्दो विशेषणार्थः । युगपत्प्रत्युक्तिदिक्तः प्रत्येकप्रत्युक्तिदिक् विशिष्यते । कर्मैकान्तवादप्रत्युक्तिदिक् तावत् । प्रवर्तयितृत्वात् पुरुषश्च कारणमुत्कर्षार्थी चशब्दात् कर्म चेत्येकान्तप्रतिषेधस्य वक्ष्यमाणत्वात् । उत्कर्षमर्थयतीत्युत्कर्षार्थी, उत्कर्ष एवार्थः सोऽस्यास्तीति वा 'अर्थाच्चासन्निहिते' [पा. वा. ५।२।१३५] इति इनिः । स चोत्कर्षो बाह्यो धन-धान्य-मित्र-भूम्यादिसम्पत् । आन्तरस्त्वारोग्य-ज्ञानादिसम्पत् । कृतार्थस्य तदर्थारम्भोपरमात् असन्निहितार्थोऽर्थीति । कस्मात् पुरुषश्च कारणमिति चेत् ? उच्यते– तस्यैवोक्तवत् सर्वत्वात् । व्रीहिणैव व्रीहिः क्रियत इत्यादिन्यायोक्तवदसावेव पुरुषः प्राणादिमांश्चेतनः, कर्मापि । अपिशब्दान्नोकर्मापि प्राणापान-भाषा-मनोद्रव्यादिपुद्गल आध्यात्मिको बाह्योऽपि रूपादिपुद्गलश्चेतनो यस्मात् तस्मात् स एव प्रवर्तयिता तस्यैवास्मिन् पक्षे कर्मादि सर्वसर्वत्वात् किं तदन्यत् कर्मेति तस्यैव कर्मताऽपि, अपिशब्दात् पुरुषताऽपि पुद्गलताऽपि । तस्मादेव यदुक्तं 'प्रधान-मध्यमाधमाः पुरुषकारास्तेषां च सिद्ध्योऽसिद्ध्यश्च प्रधान-मध्यमाधमा नाना न स्युः' इति तदयुक्तमुक्तम् । पुरुष-

कारणां च तत्साध्यानां च सिद्धयोऽसिद्धयश्च नाना स्युरेव, न न स्युः । किं कारणम् ? उत्कर्षपरम्पराया बहुप्रभेदाया आ(अ)प्यामुक्तेः पुरुषस्यैवाव्यतिरिक्तभिन्नकारणत्वात् । स एवाव्यतिरिक्तो भिन्नश्च कारणं, तस्यैव सर्वप्रभेदात्मकत्वाद् भिन्नत्वम्, तेषां च कर्म नो[कर्म]बाह्यरूपादिभेदपुद्गलानां पुरुषोपयोगात्मकत्वादव्यतिरिक्तत्वं तस्मात् पुरुषकारनानात्वम्, तत्साध्यसिद्ध्यसिद्धिनानात्वानि च स्युरेव, स चैक एव कारणं स्यादेव । को दृष्टान्तः ? अहिभोगविस्तरण-कुञ्चनवत् । यथाऽहिः स्फु(स्फ)टाऽऽटोप-कुण्डलीकरणाद्ययुगपदवस्थायिधर्मै रूपादिभिर्युगपदवस्थायिभिश्च भिन्नोऽप्यव्यतिरिक्ताभिन्नाहित्वसत्यस्तद्व्यतिरिक्तभिन्नकारणत्वात् प्रवर्तयिता । तथा पाण्यादिसङ्घातसहवर्ती पुरुष उपयोगात्मा गत्याद्युत्कर्षार्थी तेषु युगप[द्युगप]द्भावेषु पुरुष एव सत्य इति । तथाऽनतिरेकातिरेकात् कर्मापि प्रवर्तयितृ यथा पुरुषः पुद्गलात्मककर्मधर्मप्रभेदभिन्नोऽप्यव्यतिरिक्तः प्रवर्तयिता, तथा कर्मापि तदनतिरिक्तातिरिक्तकारणत्वात् प्रवर्तयितृ । किं च चेतनाचेतनपरमार्थत्वाच्च पुरुषस्यैवेष्टानिष्टविधिं प्रति व्यापारः, स एव हि पुरुषश्चेतनोऽचेतनश्च । कुतः ? **इष्टानिष्टविधिं प्रति व्याप्रियमाणत्वात्**, उत्कर्षापकर्षाविष्टानिष्टौ तयोर्विधिः तत्प्राप्त्युपायः प्रमादाप्रमादौ तौ च दृश्येते । तस्मादयं पुरुषश्चेतनोऽचेतनश्च प्रमादाप्रमादयोरिष्टानिष्टविध्योर्व्याप्रियमाणत्वादतोऽचेतनकर्मानुभावोपलम्भात् चेतनपुरुषानुभावोपलम्भाच्चासौ(चेति)तद्द्वयपरमार्थः । तस्माच्च कर्मापि प्रवर्तयितृ ।

अथैवं नेष्यते त्वया यदि च पुरुषश्चेतनशक्तिरेव प्रोच्यते(वेष्यते) ततोऽसौ भवेत् पशुवन्मनुष्यत्वेनापि गम्यागम्य-भक्ष्याभक्ष्याद्यविशेषज्ञो यथा पशुर्भवत्यल्पचेतनस्तथा मनुष्यत्वेऽपि भवेत् । व्यक्तवर्ण-पद-वाक्यादर्थप्रत्यायनसमर्थशब्दोच्चारणादिशक्तिश्च मनुष्यस्तद्वत् पशुरपि भवेत् । कृम्यादिवन्मनुष्योऽतिजडः स्यात्, मनुष्यवत् कृमिरपि पण्डितः स्यादित्यादि, तस्मात् कर्मापि चेतनं, पुरुषोऽप्यचेतनः, तच्चोभयमविभक्तमिति ग्राह्यम् । एवं च कृत्वा तस्यैव च तूदितवदविभक्तद्व्यात्मकतायां चेतनाचेतनैकात्मतायां सत्यां द्विविधः प्रवृत्तिप्रबन्धः फलपरिणामप्रबन्धः प्राग्भवीयकर्माख्यपुरुषकारस्य साध्योऽसाध्यश्च तत्सञ्चयहेतुभूतोपादानकाल-परिणामद्वैविध्यात् । तद् दर्शयति– तीव्र-मन्दादिहेतूपसेवनसञ्चितत्वादिति । तीव्रेण योगपरिणामेन सञ्चितत्वादिति । तीव्रेण योगपरिणामेन सञ्चितं कर्म तीव्रानुभावस्थिति-प्रदेशं बद्ध-स्पृष्ट-निकाचितं सुख-दुःखफलमुपक्रमितुमशक्यत्वादसाध्यमवश्यं विपच्यते । मन्देन तु सञ्चितं मन्दानुभावादिशक्यत्वादुपक्रम्यं साध्यासाध्यव्याधिवत् । यथा व्याधिर्ज्वरातिसारादिर्निदानमन्द-तीव्रत्वाभ्यां साध्योऽसाध्यश्च भवति, तथा कर्माख्य-पुरुषकारप्रवृत्तिप्रबन्धः साध्यासाध्यस्वभावव्याख्यानं च ।

चलनीयोऽविचल्यश्च बद्धाबद्धमूलत्वाद् वृक्षहट्टवत्, यथासङ्ख्यं साध्यश्चलयितव्यः । इतरोऽविचल्यो न कम्पयितव्यः । प्रथमो बद्धमूलो वृक्षवत् । द्वितीयो हट्टवदबद्धमूलः दुःखविश्लेष्यः सुखविश्लेष्यश्चेत्यर्थः । निकाचितानिकाचितावयवत्वात् । निकाचिताः कर्मप्रदेशाः तीव्रक्रोधाद्यशुभपरिणामेन । अनिकाचिता मन्दपरिणामेन । किमिव ? अयःशलाकाकलापवत् । यथा सूत्रमात्रोपनिबद्धा अयःशलाका एकशलाकाऽपकर्षमात्रप्रयासेन सर्वाः प्रच्यवन्ते । प्रतप्त-सम्पृक्त-प्रहताः संघर्षणादृते न शक्याः पृथक्कर्तुम्, तथा कर्मविधिः ।

परिणमनमपि चेत्यादि, यावत् पुष्पतोकं दृढफलवत् । तस्यापि पूर्वकर्मणः तीव्र-मन्दादिहेतूपसेवनसञ्चितस्य फलदानमिहत्यपुरुषकारस्य कृष्यध्ययन-सेवा-वाणिज्याद्यनुष्ठानस्य विषयो न च विषयः क्वचिदिति । अप्राप्त-प्राप्तविपरिणामावस्थत्वात् यथासङ्ख्यं स्वयमप्राप्तविपरिणामावस्थं पुरुषकारविपरिणम्यं पुरुषकारेण विपाच्यते, विषयत्वमानीयते, उदीरणाकरणेनोदीर्यते । प्राप्तविपरिणामावस्थं तु वैपर्ययान्न विषयीक्रियते, पुरुषकारेण न विपाच्यते नोदीर्यते, स्वयमेव विपक्वत्वात् । किमिव ? पुष्पतुक्-दृढ-फलवत् पुष्पतोकं दृढफलं च यथासङ्ख्यं दृष्टान्तौ । यथा दृढफलं स्वयमेव विपच्यमानं न पाच्यते पुरुषकारेण । पुष्पतोकं तु वृक्षायुर्वेदविधिना विपाच्यते । अथवा पुष्पतोकस्यैवोत्पन्नस्य दृढं फलमस्य भावीति दृढफलं तादृक्छक्त्यैवोत्पन्नमिति तस्यैव भवति, तच्छक्तिविरहितस्य न भवतीति तदेवाप्राप्तपाककालं कदलकाम्रादिफलं कोद्रव-पलालादिवेष्टितं निखातं वा पार्श्वधूमादिभिर्विपाच्यते, नेतरदवश्यंविनाशीति । अथवा अप्राप्तविपरिणामावस्थं पुष्पतोकमतिमृदुत्वादुपक्रमेणापि न पच्यते, पाचनायोग्यत्वात्; कुथ्यति व्यलीयते वा । दृढफलं तु पाचनयोग्यं प्राप्तकालत्वात् पाच्यते । एवं च कृत्वा क्रियासहायश्च स फलं प्रयच्छत्येकश्च सहायीभूतायाः क्रियाया अपि तच्छक्तिमात्रत्वात् । क्रियासहायश्च पुरुषकारस्य फलप्रदानं(ने) सापेक्षानपेक्षशक्तित्वात् भारोत्पाटवत् । यथा भारमुत्पाटयन् कश्चित् पुरुषः स्वयमेवोत्पाटयति, कश्चित् पुनः सहायापेक्षः । एवं पुरुषकारोऽपि फलप्रदाने सहायां क्रियामपेक्षते कश्चित्, कश्चिन्नेति सोपक्रमस्य क्रियापेक्षा न निरुपक्रमस्य । तत्र सोपक्रमस्य कर्मात्मात्मन इत्यादि यावत् तृणदाहवद् वेति । तस्यैव सहैकीभूतस्य आत्मनश्चेतनाचेतनत्वेन पुरुषात्मनेत्यादिना सापेक्षानुदयोपशम-क्षयोपशम-क्षयान् अवस्थाविशेषान् दर्शयति सोदाहरणान् ।

**एवमनयेत्यादि, यावदा(द् भाव)नीयमिति** । एवं तावद् द्व्यात्मकतयाऽऽत्म-कर्मैकान्तवादप्रत्युक्तिदिगियं प्रदर्शिता । अनयैव दिशा तथै-(ऽनयै)व पुरुषकार इत्याद्युक्तन्यायेन तदेव वस्तु कर्मसंज्ञामात्रेण भावयित्वा

पुरुषकारैकान्तवादः प्रतिषेध्यः । तद्यथा– कर्म च कारणं प्रवर्तयितृत्वात् । सुख-दुःखोत्कर्षापकर्ष-विकल्पानुभवावश्यंभावितस्य चैकस्यैवोक्तवत्, सर्वा(र्वत्वा)-दुपयोगत्वात् पुरुषताऽपीत्यादि सर्वमशेषं योजनीयम् । यत् परेणानभ्युपगतमन्य-तरदितर[त्] तदितरस्मिन्नापाद्यमिति ।

तत आह– यत्रैकस्य स्वातन्त्र्यं तत् तत्प्रदर्शिततत्त्वस्येतरस्यापीति भावनीयमिति भावनोपायं प्रदर्शयति सामान्येन, तथा विशेष्य भावितमेवास्माभिरिति न केवलं कर्मात्मनोरेवाभिन्नैक्यम् । किं तर्हि ? यथा चात्र तत्त्वं कर्मात्मनोः सर्व-प्रभेदेषु वृत्तं भावितमस्माभिस्तथाऽवगाहादिलक्षणैरस्तिकायैरवगाह-गति-स्थिति-लक्षणैराकाश-धर्माधर्माख्यैः सह कर्मात्मविचारोक्तात् प्रवर्तक-प्रवर्त्यन्यायाद् भावनीयमिति वर्तते । यथा प्रवर्तक एव प्रवर्त्य इत्युक्तं तथाऽवगाहादि प्रवर्तकं प्रवर्त्यं चोभयमेकमेव कर्मात्मवदिति । पुनरपि तद्भावनार्थमाह–

तद्द्रव्यत्वात् यद् यद् द्रव्यम्, तत् तत् तत्त्वं यथा प्राग् भावितं पृथिव्यादि, व्रीह्यादि पृथिव्यादिवत् । तद्द्रव्यत्वमसिद्धमिति चेत् ? नेत्युच्यते– अवगाहादेव द्रव्यं यथा वियदादि । एवमात्माऽऽद्यपि । यथाऽवगाहोपकारगुणमाकाशम्, गति-स्थित्युपकारगुणौ धर्माधर्मौ, एवमात्म-परमाण्वादि द्रव्यमपि । कुतो हेतोः ? तस्यैव तथाभूतेस्तदेव ह्यात्मपुद्गलद्रव्यं तथा तथाऽवगाह-गति-स्थितिरूपेण भवति । किमिव ? उदकादि-व्रीहित्व-शिवकादि-घटत्ववत् । यथोदक-पृथिव्याकाश-वात-बीजाङ्कुरादय एव व्रीहीभवन्ति, युगपद्भाविनो भावाः, यथा च क्रमभाविनः शिवक-स्थासक-कुशूलकादय एव घटीभवन्ति; तथाऽऽत्माद्यप्यवगाहादिरवगाहादि वियदादि वियदाद्यवगाहादि अवगाहाद्यात्मादि च भवतीति, तस्य तस्य तद्द्रव्यत्वम्, तद्द्रव्यत्वात् प्रवर्तक-प्रवर्त्यैकन्यायोऽवस्थितस्तस्माचात्म-पुद्गलाकाश-धर्माधर्मास्ति-काया एकं तत्त्वं सर्वप्रभेदवृत्तमिति ।

किं चान्यत्– अविभक्तेत्यादि, यावदेकमेवेदं भवनमवगाहोऽवगाह-मानादात्माऽण्वादेरविभक्तोऽवगाह्यमप्याकाशमवगाहधर्मस्य स्वलिङ्गस्य पृथगसिद्धे-रवगाहकादविभक्तं द्रव्यार्थविवक्षायां पर्यायस्याभावात् । तस्मादेकमेवेदं भवनमिति साधूक्तम् । तत् पुनरन्यत्र प्रतिवादिमते मिथ्याग्राहोत्थापितेत्यादि, यावत् सर्वगतेतराभिमतद्रव्यमिति । कार्यद्रव्यं पटादि कारणद्रव्यात् तन्त्वादेरन्यत् । तन्त्वादि च कार्यादन्यत्, एवं गुणाः पत्ररक्त-श्यामत्वादयः पत्रात् कारण-कार्याख्याः परस्परतश्च कर्माद्युत्क्षेपणादिक्रियाप(व)द् द्रव्यसमवेत-सर्वगतासर्व-गतद्रव्याद् गुणेभ्यः परस्परतश्च द्रव्य-गुण-कर्मभ्यः परस्परतश्चान्ये सामान्य-विशेष-समवाया इतीत्थं प्रभेदं तदेवासदुक्तं भवनं मिथ्याग्राहोत्थापितं कैश्चित् ।

